इदं पुस्तकं मुम्बय्यां श्रेष्ठिचुनिलालात्मजछोटालाल-प्रमुख-धीयङ्गमेन्सजैनसोसायटी-मुम्बई-इत्यनेन निर्णयसागर-
मुद्रणालये कोलभाटवीथ्यां २६-२८ तमे गृहे रामचन्द्रयेसूशेडगेद्वारा मुद्रयित्वा प्रकाशितम् ।

---

Published by Sheth Chhotalal Chunilal, Mulji Jetha Market, Bombay.

---

Printed by Ramchandra Yesu Shedge, at the Nirnaya Sagar Press, 26-28, Kolbhat Lane, Bombay.

# प्रस्तूयते किञ्चित् ।

सुविश्रुतमेतद्धि भवोत्तारकश्रीजैनशासनं प्राप्ता अपि भाग्यमन्त एव तं सम्यगाराधयन्ति मन्दभाग्याः केचन विराधयन्ति च । विश्वव्यापिकुदर्शनिनो नीरसनीयतयोपतिष्ठन्ति शास्त्रकर्तुः समक्षं यथा तथोत्सूत्रसूत्रयितारोऽपीत्येतदवधार्यं पाठकवरैः सूक्ष्मेक्षिकया । शास्त्रकर्तुः परिश्रमो नीरसनीयान्प्रति हितकृद्भवतु मा वा सत्यापेक्षावज्जिज्ञासून्प्रति तु भवत्येव नात्र शङ्कालेशः । शासनात्त्राणाच्च शास्त्रमिति गीयते पुर्वपुरुषैः । एतादृक्पठितुं यदीच्छा व आद्रीयतामिदं तृतीयं प्रकाशनं द्वितयवद्भवद्भिर्महाशयैः । पूज्यानामनुग्रहेण संक्रमकरणप्रथमद्वितीयविभागप्रसिद्ध्यनन्तरं मार्गणाद्वारविवरणनामकमेतत्तृतीयं शास्त्ररत्नं प्रसिद्धिपथं नीयते जैनशासनप्रेमिण्या सोसायटीतिख्यातसंज्ञया संस्थया ।

कृतितया एतद्ग्रन्थरत्नमपि तेषामेव पूज्यपादसुगृहीतनामधेयानां निर्मलयशोभृतां शास्त्रकर्तृणां येषां कर्मसिद्धिः संक्रमकरणविभागद्वयश्च सन्ति । ते स्वसुविशदज्ञानचरणाभ्यां भुवि विख्यातकीर्त्तयो लब्धसुगुरुप्रसादा विश्ववत्सलाः प्रव्रज्याकल्पतरुसमाना अनुष्ठितानुष्ठानप्रधानाः सिद्धान्तमहोदधयो महामहोपाध्यायश्रीमत्प्रेमविजयपादा वर्त्तमानं सर्वतन्त्रस्वतन्त्रं प्रतिहतपापकर्मातुलप्रतापि तपोगणगगननभोमणिसकलागमरहस्यवेदिआचार्यश्रीमद्विजयदानसूरीश्वरसाम्राज्यमलङ्कुर्वन्ति । चिरन्तनाचार्यश्रीचन्द्रर्षिप्रणीतपञ्चसंग्रहोपरि ललितां टीकां कर्तुकामैस्तैरेतद्ग्रन्थशरीरं वैक्रमीयाष्टसप्तत्यधिकैकोनविंशतिशते वर्षे मरुदेशे शीरोहिनिकटवर्तिनि पाडीवाख्ये नगरे चातुर्मास्यां निरमायि । अस्य प्रमाणं सार्द्धद्वादशसहस्रश्लोकमानमनुमीयते । पञ्चाशीत्यधिकैकोनविंशतिशततमे वर्षे चातुर्मास्यर्थं मोहमयीसङ्घसाग्रहविज्ञप्त्या पूज्या यदा

स्वगुरुदेवाचार्यश्रीमद्विजयदानसूरीश्वरैः सह स्वान्तिषद्गलपन्न्यासश्रीरामविजयगणिपन्न्यासश्रीजम्बूविजयगणिवरादिभिः परिवृता आजग्मुस्तदा संक्रमकरणेन सह अस्यापि मुद्रणार्थं मनोरथः संजातः कार्यवाहकानाम्। यथासमयं मुद्रीकरणे प्रारब्धोऽयमस्मिन्वत्सरे एव समाप्तीभूय प्रसिद्धिमुपयाति।

मार्गणाद्वारविवरणाभिधानोऽयं स्वाभिधानेनैव प्रस्तौति प्रास्ताविकीं स्वीयाम्। गत्यादिचतुर्दशमार्गणाद्वाराणां सप्रभेदविवरणमेवास्य रमणीयः प्रदेशः। द्वाराण्येतान्यतीव परिचितानि परिचितजैनबालानामपि तु तेषां सशास्त्रार्थस्वरूपं यथास्मिन्निगदितं पण्डितानामप्यज्ञातं भविष्यति तस्मिन्का शङ्का? यतः सर्वाणि द्वाराणि समयविद्भिर्ग्रन्थकृद्भिः समयशैल्या पटं विस्तार्य सुष्ठु व्यावर्णितानि ततः समयानुसारिबालपण्डितसर्वेषामपीदं शास्त्रं तज्ज्ञानार्थमादरणीयं बाढमित्युद्घुष्यत अस्माभिः सप्रश्रयम्। अनेकानेकविषयाः समर्थिता अस्मिन्। किंयतां नाम नामग्राहं कुर्मः। एवादृक्प्रवचनपरमार्थसंग्रह एकस्मिन्पुरस्कुर्वन्नयमेक एव संदर्भो मार्गणाविषये मार्गितो महत्त्वपूर्णो निश्चीयते। अस्य विषयानुक्रमगतद्वारदीर्घतां दृष्ट्वाऽपि यः कश्चिद्विपश्चिदनुमास्यति द्वाराणामवान्तरावान्तरद्वारैर्भेदप्रभेदकथनमानुषङ्गिकमुपयोगिनामुपयोजनं च संपूर्णम्।

अस्मिन्कर्मणि श्रीसिद्धसेनदिवाकरसंदृब्धसम्मतितर्कादिगहनविषयेष्वकुण्ठितधिषणानां संस्कृतप्राकृतदार्शनिकादिनैकविद्याविशारदानां प्रतिभाप्रभावशालीनां पूज्यपादपन्न्यासप्रवर**श्रीजम्बूविजयगणि**वरादीनामवश्यं सत्तर्व्यनामावल्या सह तेषामेव विनेयरत्नानां न्यायादिसत्तत्त्वनिष्णातस्वर्गतमुनिप्रवर**श्रीरक्षितविजयानां** श्रेयोऽभिधानमप्यवश्यं स्मरणार्हं, स्वरुग्णावस्थायामपि यैरनुरूपसहायवितरणे न कदापि प्रमादितम्।

प्रकाशनेऽस्य हालनगरकलुंबावाडवास्तव्यमगनलालात्मजस्वर्गतश्रावककेवलदासस्य भार्या आमुद्राभिधाना पञ्चशतद्रव्यसाहाय्यं पन्न्यासप्रवरव्याख्यानवाचस्पतिश्रीरामविजयगणिप्रतिबोधितसार्वशासनानुरागिस्वभर्तृपुण्यस्मरणार्थं वितीर्णवती । मुम्बापुरिशान्ताक्रुझस्थवेरावलवास्तव्य श्रेष्ठिमोरारचन्द्रात्मजश्रावकश्रेष्ठिवर्य्यजमनादासद्वारायाता चैतावती द्रव्यपञ्चशती षडशीत्यधिकैकोनविंशतिशतवर्षीयचातुर्मास्यां पर्वाधिराजपर्युषणापुण्यावसरे ज्ञानपूजनेन । एकाधिकशतं च प्रदत्तं सूर्यपुरस्थया सुश्राविकया लीलावत्या स्वर्गतस्य स्वपतिझवेरीझवेरचन्द्रकेसरीचन्द्रस्य पुण्यस्मरणार्थम् । द्रव्यसहायकैरेभिरन्यैश्च यन्निर्जरादिसाधितमनुमोदामहे वयं तत् । शुद्ध्यादिविषयेऽस्य ज्ञानादिधनैः समयकेतुभिः संशोधकैर्यत्नकरणेऽपि यदि काश्चिदशुद्धयो दृष्टिगोचरीभवेयुर्भवतां तर्हि संभवचिन्तया ताः प्रमार्जनीया मतिमद्भिर्भवद्भिरिति प्रस्तूयते किञ्चिद्भवदीयैः—

प्रकाशकैः ।

जैनयङ्गमेन्ससोसायटी–मुम्बई ।

## महामहोपाध्यायश्रीविनयविजयगणिकृतमप्रसिद्धं श्रीयुगादिदेवस्तवनम् ।

मरुदेवातनूजन्मानं, मानवरत्नमुदारं रे । दारैः सह हरिभिः कृतसेवं, सेवकजनसुखकारं रे ॥ १ ॥
कारणगन्धमृतेऽपि जनानां, नानासुखदातारं रे । तारस्वरजितपरपुष्टं, पुष्टशमाकूपारं रे ॥ २ ॥
पारंगतमिह जन्मपयोधे–र्योधे हितगुणधीरं रे । धीरसमूहैः संस्तुतचरणं, चरणमहीरुहकीरं रे ॥ ३ ॥
कीरणसं यशसा जितचन्द्रं, चन्द्रामलगुणवासं रे । वासवहृदयकजाहिमपादं, पादपमिव सच्छायं रे ॥ ४ ॥
सच्छायाकवरपुरधरणिं, धरणिधवमिव कामं रे । कामं नमत सुलक्षणनाभिं, नाभितनुजमुदामं रे ॥ ५ ॥
इत्थं पारगतः स्तुतः शतमखश्रेणिश्रितः श्रीनदी–जीमूतोऽद्भुतभाग्यसेवधिरधिक्षिप्तः समग्रैर्गुणैः ।
श्रीमन्नाभिनरेन्द्रवंशकमलाकेतुर्भवाम्भोनिधौ, सेतुः श्रीवृषभो ददातु विनयं स्वीयं सदा वाञ्छितम् ॥ ६ ॥

## महामहोपाध्यायश्रीविनयविजयगणिकृतमप्रसिद्धं श्रीयुगादिदेवस्तवनम् ।

मरुदेवातनूजन्मानं, मानवरत्नमुदारं रे । दारैः सह हरिभिः कृतसेवं, सेवकजनसुखकारं रे ॥ १ ॥
कारणगन्धमृतेऽपि जनानां, नानासुखदातारं रे । तारस्वरजितपरपुष्टं, पुष्टशमाकूपारं रे ॥ २ ॥
पारंगतमिह जन्मपयोधे–र्योधे हितगुणधीरं रे । धीरसमूहैः संस्तुतचरणं, चरणमहीरुहकीरं रे ॥ ३ ॥
कीरणसं यशसा जितचन्द्रं, चन्द्रामलगुणवासं रे । वासवहृदयकजाहिमपादं, पादपमिव सच्छायं रे ॥ ४ ॥
सच्छायाकवरपुरधरणिं, धरणिधवमिव कामं रे । कामं नमत सुलक्षणनाभिं, नाभितनुजमुदामं रे ॥ ५ ॥
इत्थं पारगतः स्तुतः शतमखश्रेणिश्रितः श्रीनदी–जीमूतोऽद्भुतभाग्यसेवधिरधिक्षिप्तः समग्रैर्गुणैः ।
श्रीमन्नाभिनरेन्द्रवंशकमलाकेतुर्भवाम्भोनिधौ, सेतुः श्रीवृषभो ददातु विनयं स्वीयं सदा वाञ्छितम् ॥ ६ ॥

इति चतुर्दशमार्गणाद्वारेषु द्विषष्टिमार्गणाभेदाः ।

## विषयानुक्रमणिका ।

आचार्यश्रीविजयकमलसूरीश्वराद्यपट्टप्रभावका-
चार्य श्रीविजयदानसूरीश्वरेभ्यो नमः ।



आचार्यश्रीविजयानन्दसूरीश्वरानन्यपट्टधराचार्य
श्रीमद्विजयकमलसूरीश्वरेभ्यो नमः



आचार्यश्रीविजयदानसूरीश्वरपट्टप्रद्योतनाचार्य
ग्रन्थकार–श्रीमद्विजयप्रेमसूरीश्वरेभ्यो नमः



स्व० न्यायाम्भोनिधिजैनाचार्यश्रीमद्विजयानन्दसूरीशपट्टपूर्वाचलानन्यदिवाकरसुविहितशिरोमणि–स्व० आचार्यश्रीमद्विजयकमलसूरीश्वरप्रथमपट्टधरसकलागमरहस्यवेदिवाचंयमचूडामणि–परमगुरु–शासनधुरन्धराचार्यश्रीमद्–
विजयदानसूरिपुङ्गवेभ्यो नमः ।

आचार्यश्रीमद्विजयदानसूरिविनेयरत्न–सिद्धांतमहोदधि–वाचकचन्द्रश्रीमत्प्रेमविजयगणिविरचितम्

# श्रीमार्गणाद्वारविवरणम् ।

सम्यक्त्वद्गुणया सदा सुकलिते सज्ज्ञानबाणासने, सच्चारित्रशिलीमुखानविफलान्सन्धाय जन्याङ्गणे ।
प्रत्यर्थिप्रकरान्निहत्य नितरां मोहावनिस्वामिना प्राप्ताः सिद्धिपदं दिशन्तु निलयं सिद्धिश्रियस्ते जिनाः ॥ १ ॥

ध्वस्ताशेषतमाः प्रबोधितजगज्जन्तुर्गवां यो भरैः, छिन्नाऽनेकजनप्रमोहशयनो बालोष्णरोचिर्यथा ।
तेजस्विप्रवरः समग्रविबुधव्राताच्र्यपादाम्बुजः विश्वं विश्वमिदं स पातु दुरिताच्छ्रीदानसूरीश्वरः ॥ २ ॥

पूज्यपादान्प्रणम्यैवमुपयुक्तं निरन्तरम् । मया "श्रीमार्गणाद्वारविवरणं" विधीयते ॥ ३ ॥

१ वैराग्यसलिलोल्लसल्लहरिकाविरङ्गितभवोदधितीरनिवासिजगज्जनचेतःसार्वचूडामणिवक्त्राम्बुजप्रसूते विश्ववाग्वैभवपारावारपारीणविनयसानुमत्सानुविराजितगणचक्रिविरचिते पण्डितपञ्चाननपण्डागम्यास्खलितब्राह्म्यैश्वर्यशालिवाचंयं-

मविधुविधारिते दुर्दान्तवादीभमदभिदाकण्ठीरवाभे जडिमजङ्गलज्वालाजिह्वजाज्वल्यमानजगज्जन्तुजगतीरुहजातजीमूतागमाजङ्गमजलभृन्निभे शास्त्रार्थाहवाभेद्यषड्दर्शनाव्यापाद्यस्याद्वादसिद्धान्तप्रतिपादनसुप्रतीते भगवति श्रीमति जैनेश्वरे प्रवचने दरीदृश्यमाना गत्यादिद्वारकलापप्रतिपादिकेयमार्या बहुषु स्थानेषूपयोगीति तदेकस्या उपरि स्वपरहितकाम्यया श्रीसिद्धान्तोक्तविवरणं यथामति वितन्यते—

"गइइंदिए य काए जोए वेए कसायनाणेसु । संजमदंसणलेसाभवसम्मे सन्निआहारे ॥ १ ॥"

व्याख्या—तत्र यो गतिनामकर्मोदयाज्जन्तोर्नारकत्वादिपर्यायः स गतिः, कार्ये कारणोपचारात् । अत्र कर्मोदयवशवर्त्तिना जन्तुना गम्यते प्राप्यते येन कर्मणा नारकत्वादिपर्यायपरिणतिरिति निरुक्त्या गमनक्रियापरिणतं जीवं प्राप्य द्रव्यादीनामपि गतिव्यपदेशो न स्यात्, यद्वा विवक्षितनारकत्वादिपर्यायपरिणतिं गच्छन्ति संसारिणो जीवा येन कर्मणा सा गतिरिति निरुक्त्यापि चातुर्गतिकानां संसारिणां गमनहेतुर्गतिनामकर्मैव, तेन शकटादीनां गमनहेतुत्वेऽपि नातिप्रसङ्गः, यद्वा नारकत्वादिपर्यायपरिणतिं प्रति गमनं गतिः, तेन ग्रामारामादिगमनस्यापि न गतित्वप्रसङ्गः । सा चतुर्विधा, नरकगतिः, तिर्यग्गतिः, मनुष्यगतिः, देवगतिश्च । तत्रात्युग्रपापकारिणो नरानुपलक्षणतस्तिरश्चोऽपि कायन्तीवाह्वयन्तीवेति नरकाः, नरकावासाः, तेषु भवा नारकाः, तत्रोत्पन्ना जन्तवोऽपि सहजशारीरमानसाऽऽगन्तुकक्षेत्रजैर्दुःखैर्निरन्तरं संक्लेशितपरिणामा बह्वारम्भपरिग्रहत्वाद्यार्त्तरौद्रध्यानार्जितनारकायुःकर्मोदयलब्धनारकभववृत्तयो नारका इत्यर्थः । आशाम्बरास्तु 'यस्माद्धिंसाद्यसदनुष्ठानेषु निरताः, व्यापृताः, प्रवृत्तास्तेषां गतिः निरतगतिः, अथवा नरान्—प्राणिनः कायति,

घातयति, कदर्थयति, खलीकरोति, बाधत इति नरकं कर्म तस्यापत्यानि नारकास्तेषां गतिर्नारकगतिः, यद्वा निरन्तरं नरकगतिसम्बन्ध्यन्नपानशरीरेन्द्रियविषयादौ द्रव्ये, उत्पत्तिपतनोपवेशनस्थानविहारभूम्यादौ क्षेत्रे, उत्पत्तिपर्याप्तिनिष्पत्ति-पतनभोजनशयनविहारकालादौ काले, उत्पत्तिपर्याप्तिभोक्तृशयितृविहर्तृत्वाद्यवस्थायां भावे ये न रमन्ते, प्रीतिं न भजन्ते, न सुखीयन्ति, परस्परं च न रमन्ते तस्मात् ते न रताः, न रता एव नारताः स्वार्थिकाण्विधानात्, तदुक्तं गोम्मटसारे—"ण रमंति जदो णिच्चं दव्वे क्खेत्ते य कालभावे य । अण्णोण्णेहि य जम्हा तम्हा ते णारया भणिया ॥ १ ॥" इति जल्पन्ति । यद्वा निर्गतमयः पुण्यमेभ्यस्ते निरयाः, तेषां गतिः निरयगतिः । तिरोऽञ्चन्ति गच्छन्तीति तिर्यञ्चो व्युत्पत्तिनिमित्तमेतत्, प्रवृत्तिनिमित्तं तु तिर्यग्गतिनामकर्म, तिर्यग्विषया गतिस्तिर्यग्गतिः । दिक्पटास्तु 'तिरः कुटिल-भावं मायापरिणाममञ्चन्ति गच्छन्तीति तिर्यञ्चः, तदुक्तं गोम्मटसारे—"तिरियंति कुडिलभावं सुविउलसण्णा णिगिट्ठिमण्णाणा । अच्चंतपावबहुला तम्हा तेरिच्छिया भणिया ॥ १ ॥" व्याख्या—'साध्याहाराणि सूत्राणि' इति न्यायात् यस्मात्कारणात् तिरः कुटिलभावं मनोवाक्कायवक्रभावमञ्चन्ति गच्छन्ति ये जीवा मायाद्यशुभपरिणामार्जिततिर्यगायुःकर्मोदयजनितभववृत्तयस्तिर्यग्गतिनामकर्मोदयकृतसुवि-वृतसंज्ञा निकृष्टाज्ञानात्यन्तपापबहुलत्वादिपर्यायास्ते जीवाः तस्मात् कारणात् तिर्यञ्च इति भणिता अर्हदादिभिः । तत्र मनसि यद्वर्त्तते सुखदुःखतत्साधनस्वीकारपरिहारपरस्पराह्वानादि तन्मुखेन न वचन्ति, तद्वचनशक्तेरभावात्, मुखे यद्वृत्तं तत्कायेन न क्रियते । यद्यपि शुकसारिकादयः केचित् सुशिक्षिताः संज्ञिपञ्चेन्द्रियतिर्यञ्चो मनोवाक्कायेषु ऋजु प्रवर्त्तन्ते, तथापि एकेन्द्रियादयोऽसंज्ञिपञ्चेन्द्रियपर्यन्ता जीवा अशिक्षितसंज्ञिपञ्चेन्द्रियाश्च मनोवाक्कायेषु प्रायेण कुटिलभावेनैव प्रवर्तन्ते । सर्वजनादृश्ये क्षेत्रे, नियते काले च मनुष्यवत् गूढभोजन-

मैथुनाद्यभावात् सुविवृता सुप्रकटा संज्ञा आहारादीच्छा क्रियारूपा येषां ते सुविवृतसंज्ञा इति सूत्रार्थसद्भावः । मनुष्यवत् गुणदोषविवेकनित्यश्रुताभ्यासतत्त्वज्ञानादिशुभोपयोगाभावान्नित्याज्ञानत्वं सिद्धम् । मनुष्यवदेव महाव्रतगुणशीलाभावादेकेन्द्रियादिषु सम्यग्दर्शनविशुध्यादिशुभोपयोगाभावाच्च तीव्रसंक्लेशप्रचुरतयाऽत्यन्तपापबहुलत्वं तिर्यग्जीवेषु युक्तमेव । तिर्यञ्च एव तैरश्चा इति स्वार्थिकाण्विधानात् तैरश्चका इति प्राकृते स्वार्थिक'क'प्रत्ययविधानात्" इत्यनेन व्युत्पत्तिनिमितत्वमात्रस्वीकारे केषाञ्चिन्मनुष्याणां तिर्यंचोऽपि मायावाहुल्येन तिर्यक्त्वापत्तिरिति । मन्यन्तेऽवबुध्यन्ते नीतिधर्ममिति मनुष्याः, व्युत्पत्तिनिमित्तमेतत् । यच्च "यतः कारणात् ये जीवा नित्यं मन्यन्तेऽवबुध्यन्ते हेयोपादेयं, तत्त्वातत्त्वं, आप्तानाप्तं, धर्माधर्मं चेत्यादि विविच्य निश्चिन्वन्ति, मनसा, गुणदोषविचारस्मरणाद्युपयोगरूपेण भावमनसा व्यवहर्तुं निपुणाः, तत्तत्सूक्ष्मरहस्यवेदिनो मनसा प्रागुक्तलक्षणेन उत्कटास्तीव्रा दूरदर्शनसूक्ष्मविचारचिरकालधारणानानाविधानादिना सातिशयोपयोगविशिष्टाः, यस्मात् कारणात् मनूद्भवाश्च मनोर्युगादौ लौकिकलोकोत्तरव्यवहारप्रदर्शकस्य आदिब्रह्मणोऽपत्यानि, अथवा भोगभूमिस्थितिपरिक्षये तदा तदा सम्भूतप्रतिश्रुत्यादिभरतपर्यन्तानां षोडश मनूनामपत्यानि प्रजा अपत्यानीवापत्यानि इत्युपचाराश्रयः, अपायपरिहारेणोपायप्रापणसुखजीविकोपायादिद्वारैस्तैरभिरक्षितत्वात्, 'स पिता यस्तु पोषक' इति नीतिसद्भावाच्च, तस्मात्तेऽल्पारम्भपरिग्रहत्वाद्युपार्जितमनुष्यायुरुदयजनितभवधारणा मनुष्यगतिनामकर्मोदयसम्पादितपूर्वोक्तमनुष्यपर्यायाः सार्धद्वीपद्वयप्रमितमनुष्यक्षेत्रसमुद्भवाः सर्वेऽपि मनुष्या इति भणिताः परमागमविशारदैः" इत्याशाम्बरीयवाक्यमपि व्युत्पत्तिमात्रपरम् । प्रवृत्तिनिमित्तं तु मनुष्यगतिनामकर्मैव, अन्यथा तादृक् प्रज्ञाविकलमनुष्ये लब्ध्यपर्याप्तकमनुष्ये च मनुजशब्दप्रवृत्तिर्न स्यादिति । तद्विषया गतिः, मनुष्यगतिरिति । सुष्ठु राजन्त इति सुराः, यद्वा सुष्ठु रान्ति ददति प्रणतानामभिप्सितार्थमिति

सुराः, यद्वा 'सुरत् ऐश्वर्यदीप्त्योः' सुरन्ति विशिष्टैश्वर्यमनुभवन्ति दिव्याभरणसमृद्ध्या सहजनिजकान्त्या च दीप्यन्त इति सुराः तेषु गतिः सुरगतिरित्युक्ता चतुर्विधा गतिमार्गणा ।

'इंदिए'त्ति 'इदि परमैश्वर्ये' इति धातो रूपम्, इन्दनात् सर्वोपभोगाधिष्ठानसर्वद्रव्यविषयैश्वर्योपभोगादिन्द्रो जीवः । इन्द्रत्वं च पर्यायतोऽस्य सम्भवत्यनादौ संसारेऽनेकजन्मान्तरवृत्तेर्देवादिस्थानापेक्षया, न चास्ति जगति यः कश्चित्प्रदेशो यो जन्ममरणाभ्यां जन्तुना नास्पर्शि, यत्र वा प्राणापानशरीराहारादिग्रहणं नाकारि, निर्दिष्टं चाजापाटक-निदर्शनं प्रवचने, अत एव श्रीहरिभद्रसूरिपादैः 'आत्मैव कर्त्ते'ति निर्दिष्टम्, तदुक्तम्—"परमैश्वर्ययुक्तत्वान्मत आत्मैव चेश्वरः । स च कर्त्तेति निर्दोषः, कर्तृवादो व्यवस्थितः ॥ १ ॥" इति । यद्वा सर्वद्रव्योपलब्धिरूपपरमैश्वर्ययोगात् इन्द्रो जीवः, प्रवचनबहिर्भूतान् प्रति तु शब्दादिविषयेषु परमैश्वर्ययोगादिन्द्रो जीवः, न चात्मानमन्तरेणान्यः शब्दादिविषयान् भुङ्क्ते जानीते वेति । लिङ्गनात्, अवगमनात्, लिङ्गं चिह्नमविनाभाव्यत्यन्तलीनपदार्थावगमकारि, तथाहि–कश्चिन्मनोहरान् शब्दान् श्रोत्रेण समुपलभ्योत्फुल्ललोचनयुगस्तदभिमुखदत्तावधानः सुखास्वादनिर्भरहृदयो रोमाञ्चकञ्चुकितच्छविः सहसोप-जायते, तेन चावगम्यते यस्य शब्दमगृहीतवत एवंविधा विकाराः समुपलक्ष्यन्ते स कोऽपि शरीरादिसंघातविलक्षणः परमात्मेति । एवं 'दिष्टं, दृष्टं, सृष्टं, जुष्ट' मिति लिङ्गपर्यायाः । इन्द्रस्य जीवस्य लिङ्गमिन्द्रियम्, तदुक्तं तत्त्वार्थभाष्ये—"इन्द्रियं, इन्द्रलिङ्गमिन्द्रदिष्टमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिति वा, इन्द्रो जीवः सर्वद्रव्येष्वैश्वर्ययोगात् विषयेषु वा पारमैश्वर्ययोगात्, तस्य लिङ्गमिन्द्रियं, लिङ्गनात्, सूचनात्, प्रदर्शनाद्, उपष्टम्भनात्, तद्व्यञ्जनाच्च जीवस्य लिङ्गमिन्द्रियम्" इति । एवमावश्यकभाष्येऽपि—

"इन्दो जीवो सव्वोवलद्धिभोगपरमेसरत्तणओ। सोत्ताइभेयमिन्दियमिह तं लिंगाइभावाओ॥१॥" इति। **लोकप्रकाशेऽपि**—"इन्दु स्वात्परमैश्वर्ये, धातोरस्य प्रयोगतः। इन्दनात् परमैश्वर्यादिन्द्र आत्माऽभिधीयते ॥१॥' तस्य लिङ्गं तेन सृष्टमिन्द्रियमुदीर्यते" इति। **उक्तार्थेष्विन्द्रशब्दात् 'इय' प्रत्ययनिपातनादिष्टरूपनिष्पत्तिः, तथा चाहुः कलिकालसर्वज्ञश्रीमद्धेमचन्द्रसूरिपादाः**—"इन्द्रियम्—" (७–१–१७४) **वृत्तिः**—"इन्द्रियमितीन्द्रशब्दादियप्रत्ययो निपात्यते। निपातनं रूढ्यर्थं तेन यथायोगमर्थकल्पना। इन्द्र आत्मा, इन्द्रस्य लिङ्गमिन्द्रियम्, चक्षुराद्युच्यते, तेन हि करणेनात्मानुमीयते, नाकर्तृकं करणमिति। इन्द्रेण दृष्टमिन्द्रियम्। आत्मा हि चक्षुरादीनि दृष्ट्वा स्वविषये नियुङ्क्ते। इन्द्रेण सृष्टमिन्द्रियम्, आत्मकृतेन हि शुभाशुभेन कर्मणा तथाविधविषयोपभोगायास्य चक्षुरादीनि भवन्ति। इन्द्रेण जुष्टमिन्द्रियम्, तद्द्वारेणास्य विज्ञानोत्पादात्। इन्द्रेण दत्तमिन्द्रियम्, विषयग्रहणाय विषयेभ्यः समर्पणात्। इन्द्रस्यावरणक्षयोपशमसाधनमिन्द्रियम्। एवं सति संभवेऽन्याऽपि व्युत्पत्तिः कर्तव्या" इति। **पाणिनीयेऽप्युक्तार्थेषु प्रत्ययविधानं कृतं, तथा च तत्सूत्रम्**—"इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा" (५–२–९३) "इन्द्र आत्मा तस्य लिङ्गं करणेन कर्तुरनुमानात्, करणं प्रकारार्थम्, इन्द्रेण दुर्जेयमिन्द्रियम्"। "इन्द्रशब्दात् यथायोगं षष्ठीतृतीयान्तात् लिङ्गमित्याद्यर्थेषु 'घच्'निपात्यते इति यावत्" इति **बालमनोरमायाम्। एतेन** "अहमिन्दा जहा देवा अविसेसं अहमहं मण्णंता। ईसंति एक्कमेक्कं इन्दा इव इंदिए जाण ॥ १ ॥" "अत्र 'इन्द्रा इव इन्द्रियाणी'ति इवार्थे घप्रत्ययो निपात्यते" इत्याशाम्बरोक्तमपि कल्पनामात्रम्, इवार्थे केनापि 'घ'प्रत्ययानिपातनात्। **गतिश्चेन्द्रियं च गतीन्द्रियं, तस्मिन् गतीन्द्रिये, एवमन्यत्रापि द्वन्द्वः कार्यः, चः समुच्चये। नन्वात्मनो लिङ्गमिन्द्रियं तर्हि सुखदुःखेच्छादयोऽपि जीवलिङ्गत्वादिन्द्रियाणि स्युरितिचेत्? तन्न, यतो नोच्यतेऽस्माभिर्यज्जीवलिङ्गं तत्सर्वमिन्द्रियम्, किन्तु**

यदिन्द्रियं तज्जीवलिङ्गमिति नियमः। जीवलिङ्गं तु कदाचित् सुखादीनि, कदाचिदिन्द्रियाणि, तानि च स्पर्शादीनि पञ्चैवेति। प्रज्ञापनावृत्तौ तु विवक्षयाऽष्टौ द्रव्येन्द्रियाणि, तद्यथा—श्रोत्रद्वयं, नयनद्वयं, घ्राणद्वयं, रसनं, स्पर्शनं चैकैकमिति। ननु चक्षुःश्रोत्रघ्राणरसनत्वङ्मनोवाक्पाणिपादपायूपस्थलक्षणान्येकादशेन्द्रियाणि 'सुश्रुता'दौ उक्तानि, नाममालायामपि—'बुद्धीन्द्रियं स्पर्शादि, पाण्यादि तु क्रियेन्द्रियम्' इत्यभिहितम्, तत्कथमुच्यते पञ्चैवेन्द्रियाणीति चेत्? न, मनआदीनामिन्द्रियत्वानुपपत्तेः; तथाहि—तत्र मनस्तावदिन्द्रियं न भवति, पारतन्त्र्यभावात्, नयनादीन्द्रियाणि तु स्वतन्त्राणि सन्ति, अन्यनिरपेक्षाणि च रूपाद्यर्थेषु प्रवर्त्तन्ते, मनस्तु नयनादीन्द्रियकलापविषयीकृतं रूपाद्यर्थमनुपतति, न साक्षात्तस्मात् न नयनादिवदिन्द्रियं मनः, किन्त्वनिन्द्रियमिति। तथा वागपीन्द्रियं न भवति, न च वचनादिव्यापारपरायणत्वात्कथं न भवतीति वाच्यम्, यतो यथाऽर्थग्रहणाय चक्षुरादिद्वारजन्मविज्ञानं परिणमते, न तथा वचनादिषु वागादिद्वारजन्मविज्ञानं परिणतिमुपैति, यतो न वाग्वचनयोः कश्चिद् भेदः, शब्दात्मिका चेयमात्मप्रयत्नसंस्कारप्रयोगक्रमवर्त्तित्वात्, शब्दश्च श्रोत्रेन्द्रियविषयः, न चेन्द्रियमिन्द्रियान्तरमास्कन्दिष्यते, नियतविषयत्वात्। तथा क्रियासाधनत्वेन पाण्याद्यवयवानामपीन्द्रियत्वं न भवितुमर्हति, अन्यथा भ्रूपक्ष्मस्तनभुजनखशरीरादीनामपि क्रियासाधनत्वेनेन्द्रियत्वापत्तेः, न चैते एव इन्द्रियत्वेन व्यपदिश्यन्ते न शेषा इति वाच्यं विनिगमनाविरहात्, किञ्चोपयोगसाधनेषु इन्द्रियव्यपदेशो युक्तः, न क्रियासाधनेषु, यदि क्रियासाधनेष्वपि स्यात् तदाऽनवस्था प्रसज्येत, सर्वाण्यङ्गोपाङ्गादीनि साधनानि सन्ति, अपि च छिन्नकरः क्रमाभ्यामादत्ते, छिन्नक्रमः पाणिभ्यां विहरति, नष्टपायुप्रदेशा च भगन्दरव्याधिना योषिदुपस्थेनाप्युत्सृजतीत्ये-

वमतिसंकीर्णता स्यात्, न चैवमन्धीभूतः कश्चित् श्रोत्रेण रूपं गृह्णातीत्युपलभ्यत इति संख्यातो निरूपितानीन्द्रियाणि। एतानि पञ्चापि द्रव्यभावभेदात् द्विप्रकाराणि भवन्ति। द्रव्येन्द्रियाणि पुनः निर्वृत्त्युपकरणभेदाद् द्विप्रकाराणि, भावेन्द्रियाण्यपि च लब्ध्युपयोगभेदात् द्विप्रकाराणि। एवमविशकलितं भेदचतुष्टयमिन्द्रियलक्षणं भवति, अत एव निर्वृत्तीन्द्रियाभावेन शेषभेदत्रययुतमपि मनोऽनिन्द्रियमुक्तम्। न चैतत्स्वमनीषिकया विजृम्भितम्, तत्त्वार्थवृत्तौ तथाभिधानात्, तथा चाहुः—"चतुष्टयमिन्द्रियलक्षणमविशकलितम्, न चेन्द्रियबहुत्वम्, अत एव निर्वृत्त्यभावात् शेषत्रययोगाच्च मनोऽनिन्द्रियमुक्तम्" इति। ननु मनसः खड्गतद्धारास्थानीयनिर्वृत्तीन्द्रियाभावेन तच्छक्तिस्थानीयोपकरणेन्द्रियस्य कथं सद्भाव इति चेत्? शृणु, तादृशशक्तिमत्त्वं जीवगृहीतमनोद्रव्याणां संभाव्यते, जीवगृहीतमनोद्रव्याणां निर्वृत्तीन्द्रियव्यपदेशाभावादनिन्द्रियं मन उच्यत इति। लब्धिनिर्वृत्त्युपकरणोपयोगरूपमिन्द्रियचतुष्कं क्रमेण भवति, तदुक्तं तत्त्वार्थवृत्तौ—"लब्धिनिर्वृत्त्युपकरणोपयोगाः क्रमेणामुना" इति। एवमाचाराङ्गवृत्तावपि—"सत्यां लब्धौ निर्वृत्त्युपकरणोपयोगाः, सत्यां च निर्वृत्तावुपकरणोपयोगौ, सत्युपकरणे उपयोगः" इति। अत्र सामान्यतो द्रव्यात्मकानि द्रव्येन्द्रियाणि, भावेन्द्रियाणि तु भावात्मकान्यात्मपरिणतिरूपाणीति। निर्वृत्त्युपकरणरूपतयाऽनन्तप्रदेशात्मकं पुद्गलमयं द्रव्यमात्मप्रयोगापेक्षया यतते। सर्वाणि द्रव्येन्द्रियाणि अनन्तप्रदेशात्मकान्यसंख्येयात्मप्रदेशाधिष्ठितानि। भावेन्द्रियं त्वात्मपरिणामः भावः प्रयत्नमातिष्ठत इति भेदत उक्तानीन्द्रियाणि। अथ स्वरूपतो द्विविधं द्रव्येन्द्रियमुच्यते–तत्र निर्वर्त्तनं निर्वृत्तिः, प्रतिविशिष्टसंस्थानोत्पादः, निर्वृत्तिरेवेन्द्रियं निर्वृत्तीन्द्रियम्, उपक्रियतेऽनेनेत्युपकरणम्, तदेवेन्द्रियमुपकरणेन्द्रियम्। एतदुभयमपि पुद्गलपरिणामरूपं सत् प्रस्थकदारुवदुप-

योगरूपभावेन्द्रियकारणत्वेनेन्द्रियव्यपदेशमश्नुते । तत्साधनाय निर्माणाङ्गोपाङ्गरूपं कर्म्मद्वयं प्रयतते । तत्र निर्माणं कर्णशष्कुल्याद्यवयवसन्निवेशविशेषरचनां विधत्ते, अङ्गोपाङ्गनाम तु निष्पत्तिं करोति । सा निर्वृत्तिर्द्वेधा–बाह्या, आभ्यन्तरा च । तत्र बहिरुपलभ्यमाना कर्णशष्कुल्याद्याकारा बाह्यनिर्वृत्तिः, सा च जातिभेदात् चित्राकारत्वेन पृथगुपदेष्टुं न शक्या, यथा मनुजस्य श्रोत्रं भ्रूसमानं नयनयोरुभयपार्श्ववर्त्ति, अश्वस्य मस्तके नयनयोरुपरिष्टात् तीक्ष्णाग्रमित्यादि जातिभेदादनेकधा । आभ्यन्तरा निर्वृत्तिस्तु सर्वेषां समाना प्रतिनियताकारा, तथाहि–कदम्बपुष्पतुल्यं श्रवणेन्द्रियं, मसूरधान्यतुल्या नयनान्तर्गताकृतिः, घ्राणेन्द्रियमतिमुक्तपुष्पाभं काहलाकृति च, रसनेन्द्रियं क्षुरप्राकारं, स्पर्शनेन्द्रियं चित्राकारम्, तदुक्तं लोकप्रकाशे—"श्रोत्रं कदम्बपुष्पाभ–मांसैकगोलकात्मकम् । मसूरधान्यतुल्या स्यात्, चक्षुषोऽन्तर्गताकृतिः ॥ १ ॥ अतिमुक्तकपुष्पाभं, घ्राणं च काहलाकृति । जिह्वा क्षुरप्राकारा, स्यात्स्पर्शनं विविधाकृति ॥ २ ॥" इति । एवं प्रज्ञापनायामपि—"फासिंदिए णं भंते ! किं संठिए पन्नत्ते ? गोयमा ! णाणासंठाणसंठिए । जिब्भिंदिए णं भंते किं संठिए पन्नत्ते ? गोयमा ! खुरप्पसंठिए । घाणिंदिए णं भंते किं संठिए पन्नत्ते ? गोयमा ! अतिमुत्तयचन्दकसंठिए, चक्खुरिंदिए णं भंते ! किं संठिए पन्नत्ते ? गोयमा मसूरचन्दसंठिए पन्नत्ते । सोअइंदिए णं भंते ! किं संठिए पन्नत्ते ? गोयमा ! कयंबुयपुप्फसंठिए पन्नत्ते" इति । त्वगिन्द्रियस्य प्रायः बाह्याभ्यन्तरयोर्न भेदः, तदुक्तं तत्त्वार्थवृत्तौ—"नानाकारं कायेन्द्रियमसंख्येयभेदत्वादस्य चान्तर्बहिर्भेदो निर्वृत्तेर्न कश्चित् प्रायः," इति । तत्त्वार्थवृत्तौ श्रोत्रेन्द्रियाकृतिरन्यथा दृश्यते तथा च तद्ग्रन्थ–" प्रदीर्घत्र्यस्रसंस्थितं कर्णाटकायुधं क्षुरप्रस्तदाकारं रसनेन्द्रियम्, अतिमुक्तकपुष्पदलचन्द्रकाकारं किञ्चित् सकेसरवृत्ताकारमध्यविनतं घ्राणेन्द्रियम्, किञ्चित् समुन्नतमध्यमपरिमण्डलाकारं धान्यमसूरवच्चक्षुरिन्द्रियम्, पाथेयभाण्डकयवनालिकाकारं

श्रोत्रेन्द्रियं नालिककुसुमाकृति चावसेयमिति"। तथा नेमिचन्द्रोऽपि—"यवनाल्याकृति श्रवणम्" इति। त्वगिन्द्रियवर्जानि चत्वार्यपीन्द्रियाण्यङ्गुलासंख्येयभागप्रमाणानि सर्वजीवानाम्। त्वगिन्द्रियं मनश्च स्वशरीरपरिमितम्। अत्र च या बाह्यनिर्वृत्तिरुक्ता सा कृपाणतुल्या, या त्वाभ्यन्तरा निर्वृत्तिः सा तद्धारातुल्या स्वच्छतरपुद्गलात्मिका, निवृत्तेश्च यः स्वकीयस्वकीयार्थावबोधकशक्तिविशेषस्तदुपकरणमिति प्रज्ञापनावृत्त्यभिप्रायः, तदुक्तं—"उपकरणं खड्गस्थानीयाया बाह्यनिर्वृत्तेर्या खड्गधारासमाना स्वच्छतरपुद्गलसमूहात्मिका अभ्यन्तरा निर्वृत्तिस्तस्याः शक्तिविशेष" इति। प्रथमाङ्गवृत्तौ त्वात्मप्रदेशरूपा अभ्यन्तरा निर्वृत्तिरिति विशेषः, अयमत्र तद्ग्रन्थः—"निर्वर्त्त्यत इति निर्वृत्तिः। केन निर्वर्त्त्यते? कर्मणा, तत्रोत्सेधाङ्गुलासंख्येयभागप्रमितानां शुद्धानामात्मप्रदेशानां प्रतिनियतचक्षुरादीन्द्रियसंस्थानेनावस्थितानां या वृत्तिरभ्यन्तरा निर्वृत्तिस्तेष्वेवात्मप्रदेशेष्विन्द्रियव्यपदेशभाग् यः प्रतिनियतसंस्थानो निर्माणनाम्ना पुद्गलविपाकिना वार्द्धकीस्थानीयेनारचितः कर्णशष्कुल्यादिविशेष अङ्गोपाङ्गनाम्ना तु निष्पादित इति बाह्यनिर्वृत्तिः, तस्या एव निर्वृत्तेर्द्विरूपाया येनोपकारः क्रियते तदुपकरणम्। तच्चेन्द्रियकार्यसमर्थं, सत्यामपि निर्वृत्तावनुपहतायां मसूराद्याकृतिरूपायां तस्योपघातात् न पश्यति। तदपि निर्वृत्तिवद् द्विधा" इति। राजवार्त्तिककारेणाप्येवमेवोक्तं, तथा चाह—"निर्वर्त्त्यत इति निर्वृत्तिः ॥ १ ॥ द्वेधा बाह्याभ्यन्तरभेदात् ॥ २ ॥ तत्र विशुद्धात्मप्रदेश वृत्तिरभ्यन्तरा ॥ ३ ॥ तत्र नामकर्मोदयापादितावस्थाविशेषः पुद्गलप्रचयो बाह्या ॥ ४ ॥" तृतीयचतुर्थयोश्च सूत्रयोर्वृत्तिः—"उत्सेधाङ्गुलस्यासंख्येयभागप्रमितानां विशुद्धानामात्मप्रदेशानां प्रतिनियतचक्षुरादीन्द्रियसंस्थानमानावस्थितानां वृत्तिरभ्यन्तरा निर्वृत्तिः। तेष्वात्मप्रदेशेष्विन्द्रियव्यपदेशभाक् यः प्रतिनियतसंस्थानो नामकर्मोदयापादितावस्थाविशेषः पुद्गलप्रचयः सा बाह्या निर्वृत्तिः" इति। तत्त्वार्थभाष्ये यद्यपि निर्वृत्तेर्द्वैविध्यं पृथक्त्वेन नोक्तं

तथापि बाह्याभ्यन्तरभेदेनोपकरणस्य द्वैविध्यप्रतिपादनेन निर्वृत्तेरपि द्वैविध्यं प्रतिपादितमित्यनुमीयते, तथा च तद्ग्रन्थः—
"निर्वृत्तिरङ्गोपाङ्गनामनिर्वर्तितानीन्द्रियद्वाराणि, कर्मविशेषसंस्कृताः शरीरप्रदेशाः, निर्माणनामाङ्गोपाङ्गप्रत्यया मूलगुणनिर्वर्त्तनेत्यर्थः ।
उपकरणं बाह्यमभ्यन्तरं च निर्वर्तितस्यानुपघातानुग्रहाभ्यामुपकारी"ति । "अङ्गोपाङ्गनाम्ना निर्वर्त्तितानि जनितानि इन्द्रियद्वाराणि, इन्द्रिय-
स्योपयोगरूपस्य भावेन्द्रियस्य द्वाराणि, अवधानप्रदानमार्गाइत्यर्थः । कर्णवेधाद्युत्तरगुणनिर्वर्त्तना यथोत्पन्नवर्त्तिनी औदारिकादिप्रायोग्यद्र-
व्यवर्गणामूलकारणव्यवस्थितगुणनिर्वर्त्तनेत्यर्थः । शक्तिशक्तिमद्भावेन निर्वृत्त्युपकरणयोः कथञ्चनभेदः, तथाहि—सत्यामभ्यन्तरनिर्वृत्तौ
द्रव्यादिनोपहते उपकरणेन्द्रियेऽर्थज्ञानं न भवतीति, तदुक्तं—'इदमान्तरनिर्वृत्तेर्ननूपकरणेन्द्रियम् । अर्थान्तरं शक्तिशक्तिमतोर्भेदात् कथञ्चन
॥ १ ॥ कश्चिद्भेदश्च तस्यामान्तरनिर्वृत्तौ सत्यामपि पराहते । द्रव्यादिनोपकरणेन्द्रियेऽर्थाऽज्ञानदर्शनात् ॥ २ ॥' 'आगमे तु नास्ति कश्चिद-
न्तर्बहिर्भेद उपकरणस्येत्याचार्यस्यैव कुतोऽपि सम्प्रदायादिति' तत्त्वार्थवृत्तौ । उक्तं द्रव्येन्द्रियस्वरूपम् ।

अथ भावेन्द्रियस्य स्वरूपमुच्यते । तत्र लब्धिस्तत्तदावरणक्षयोपशमजनिता, तथा च रूपरसादिग्रहणपरिणतेरावारकं यत्
कर्म तस्य क्षयोपशमस्तज्जनितं लब्धीन्द्रियं भवतीति तात्पर्यम् । 'मतिज्ञानावरणदर्शनावरणकर्म्मणः क्षयोपशमस्तेन
जनिता निष्पादिता' इत्यर्थस्तत्त्वार्थवृत्तौ व्याख्यातः, तदुक्तं—"तदावरणक्षयोपशमजनिता चेति । तस्याः खलु रूपादिग्रहण-
परिणतेरावरणीयमावारकमाच्छादकं, बाहुलकात् कर्त्तरि व्युत्पत्तिः, तदावरणीयं च तत्कर्म च तदावरणीयं कर्म्म, मतिज्ञानदर्शनावरणकर्मे-
त्यर्थः । तस्योभयस्य क्षयोपशमोऽभिहितलक्षणस्तज्जनिता च तन्निष्पादिता चेत्यर्थ" इति । प्रथमाङ्गवृत्तौ तु सामान्येनाद्यकर्मद्वय-
क्षयोपशमो गृहीतः, तदुक्तं—"लब्धिर्ज्ञानदर्शनावरणीयक्षयोपशमरूपा, यत्सन्निधानादात्मा द्रव्येन्द्रियनिर्वृत्तिं प्रति व्याप्रियते" इति ।

ननु प्रतिस्वमिन्द्रियावरणक्षयोपशमो लब्धीन्द्रियमन्यत्रोक्तमत्र च तज्जनितेति कथं न विरोध इति चेत्? सत्यम्, कारणे कार्योपचारादन्यत्रोक्तम्, तदेवाह तत्त्वार्थवृत्तौ—"ननु च क्षयोपशम एव लब्धिरुक्ता तेन जनिताऽन्या का भवेल्लब्धिः? उच्यते, मतिज्ञानदर्शनावरणक्षयोपशमावस्थानिर्वृत्तौ ज्ञानसद्भावः क्षायोपशमिकः, सोऽत्र लब्धिरुच्यते। कथं कृत्वोक्तं प्राक् क्षयोपशमो लब्धिरिति? कारणे कार्योपचारमालम्ब्य नड्वलोदकं पादरोग इतिवदित्यभिहितमतो न दोषाय" इति। ननु तत्त्वार्थभाष्ये—'लब्धिः कारणत्रयजनिते'त्युक्तं, तथा च भाष्यम्—"लब्धिर्नाम गतिजात्यादिनामकर्मजनिता च तदावरणीयकर्मक्षयोपशमजनिता च इन्द्रियाश्रयकर्मोदयनिर्वृत्ता च जीवस्य भवति" इति चेत्? अत्रोच्यते—भाष्ये गतिजातिशरीरादिनामकर्मणां क्षयोपशमस्य विदूरवर्त्तिनिमित्तकारणत्वं, अङ्गोपाङ्गनिर्माणादीनां क्षयोपशमस्य च प्रत्यासन्नवर्त्तिनिमित्तकारणत्वं ज्ञापनार्थं तथोक्तमिति, तथा च तद्वृत्तिः—"मनुष्यत्वपञ्चेन्द्रियत्वादिलाभे प्रतिस्वं तदावरणकर्मक्षयोपशमो निर्वर्त्त्यते, तस्य क्षयोपशमस्य गतिजातिप्रभृतिनामकर्मकारणत्वान्निर्दिष्टमाचार्येण" इति। केचित्त्वायुष्कमपि तदाश्रयत्वात् क्षयोपशमस्य कारणमाचक्षत इति। अन्ये पुनराहुः—'अन्तरायकर्मक्षयोपशमापेक्षया इन्द्रियविषयोपभोगज्ञानशक्तिर्लब्धिरुच्यते' इति। स्पर्शादिषु ग्रहणरूपो व्यापार उपयोगेन्द्रियम्। उपयोगः प्रणिधानमायोगस्तद्भावः परिणाम इति पर्यायाः। उपयोगस्तु चेतना, सा द्वेधा—संविज्ञानलक्षणा, अनुभवलक्षणा च। तत्र घटाद्युपलब्धिः संविज्ञानलक्षणा, सुखदुःखादिसंवेदनाऽनुभवलक्षणा—उभयेऽप्येते उपयोगग्रहणेन गृहीते इति। अव्यवहितमनस्कत्वं प्रणिधानम्, स्पष्टो हि मतिज्ञानोपयोगो मानसोपयोगावश्यंभावी द्रव्येन्द्रियाद्यपेक्षश्च, नावध्याद्युपयोगजस्तथेति। 'आयोग' इति स्वविषयमर्यादया स्पर्शादिभेदनिर्भासो ज्ञानोदयः स्पर्शनेन्द्रियादिजन्माभिधीयते, 'तद्भाव'

इति उपयोगलाञ्छनो जन्तुस्तच्छब्देनामृश्यते, तस्य भावः स्पर्शनादिद्वारजन्मज्ञानमात्मनो भूतिरुद्भव इति यावत्। 'परिणामो'ऽप्यात्मन एव तद्भावलक्षणो, नार्थान्तरप्रादुर्भावलक्षणः, स्पर्शनादिनिमित्तज्ञानस्यात्मपरिणतिरूपत्वादिति तत्त्वार्थवृत्तौ पर्यायशब्दा व्याख्याताः । **गोम्मटसारे तु**—"मदिआवरणखओवसमुत्थविसुद्धी तज्जवोहो वा । भाविंदियं तु दव्वं देहुदयजदेहचिह्नं तु ॥ १ ॥" व्याख्या—मतिज्ञानावरणक्षयोपशमोत्था विशुद्धिः—जीवस्यार्थग्रहणशक्तिलक्षणलब्धिः, मतिज्ञानावरणक्षयोपशमजनितबोधः—स्वार्थग्रहणव्यापाररूपोपयोगश्च इति द्वये भावेन्द्रियम्, भावश्चित्तपरिणामस्तदात्मकमिन्द्रियं भावेन्द्रियम्, इन्द्रस्यात्मनो लिङ्गमिन्द्रियमिति व्युत्पत्त्यापि लब्ध्युपयोगलक्षणस्यैव भावेन्द्रियसमर्थनात् । पुनर्जातिनामकर्मोदयसहकारि देहनामकर्मोदयजनितं निर्वृत्त्युपकरणरूपम् देहचिह्नमेकेन्द्रियादिशरीरस्य प्रतिनियतसंस्थानाभिव्यञ्जकरूपपुद्गलद्रव्यात्मकमिन्द्रियं द्रव्येन्द्रियम् । एवमिन्द्रियं द्रव्यभावात्मकतया द्विधा भिद्यते । तत्र लब्ध्युपयोगौ भावेन्द्रियमिति । अर्थग्रहणशक्तिर्लब्धिः, अर्थग्रहणव्यापार उपयोगः । ××× पुनस्तेष्विन्द्रियेषु तत्तदावरणक्षयोपशमविशिष्टात्मकप्रदेशसंस्थानमभ्यन्तरनिर्वृत्तिः । तदवष्टब्धशरीरप्रदेशसंस्थानं बाह्यनिर्वृत्तिः । इन्द्रियपर्याप्त्या तनोः कर्मवर्गणास्कन्धरूपं स्पर्शनाद्यर्थज्ञानसहकारि यत्तदभ्यन्तरमुपकरणम् । तदाश्रयभूतत्वगादिकं बाह्यमुपकरणमिति ज्ञातव्यम्" इत्युक्तम् । अत्र लब्धीन्द्रियस्य दर्शनावरणक्षयोपशमेऽव्याप्तिः, बाह्यनिर्वृत्तिस्थाने च बाह्योपकरणमित्यादिविप्रतिपत्तयो धीमद्भिः स्वयं विभावनीया इति ।

ननु श्रवणेन्द्रियादिक्षयोपशमलब्धौ सत्यां कर्णशष्कुल्यादिरूपा निर्वृत्तिर्भवति, नान्यथा, निर्वृत्तौ च सत्यामुपकरणं, तदाश्रयत्वात्, सति चोपकरणे उपयोगः, उपयोगस्य तद्द्वारजन्मत्वात्, एवं च सति अवध्याद्युपयोगाभावः प्रसज्यते, निर्वृ-

त्त्यादीन्द्रियाभावादिति चेत्? न, यतो न सर्वोऽप्युपयोगो लब्धिनिर्वृत्त्युपकरणेन्द्रियकृत उच्यते, किन्तु मतिज्ञानाख्य एक एव त्रयनिमित्तकः, तदुक्तं तत्त्वार्थवृत्तौ—"स्पर्शादिविषयो मतिज्ञानव्यापारः प्रतिनियतविषयानुभवनम्, उपलम्भनमिति, अनेन शेषज्ञानव्युदासमादर्शयति, मतिज्ञानोपयोग एव लब्धिनिर्वृत्त्युपकरणापेक्षः प्रवर्त्तते न शेषः" इति। निर्वृत्त्युपकरणलब्ध्युपयोगानामन्यतमेनैकेनाप्यङ्गेन विकले सति समुदायेऽपि न जातुचित् शब्दादिविषयस्वरूपावबोधो भवत्यात्मनः, विकलकारणत्वात्। अत्र यदा शब्दोपयोगवृत्तिरात्मा भवति तदा न स्वल्पोऽपि शेषकरणव्यापारः, अर्थान्तरोपयोगे हि प्राच्यमुपयोगबलं कर्मणाऽऽव्रियते, शङ्खशब्दोपयोगोपयुक्तस्य शृङ्गशब्दादिविज्ञानमस्तमितं भवत्यत एकस्मिन्नपीन्द्रिये क्रमेणोपयोगः, किमुत बहुबहुविधविशेषभाजीन्द्रियान्तरे, तस्मादेकेन्द्रियेण सर्वात्मनोपयुक्तः सन् सर्वोऽप्युपयोगं प्रति एकेन्द्रियो भवति, एवं शेषविषयपरिच्छेदपरिणतावपि वाच्यमित्यादिकं तत्त्वार्थवृत्तितोऽवसेयम्। येनेन्द्रियेण मनः संयुज्यते तदेवैकमिन्द्रियं विषयग्रहणाय प्रवर्तते। सशब्दां सुरभिं मृद्वीं दीर्घशष्कुलीं खादतो युगपत् पञ्चानामप्युपयोगानां या प्रवृत्तिः दृश्यते सा युगपत् पत्रशतवेधवत् समस्तेन्द्रियेषु मनसः शीघ्रयोगात् भ्रान्तिनिबन्धना, यतो जिनानामपि युगपदुपयोगद्वयाभावः, किं पुनः छद्मस्थानामिति, तदुक्तम्—"सशब्दां सुरभिं मृद्वीं, खादतो दीर्घशष्कुलीं। पञ्चानामुपयोगानां, यौगपद्यस्य यो क्रमः ॥१॥ स चेन्द्रियेषु सर्वेषु, मनसः शीघ्रयोगतः। सम्भवेत् युगपत् पत्र–शतवेधाभिधानवत् ॥२॥ अन्यथा तूपयोगौ द्वौ, युगपन्नार्हतोऽपि चेत्?। छद्मस्थानां पञ्च तर्हि, सम्भवेयुः कथं सह ॥३॥" इति। तार्किकैरप्युक्तम्—"न च दीर्घशष्कुलीभक्षणादौ नानावधानभाजां च कथमेकदा नानेन्द्रियजन्यज्ञानमिति वाच्यम्, मनसोऽतिलाघवात् त्वरया नानेन्द्रियसम्बन्धान्नानाज्ञानोत्पत्तेः, उत्पलशतपत्रभे-

दादिव यौगपद्यप्रत्ययस्य भ्रान्तत्वात्" इति । आत्मा मनसा सहैति, मन इन्द्रियेण, स्वार्थेन चेन्द्रियमेष क्रमः। एकेन्द्रियादिव्यवहारस्तु द्रव्येन्द्रियनिबन्धनः, अन्यथा पञ्चोपयोगयोगतो बकुलादिरेकेन्द्रियोऽपि पञ्चेन्द्रियः स्यात्, तदुक्तं—"पंचेंदिओ उ बउलो, नरो व्व सव्वलद्धिभावाओ। तह वि न भण्णइ पंचि–दिओ त्ति दव्विंदियाभावा ॥१॥ रणन्नुपुरश्रृङ्गार–चारुलोलेक्षणामुखात् । निर्यत्सुगन्धिमदिरागण्डूषादेष पुष्यति ॥१॥" इति । नन्विन्द्रियज्ञाने मनसोऽपि व्यापारवत्त्वेन कथं मनसो नोइन्द्रियत्वं ? उच्यते, मन इन्द्रियज्ञानेऽनिन्द्रियज्ञाने चोभयत्र साधारणकारणत्वेन न तथा व्यपदेशः । असाधारणकरणं चेन्द्रियमत्र विवक्षितम्, यथा जलपवनातपादिजन्यत्वेऽप्यङ्कुरस्य बीजेनैव व्यपदेशः, शाल्यङ्कुरोऽयं, कोद्रवाङ्कुरोऽयमिति, तदुक्तं रत्नाकरावतारिकायाम्—"नन्विन्द्रियज्ञाने मनोऽपि व्यापिपर्त्तीति कथं न तेन व्यपदेशः ? उच्यते, इन्द्रियस्यासाधारणकारणत्वात्, मनः पुनरनिन्द्रियवेदनेऽपि व्याप्रियत इति साधारणं तत्, असाधारणेन च व्यपदेशो दृश्यते यथा पयःपवनातपादिजन्यत्वेऽप्यङ्कुरस्य बीजेनैव व्यपदेशः, शाल्यङ्कुरः कोद्रवाङ्कुरोऽयम्" इति । अत अनिन्द्रियं मनः, तच्च द्विभेदम्–द्रव्यमनः, भावमनश्चेति । तत्र सर्वात्मप्रदेशवर्त्तिना मनःपर्याप्तिरूपकारणविशेषपरिगृहीताः स्कन्धा द्रव्यमनस्त्वेनाभिधीयन्ते, तदुक्तं नन्दीवृत्तौ—"मनःपर्याप्तिनामकर्मोदयतो यत् मनःप्रायोग्यवर्गणादलिकमादाय मनस्त्वेन परिणमितं तद्द्रव्यरूपं मन" इति । एवं नन्दीचूर्णावपि—"मणपज्जत्तिनामकम्मोदयओ तज्जोगे मणोदव्वे घेत्तूण मणत्तेण परिणामिया दव्वा दव्वमणो भण्णइ" इति । द्रव्यमनोऽवलम्बनेन जीवस्य यो मननपरिणामः स भावमनः, तथा च नन्दीचूर्णौ—"जीवो पुण मणणपरिणामकिरियापन्नो भावमनो, किं भणियं होइ ? मणदव्वालंबणो जीवस्स मणणवावारो भावमणो भण्णइ" इति । तत्त्वार्थवृत्तावपि—"भावमनस्तु जीवस्योपयोगश्चित्तचेतनायोगाध्यवसनावधानस्वान्तमनस्कार-

रूपः परिणामः" इति । द्रव्यमनोऽन्तरेण भावमनो न भवति, भावमनो विना तु द्रव्यमनो भवति, यथा भवस्थकेवलिनः, तथा चोक्तं लोकप्रकाशे—"द्रव्यचित्तं विना भाव–चित्तं न स्यादसंज्ञिवत् । विनापि भावचित्तं तु, द्रव्यतो जिनवत् भवेत् ॥१॥" इति । नन्वेकेन्द्रियादीनां द्रव्यमनसोऽभावेन कथं भावमनः संगच्छत इति प्रश्न उच्यते, एकेन्द्रियादीनामपि किञ्चिन्मात्रं द्रव्यमनोऽवलम्बनं संभाव्यते, तदुक्तं नन्दीवृत्तौ—"स च सम्मूर्छिमपञ्चेन्द्रियविकलेन्द्रियादिर्विज्ञेयः, स हि स्वल्पस्वल्पतरमनोलब्धिसम्पन्नत्वादस्फुटमस्फुटतरमर्थं जानाति, तथाहि–संज्ञिपञ्चेन्द्रियापेक्षया सम्मूर्छिमपञ्चेन्द्रियोऽस्फुटमर्थं जानाति, ततोऽप्यस्फुटं चतुरिन्द्रियः, ततोऽप्यस्फुटतरं त्रीन्द्रियः, ततोऽप्यस्फुटतमं द्वीन्द्रियः, ततोऽप्यस्फुटतममेकेन्द्रियः, तस्य प्रायो मनोद्रव्यासंभवात् केवलमव्यक्तमेव किञ्चिदतीवाल्पतरं मनो द्रष्टव्यम्, यद्वशादाहारादिसंज्ञा अव्यक्तरूपाः प्रादुष्यन्ति" इति। एतेन नैयायिका यत् "निरवयवस्याणुरूपस्यैव मनसः कल्पनात्" इति वदन्ति तदपि प्रत्युक्तम् । इन्द्रियाणि च स्पर्शनरसनघ्राणचक्षुःश्रोत्रलक्षणानि पञ्च । तत्र स्पृशत्यनेनात्मेति स्पर्शनम्, रसत्यनेनात्मेति रसनम्, जिघ्रत्यनेनात्मेति घ्राणम्, चष्टेरनेकार्थत्वात् तद्दर्शनार्थविवक्षायां 'चष्टे'ऽर्थान् पश्यत्यनेनात्मेति चक्षुः, शृणोत्यात्माऽनेनेति श्रोत्रम् । एतानि पञ्चापीन्द्रियाणि आत्मनोऽभेदेन वर्तमानान्यतिशयवत्प्रयोजनसाधनं प्रत्याहितपाटवानि ज्ञाने निर्वर्त्त्ये पादवद्देवदत्तो मांसपिण्डः पादाभ्यां ग्रामं गच्छतीतिवदभिन्नानि करणानि, कर्तुः वास्यादीनि तु भिन्नानीति भिन्नाभिन्नकरणकलापग्रामणीरयमात्मा निरवशेषक्रियानुष्ठानशक्तियुक्तः कर्त्ता, करणाभावे तु तृणमपि कुटिलयितुमक्षम इति । सर्वसंसारिजीवस्वामित्वेन सर्वशरीरवर्त्तित्वेनाल्पशक्तिमत्त्वेन चादौ स्पर्शनेन्द्रियोपादानम्, ततस्तारम्येनाल्पस्वाम्यणुशरीरप्रदेशस्थबहुशक्तिकत्वात् रसनादीनि तूपन्यस्तानि ।

अत्र यौगाः सङ्गिरन्ते, 'सामान्यतो द्रव्येन्द्रियं पुद्गलात्मकं न भवति, अत्यन्तभिन्नजातीयेभ्यः पृथिव्यादिभ्योऽत्यन्तभिन्नजातीयानां घ्राणादीनामुत्पत्तेः, तदुक्तं न्यायसूत्रे—"घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः" (१–१–१२) इति। भवन्ति चात्रानुमानानि–घ्राणेन्द्रियं पार्थिवं, रूपादिषु मध्ये गन्धस्यैवाभिव्यञ्जकत्वात्, कुंकुमगन्धाभिव्यञ्जकगोघृतवत्, तदभिव्यञ्जकं च घ्राणं, तस्मात् पार्थिवमिति। आप्यं रसनं, रूपादिषु सन्निहितेषु रसस्यैवाभिव्यञ्जकत्वात्, मुखशोषिणां लालावत्, गन्धाद्यव्यञ्जकत्वे सति रसव्यञ्जकत्वात्, सक्तुरसाभिव्यञ्जकोदकवदिति। चक्षुस्तैजसं, रूपादिषु सन्निहितेषु रूपस्यैवाभिव्यञ्जकत्वात्, प्रदीपवत्, परकीयस्पर्शाद्यव्यञ्जकत्वे सति परकीयरूपव्यञ्जकत्वाद्वा, तद्वत्। वायवीयं स्पर्शनं, रूपादिषु सन्निहितेषु स्पर्शस्यैवाभिव्यञ्जकत्वात्, अङ्गसङ्गिसलिलशैत्याभिव्यञ्जकवायुवत्। श्रोत्रस्य तु पुद्गलात्मकत्वमतीवासम्बद्धम्, शब्दस्य स्वसमानजातीयविशेषगुणवतेन्द्रियेण ग्रहणत्वोपपत्तेः, तथाहि—शब्दः स्वसमानजातीयविशेषगुणवतेन्द्रियेण गृह्यते, सामान्यविशेषकत्वे सति वाह्यैकेन्द्रियप्रत्यक्षत्वात्, रूपादिवदिति। सामान्यविशेषत्वादित्युच्यमाने परमाणुभिर्व्यभिचारस्तद् व्यवच्छेदार्थमिन्द्रियप्रत्यक्षत्वादित्युक्तम्, तथापि घटादिभिर्व्यभिचारस्तन्निरासार्थमेकग्रहणम्, एवमप्यात्मना व्यभिचारस्तदपाकरणार्थं वाह्यग्रहणम्, वाह्यैकेन्द्रियप्रत्यक्षत्वादित्युच्यमाने रूपत्वादिभिर्व्यभिचारस्तद् व्यपोहाय सामान्यविशेषत्वे सतीति कृतम्' तन्न सम्यक्, पृथिव्यादीनामत्यन्तभिन्नजातीयत्वासिद्धितः प्रत्येकं घ्राणादीनामिन्द्रियाणां तदारब्धत्वासिद्धेः। यत्तु घ्राणेन्द्रियं पार्थिवमित्यादि, तदपि न शोभावहम्, जलेन व्यभिचारात्, दृश्यते हि जलेन सिच्यमानाया भूमेर्गन्धस्याभिव्यक्तिः। सक्तुरसाभिव्यञ्जकत्वेन गन्धमात्र-

स्याभिव्यञ्जकत्वासिद्धेरित्यपि न वाच्यम्, येन सलिलेन गन्धो व्यञ्जितः सक्तुरसो नाभिव्यञ्जितस्तेन व्यभिचारात्। 'परकीयरूपादिविषयकसाक्षात्कारस्वरूपायोग्यत्वकल्पनात् गन्धाभिव्यञ्जकजलेऽपि रसव्यञ्जकतावच्छेदकजलत्वस्य सत्त्वान्न दोष' इत्यपि न वक्तव्यम्, तत्कल्पनायां मानाभावात्। आप्यं रसनमित्याद्यपि न युक्तिसहम्, लवणस्य पार्थिवत्वेऽपि रूपादिषु मध्ये रसस्यैवाभिव्यञ्जकत्वप्रसिद्धेस्तत्र व्यभिचारात्, प्रथमदृष्टान्ते साधनविकलता च, लालाद्रव्यस्य कुलालमृत्तिकायां क्षिप्तस्य गन्धाभिव्यञ्जकत्वेनापि प्रतीतेः। चक्षुस्तैजसमित्याद्यप्यसमञ्जसम्, मणिना व्यभिचारात्, स च रूपादिषु मध्ये रूपस्यैव प्रकाशको, न च तैजसः, प्रशस्तपादभाष्ये "पाषाण उपलमणिपर्वतादयः" इत्यादिना पृथ्वीप्रकरणे तस्य पार्थिवत्वाभिधानात्। वायवीयं स्पर्शनमित्यप्यलौकिकम्, घनसारादिना व्यभिचारात्, स च जलादौ शीतस्पर्शस्यैवाभिव्यञ्जको न वायवीय इति। श्रोत्रस्य तु 'यत् पुद्गलात्मकत्वमतीवासम्बद्धमि'त्याद्युक्तं तदपि न युक्तम्, यतः शब्दस्य पुद्गलात्मकत्वं सयुक्तिकम्, तथाहि–शब्दः, पुद्गलद्रव्यपरिणामः, मूर्तत्वात्, मूर्तत्वं तस्योरःकण्ठशिरोजिह्वामूलदन्तादिद्रव्यान्तरविक्रियापादनसामर्थ्यात्, तथा ताड्यमानपटहभेरीझल्लरिजलस्थकिलिञ्चादिप्रकम्पनात् पिप्पल्यादिवत्, तथा शङ्खादिशब्दानामतिमात्रप्रवृद्धानां श्रवणबधिरकरणसामर्थ्यम्, तच्च नामूर्ते आकाशादौ, अतोऽपि नाकाशगुणः शब्दः। तथा प्राप्तयायित्वात्, पर्वतप्रतिहतप्रस्तरवत्, एवमम्बरगुणाभावे द्वारानुविधायित्वसंहारसामर्थ्यवायुप्रेर्यमाणत्वसर्वादिग्ग्राह्यत्वाभिभवनीयत्वाभिभावुकत्वादयोऽपि हेतवो वाच्याः, क्रमेण चातपागुरुधूपतृणपर्णादिप्रदीपतारासमूहादिसवितृमण्डलप्रकाशादयो दृष्टान्ता अप्यभिधातव्या इति। ततो नाक्षाणां प्रतिनियतभूतकार्यत्वं कुतोऽपि प्रमाणात् सिद्ध्यतीति स्थितम्।

तथेन्द्रियाणां साङ्ख्योपकल्पितोऽहङ्कारोऽपि न युज्यते, करणत्वात्, वास्यादिवत्, तथा प्रतिनियतविषयप्रकाशकत्वात्, प्रदीपवत्, एवं प्रतिनियतज्ञानव्यपदेशनिमित्तत्वादपि, रूपादिवत्, तथाहि–यथा रूपज्ञानं रसज्ञानमित्यादि प्रतिनियतज्ञानव्यपदेशहेतवो रूपादयो नाहङ्कारिकास्तद्वच्चाक्षुषज्ञानं रासनज्ञानमित्यादि प्रतिनियतज्ञानव्यपदेशहेतुत्वमिन्द्रियाणामपि। तथा पौद्गलिकानुग्रहोपघाताश्रयत्वाद्दर्पणादिवत् नेन्द्रियाणामहङ्कारित्वम्, यथैव हि दर्पणादयः पौद्गलिकैर्भस्मादिभिः क्रियमाणानुग्रहोपघाताश्रयभूता नाहङ्कारिकाः किन्तु पौद्गलिकाः, तथाञ्जनरेणुकणादिभिः पौद्गलिकैः क्रियमाणानुग्रहोपघाताश्रयभूतानीन्द्रियाण्यप्येवमिति। एवं मनोऽपि नाहङ्कारिकमनियतविषयत्वादात्मवदिति। ततः पौद्गलिकत्वं सिद्धमिन्द्रियाणामनिन्द्रियस्य चेति।

पञ्चानामपीन्द्रियाणां स्थूलत्वमङ्गुलासंख्येयभागप्रमितं वाच्यम्। नन्वङ्गुलासङ्ख्येयभागत्वे शरादिना त्वगिन्द्रिये विद्धे सति कथं शरीरान्तर्वेदनानुभवः? अत्रोच्यते–त्वगिन्द्रियस्य शीतस्पर्शादयो विषयाः, यथा चक्षुषो रूपम्, न सुखदुःखानुभवरूपा वेदना, अतस्तामात्मा सकलेनापि देहेनानुभवत्येव ज्वरादिवत्। न च शरीरान्तः त्वगिन्द्रियाभावे कथं शीतलपानीयपानेऽन्तःशीतस्पर्शानुभवो भवतीति वाच्यम्, अभ्यन्तरेऽपि शुषिरपर्यन्ते त्वगिन्द्रियं वर्तते, अत एव कर्णादिशुषिरेष्विवान्तःशैत्यं वेद्यते, तदुक्तं प्रज्ञापनामूलवृत्तौ—"सर्वप्रदेशपर्यन्तवर्त्तित्वात्ततोऽभ्यन्तरतोऽपि शुषिरस्योपरि त्वगिन्द्रियस्य भावादुपपद्यते, अन्तरपि शीतस्पर्शवेदनानुभव" इति। श्रोत्रचक्षुर्नासिकानामङ्गुलासङ्ख्येयभागः पृथुत्वं, त्वगिन्द्रियस्य स्वस्वदेहप्रमितं पृथुत्वमिति। त्वगिन्द्रियस्य पृथुतोत्सेधाङ्गुलेन शेषाणामात्माङ्गुलेनेति। ननु येनाङ्गुलेन शरीरं प्रमितं तेनैवाङ्गुलेनेन्द्रियाण्यपि

मातुं युज्यते, न शरीरमुत्सेधाङ्गुलेन, आत्माङ्गुलेन चेन्द्रियाणीति चेत्? अत्रोच्यते–रसनेन्द्रियस्योत्सेधाङ्गुलेन पृथुत्वे स्वीकृते सति त्रिक्रोशादिशरीरयुतानां नराणां, षड्क्रोशादिशरीरयुतानां गजादीनां च निर्वृत्तीन्द्रियस्यात्यल्पत्वेन रसनां प्रत्यव्याप्तत्वेन विषयवेदिता न स्यात्, सुप्रसिद्धो यः सर्वात्मना रसज्ञानव्यवहारः सोऽपि न स्यात्। एवं शेषेन्द्रियाणामपि भावनीयम्।

नन्विन्द्रियाणां के विषया इति चेत्? स्पर्शरसगन्धवर्णशब्दाः, तदुक्तं तत्त्वार्थे—"स्पर्शरसगन्धवर्णशब्दास्तेषामर्थाः" इति। तत्र स्पृश्यतेऽसाविति स्पर्शः शीतोष्णादिभेदादष्टधा, रस्यत इति रसः तिक्तादिभेदात्पञ्चधा, लवणस्य मधुरान्तर्भावात्। गन्ध्यते आघ्रायत इति गन्धः, सोऽपि द्विप्रकारः सुरभिरितरश्च, साधारणश्चेत्यपरे। वर्ण्यतेऽलङ्क्रियतेऽनेनेति वर्णः कृष्णादिपञ्चधा, शब्द्यत इति शब्दो वाग्योगप्रयत्ननिसृष्टोऽनन्तानन्तप्रादेशिकपुद्गलस्कन्धप्रतिविशिष्टपरिणामः, पुद्गलद्रव्यसंघातजन्मा वा गर्जितादिरूपः। एते स्पर्शादयस्तेषामनन्तरोक्तानां स्पर्शनादीनां करणानामर्थाः परिच्छेद्या विषया इत्यर्थः। तत्त्वार्थसूत्रे च सूरिणा विषयशब्दमपहायार्थग्रहणं यदकारि तत् स्वाभिप्रेतार्थज्ञापनार्थम्। स्वाभिप्रेतार्थस्तु एकमेव हि वस्त्वर्थ्यमानत्वादर्थः। सोऽप्यवस्थाभेदेन तथातथार्थतामियर्ति, तथाहि–यदेवाङ्गुल्यग्रेण स्पृश्यते तदेव विद्रुमद्रुमच्छायानुकारिणा रसनाग्रेण रस्यते, नासिकाविवरेणाघ्रायते, नेत्राभ्यामालोक्यतेऽतिबहुकालपर्युषितमतिकठिनीभूतमभ्यवव्यवह्रियमाणमातनोति ध्वनिम्, न खलु क्वचिद्देशे स्पर्शः क्वचिद्रसादिश्चावस्थितः, किन्तु य एव देशः शीतादिस्पर्शवान् स एव मधुरादिरसवान् उपलभ्यते, ततस्तदेवैकमभिन्नं पुद्गलद्रव्यमनेकग्रहणापेक्षया भेदमासादयति, पित्र्याद्यनेकविशेषापेक्षपुरुषभेदप्रतिपत्तिवत्। तद्धि चक्षुर्ग्रहणगोचरतामितं द्रव्यमभिन्नमपि नीलाद्याकारेण परिणाममुपागच्छद्रूपमिति व्यपदिश्यते,

रसनग्रहणविषयतामापन्नं तिक्तादिपरिणाममास्कन्दद्रस इति तदेवाभिधीयते, एवमितरेन्द्रियप्राप्तानामपि वाच्यम् । द्रव्यमिन्द्रियनानात्वान्नानाकारस्पर्शादिभेदमापद्यते, स्वनिमित्ततस्त्वेकाकारं, स्वलक्षणविशिष्टत्वात्, यदेवास्यान्तरङ्गं लक्षणं तदेव तस्य स्वरूपं, त एव हि तस्य सर्वदाऽजहद्वृत्तिनो धर्माः स्वलक्षणम्, परनिमित्तास्तु द्रव्यक्षेत्रकालादयोऽपगच्छन्तोऽनुगच्छन्तश्च न स्वलक्षणं, तदनादिपारिणामिकधर्माविष्कृतस्वरूपं वस्त्विन्द्रियादिव्यपदेशात् न भिद्यते, यश्च स्वरूपावस्थितस्य पश्चादिन्द्रियसम्बन्धो नासौ वस्तुनः स्वरूपं भवति, तेन स्पर्शादयो न द्रव्यादर्थान्तरमथ च परनिमित्त एषां भेदः स द्रव्याभेदेऽपीत्येतेन दार्शनस्पार्शनमेव च द्रव्यमिति प्रत्यस्तम् । स्पर्शादीनां क्रमेण निर्देशस्तु स्पर्शनादिभिरिन्द्रियैः क्रमेणाभिसम्बन्धो यथा स्यात् तदर्थमिति । एते च पुद्गलद्रव्यस्याविशेषेण गुणा वाच्याः । अत्र केचिद्विशिष्य तान् कल्पयन्ति यथा–'रूपरसगन्धस्पर्शवती पृथिवी, रूपरसस्पर्शवत्य आपो द्रवाः स्निग्धाश्च, तेजो रूपस्पर्शवत्, वायू रूपरहितस्पर्शवान्' इति तन्न युक्तम्, यतो रूपादिमान् वायुः, स्पर्शवत्त्वात्, घटवत्, तेजोऽपि रसगन्धवत्, रूपवत्त्वात्, गुडवत्, आपोऽपि गन्धवत्यः, रसवत्त्वात्, आम्रफलवत्, किञ्चावादिषु साक्षात् गन्धोपलब्धेश्च । न च पार्थिवपरमाणुसंयोगात् गन्धोपलब्धिरिति वाच्यम्, विशेषहेत्वभावात्, अत्र 'एते पार्थिवपरमाणूनां गुणा अन्यत्र संयोगादुपलभ्यन्ते, किन्तु नाबादीनां गुणा' इति विशेषनियमाभावश्च, यदि संयोगादुपलब्धिस्तर्हि रसस्यापि संयोगादुपलब्धिरुच्यताम् । न च पृथिव्यादीनां पृथक् जातित्वमपि सिध्यति, यतः परमाणुविशेषा एव पुद्गलजातिमजहन्तो निमित्तवशात् विश्वरूपतामापद्यन्त इति । दृश्यते हि लोके कारणवशात् पृथिव्या द्रवत्वम्, अपां च घनभावः, घनस्य च द्रवत्वम् । तेजसोऽपि मेषीभावः, वायोरपि रूपवत्त्वं

च दृष्टम्। ननु कथमवसीयते वायौ रूपादय इति चेत्? परमाणुषु रूपादीनां कथं गतिः? यदि तत्कार्येषु रूपादीनां दर्शनात्तत्रानुमानं तर्ह्यत्रापि तदेव वाच्यमित्युक्ता विषयाः।

चक्षुर्वर्जानीन्द्रियाणि जघन्यतोऽङ्गुलासंख्येयभागादागतं विषयं गृह्णन्ति, नयनं तु तत्रैव स्थितं जघन्यतोऽङ्गुलसंख्येयभागतो द्रव्यं पश्यति। अत एव नयनवर्जशेषेन्द्रियाणां नव्यशरावशयितोद्बोधनदृष्टान्तात् व्यञ्जनावग्रहो नन्दिसूत्रे व्याख्यातः। उत्कृष्टतस्तु शब्दं द्वादशयोजनेभ्य आगतं शृणोति, न परतः। शेषाणि तु गन्धादिद्रव्याणि प्रत्येकं नव योजनेभ्यो नवयोजनेभ्य आगतानि घ्राणादिभिस्त्रिभिरिन्द्रियैर्गृह्णाति जीवो न परतः, परतः समागतानां द्रव्याणां मन्दपरिणामतया इन्द्रियग्राह्यत्वायोगात्, चक्षुषो विषय उत्कृष्टतोऽभास्वरद्रव्यमधिकृत्यात्माङ्गुलेन सातिरेकलक्षयोजनपरिमितः, भास्वरं द्रव्यमाश्रित्य तु एकविंशतियोजनलक्षेभ्योऽपि परतो जनाः पश्यन्ति, यथा पुष्करवरद्वीपार्द्धे मानुषोत्तरनगनिकटवर्तिनः कर्कसङ्क्रान्तौ रविबिम्बम्, तदुक्तम्—"इगवीसं खलु लक्खा चउतीसं एव तह सहस्साइं। तह पंच सया भणिया सत्ततीसा य अइरित्ता ॥ १ ॥ इति नयनविसयमाणं पुक्खरदीवड्ढवासिमणुआणं। पुव्वेण य अवरेण य पिहं पिहं होइ नायव्वं ॥ २ ॥" इति। एतत्सर्वं विषयप्रमाणमात्माङ्गुलेन वाच्यम्, प्रमाणाङ्गुलेन कथने तु साम्प्रतकालीनानां जनानां विषयक्षेत्रं महद्भवति, उत्सेधाङ्गुलेन च परिमिते भरतचक्रवर्तिकाले स्वाङ्गुलपरिमितनवद्वादशयोजनायतदीर्घायोध्यादौ एकत्र वादिता भम्भा कथं सर्वत्र जनैः श्रूयत इति। ननु प्रमाणाङ्गुलानेकयोजनपरिमिते सुरविमाने वाद्यमाना घण्टा सुरैः सर्वत्र कथं श्रूयत इति चेत्? श्रूयताम्, तस्यां मेघौघरसितगम्भीरशब्दायां योजनपरिमण्डलायां सुस्वराभिधानायां

घण्टायां त्रिस्ताडितायां सत्यां यत्सूर्याभं विमानं तत्प्रासादनिष्कुटेषु ये आपतिताः शब्दवर्गणापुद्गलास्तेभ्यो तेभ्यः समुच्छलितानि यानि घण्टाप्रतिश्रुतिशतसहस्राणि नाम घण्टाप्रतिशब्दलक्षास्तैरेतत् संकुलमपि जातमभूत्, किमुक्तं भवति? घण्टायां महता प्रयत्नेन ताडितायां ये विनिर्गताः शब्दपुद्गलास्तत्प्रतिघाततः सर्वासु दिक्षु, विदिक्षु च दिव्यानुभावतः समुच्छलितैः प्रतिशब्दैः सकलमपि विमानमनेकलक्षमानमपि बधिरितमुपजायत इति। एतेन "द्वादशभ्यो योजनेभ्यः समागतः शब्दः श्रोत्रग्राह्यो भवति न परतः, ततः कथमेकत्र ताडितायां घण्टायां सर्वत्र तच्छब्दश्रुतिरुपजायते" इति यदुच्यते तदपाकृतमवसेयम्, सर्वत्र दिव्यानुभावतस्तथारूपप्रतिशब्दोच्छलने यथोक्तदोषाभावात्। एवं यत्र दिव्यानुभावाभावेऽपि द्वादशयोजनेभ्यः परतः श्रूयते, तत्रापि यन्त्ररचनया तदुत्थप्रतिशब्दश्रवणे न कोऽपि दोष इति। आशाम्बरमते तु 'एकेन्द्रियाणां स्पर्शनेन्द्रियविषयक्षेत्रं चतुःशतधनुष्प्रमितं, ततो द्विगुणं द्वीन्द्रियाणामष्टशतधनुष्प्रमितं, ततोऽपि त्रीन्द्रियाणां द्विगुणं षोडश शतानि धनुष्प्रमितं, ततोऽपि चतुरिन्द्रियाणां द्विगुणं द्वात्रिंशच्छतधनुष्प्रमाणं, ततोऽसंज्ञिपञ्चेन्द्रियाणां चतुःषष्टिशतानि धनुष्प्रमाणं स्पर्शनेन्द्रियविषयक्षेत्रं भवति। द्वीन्द्रियस्य रसनेन्द्रियविषयक्षेत्रं चतुःषष्टिधनुष्प्रमाणं, त्रीन्द्रियस्याष्टाविंशत्यधिकं शतप्रमाणं, चतुरिन्द्रियस्य षट्पञ्चाशदधिकशतद्वयपरिमितं, असंज्ञिपञ्चाक्षस्य द्वादशाधिकपञ्चशतधनुष्प्रमाणं रसनेन्द्रियस्य विषयक्षेत्रं भवति। त्रीन्द्रियस्य घ्राणेन्द्रियविषयक्षेत्रं शतधनुष्प्रमाणं, चतुरिन्द्रियस्य द्विशतधनुष्प्रमाणं, असंज्ञिपञ्चेन्द्रियस्य चतुःशतधनुष्प्रमाणं घ्राणेन्द्रियविषयक्षेत्रम्। चतुरिन्द्रियस्य चक्षुरिन्द्रियविषयक्षेत्रं षट्चत्वारिंशन्न्यूनत्रिसहस्रयोजनप्रमितं, असंज्ञिपञ्चेन्द्रियस्य च चक्षुरिन्द्रियविषयक्षेत्रमष्टाधिकैकोनषष्टियोजनप्रमितं भवति। असंज्ञिपञ्चे-

न्द्रियस्य श्रोत्रेन्द्रियविषयक्षेत्रमष्टसहस्रधनुष्प्रमाणं भवति । संज्ञिपञ्चेन्द्रियस्य च स्पर्शनरसनघ्राणेन्द्रियविषयक्षेत्राणि नवनवयोजनमात्राणि, चक्षुरिन्द्रियविषयक्षेत्रं साधिकं त्रिषष्ट्यधिकशतद्वयोत्तरसप्तचत्वारिंशत्सहस्रयोजनप्रमितं भवति, तदुक्तं—"धणुवीसडदसयकदी जोयणछादालहीणतिसहस्सा । अट्ठसहस धणूणं विसया दुगुणा असण्णि त्ति ॥ १ ॥ सण्णिस्स बार सोदे तिण्हं णवजोयणाणि चक्खुस्स । सत्तेतालसहस्सा वेसदतेसट्ठिमदिरेया ॥ २ ॥"' इति । ( धनुर्विंशत्यष्टदशककृतिः योजनषट्चत्वारिंशद्धीनत्रिसहस्राणि । अष्टसहस्रं धनुषां विषया द्विगुणा असंज्ञीति ॥ १ ॥ संज्ञिनो द्वादश श्रोत्रे त्रयाणां नवयोजनानि चक्षुषः । सप्तचत्वारिंशत्सहस्राणि द्विशतत्रिषष्ट्यतिरेकाणि ॥ २ ॥ अत्र कृतिशब्देन वर्गो ग्राह्यः ) । श्रोत्रेन्द्रियेण स्पृष्टमात्रं शब्दं शृणोति, स्पृष्टं नामालिङ्गितं यथा तनौ रेणुसंघातः, ननु कथं स्पृष्टमात्रमेव शब्दं शृणोति ? उच्यते, इह शेषेन्द्रियगणापेक्षया श्रोत्रेन्द्रियमतिशयेन पटु, तथा गन्धादिद्रव्यापेक्षया शब्दद्रव्याणि सूक्ष्माणि, प्रभूतानि, भावुकानि चात एव सर्वतस्तदिन्द्रियं प्राप्नुवन्ति, ततस्तानि स्पृष्टमात्राण्यपि श्रोत्रेन्द्रियेण गृहीतुं शक्यन्ते । गन्धं, रसं, स्पर्शं च घ्राणेन्द्रियादिभिर्बद्धस्पृष्टं विनिश्चीयते । तत्र स्पृष्टमालिङ्गितं, बद्धं च तोयवदात्मप्रदेशैरात्मीकृतमालिङ्गितानन्तरमात्मप्रदेशैरागृहीतमित्यर्थः, तदुक्तं—"बद्धमप्पकयं पएसेहिं पुट्ठं रेणुं च तणुम्मि" इति वचनात् । रूपं त्वस्पृष्टमेव पश्यति, तदुक्तं—"पुट्ठं सुणेइ सद्दं, रूवं पुण पासई अपुट्ठं तु । गंधं रसं च फासं च बद्धपुट्ठं वियागरे ॥ १ ॥" इति । ननु स्पृष्टं शब्दं शृणोतीत्यत्र शब्दप्रयोगनिसृष्टान्येव केवलानि शब्दद्रव्याणि शृणोति यद्वाऽन्यानि तद्वासितानि मिश्राणि वा ? उच्यते, न तावत्केवलानि, यतो वासकानि शब्दद्रव्याणि, शब्दयोग्यानि च द्रव्याणि सकलव्यापीनि, ततोऽवश्यं तद्वासितानि शृणोति

मिश्राणि वा, न केवलान्येवोत्सृष्टानि । तत्रापि भाषासमश्रेणिव्यवस्थितः पुरुषः पुरुषादिसम्बन्धिनं भेर्यादिसम्बन्धिनं वा शब्दं मिश्रमुत्सृष्टशब्दद्रव्यभावितापान्तरालस्थद्रव्यमिश्रं शृणोतीति, विश्रेणिस्थितस्तु नियमेन पराघाते सति शब्दं शृणोति, नान्यथा, एतदुक्तं भवति–उत्सृष्टशब्दद्रव्याभिघातेन यानि वासितानि शब्दद्रव्याणि तान्येव केवलानि शृणोति, न कदाचिदप्युत्सृष्टानि, कुत इति चेत् ?, तेषामनुश्रेणिगमनात्प्रतिघाताभावाच्चेति ।

ननु रूपमस्पृष्टं पश्यतीति कथमुक्तमिति चेत् ?, नयनेन्द्रियस्याप्राप्यकारित्वात् । ननु कानीन्द्रियाणि प्राप्यकारीणि कानि चाप्राप्यकारिणीति चेत् ?, चक्षुर्वर्जानि सर्वाणीन्द्रियाणि प्राप्यकारीणि, नयनं त्वप्राप्यकारीति । विषयीभूतं शब्दादिकं वस्तु प्राप्तं सत् संश्लेषद्वारेणासादितं कुर्वन्ति–परिच्छिन्दन्तीति प्राप्यकारीणि–स्पृष्टार्थग्राहीणीति यावत् । कथं पुनः चत्वार्येव प्राप्यकारीणीति चेत् ?, उपघातानुग्रहभावात्, तथाहि–कर्कशकम्बलादिस्पर्शने त्वगिन्द्रियस्य, त्रिकटुकाद्यास्वादने रसनेन्द्रियस्य, अशुच्यादिपुद्गलाघ्राणे घ्राणेन्द्रियस्य, भेर्यादिशब्दश्रवणे श्रोत्रस्य च त्वक्क्षणनाद्युपघातो भवति; चन्दनाङ्गनाहंसतूलादिस्पर्शने त्वगिन्द्रियस्य, क्षीरशर्कराद्यास्वादने रसनेन्द्रियस्य, कर्पूरपुद्गलाद्याघ्राणे घ्राणेन्द्रियस्य, मृदुमन्द्रशब्दाद्याकर्णने श्रवणस्य च शैत्याद्यनुग्रहो भवति । नयनस्य तु निशीथकरपत्रशैलमहाज्वालादिवीक्षणे न पाटनाद्युपघातो भवति, नापि चन्दनागुरुकर्पूरकस्तूरिकाद्यवलोकनेपि शैत्याद्यनुग्रहो भवति । एवं चिन्तने मनसोऽपि अनुग्रहोपघातौ न भवतः । ननु घ्राणेन्द्रियं प्राप्यकारि न भवति, यतो घ्राणेन्द्रियं विषयदेशं गत्वा न गन्धं गृह्णाति, तथानुभवाभावात्, नापि गन्धो घ्राणेन्द्रियं प्रविशन्नुपलभ्यते, न चाभ्यामन्येनापि प्रकारेण विषयस्पर्शनं घटते, अनु-

श्रूयते च निर्विवादं कर्पूरकुसुमकुङ्कुमादीनां दूरस्थानामपि गन्ध इति चेत् ?, अत्रोच्यते, स्पर्शनादिवदबाह्यकरणत्वेन घ्राणेन्द्रियं गन्धदेशं गत्वा गन्धं न गृह्णाति किन्तु गन्धः स्वयमागत्य घ्राणेन्द्रियं स्पृशति, पुद्गलमयत्वेन सक्रियत्वात्, आर्हतमते गगनादीनां सक्रियत्वेऽपि तत्र यथा गमनक्रियाभावः तद्वत् सक्रियस्यापि गन्धस्य गमनक्रिया न स्यात् अतस्तद्व्यावृत्त्यर्थं 'पुद्गलमयत्वं' हेतोर्विशेषणम्। यत्र पुद्गलमयत्वे सति सक्रियत्वं तत्र गमनक्रिया विद्यत एव यथा पुद्गलस्कन्धेषु। ननु पुद्गलमयत्वेऽपि गन्धे गमनक्रियाऽस्तीति कुतो निश्चीयते इति चेत्? यथा पवनपटलेनोह्यमानत्वात् धूमो गमनक्रियावान् एवं गन्धोऽपि वायुनोह्यमानत्वात् तद्वान् । तथा संहरणतो गृहादिषु पिण्डीभवनात् तद्वदेव क्रियावान्, एवं विशेषेण द्वारादिविघाततस्तोयवत्, पर्वतनितम्बादिषु च प्रतिघातात् वायुवत् क्रियावान् गन्धः । अतोऽत्र गन्धः समागच्छतीति प्रत्ययोऽपि लोके सङ्गच्छते। घ्राणेन्द्रियेण सम्बद्धो गन्धो पूत्याद्युपघातमनुग्रहं वा जनयितुमलम्, नान्यथा, सर्वस्यापि तज्जननप्राप्तेरतिप्रसंगादिति । एवमेव श्रवणेन्द्रियस्यापि प्राप्यकारित्वं वाच्यम्, अग्रे विशेषतः प्रतिपादयिष्यामश्च ।

लोचनमपि मनोवदप्राप्तविषयम्, अनुग्रहोपघाताभावात्। न च नयनस्य चन्द्रदर्शनेनानुग्रहस्य रविदर्शनेन चोपघातस्य भावाद् व्यभिचार इति वाच्यम्, स्पर्शनादिवत् दाहपाटनादिरूपानुग्रहोपघाताभावात्। ननु नयनस्याप्राप्यकारित्वे मनोवत् कस्मात् दूरव्यवहितान् सर्वानपि पदार्थान् चक्षुर्न विषयीकरोति, प्राप्यकारित्वे तु यदेवानावृत्तमदूरदेशस्थं वा वस्तु तदेव गृह्णीयात् नावृत्तं दूरवर्त्ति वा, तत्र नयनांशूनां गमनासंभवेन सम्पर्काभावात्, तदुक्तं—"अप्राप्यकारि चक्षुः, उपलब्ध्य-

नुपलब्ध्योरनावरणेतरापेक्षणात्, अदूरेतरापेक्षणाच्च, यदि हि चक्षुरप्राप्यकारि भवेत्तदाऽऽवरणभावादनुपलब्धिरन्यथोपलब्धिरिति न स्यात्, नहि तदावरणमुपघातकरणसमर्थम्, प्राप्यकारित्वे तु मूर्तद्रव्यप्रतिघातादुपपत्तिमान् व्याघातः, अतिदूरे च गमनाभावादिति" । प्रयोगश्चात्र न चक्षुषो विषयपरिमाणम्, अप्राप्यकारित्वात्, मनोवत् इति चेत् ?, न, दृष्टान्तस्य साध्यविकलत्वात्, नहि मनोऽपि सर्वान् विषयान् गृह्णाति, तस्यापि सूक्ष्मेष्वागमगम्यादिपदार्थेषु मोहदर्शनात्, ततो यथा मनसोऽप्राप्यकारित्वेऽपि स्वावरणक्षयोपशमसापेक्षं विषयग्रहणमेवं नयनस्यापि स्वावरणक्षयोपशमसापेक्षं योग्यदेशावस्थितनियतविषयग्रहणं स्यात्, तेन न व्यवहितानां न वा दूरदेशस्थितानां ग्रहणं भवति, दृष्टं चैतदयस्कान्तेऽपि, न चाप्राप्यकारित्वेऽपि तस्य विश्ववर्तिनिखिललोहाकर्षणं युज्यते किन्तु योग्यदेशस्थितस्यैवेति । यत्तु शङ्कराचार्यः प्राह–"अयस्कान्तोऽपि प्राप्यकारी अयस्कान्तच्छायाणुभिः सह समाकृष्यमाणवस्तुनः सम्बन्धभावात्, केवलं ते छायाणवः सूक्ष्मत्वान्नोपलभ्यन्ते" इति, तन्न सम्यक्, तद्ग्राहकप्रमाणाभावात्, न च छायाणुसंभवग्राहकं किञ्चित्प्रमाणमस्ति । यद् 'आकर्षणं तत्संसर्गपूर्वकं दृष्टं यथाऽयोगोलकस्य सन्दंशेन, आकर्षणं चायसोऽयस्कान्तेन तत्र साक्षात् संसर्गोऽयस्कान्ते प्रत्यक्षबाधित इत्यर्थात् छायाणुभिः सह द्रष्टव्य' इति तदपि बालजल्पितम्, मन्त्रेण व्यभिचारात्, तथाहि–स्मर्यमाणोऽपि मन्त्रो विवक्षितं वस्त्वाकर्षति, न च तत्र कोऽपि सम्बन्धः । किञ्च यथा छायाणवः प्राप्तमयः समाकर्षन्ति तथैव संसर्गीभूतं काष्ठादिकं कथं नाकर्षन्ति ? शक्तिप्रतिनियमादिति चेत् ? अप्राप्तावपि शक्तिप्रतिनियमस्तुल्य एवेति छायाणुप्रकल्पनं व्यर्थम् । ननु नयनात् नायना रश्मयो निर्गत्य विषयं प्राप्य च रविबिम्बरश्मय इव वस्तु प्रकाशयन्तीति नयनस्य प्राप्यकारिता, सूक्ष्मत्वेन तैजसत्वेन च तेषां वह्न्यादिभिरिव दाहादयो न भवन्ति,

भानुकिरणेषु तथादर्शनादिति चेन्न, तेषां प्रत्यक्षादिप्रमाणाग्राह्यत्वेन श्रद्धधितुमशक्यत्वात् तथा विधानां कल्पनेऽप्यतिप्रसङ्गात् । न च वस्तुपरिच्छेदान्यथानुपपत्तेस्तत्कल्पनमावश्यकमिति वाच्यम्, तानन्तरेणापि मनोवत् तत्परिच्छेदोपपत्तेः, नापि रविरश्म्युदाहरणमात्रेणाचेतनानां नयनरश्मीनां वस्तुपरिच्छेदो युज्यते, अन्यथा नखदन्तभालतलादिगतशरीररश्मीनामपि स्पार्शनविषयवस्तुपरिच्छेदप्रसङ्गात्, नयनरश्मीनामग्रे विस्तरेण निषेत्स्यमानत्वाच्च । न चान्यत्र गतं मे मन इत्यावालगोपालप्रसिद्धत्वेन मनो वस्तुदेशं गत्वा विषयं परिच्छिनत्तीति दृष्टान्तासिद्धिरिति वाच्यम्, तोयज्वलनादिविषयचिन्तनकाले स्पर्शनवदनुग्रहोपघाताभावात् । किञ्च द्रव्यमनो विषयदेशं प्रति गच्छति, उत भावमनः?, न तावत् भावमनः, तस्य चिन्ताज्ञानपरिणामरूपत्वेनात्मनोऽनतिरेकात् आत्मैव भावमनो भवति, स च देहमात्रव्यापित्वेन न वहिर्गमनं करोति, यथा शरीरवर्त्तिरूपादयः । ननु देहमात्रव्यापी आत्मा न भवति, अमूर्त्तत्वादाकाशवदिति चेत्?, अत्र समाधिः, आत्मनः सर्वगतत्वे सति आवालगोपालप्रसिद्धाः कर्तृत्वादयो धर्मा न घटेरन्, तथा च–आत्मा न कर्त्ता, न भोक्ता, नापि संसारी, न ज्ञानी, न सुखी, न वा दुःखी, सर्वगतत्वात्, आकाशवदित्यनिष्टापत्तिः स्यात् । ननु सांख्यमते आत्मनो निष्क्रियत्वेनेष्टापत्तिरियमिति, तदुक्तं–"अकर्त्ता निर्गुणो भोक्तात्मा" इति चेत्?, तदपि न युक्तम्, आत्मनो निष्क्रियत्वे प्रत्यक्षादिप्रमाणोपलब्धभोक्तृत्वादिक्रियाविरोधप्रसङ्गात् । न च प्रकृतेरेव भोगादिकरणक्रिया न पुरुषस्येति वाच्यं, आदर्शप्रतिविम्बोदयन्यायेन तत्र क्रियाणामिष्टत्वात्, "चैतन्यं पुरुषस्य स्वरूपम्" इति वचनात् प्रकृतेर्जडत्वेन भोगादिक्रियाऽयोगाच्च, अन्यथा घटादीनामपि तत्प्रसङ्गात् । किञ्चात्मनः सर्वगतत्वे तदव्यतिरिक्तभावमनसोऽपि सर्वगतत्वं स्यात्; तथा च सर्वार्थ-

प्राप्तेः सर्वस्य सर्वज्ञत्वापत्तिः । ननु प्राप्तानपि सर्वार्थान् उक्तदोषभयात् न गृह्णातीति चेत्?, तर्हि ग्राह्यत्वेनेष्टानप्यर्थान् मा गृह्णीत, भावमनसः प्राप्तत्वाविशेषात्, ग्राह्यत्वेनानिष्टार्थवदिति भावः । ननु प्राप्तत्वाविशेषेऽपि कांश्चिदर्थान् गृह्णाति कांश्चित् नेति चेत्? तर्हि तवाभिप्रायेणेश्वरचेष्टितमिति व्यक्तं जातम्, न चैतत् युक्तिघटकमिति । एवं सर्वगतत्वे दहनदाहवेदनापाटनक्लेदनादयोऽपि स्युः । न च यत्रैव शरीरं तत्रैव ते भवन्ति नान्यत्रेति चेत्?, कुत इति वक्तव्यम्, आज्ञामात्रादेवेति चेत्?, न, तस्या इहाविषयत्वात् । ननु शरीरस्य सहकारिभावेन तथात्वमिति चेत्?, न, नित्यस्यात्मनः सहकारित्वापेक्षाया अयोगात्, तथाहि–अपेक्ष्यमाणेन सहकारिणा किमात्मनः कश्चित् उपकारविशेषः क्रियते न वा? क्रियते चेत्?, उपकारः किमात्मनोऽर्थान्तरभूतः, अनर्थान्तरभूतो वा?, यदि प्रथमः पक्षस्तर्हि न किञ्चित्तस्य कृतं स्यात्, द्वितीयश्चेत्?, तत्करणे तदव्यतिरिक्तस्यात्मनोऽपि कृतत्वप्रसङ्गः, आत्मनः कार्यत्वेनानित्यत्वापत्तिश्च, न क्रियत इति चेत्?, तर्हि न तस्य सहकारित्वं, विशेषाकरणात् । अथ विशेषमकुर्वन्नपि सहकारीष्यते तर्हि विश्वविश्वस्यापि सहकारिताप्राप्तिः, विशेषाकरणत्वस्य तुल्यत्वादिति व्यर्था शरीरमात्रापेक्षेति । तस्मात् शरीरमात्रवृत्तिरेवात्मा न सर्वगत इति तदव्यतिरिक्तस्य भावमनसोऽपि शरीरात् बहिर्देशगमनं न युक्तमिति । नापि द्रव्यमनो विषयदेशं प्रति व्रजति, यतः काययोगसहकृतस्य जीवगृहीतचिन्ताप्रवर्त्तकमनोवर्गणान्तःपातिद्रव्यसमूहात्मकस्य द्रव्यमनसोऽचेतनत्वेन स्वयं विज्ञातृत्वं न भवति, घटवत्, ततस्तत्र गमनेऽपि न विषयं परिच्छिनत्ति । ननु वयं न ब्रूमो यत् स्वयं द्रव्यमनो गत्वा विषयं परिच्छिनत्ति किन्तु मनोद्वारेणात्मा, अत्रानुमानं 'बहिर्निर्गतेन द्रव्यमनसा आत्मा विषयं प्राप्य जानाति, स करणत्वात्, प्रदीपमणिचन्द्रसूर्यादि-

प्रभयेवे'ति चेत् ?, अर्थपरिज्ञाने द्रव्यमनसः करणत्वं को न मन्यते, किन्तु करणं द्विधा, तद्यथा–अन्तःकरणं, बाह्यकरणं च । तत्र द्रव्यमन आत्मनोऽन्तःकरणम्, बाह्यकरणं प्रदीपप्रभादिकम्, अन्तःकरणं तु शरीरस्थितमेव विषयं जानाति, स्पर्शनवत्, मणिप्रभादीनां च बाह्यकरणत्वेन दृष्टान्तस्य साधनविकलतेति । न च पद्मनालतन्तुन्यायेन द्रव्यमनसो बहिर्गमनं भवत्वित्यपि वाच्यम्, अन्तःकरणस्य स्पर्शनवत् बहिर्गमनाभावात् । तदेवं भावमनसो द्रव्यमनसश्च बहिर्गमनाभावेन मनसोऽप्राप्यकारित्वं सिद्धं, तत्सिद्धौ च न दृष्टान्तासिद्धिः । न चार्त्तादिध्यानातिशयात् हृद्रोगादिरूपस्योपघातस्य, पुत्रजन्मादिरूपाभीष्टप्राप्तिचिन्तासमुद्भूतहर्षादिरूपानुग्रहस्य सत्त्वेनानुग्रहोपघाताभावरूपो हेतुरसिद्ध इति वाच्यम्, विषयकृतानुग्रहोपघाताभावात् । पुत्रजननमरणकृतहर्षशोकौ तु द्रव्यमनस्कृतौ, हृदयदेशाश्रितनिबिडप्ररूढग्रन्थिवत्, ततो विषयकृतानुग्रहोपघातशून्यत्वेन हेतोरसिद्धतोद्भावनं मस्तकघातादिविह्वलीभूतेनासम्बद्धभाषिणा सह तुल्यं जातमिति । ननु द्रव्यमनस्कृतावनुग्रहोपघातौ नानुभवामः, तथाप्रतीतेरेवाभावादिति चेत् ?, ननु यथा इष्टानिष्टपुद्गलमयाहारानुभवात् जन्तुशरीराणां पुष्टिहानी भवतस्तथा द्रव्यमनसोऽनुग्रहोपघातौ भवतां, भवतामत्र पुद्गलमयत्वे समानेऽपि का क्षतिः ?, तदुक्तं– "चिन्तया वत्स ! ते जातं शरीरकमिदं कृशम्" इति । ननु तर्हि चिन्तैवोपघातादिजनिकाऽस्त्विति चेत् ?, न, तस्या अपि द्रव्यमनःप्रभवत्वात्, अन्यथा चिन्ताया ज्ञानरूपत्वेन ज्ञानस्य चामूर्त्तत्वेनाकाशवदुपघातादिजनकत्वायोगात्, "जमणुग्गहोवघाया जीवाणं पुग्गलेहिंतो" इति वचनप्रामाण्याच्च । ततो द्रव्यमनो न विषयदेशं गत्वार्थं परिच्छिनत्ति न वा शरीरस्थमेव हठात् समाकृष्यात्मनः समीपमानीय ज्ञेयमवलम्बत इति ज्ञेयकृतावनुग्रहोपघातौ न भवतः । ननु शब्दादय इष्टानिष्टपुद्गलात्मका इति

प्रत्यक्षादिप्रमाणसिद्धत्वेन प्रतीमः, द्रव्यमनस्तु यदिदं किमपि भवद्भिरुद्घुष्यते तदिष्टानिष्टपुद्गलमयमस्तीति कथं श्रद्दध्महे इति चेत् ?, इत्थम्, योगिनां प्रत्यक्षतोऽर्वाग्दृशामनुमानतश्च तत्सिद्धेः, तथाहि—यदन्तरेण यद् नोत्पद्यते तद्दर्शनात् तदस्तीति स्वीकर्त्तव्यम्, यथा स्फोटदर्शनात् दहनस्य दाहिका शक्तिः, नोपपद्यते च द्रव्यमनोव्यतिरेकेणात्मनोऽनुग्रहोपघातौ ततस्तदन्यथानुपपत्तेः सिद्धं पुद्गलात्मकं द्रव्यमनः । न च चिन्तनीयवस्तुकृतौ ताविति वाच्यम्, दहनादिचिन्तने दाहादिप्रसङ्गात् । "चिन्तया वत्स! ते जातं शरीरकमिदं कृशम्" इति लोकोक्तेः चिन्ताज्ञानसहकृतौ तावित्यपि न, चिन्ताज्ञानस्यामूर्त्तत्वेनाकाशवत् कर्तृत्वायोगादित्युक्तमेव, "चिन्तया वत्स" इति लोकोक्तेस्तु कार्ये कारणशक्त्यध्यारोपेणौपचारिकत्वाच्च । ननु चिन्तया खेदादेरुद्भव इति चेत् ?, कोऽयं खेदादिर्नाम ? किं मनोद्रव्याण्युत चिन्ताज्ञानं वा ?, आद्ये सिद्धसाधनम्, द्वितीयेऽपि विहितोत्तरमेव । न च निर्हेतुकौ ताविति वाच्यम्, सर्वदा भावाभावप्रसङ्गात्, तदुक्तं—"नित्यं सत्त्वमसत्त्वं वा, हेतोरन्यानपेक्षणात् । अपेक्षातो हि भावानां, कादाचित्कत्वसम्भवः ॥ १ ॥" इति । न च जीवादिकस्तयोरन्यः कोऽपि हेतुरिति वाच्यम्, तस्य नित्यत्वेन सर्वदा भवनप्रसङ्गात् । तत उक्तयुक्तिसिद्धं पुद्गलमयं द्रव्यमनः स्वयमात्मनोऽनुग्रहोपघातौ कुर्यात् न तु ज्ञेयकृतौ ताविति तत्प्राप्यकारी न भवति । ननु मा भूत् मनसो जाग्रदवस्थायां प्राप्यकारिता, स्वप्नावस्थायामनुभूयमाना केन निवार्यते, शत्रुञ्जयादिगिरौ मदीयं मनो गतमिति प्रतीतेरिति चेत् ?, अत्रोच्यते, यथा वृत्ताकारत्वेनाशु भ्राम्यमाणमचक्रमप्यलातचक्रं चक्रत्वेनोपलभ्यमानं दृश्यते परं न सत्यम्, तथा स्वप्नमपि न सत्यं, शत्रुञ्जयगिरिगमनाद्यर्थाभावात् । तदभावश्च स्वप्नोपरमे प्रबुद्धस्य शरीरस्थस्यैव मनसोऽनुभूयमानत्वात् । ननु स्वप्नावस्थायां शरीरान्निर्गत्य

शत्रुञ्जयादिगिरौ मनो गच्छति, जाग्रदवस्थायां पुनरागत्य शरीरमनुप्रविशतीति न दोष इति चेत् तन्न युक्तिघटकम्, यथा कश्चित् स्वकीयं मनः शत्रुञ्जयादिगिरौ गतं पश्यति तथा शरीरमात्मानमपि तत्र चैत्यवन्दनादिक्रियां कुर्वाणं पश्यति, न च तत्तथैव, यतोऽत्रस्थैः पुरुषैः सुप्तस्येहैव दर्शनात्, आत्मद्वयाऽसम्भवात्, गमनादिजनितपरिश्रमाद्यभावाच्च। ननु स्वप्नोपलब्ध्यनन्तरं जाग्रदवस्थायां तत्कार्यभूता हर्षविषादादयो दृश्यन्ते, यथा—"स्वप्ने दृष्टो मयाद्य त्रिभुवनमहितः पार्श्वनाथः शिशुत्वे, द्वात्रिंशद्भिः सुरेशैरहमहमिकया स्नाप्यमानः सुमेरौ। तस्मान्मत्तोऽपि धन्यं नयनयुगमिदं येन साक्षात् स दृष्टः, द्रष्टव्यो यो महीयान् परिहरति भयं देहिनां संस्मृतोऽपि ॥ १ ॥" इत्यादिकः स्वप्नानुभूतसुखरोमहर्षः, तथा—"प्राकारत्रयतुङ्गतोरणमणिप्रेंखत्प्रभाव्याहता, नष्टाः क्वापि रवेः करा द्रुततरं यस्यां प्रचण्डा अपि। तां त्रैलोक्यगुरोः सुरेश्वरवतीमास्थायिकामेदिनीं, हा! यावत् प्रविशामि तावदधमा निद्रा क्षयं मे गता ॥ १ ॥" इति स्वप्नानुभूतदुःखप्रद्वेषलिङ्गं विषादः, इति चेत्? अत्रोच्यते, न वयं स्वप्नविज्ञानोद्भवान् हर्षविषादादीन् निवारयामः किन्तु भोजनादिजनितान् तृप्त्यादीन्। यदि स्वप्नविज्ञानात् भोजनादिक्रियाफलं तृप्त्यादिकं स्यात् तदा विषयप्राप्तिरूपा प्राप्यकारिता मनसो युज्यते, न चैतदस्ति तथोपलम्भाभावात्। ननु स्वप्नानुभूतसुरतसंगमक्रियाजनितशुक्रपुद्गलसङ्घातरूपस्य फलविशेषस्य प्रत्यक्षतः कस्यचिद्दर्शनात् कामिनीसङ्गमक्रियाऽनुमीयते, तथाहि—स्वप्ने सञ्जातो योषित्सङ्गमः, शुक्रपुद्गलदर्शनात्, वासभवनादाविवेति चेन्न, व्यभिचारात्, तथाहि—जाग्रदवस्थायामपि प्रबलवेदोदययुक्तस्य कामिनीं स्मरतो दृढं ध्यायतः प्रत्यक्षामिव पश्यतोऽवबुध्य परिभुक्तामिव मन्यमानस्य तीव्रकामाध्यवसायात् यथा व्यञ्जनविसर्गो भवति तथा स्वप्नेऽपि कामिनीमन्तरेणापि तीव्रकामा-

ध्यवसायात् व्यञ्जनविसर्गो भवति, अन्यथा प्रबुद्धस्य नितम्बिन्या दर्शनं स्यात्, तत्कृतानि च नखदन्तपदान्युपलभ्येरन्,
न चैवम्, ततः सिद्धा हेतोरनैकान्तिकता। किञ्च स्वप्ने सुरतक्रियाया योऽसौ व्यञ्जनविसर्गः, स यदि कामिनीं प्राप्य
स्यात्, तदा स्वप्नोपभुक्ताया युवतेरपि मयाऽमुकेन सह सुरतक्रियाऽनुभूतेति प्रतीतिः स्यात्, एवं गर्भाधानोदरवृद्धिदोह-
दपुत्रजन्मादिकमपि स्यात्, न च भवति, तस्मात् कामिनीमन्तरेणैव तीव्रकामाध्यवसायात् व्यञ्जनविसर्गः, अतो मनसः न
प्राप्यकारिताऽत एव नासिद्धता दृष्टान्तस्य। अत्र व्योमशिवः "चक्षुः प्राप्तार्थपरिच्छेदकं, व्यवहिताप्रकाशकत्वात्, यद्यद्व्यवहिताप्र-
काशकं तत्तत्प्राप्तार्थपरिच्छेदकं यथा प्रदीपः, व्यवहिताप्रकाशकं च चक्षुः तस्मात्प्राप्तार्थपरिच्छेदकम्" इति पक्षीकरोति, तत्र पृच्छयते, भाव-
चक्षुरिन्द्रियं धर्मित्वेनोपादीयत उत द्रव्यचक्षुरिन्द्रियम्?, न तावत्प्रथमपक्षः, त्वयाऽनङ्गीकारात्, तथा च धर्म्यप्रसिद्ध्या हेतो-
राश्रयासिद्धिः, कक्षीकारे तु बुद्धिरूपो भावचक्षुरात्मगुणः, स च नार्थेन प्राप्यते, यतः प्राप्तिरपि संयोगस्वरूपा, संयोगश्च गुणः,
न च गुणे गुणान्तरमस्ति, "निर्गुणा गुणा" इति वचनात्। द्रव्यचक्षुरपि गोलकरूपमन्यद्वा?, नाद्यः, प्रत्यक्षबाधात्, बाधश्चैवं प्र-
त्यक्षेण परिच्छित्तिकाले पदार्थासम्बद्धस्यैव गोलकस्योपलब्धेः, अन्यथा तदानीं पुंसः पक्ष्मप्रदेशे प्रकटकोटरोपलम्भः स्यात्,
पदार्थस्य वा गोलकदेशे प्रतीतिः स्यात्। किञ्च नयनस्य स्वविषयेण व्यवहितदेशेन पर्वतादिना सन्निकर्षोऽप्यनुपपन्नः, न खल्व-
त्यन्तव्यवहितयोः हिमवद्विन्ध्याचलयोरिव नयनगोलकतदर्थयोः संयोगादिलक्षणः सन्निकर्षः सम्भवति, तद्ग्राहकप्रमाणा-
भावात्। अथ विद्यते तत्प्रसाधकं प्रमाणमिति चेत्?, ननु तत्किं प्रत्यक्षमनुमानं वा?, नाद्यं तद्विषये प्रवर्त्तितुमुत्सहते, न खलु
देवदत्तनयनं तद्विषयेण पर्वतादिना सम्बद्धमित्यस्मदादेरक्षप्रभवा प्रतिपत्तिः स्यात्। अथ सन्निकर्षप्रसाधकमनुमानमस्तीति

चेत्?, किं तदनुमानमिति वक्तव्यम्, 'चक्षुः प्राप्तार्थप्रकाशकं, बाह्येन्द्रियत्वात्, त्वगादिवदि'ति चेत्?, तन्न, नयनगोलकतदर्थयोरसन्निकृष्टयोः प्रत्यक्षेण प्रतिपत्तेः प्रत्यक्षबाधः, सम्मतौ अवयविलक्षणस्य नयनस्यासिद्धेः प्रतिपादितत्वेनाश्रयासिद्धिः, अत एव स्वरूपासिद्धिश्च, नह्यविद्यमानावयविनो बाह्येन्द्रियत्वमुपपन्नम्। अथ चक्षुःशब्देन तद्रश्मयोऽत्राभिधीयन्त इति चेन्न, तेषामप्यसिद्धेरनुमानवैकल्यादाश्रयासिद्धिश्च हेतोर्दुर्निवारा स्यात्। अत एवानुमानात्तत्सिद्धौ नायं दोष इत्यपि न वाच्यम्, परस्पराश्रयप्रसङ्गात्, तद्रश्मिसिद्धौ चाश्रयासिद्धिदोषपरिहारः, तस्मिंश्च सति अस्य हेतोः सिद्धिः। ननु गोलकात् बहिर्भूता रश्मयश्चक्षुःशब्दवाच्या अर्थप्रकाशका इति चेत्?, तर्हि नयनस्याञ्जनादिना संस्कार उन्मीलनादिकश्च व्यापारो वैयर्थ्यमनुभवेत्। अथ नयनगोलकाश्रयीभूता रश्मयो भवन्ति इति तन्निमीलनेऽसंस्कारे वा तेषामपि स्थगनमसंस्कृतिश्चेति विषयं प्रति गमनं तत्प्रकाशनं च न स्यात्, अत एव तदर्थं संस्कार उन्मीलनादिव्यापारश्च निष्फलत्वं नानुभवेदिति चेत्?, ननु तर्हि नयनगोलकानुषक्तकामलादेरपि प्रकाशकत्वं स्यात्, नहि प्रदीपः प्रलग्नशलाकादिकं न प्रकाशयतीति दृष्टम्, एतद् दूषणं च "गोलकान्तर्गतं तेजो द्रव्यमस्ति, तदाश्रितास्त" इत्यभ्युपगन्तृणामपि समानम्, नहि काचकूपान्तर्गताः प्रदीपरश्मयस्ततो निर्गत्य तद्योगिनमर्थं न प्रकाशयन्तीत्यतस्तेषामसिद्धत्वेन चक्षुःशब्दाभिधेया न ते। एतेन "द्वितीयपक्षे सूक्ष्मं किञ्चिचक्षुरिन्द्रियं धर्मितया ह्यधिष्ठाननिष्ठमेव पटिष्ठमर्थपरिच्छेदे स्वीक्रियत" इत्यपि निरस्तम्, तदुपलम्भाभावात्। अत्र सूक्ष्मत्वं नाम किममूर्त्तत्वमाकाशवत्? यद्वाल्पपरिमाणत्वं परमाणुवत्?, आद्ये सर्वोपलम्भः स्यात्, द्वितीये तु कान्तारे विहारमुख्योपलम्भो न स्यात्, न खलु शस्त्रविशेषं स्वप्रमाणादधिकप्रमाणविशिष्टघटपटादौ भेदकारि प्रसिद्धम्। एतेन "न खलु नखलु

शक्यं स्वप्रमाणात्प्रतिष्ठे पटकटशकटादौ भेदकारि प्रसिद्धम्" इति पूर्वपक्षमुपन्यस्य "स्वाधिकपरिमाणग्राहित्वं चास्य गोलकनिर्गतस्य चक्षुषः प्रदीपप्रभावदेवोपपत्तेः" इति यत् वंशीधरेणोत्तरितं तत्स्वकीयमसमीक्षिताभिधायित्वं सूचयतीति द्योतितम्, यतः परमाणुवदल्पपरिमाणत्वपक्षस्वीकारे एतद् दूषणं ग्रन्थकृद्भिरभ्यधायि न प्रदीपप्रभावद् रश्मिचक्रप्रसरणपक्षे, तत्र तु "नन्वेवमध्यक्षनिराक्रिया स्यात्, पक्षे पुरस्तादुपलक्षितेऽस्मिन्" इत्यादिश्लोकैरन्यदेव दूषणजालं समुपन्यस्तमस्ति। ननु बाह्येन्द्रियत्वेन यथा रसनादयः प्राप्तार्थप्रकाशका दृष्टास्तद्वन्नयनमपि बाह्येन्द्रियत्वेन प्राप्तार्थप्रकाशकं स्यात्, न च नयनगोलकस्य बाह्यार्थप्राप्तिः सम्भवतीति पारिशेष्यात् तद्रश्मीनां तत्प्राप्तिरिति रश्मिसिद्धिरिति चेत्?, न, अत्यासन्नवर्त्तिमलाञ्जनशलाकादीनां प्रकाशकत्वापत्तेः, चक्षुः प्रसृत्य नार्थेन सह सम्बध्यते, इन्द्रियत्वात्, त्वगादिवदित्यनुमानेन बाधापत्तेश्च। किञ्च यदि गोलकात् नायना रश्मयो निर्गत्यार्थं प्रकाशयन्ति तर्ह्यर्थं प्रत्युपसर्पन्तः कथं नोपलभ्येरन्? रूपस्पर्शविशेषगुणवतां तैजसानां चित्रभानुवत् सतामनुपलम्भे निमित्ताभावात्, न चोपलभ्यन्त इत्युपलब्धिलक्षणप्राप्तानामनुपलम्भादसत्त्वं तेषाम्। नन्वनुद्भूतरूपस्पर्शवत्त्वात्तेषामनुपलम्भो नासत्त्वात्, न च किमनुद्भूतरूपस्पर्शवदन्यत्किञ्चित्तेजो द्रव्यमुपलब्धं येनैवं कल्पना क्रियत इति वाच्यं, सतोऽपि तैजसरूपस्पर्शयोरुष्णजलसुवर्णयोरनुपलम्भ इति चेत्?, न, तयोस्तैजसत्वे मानाभावात्, दृष्टानुसारेण चानुपलभ्यमानभावानां प्रकल्पनाः प्रभवन्ति, अन्यथा रजन्यां भास्करकिरणाः सन्ति, अनुद्भूतरूपस्पर्शवत्त्वात् नायनरश्मिवन्नानुभूयन्त इत्यपि कल्पना स्यात्। ननु यद्यपि प्रत्यक्षेण लोचनकिरणा नावलोक्यन्ते तथाप्यनुमानतः प्रतीयन्ते, अनुमानं चेत्थं 'रश्मिवच्चक्षुस्तैजसत्वात् यदित्थं तदित्थं यथा ज्योतिस्तथा चेदं तस्मात्तथे'त्यतस्तत्सिद्धिः, 'तेजोरश्मि-

वच्चक्षू रूपादीनां मध्ये रूपस्यैव प्रकाशकत्वात् प्रदीपकलिकावदि'त्यनुमानमपि केचिद्वदन्ति, न च एवं नयनकिरणप्रतिपादकानुमानवत् क्षपायां भास्करकरसत्त्वप्रतिपादकमनुमानमस्तीति चेत् ?, न, तत्प्रतिपादकस्यानुमानस्य सत्त्वात्, तथाहि–बहलान्धकारायां क्षपायां वृषदंशचक्षुर्बाह्यालोकसव्यपेक्षार्थप्रकाशकम्, चक्षुष्ट्वात्, दिवा पुरुषचक्षुर्वदिति । ननु निशायां वृषदंशादेर्नायनतैजसादेवार्थप्रकाशकत्वे सिद्धे किमनुद्भूतभास्करकरकल्पनेन प्रयोजनमिति चेत् ? एवं तर्हि दिवापि मनुष्यादीनां नायनतैजसात्तदर्थप्रकाशकत्वे सिद्धे किमुद्भूतरूपेण बाह्यतेजसा तेषां कृत्यम् ?। अथ यथा दृश्यते तथा स्वीक्रियते 'यथा दिवा मनुष्यादीनां नायनं सौर्यं च तेजः, रजन्यां च वृषदंशादेर्नायनमेव केवलमर्थप्रकाशकमि'ति यदि ब्रूयते तर्हि यथा निशायां भास्करकिरणादर्शनं तथा दिवा नयनकिरणादर्शनम्, यथा वा दिवा भास्करकरावभासनं तथा निशायां वृषदंशनयनालोकावलोकनमिति कथं नाभ्युपगम्यते ?। ननु क्षपायां भास्करकरसम्भवे यथा वृषदंशादीनां रूपदर्शनं तद्वद् मनुष्याणामपि रूपदर्शनं स्यादिति चेत् ?, न, निशायां तादृशशक्तेरभावात्तेषां न तथा, यथा दिवाप्युलूकादीनां रूपप्रकाशका दिनकरकरा न भवन्ति, भावानां विचित्रशक्तिमत्त्वादित्यपि कल्पयितुं को निवारयति ?, तस्मात् यथा निशायामनुपलम्भात् भास्करकराभावः प्रतीयते तथैव नायनरश्मीनामप्यनुपलम्भभावादभावो निश्चीयत इति । एतेन "दूरस्थितं कुड्यादिप्रतिफलितानामन्तराले गच्छतां प्रदीपरश्मीनां सतामप्यनुपलम्भदर्शनात् नानुपलम्भात्तदभावसिद्धिः" इत्यपि केनचिदुक्तं तदपास्तं द्रष्टव्यम्, भास्करकराणामपि निशायामभावासिद्धिप्रसक्तेः । ननु चक्षुः स्वरश्मिसम्बद्धार्थप्रकाशकं, तैजसत्वात्, प्रदीपवदिति चेदत्रानुमानेन नयनस्य किं किरणाः साध्यन्ते उतान्यतः सिद्धानां ग्राह्यार्थसम्बन्धस्तेषां साध्यत इति प्रश्न-

द्धं समवतरति । प्रथमकक्षायां तरुणनरनारीनयनानां दुग्धधवलतया भासुरकिरणरहितानां प्रत्यक्षेण प्रतीतेः प्रत्यक्षबाधः । ननु यत्प्रत्यक्षग्रहणयोग्यं साध्यं तदपि न प्रत्यक्षत एवोपलभ्यते तत्रापि तद्बाधककर्मणः सत्त्वात् यथाऽनुष्णोऽग्निः, न च नायनरश्मयः प्रत्यक्षयोग्या भवन्ति, सदा तेषामप्रत्यक्षत्वादिति चेत् ?, तदपि न सम्यक्, पृथिव्यादिद्रव्येष्वपि रश्मीनां साध्यत्वप्रसक्तेः, तथाहि—रश्मिवन्तो भूम्यादयः, सत्त्वात्, प्रदीपवदित्यनुमातुं शक्यत्वात् । यथा प्रदीपे रश्मिवत्त्वेन तैजसत्वं व्याप्तं दृष्टं तथैव सत्त्वमप्युपलभ्यते । न च सत्त्वस्यान्यथापि संभावयितुं शक्यते न तैजसत्वस्येत्यपि विभागीकर्तुं शक्यते । ननु भूम्यादौ रश्मिवत्त्वसाधने प्रत्यक्षबाध इति चेत् ?, नारीलोचनेऽपि स एव बाधो विलोक्यते । ननु मार्जारनयनस्य रश्मयः प्रत्यक्षतो विलोक्यन्त इति कथं तद्विरोधः ? ननु यदि तत्र ते ईक्ष्यन्ते तर्ह्यन्यत्र तेन किमायातम् ?, तत एवान्यत्रापि साध्यत इति चेत् ?, तर्हि सुवर्णे पीतिमत्त्वप्रतीतौ रजतेऽपि पीतिमत्त्वप्रसङ्गः स्यात् । न च रजते बाधकप्रमाणसद्भावो नारीनयने तु नेति वाच्यम्, बाधकप्रमाणस्योभयत्रापि तौल्यात् । अथ मार्जारनयने रश्मिवत्त्वसत्त्वप्रतीतेर्नान्यत्रापि सत्त्वहेतुना ते प्रसाध्यन्ते किन्त्वनुमानतः, तत्तु निदर्शनमात्रमितिचेत् ?, कोऽत्र हेतुः ?, नेत्रत्वादिति चेत् ?, तैजसत्वादित्यस्यानर्थक्यं संजातम्, अत एव प्रकृतसाध्यसिद्धेः । अत्रापि प्रत्यक्षबाधः पुनः तदवस्थ एवेति । तैजसत्वहेतौ प्रदीपनिदर्शनेनैव निर्वाहे मार्जारनयननिदर्शनमपि निरर्थकम् परं प्रति च तस्य तैजसत्वमप्यसिद्धमिति तस्य निदर्शनं साधनशून्यमपि । न च रश्मिवत्त्वेन बिडालनयनस्य तैजसत्वं सिद्धमिति वाच्यम्, मण्यादीनामपि तत्प्रसक्तेः । न च रश्मिवत्त्वेन तत्रापीष्टापत्तिः कर्तुं शक्यते, मूलोष्णप्रभाया एव तैजसत्वात्, अन्यथा तरुणतरुकिसलया-

नामपि तैजसत्वप्रसक्तेः । ननु रश्मिवत्त्वेन तेषां तत्साध्यत इति चेत्?, न, अन्योन्याश्रयप्रसङ्गात्-सिद्धे च भास्वरप्रभावत्त्वे तैजसत्वसिद्धिस्तस्यां च भास्वरप्रभावत्त्वसिद्धिरिति ।

अथ "चक्षुः तैजसं, रूपादीनां मध्ये रूपस्यैव प्रकाशकत्वात्, प्रदीपवत् । मनसि व्यभिचारवारणायैवकारः, तस्य गन्धादीनामप्यभिव्यञ्जकत्वात् । एवमपि रूपवद्द्रव्यादिव्यञ्जकत्वोपलब्धेरसिद्धत्वं तद्वारणाय रूपादीनां मध्य इत्युक्तम् । अथवा चक्षुस्तैजसं परकीयस्पर्शाद्यव्यञ्जकत्वे सति परकीयरूपव्यञ्जकत्वात् प्रदीपवत्, प्रदीपस्य स्वकीयस्पर्शव्यञ्जकत्वात्तदत्र दृष्टान्तेऽव्याप्तिवारणाय प्रथमं परकीयमिति । घटादेः स्वकीयरूपव्यञ्जकत्वात् व्यभिचारवारणाय द्वितीयं परकीयमिति । अथवा प्रभायाः दृष्टान्तत्वसंभवादाद्यं परकीयमिति न देयम्" इति विश्वनाथीयाभ्यामनुमानाभ्यां तैजसत्वसिद्धेर्नान्योन्याश्रयदोष इति चेत् ?, नन्वत्र यदि चक्षुःशब्देन भास्वररूपोष्णस्पर्शवत्तेजोद्रव्यसमवेतगोलकस्वभावं कार्यद्रव्यमुच्यते तर्हि तस्य तैजसत्वसाधने प्रत्यक्षविरोधः स्यात्, प्रत्यक्षेण तद्विरुद्धरूपस्पर्शोपलब्धेः, तथाहि-नारीपारापतवृषभादीनां नयनस्योष्णस्पर्शविकलत्वेन धवलरक्तनीलरूपत्वेन चाध्यक्षतः प्रतिपत्तिः सिद्धैव । यदि च गोलकव्यतिरिक्तं चक्षुस्तर्हि तद्ग्राहकप्रमाणाभावादाश्रयासिद्धिः स्वरूपासिद्धिश्च । निशाकरकिरणे तस्य रूपस्यैव प्रकाशकत्वेऽपि तैजसत्वाभावात् व्यभिचारेणानेकान्तिको हेतुरपि । न च तत्करान्तर्गतं तेजस्तत्रापि रूपप्रकाशकमिति न व्यभिचार इति वाच्यम्, प्रदीपेऽपि तदन्तर्गतस्यान्यस्य रूपप्रकाशकत्वप्रकल्पनेन दृष्टान्तासिद्धिप्रसक्तेः । प्रत्यक्षबाधस्तूभयत्रापि समानः । किं च नयने उष्णस्पर्शशून्यत्वेनापि तैजसत्वासंभवो विलोक्यते, यत उक्तं वैशेषिक-

भाष्ये—"उष्ण एव स्पर्श" इति । अत्रोदयनो यद्वदति "एवकारश्चन्द्रचामीकरचक्षुरादिष्वनुपलम्भहेतुकां विप्रतिपत्तिमपनेतुम्, तेषां तैजसत्वेनोष्णत्वानुमानादिति" तदपि न सुन्दरम्, अद्यापि शशधरादिषु तैजसत्वासिद्धेः । ननु शशधरे प्रस्तुतहेतुत एव तैजसत्वं सेत्स्यतीति चेत् ?, अस्यानुमानबाधितपक्षानन्तरोपन्यस्तत्वेन कालात्ययापदिष्टत्वात्, तथाहि—न चन्द्रस्तैजसः शैत्यहेतुत्वात् पाथोवदितीन्दोरतैजसत्वे तन्मरीचीनां तु सुतरामतैजसत्वमिति । यत्तु कस्यचिदागमः—"जलकल्लोलश्चन्द्रः, तत्र तत्र प्रतिहतास्तपनांशवः प्रद्योतन्ते शिशिराश्च भवन्ति, तत एव शैत्यहेतव" इति तदप्यप्रामाणिकं यतः कस्यायं जलनिधेः कल्लोलः ?, कथं वा तं विहायाकाशतलमवलम्बते ?, कुतः परिमण्डले एव ?, कथं न स्पन्दते ?, कथं वा काठिन्यं प्राप्तः ?, कथं च तत्प्रतिफलितास्तपनांशाः शिशिराः सुखावलोकाः सकलदिक्प्रसारिणश्च भवन्ति ?, कथं च न दिवापि तत्प्रतिफलमित्यादयो विकल्पा निरुत्तरीकर्तुमशक्याः । प्रस्तुते पुनः तेजोरूपनयनसन्निकर्षस्यापि रूपादिषु रूपस्यैव प्रकाशकत्वेन व्यभिचारी प्रकृतहेतुः । ननु द्रव्यत्वे सतीति हेतुविशेषणात् न व्यभिचार इति चेत् ?, तर्हि अञ्जनादौ व्यभिचारः, अञ्जनसंस्कृतचक्षुषां प्रदीपाभावेऽपि रूपदर्शनात् । न च यदन्तरेणापि यद्भवति तत्तत्कार्यमितरत्तत्कारणमिति वाच्यम्, अन्वयव्यतिरेकनिबन्धनत्वात् तद्भावस्य । ननु प्रदीपे सति यद्दर्शनं तत्तदभावे न भवति, यत्तु तदभावे भवति न तत्रापि तत्सदृशम्, न चान्यस्य व्यभिचारेऽन्यस्यासावतिप्रसङ्गादिति चेत् ?, तन्न, यतो यादृशमेव रूपदर्शनमालोके संस्कृतचक्षुषां तदभावेऽपि तादृशमेव, तद्भेदानवधारणात्, तद्भेदकल्पने तु 'न किञ्चित्कस्यचिद्वस्तुना सदृश'मिति सौगतमतानुप्रवेशः स्यात् । एतेन "अञ्जनादेरन्यत्र कॢप्तनियतपूर्ववर्तिभिरेव कार्यसम्भव इत्याद्यन्यथासिद्धत्वेन रूपग्राहित्वस्यैवासम्भवात्, किन्तु चक्षुर्गतदोषव्यावर्त्त-

कत्वेन बाधस्थले भ्रमत्वशङ्काविघटनद्वारा प्रामाण्यज्ञानवदञ्जनादिकमपि चाक्षुषादौ कचिदुपयुज्यते, न तु कारणत्वं तस्य" इति यत्केनचिदुक्तं तदप्यपास्तं द्रष्टव्यम्, मष्यादीनां तथाभावेऽप्यञ्जनस्योक्तप्रकारेण कारणत्वावधारणात् व्यभिचारस्तदवस्थ एव। न चाञ्जनं तैजसमेव न पुनः पार्थिवम्, तत्रानुद्भूतस्य तेजोद्रव्यस्य भावादिति वाच्यम्, प्रमाणाभावात्। ननु 'तैजसमञ्जनं, रूपावभासने नयनस्य सहकारित्वात्प्रदीपवदिति' चेत्?, न, मनसि व्यभिचारात्। ननु रूपस्यैवावभासने नयनस्यैव वा सहकारित्वादित्यवधारणगर्भसाधनोपदर्शनेन सकलानां विषयाणामिन्द्रियाणां वा साधारणस्य मनसो व्यवच्छेदेन व्यभिचारपरिहारः क्रियते इति यदाक्षिप्यते तदाद्यपक्षे हेतुरसिद्धः, द्रव्यादेरपि व्यञ्जनेऽञ्जनस्य नयनसहकारित्वात्, द्वितीये तु दृष्टान्तस्य साधनशून्यत्वम्, स्वविषयावभासं जनयति रूपेऽपि प्रदीपस्य सहकारितया नयनं प्रत्येव सहकारित्वायोगात्। ननु 'तैजसमञ्जनं, रूपादिषु मध्ये रूपस्यैवाभिव्यञ्जकत्वात्, प्रदीपवदिति' चेत्?, न, हेतुशून्यं निदर्शनम्। ननु किं प्रदीपोऽपि गन्धादीनभिव्यनक्तीति चेत्?, ओमिति ब्रूमः, नागकर्णिकादेः परिमलं नागकर्णिकाविमर्दककरतलमिव स्वान्तर्निमग्नानामगुरुमृगमदकर्पूरचन्दनादीनां सुरभिपरिमलोद्गारमभिव्यनक्त्येव प्रदीपः। एवं चक्षुषस्तैजसत्वानुमानेऽपि साधनविकलता निदर्शनस्य वाच्या। किञ्चाञ्जनादेस्तैजसत्वस्वीकारे घटादिना किमपराद्धम्?, तत्र बाधकप्रमाणसद्भाव इति चेत्?, अन्यत्रापि तत्समानम्, तथाहि–अञ्जनं पार्थिवमाकरोद्भवत्वात् मृत्तिकावदिति। न च सुवर्णे व्यभिचारः, तस्यापि तत्त्वमेवेत्यञ्जनस्य पार्थिवत्वेन तवानुमानेऽसत्प्रदत्तव्यभिचारस्य दुष्प्रतिकार्यत्वं संजातम्। किञ्च सहोत्पन्नयो रूपप्रदीपयोर्युगपद्दर्शनेन प्रदीपवद्रूपस्यापि प्रदीपप्रकाशकत्वाद्रूपं तैजसं स्यात्, अन्यथा प्रदीपोऽपि तैजसो न स्यात्, तयोस्तज्जन्यत्वा-

विशेषात्। नन्वन्यदा प्रदीपस्यैव रूपप्रकाशकत्वोपलब्धेः स एव तदापि प्रकाशकोऽस्त्विति चेत् ?, न, अञ्जनादिसंस्कृतचक्षुषः प्रदीपाभावेऽपि रूपदर्शनसद्भावात् तस्यैव प्रकाशकत्वासिद्धेः। ननु प्रदीपे सति कदाचित्कस्यचिद्रूपदर्शनात् तस्य तत्प्रकाशकत्वमिति चेत् ?, ननु तर्हि नक्तञ्चराणां सन्तमसे रूपदर्शनात् तदभावे च तदभावात् तमसोऽपि प्रदीपवद्रूपप्रकाशकत्वेन तद्वत्तैजसत्वं स्यात्, सर्वत्र हेतुफलभावस्यान्वयव्यतिरेकनिबन्धनत्वात्, नो चेदनेनैव व्यभिचारः स्यात्। न चालोकाभाव एव तम इति वाच्यम्, आलोकस्यापि तमोऽभावरूपताप्रसक्तेः। न चालोकस्य तारतम्यादिदर्शनात् नाभावरूपतेति वाच्यम्, तमस्यप्यस्य समानत्वात्, यथाऽऽलोकः प्रतिभासविषयस्तथा तमोऽपि प्रतिभासविषयः। न चालोकप्रतिभासाभाव एव तमःप्रतिभास इति वाच्यम्, तमःप्रतिभासाभाव एवालोकप्रतिभास इत्यपि कलयितुं शक्यत्वात्। अथालोकप्रतिभासाभाव एव तमःप्रतिभासो नयनव्यापाराभावेऽपि तत्प्रतिभाससंवेदनादिति चेत् ?, न, तस्यापि प्रतिनियतसामग्रीप्रभवविज्ञानावभासित्वात्, यद्वाऽऽलोकस्याप्यचक्षुर्जे सत्यस्वप्नज्ञाने प्रतिभासनात् तमोज्ञानाभावता स्यात्। ननु रूपज्ञाने आलोकस्य हेतुत्वेन नाभावरूपतेति चेत् ?, तर्हि नक्तञ्चराणां रूपविज्ञाने हेतुभावेन नाभावरूपता तमसः। तत आलोकवत्तमसोऽपि वस्तुत्वेन व्यभिचारः स्फुट एव। यद्वालोकाभाव एव तमोऽस्तु तथापि व्यभिचारापरिहारः, अतैजसस्याप्यालोकाभावस्य रूपप्रकाशकत्वेन तत्र व्यभिचारः स्यादेव। ननु तमसोऽभावेऽपि रूपदर्शनात् न तमसः रूपप्रकाशकत्वमिति चेत् ?, तर्हि आलोकाभावेऽपि नक्तञ्चराणां रूपदर्शनात् नालोकस्यापि रूपप्रकाशकत्वम्। नन्वालोकाभावेऽस्मदादीनां कथं रूपदर्शनं न भवतीति चेत् ?, भवत्येव, कथमन्यथान्धकारसाक्षात्करणं स्यात्। ननु तमसि घटरूपदर्शनं कथं न भवतीति

चेत् ?, बहलतमो व्यवधानात्, तीव्रालोकतिरोहिताल्परूपवत् । प्रदीपानयनं तु तमोव्यवच्छेदार्थम्, अत एवान्यत्रोक्तम् "तमोनिरोधं वीक्षन्ते तमसा नावृतं परं घटादिकम्" इत्यादि, ततः प्रदीपस्य च घटरूपव्यवधायकतमोऽपनेतृत्वेन 'चक्षुस्तैजसं रूपादीनां मध्ये रूपस्यैवाभिव्यञ्जकत्वात् प्रदीपवत्' इत्यत्र पुनः साधनविकलता निदर्शनस्य स्यादिति । किञ्च, नयनस्य तैजसत्वस्वीकारे कथं तत्र न भास्वररूपोपलम्भः, तेजसि तस्य स्वाभाविकत्वात् ?, अनुद्भूतत्वेनानुपलब्धिरित्यपि न, एवं सति रूपाभिव्यञ्जकत्वमस्य दुरुपपाद्यम्, तथाहि–यदुद्भूतभास्वररूपरहितं तन्न रूपाभिव्यञ्जकं यथा जलसंयुक्ताग्निः सुवर्णं वा तथा नयनमपि त्वया कक्षीकृतमिति । यत्तु "कथमनुद्भूतरूपाणामर्थप्रकाशकत्वमिति चेत् ?, न, प्रदीपादिप्रकाशसहितानां तदुपपत्तेः, अत एव येषामदृष्टसामर्थ्यादुद्भूतरूपा नायना रश्मय उत्पन्नास्तेषां वाह्यप्रकाशनिरपेक्षा एवार्थं प्रकाशयन्ति यथा नक्तञ्चराणां; तथा केषाञ्चिन्नक्तञ्चराणां नायना रश्मयः प्रत्यक्षेणैव दृश्यन्त" इति भूषणोक्तमपि भूषणं न भूषयति, घटादेरप्यनुद्भूतभास्वररूपपरिकल्पनया प्रदीपादिसहकृतस्य प्रकाशकत्वोपपत्तेः । ननु घटादौ तैजसत्वाभावात् भास्वररूपमेव नास्तीति कुतस्तत्रानुद्भूतत्वकल्पनापि युक्तिमतीति चेत् ?, तर्हि नयनस्यापि कुतः तैजसत्वसिद्धिः ?, रूपादिषु मध्ये नियमेन रूपस्याभिव्यञ्जकत्वादित्युक्तमेवेति चेत् ?, न, विहितोत्तरत्वेन तदसिद्धेः । यत् "केषाञ्चिन्नक्तञ्चराणां नायना रश्मयः प्रत्यक्षेणैव दृश्यन्त" इत्युक्तं तदपि बालजल्पितम्, अस्मदादीनां तत्रादृश्यमानत्वात् । मार्जारादिनयनानां रश्मयः प्रतीयन्त एवेति चेत् ?, न, तद्गोलकप्रदेशविशेषाणामेव तत्र प्रतिभासनात् । यदि मार्जारादिनयनानां रश्मयः स्युस्तर्हि प्रदीपादिवत्तेऽपि प्रसरन्तः कथं न दृश्येरन् ? ननु निशि नक्तञ्चराः पश्यन्तीति चेत् ?, तर्हि मनुष्याः कथं न पश्यन्ति ?, न च नरान् प्रति नयनरश्मीनामतितनुतरत्वेन नाभिव्यञ्जकत्वं भवतीति

वाच्यम्, नक्तञ्चरान् प्रत्यपि तदभिव्यञ्जकत्वविरोधात् । उद्भूतभास्वररूपत्वेन तेषामभिव्यञ्जकत्वं चेत् तच्चोभयत्रापि तुल्य-
मिति । यद्वा वृषदंशनयनयोर्निशि किञ्चित् चाकचिक्यभावेन सन्तु मरीचयः परं गृहगोधिकादीनां नयनेषु किञ्चिदपि निशि
न चकास्तीति तत्र कथमुद्भूतभास्वररूपा रश्मयः स्वीक्रियन्ते ? यतो दर्शनयोग्यमुद्भूतमुच्यते, अन्यथा मनुष्यनयनेषु तद-
नुद्भूतताभ्युपगमः किं निमित्तकः स्यात् ? अनुद्भूतताभ्युपगमे तु गृहगोधिकादिनयनरश्मीनामालोकनिरपेक्षाणामेव प्रकाश-
कत्वमवलोकितमिति कथमालोकसहकृतानां नयनरश्मीनां प्रकाशकत्वमुपपद्यत इति यत्किञ्चिदेतत् । एतेन "चक्षुषि भास्व-
रशुक्लरूपस्य सत्त्वात्, अनुपलब्धिस्त्वनुद्भूततयापि सङ्गच्छत" इति परोक्तमपास्तं द्रष्टव्यम्, पारापतादिनयनेषु रक्तादिदर्शनेन
भास्वरशुक्लरूपाभावस्यापि दर्शनाच्च । "अथवाऽऽलोकावयवसहितेभ्यस्तदवयवेभ्य उद्भूतरूपा नायना रश्मय उत्पद्यन्ते, दृष्टौ हि तेज-
सामाशुतरविनाशोत्पादौ, रूपस्पर्शौ चोद्भूतत्वानुद्भूतत्वधर्मविकल्पोपेतावित्युद्भूतरूपत्वेनोत्पन्नानामपि रश्मीनामन्यस्मिन् समावेशाद्विवेके-
नाग्रहणम्, यथाऽनेकप्रदीपरश्मीनामेकार्थसम्बद्धानाम्" इत्यपि भूषणोक्तमभूषणमेव मन्तव्यम्, यत आलोकमीलितेषु मनुष्य-
नयनेष्वेवमस्तु तथापि निविडतरघनपटलावृतायां कुहूनिशि पिहितनिरन्ध्रकपाटसम्पुटापवरकक्रोडे विचरतां गृहगोधादि-
पापानां प्राणिनां साक्षात् पश्यतां कथं तेषां मरीचीनामुपलम्भो न स्यात् ?, तत्रालोकमीलनासम्भवात्, यत्रैवालोकमीलनं
तत्रैव तेषामुद्भूतानामुत्पत्तिरिति चेत् ?, तर्हि गृहगोधादिनयनरश्मीनामप्रकाशकत्वं स्यात्, अनुद्भूतभास्वररूपत्वात्,
ततोऽनुद्भूतभास्वररूपाव्यञ्जकत्वेन रूपाभिव्यञ्जकत्वमसिद्धं नयनस्येति । नयनस्य च तैजसत्वमनुमानबाधितम्, तथा च
प्रयोगः 'चक्षुस्तैजसं न भवति तमःप्रकाशकत्वात् यन्नैवं न तदेवं यथा प्रदीपः तथा चेदं तस्मात्तथे'ति । न च तमसोऽ-

भावरूपत्वेन तत्प्रकाशकत्वासम्भव इति वाच्यम्, पुद्गलपरिणामत्वेन तस्य द्रव्यत्वसिद्धेः । न च पुद्गलपरिणामोऽसिद्धः, कुड्यादिवत् दृष्टिप्रतिबन्धकत्वेन पटादिवदावरकत्वेन च तत्सिद्धेः । एवं 'तमो द्रव्यं रूपवत्त्वात् घटवत्' । न चायमसिद्धो हेतुः, तमो नीलमिति प्रतीतेः सर्वजनप्रसिद्धत्वात्, नापि सा भ्रमात्मिका, बाधकाभावात् । ननूद्भूतरूपमुद्भूतस्पर्शव्याप्यमिति नियमो विरुध्येतेति चेत् ?, न, तादृशनियमे मानाभावात् प्रभायां व्यभिचाराच्च । न चोद्भूतनीलरूपवत्त्वमेवोद्भूतस्पर्शव्याप्यमित्यपि वाच्यम्, धूमे व्यभिचारात्, तत्रोद्भूतस्पर्शवत्त्वकल्पने न व्यभिचार इत्यपि प्रमाणशून्यम्, न च तत्संयोगादश्रुपात एव प्रमाणमित्याशङ्कनीयम्, नयनधूमसंयोगत्वेनैवाश्रुपातजनकत्वात् धूमे उद्भूतस्पर्शासिद्धेर्नीलत्रसरेणौ व्यभिचाराच्च, तत्राप्युद्भूतस्पर्शकल्पने तत्स्पर्शस्य स्पार्शनापत्तिः प्रसज्येत । अस्तु वात्र स्पर्शवत्त्वम्, तथा च साम्प्रदायिकाः— 'तमसि पवनाभिव्यज्यमानः शीतस्पर्शोऽप्यनुभूयत एव, अत उद्भूतस्पर्शवत्त्वमपि तत्र' इति । ननु तमसो जन्यत्वे स्पर्शवदवयवारब्धत्वापत्तिः स्यादिति चेत् ?, न, तमसः स्पर्शवदवयवजन्यत्वस्येष्टत्वात् शक्त्याख्यातिशयस्यैव द्रव्यजनकत्वाच्च । ननु तमसो द्रव्यत्वे आलोकनिरपेक्षचक्षुर्ग्राह्यत्वं न स्यात्, द्रव्यचाक्षुषत्वावच्छिन्नं प्रत्यालोकसंयोगत्वेन हेतुत्वादिति चेत् ?, न, आलोकं विनापि घूकादीनां द्रव्यचाक्षुषोदयेन व्यभिचारात् । एतेन "न चैवं सुवर्णवच्चक्षुषोऽपि रूपादिप्रकाशकत्वं न स्यादिति वाच्यम्, चाक्षुषलौकिकप्रत्यक्षं प्रत्युद्भूतरूपावच्छिन्नमहत्त्वावच्छिन्नालोकसंयोगावच्छिन्नचक्षुःसंयोगस्य कारणत्वात्, आलोकश्चान्धकारप्रतियोगी तेज" इत्याद्यपि निरस्तम् । न च मनुजादिचाक्षुष एव हेतुत्वान्न व्यभिचार इति वाच्यम्, अञ्जनादिसंस्कृतनयनानां तस्करादीनां नायने व्यभिचारात् । न चाञ्जनाद्यसंस्कृतमनुजनयनजन्यनायने आलोकसंयोगत्वेनाञ्जनादिसंस्कृतनय-

आलोकाद्युद्बोध्यक्षयोपशमरूपयोग्यताया
नानां स्वातन्त्र्येण च चाक्षुषहेतुत्वमित्यपि वाच्यम्, अननुगमात्, किं वा
एवानुगतत्वेन तस्या एव हेतुत्वौचित्यात्, किञ्च तमसोऽभावस्वरूपत्वे तेजोज्ञानं विना तस्य ज्ञानं न स्यात्, अभावज्ञा-
नेऽन्वयव्यतिरेकाभ्यां प्रतियोगिज्ञानस्य हेतुत्वावधारणात्, न च "गिरिदरीविवरवर्त्तिनो यदि योगिनो न ते
तिमिरावलोकिनः, तिमिरावलोकिनश्चेत् नूनं स्मृताऽऽलोका" इत्यनेनेष्टापत्तिरपि कर्तुं शक्यते, तेजसोऽप्रतिसन्धानेऽपि
तमोऽनुभवस्य प्रत्यक्षसिद्धत्वात् । किञ्चैकालोकवत्यप्यालोकान्तराभावसत्त्वेनालोकप्रतियोगिकाभावमात्रं न तमो व्यव-
हारविषयः, आलोकवत्यपि सम्बन्धान्तरेणालोकसामान्याभावसत्त्वेनालोकसामान्याभावोऽपि न तमोव्यवहारविषयः ।
नापि संयोगसम्बन्धावच्छिन्नालोकाभावस्तमः, आलोकेऽपि तत्सत्त्वात्, आलोकान्यवृत्तित्वविशिष्टतदभावोऽपि न तमो-
व्यवहारविषयः, अन्धकारेऽन्धकारापत्तेः । नाप्यालोकान्यद्रव्यवृत्तित्वविशिष्टः तमोव्यवहारविषयः, अन्धकारेऽन्धकारा-
पत्तेस्तदवस्थत्वात् त्वदात्मन्यपि तत्प्रसङ्गाच्च । नापि कदाचिदालोकसंसर्गात्तद्वृत्तित्वविशिष्टालोकाभावः तमोव्यवहार-
विषयः, कदाप्यालोकसंसर्गो यत्र नास्ति तत्रापि घोरनरकादौ तमःश्रवणात् । किञ्चैतावद्घटकाप्रतिसन्धानेऽपि तम-
स्त्वप्रतिसन्धानात् घटत्ववत् जातिरूपं तमस्त्वमित्येव न्याय्यम् । एतेन "यावदालोकासत्त्वेनान्धकारव्यवहारस्तावन्निष्ठबहुत्व-
विशेषावच्छिन्नप्रतियोगिताकाभावस्तम" इत्यप्यपास्तं बहुत्वस्य बुद्धिविशेषादिना विनिगमनाभावाच्च । "अखण्डाभाव एव तमः,
अखण्डं वा तमस्त्वम्" इति कल्पनापेक्षयातिरिक्तमोद्रव्यकल्पने का क्षतिः ?, अपि च तमसोऽभावस्वरूपत्वे उत्कर्षापकर्षा-
संभवेनान्धतमसाल्पतमसादिविशेषोऽपि न स्यात्, किञ्चालोकात्यन्ताभावः तम इति स्वीकारे तमस उत्पन्ननाशादिप्रती-

तीनां भ्रमत्वं स्यात् । "आलोकसंसर्गाभावसमुदाय एवान्धकारः, तत्र राशिष्विव किञ्चित्समुदायव्यतिरेकप्रयुक्त एव विनाशः, एवमुत्पत्तिप्रत्ययोऽप्यूह्य" इति शशधरशर्मणोऽपि वचनं न शोभनम्, राशिषु बहुत्वविशेषनाशोत्पादाभ्यां तदाश्रयनाशोत्पादप्रतीत्युपपत्तावपि प्रकृते तदयोगात्, समूहविलक्षणमहदेकोत्पादाद्यनुभवाच्च । यत्तु "तमसो द्रव्यत्वे प्रौढालोकमध्ये सर्वतो घनतरावरणे तमो न स्यात्, तेजोऽवयवेन तत्र तमोऽवयवानां प्रागनवस्थानात्, सर्वतः तेजःसंकुले वाऽन्यतोऽप्यागमनासंभवात्" इति वर्धमानोक्तमपि न रमणीयम्, "यद् द्रव्यं यद् द्रव्यध्वंसजन्यं तत्तदुपादानोपादेयम्" इति व्याप्तेस्तेजोऽणुभिरेव तत्रान्धकारारम्भस्वीकारात् । न च तेजसः तेजस एवारम्भकत्वादयुक्तमेतदिति वाच्यम्, नियतारम्भकत्वास्वीकारादिति । एवं तमसोऽभावत्वे गतिमत्त्वपरत्वापरत्वविभागादिप्रत्ययानामप्यनुपपत्तिः । "तमो द्रव्यम् घनतरनिकरलहरीप्रभृतिशब्दैर्व्यपदेश्यमानत्वात् किरणादिवत्" इत्यपि वदन्ति । "नात्रालोकः किन्त्वन्धकार" इति व्यवहारादप्यालोकाभावात् भिन्नं तमः । 'नात्र घटः किन्तु तदभावः' इतिवत् विवरणपरतां विनापि स्वारसिकप्रयोगदर्शनात्, अपकृष्टालोकसत्त्वेऽप्यन्धकारव्यवहाराच्च आलोकवत् भिन्नं तम इति । न चोत्कृष्टालोकाभावोऽन्धकार इत्यपि वाच्यम्, तदुत्कर्षप्रतियोग्यपकर्षशालितयैव तमसि द्रव्यत्वसिद्धेः । प्राभाकरास्तु—"तेजोज्ञानाभाव एव तमः, नीलं तम इति धीस्तु स्मृतनीलिम्ना समालोकज्ञानाभावस्यासंसर्गाग्रहात्, अत एवालोकवद् गर्भगृहं प्रविशतः प्रथममालोकाग्रहे 'नीलं तम' इति धीः, तदुक्तं—'अप्रतीतावेव प्रतीतिभ्रमो मन्दानाम्'" इत्याहुः, तन्न सम्यक्, 'तमः पश्यामि' इति प्रतीत्या तमसश्चाक्षुषत्वात् ज्ञानाभावस्य चातथात्वात् । निमीलितनयनस्य नान्धकारप्रतीतिरस्ति किन्त्वर्थान्तरप्रतीतिरेव, अन्यथा 'गृहे तमोऽस्ति न वा ?' इति संशयानुपपत्तेः, गर्भगृहे च तमःप्रत्ययो

भ्रम एव, आलोकज्ञानप्रतिबन्धकदोषस्य तत्र स्वीकारावश्यकत्वादिति दिक् । कन्दलीकारस्तु 'आरोपितं नीलं रूपं तम' इत्याह, तन्न, नीलद्रव्योपरक्तेषु वस्त्रचर्मादिषु तमोव्यवहारप्रसङ्गादिहान्धकार इति प्रतीतेर्भ्रमत्वापत्तेस्तमो नीलं न तु नीलिमा इति प्रत्ययाभावप्रसङ्गाच्च । 'नीलारोपितविशिष्टस्तेजःसंसर्गाभावस्तम' इति शिवादित्यः, तदपि न सुन्दरम्, नीलारोपाग्रहेऽपि तमस्त्वग्रहात्, तादृशतमस्त्वावच्छिन्नधर्मिकनीलारोपायोगाच्चेत्यधिकं कल्पलतादितोऽवसेयम् । तदेवं तमसो द्रव्यत्वे सिद्धे न प्रकाशकत्वमसिद्धम् । एतेन "अन्धकारस्य पुद्गलकार्यत्वे मानाभावात् क्लिष्टकल्पनापत्त्यादिरूपानेकदोषदुष्टत्वाच्चैतत्कल्पनाया" इत्यविचारितपरोक्तमपि निरस्तम्, अन्धकारस्य द्रव्यात्मकस्य साधितत्वात् । ततस्तैजसत्वासिद्ध्या नयने न रश्मिवत्त्वसिद्धिनिबन्धनत्वम् । नन्वतिनिबिडतमसि जरन्मार्जारस्येक्षणे प्रत्यक्षतो रश्मिवत्त्वप्रतीतेः तन्निदर्शनेनान्यत्रापि नयनत्वहेतुना तत्सिद्धिरभिधीयते, एवं तर्हि तरुणरमणीवीक्षणे कटाक्षलक्षप्रक्षेपाः प्रेक्ष्यन्ते तत एव करभादिनयनेऽपि तत्सिद्धिः कथं न स्यात्? तस्मात्साधर्म्यमात्रेण हेतोर्न गमकत्वं किन्त्वन्यथानुपपन्नत्वेन, न च तदस्ति तद्ग्राहकप्रमाणाभावात्, अस्माकं तु मार्जारनयनेऽपि रश्मिवत्त्वमसिद्धमिति । तदेवं दृशो रश्मिवत्त्वाप्रसिद्धितो'ऽधिष्ठानदेशान्निःसृत्य प्रसरद्रश्मिरूपावयवसमवेतं चक्षुः प्रसृत्यार्थेन सम्बध्यते, सम्बद्धं चोपलम्भयती'त्यप्ययुक्तम् । नयनस्य प्राप्तार्थपरिच्छेदकारित्वं चानुमानबाधितम् । प्रयोगः 'चक्षुः प्राप्तार्थपरिच्छेदि न भवति, अत्यासन्नार्थाप्रकाशकत्वात्' । नात्र हेतोरसिद्धता, गोलकसम्बद्धाञ्जनस्याप्रकाशकत्वात् । नन्वत्यासन्नार्थः योग्यदेशावस्थितोऽयोग्यदेशावस्थितः सामान्यतो वा विवक्षितः?, न प्रथमपक्षो, योग्यदेशावस्थितस्य सर्वस्यापि वस्तुनः नयनेन प्रकाशनात्,

अञ्जनं त्वयोग्यदेशावस्थितत्वेन न प्रकाशयति। ननु गोलकवर्त्तित्वेऽपि किमयोग्यदेशावस्थितत्वमुच्यत इति चेत्?, ओम्। नन्वत्र को हेतुरिति चेत्?, पक्ष्मपुटतटोट्टङ्कितत्वेन गोलकान्तर्निःसरता रश्मिसमूहेन साकं संसर्गाभाव इति। नापि द्वितीयः पक्षः क्षेमङ्करः, स्पर्शनादीनामत्यासन्नानामाकाशपरमाण्वादीनामयोग्यपदार्थानामप्रकाशकत्वेऽपि प्राप्तार्थप्रकाशकत्वेन व्यभिचारात्। नापि तृतीयः, द्वितीयपक्षोक्तव्यभिचारेण दूषितत्वादिति चेत्?, अत्रोच्यते, यद्यपि त्वया स्वकीयालीककल्पनयाऽञ्जनमयोग्यं पर्यकल्पि तथापि काचकूपिकाद्यन्तर्गतप्रदीपरश्मीनां काचकूपिकादिवत् नयनरश्मियोग्यदेशस्थितेषु सकलगोलकव्यापितिमिरकामलादिषु कः प्रतीकारः?, नापि स्पर्शनादीन्द्रियेष्वनेकान्तिको हेतुर्यतः स्पर्शाभावान्नाकाशं स्पृशति, परमाण्वादिकं त्वत्यन्तग्रहणायोग्यत्वेन स्पर्शनेन्द्रियेण साकं तादृक् संयोगाभावान्न तथा। नन्वभ्यन्तरस्थितशरीरावयवानामतिप्रत्यासन्नवर्त्तित्वेनापि स्पर्शनेन्द्रियेणाग्रहणाद् व्यभिचारस्तदवस्थ एवेति चेत्?, न, अभ्यन्तरवर्त्तिशरीरावयवानां स्पर्शनेन्द्रियकारणत्वेन तत्सम्बन्धिस्पर्शस्य तदविषयत्वात्, अकारणस्य तु पीयमानस्य जलादेः शीतस्पर्शोऽन्तरनुभूयत एव। न च व्यवहितार्थाप्रकाशकत्वहेतुनापि नयनस्याप्राप्यकारित्वसिद्धिरिति वाच्यम्, कुलिशकाचाभ्रपटलस्वच्छसलिलस्फटिकोपलान्तरितानामपि पदार्थोपलम्भात्। ननु कुलिशादिकं विभेद्य नायनरश्मयः विषयदेशमुपसर्प्पन्ति ततस्तदुपलम्भ इति चेत्?, न, तूलपटलादेः सुतरां सुभेद्यत्वेन तूलपटलान्तरितस्यापि ग्रहणप्रसङ्गात्। यत्पुनरुदयन उदचीचरत्—“स्फटिकाद्यन्तरितोपलब्धिः प्रसादस्वभावतया स्फटिकादीनां तेजोगतेरप्रतिबन्धकतया प्रदीपप्रभावद्धवेदुपपन्ना” इति तदपि न मनीषिमान्यम्, यतो न क्वापि दृष्टो मूर्तद्रव्यस्य मूर्तद्रव्यान्तरेण गतेरप्रतिबन्धः

स्फटिकान्तर्गतप्रदीपर-
प्रसन्नतानिमित्तकः किन्तु तुलादिना जलादिगत्यप्रतिबन्धः प्रशिथिलावयवारब्धत्वनिमित्तकः ।
श्मयस्तु न तं भित्त्वा प्रसरन्ति किन्तु तत्सम्पर्कमासाद्य स्फटिकपरमाणुपुञ्ज एव तथा परिणतः सर्वतः प्रसरति ।
अत एव पीतरक्तादिकाचकूपिकातो रश्मयोऽपि तद्वर्णाः प्रसरन्तो दृश्यन्ते । एवं रविरश्मयोऽपि न काचकूपिकां भित्त्वा-
ऽन्तःप्रविश्य जलमुष्णीकुर्वन्ति किन्तु रविरश्मिसम्पर्कं समासाद्य काचकूपिकापरमाणव उष्णीभूता जलमुष्णीकुर्वन्ति ।
एतेन—"जलापेक्षया तच्छिद्राणामत्यन्तं सूक्ष्मतरत्वकल्पनात्, कथमन्यथा काष्ठादिना गाढतरं पिहितमुखस्यापि काचकूपादेरन्तर्गतस्य जला-
देरातपादिना सर्वानुभवसिद्धमुष्णत्वं संगच्छेत, तत्रापि सूर्यरश्मीनां जलादेः सम्बन्धोऽवश्यं स्वीकर्त्तव्यः, स च सम्बन्धः काचकूपादौ छिद्रा-
नङ्गीकारे न सम्भवतीत्यकामेनापि काचकूपादेः सच्छिद्रत्वं स्वीकर्त्तव्यम्, सच्छिद्रत्वे च तस्य जलादीनां ततो बहिः प्रपातापत्त्या
तच्छिद्राणां जलापेक्षयातिसूक्ष्मत्वं रश्म्यपेक्षया च स्थूलत्वं भवतापि स्वीकर्त्तव्यमेव" इति कस्यचित् कपोलकल्पनापि निरस्ता, छिद्र-
स्यानङ्गीकारेण स्थूलत्वसूक्ष्मत्वकल्पनाया निष्फलत्वापत्तेश्च । ननु यथा पारदस्यायस्पात्रभेदे सामर्थ्यं न पुनरलाबुपात्र-
भेदे तथा लोचनरोचिषामपि स्फटिकादिभेदे शक्तिर्भविष्यति न तुलपटलभेद इति चेत्?, न, सोऽयं स्फटिकादिरिति प्रत्य-
भिज्ञाबाधात्, विनाशव्यवहारस्य तत्र कस्यचिदभावात् । ननु निरन्तरताप्रतीतिस्तु भ्रमात्मिकैव, प्रदीपज्वालावत् पूर्वपूर्व-
काचादिव्यूहव्यावृत्तावुत्तरोत्तरतद्रूपव्यूहान्तरस्योपपत्तेरिति चेत्?, तर्हि, प्रतिक्षणं क्षणभङ्गुरं विश्वं स्वीकुर्वाणाः त्वया कथं
प्रतिहन्यन्ते ? । नन्वात्मादिपदार्थानां क्षणिकत्वं व्याचक्षाणं भिक्षुं प्रत्यभिज्ञैव प्रतिक्षेप्स्यतीति चेत्?, स्फटिकादावप्यस्त्येव
सा प्रत्यभिज्ञा। नन्वात्मादौ प्रत्यभिज्ञा दृढेति चेत्?, किंकृतं तत्र दार्ढ्यम्? बाधाभावकृतमिति चेत्?, तत्प्रकृतेऽपि समानम्,

ल्यम्, यतः तादृशक्षयोपशमवतामतिशयज्ञानिनामस्मदाद्यगोचरविप्रकृष्टस्वविषयं चाक्षुषं भवति, अस्मदादीनां तु स्वानुरूपतदावरणक्षयोपशमविशेषात् चाक्षुषं यथाप्रतीतिपदार्थप्रकाशकत्वं भवतीत्युभाभ्यां योग्यताऽभ्युपगन्तव्यैव । एतेन— "योग्यताभावाद् व्यवहिताग्रहणमिति चेत् ?, इन्द्रियस्य तावद्योग्यताविषयग्रहणसामर्थ्यमस्त्येव, तदानीमव्यवहितग्रहणात्, विषयस्यापि योग्यतामहत्त्वानेकद्रव्यत्वरूपविशेषाद्यात्मिका व्यवधानेऽप्यनिवृत्तैव, आर्जवावस्थानमपि तदवस्थम्" इति कन्दलीकारोक्तमप्यपास्तम्, प्रमातुस्तादृशक्षयोपशमरूपतद्ग्रहणयोग्यताया अभावात्, कथमन्यथा शशधरस्येव तद्गतेरुपलम्भो न स्यात् । ननु गतौ भास्वररूपाभावान्नोपलम्भः, निशाकरे तु तद् वैपरीत्यमिति चेत् ?, तदुत्सङ्गस्थकुरङ्गकलङ्को राहुविमानैकदेशश्च कथमुपलभ्येत ?, उद्भूतरूपाभावात् कृष्णत्वाच्च, तस्मात् बाह्येन्द्रियत्वेनापि प्राप्तार्थप्रकाशकं न सिध्यति । किञ्च किं नाम नयनस्य बाह्येन्द्रियत्वम् ?, बहिरर्थग्रहणाभिमुखत्वमुत बहिर्देशावस्थायित्वं बहिष्कारणप्रभवत्वं वा स्यादिति त्रयी गतिः । आद्यकक्षायां मनसा व्यभिचारि, मनसः बहिरर्थग्रहणाभिमुख्येन बाह्येन्द्रियत्वप्रसंगात् । द्वितीयकक्षायां विकल्पद्वयमुत्तिष्ठते, तथाहि— बहिर्देशावस्थायित्वमित्यत्रार्थदेशो बहिर्देशो विवक्षितः शरीराद्वा बहिः बहिर्देशो विवक्षितः, पौरस्त्यपक्षेऽर्थदेशाश्रितत्वमर्थाभिमुख्येन व्यवस्थायित्वं प्रवृत्तिर्वा विवक्षिता ?, आद्ये उभयासिद्धिः, वादिप्रतिवादिभ्यां गोलकान्तर्देशसमाश्रितत्वेनाभ्युपगमात्, साधनविकलता च दृष्टान्तस्य त्वगिन्द्रियस्यार्थदेशेऽनाश्रितत्वात्, द्वितीयेऽपि अर्थाभिमुख्येन प्रवृत्तिः किं प्रसर्पणरूपो व्यापारः प्रतीत्युत्पादकत्वं वा ?, आद्ये प्रतिवाद्यसिद्धिः, नयनकिरणानां तैजसत्वाभावेनार्थदेशे प्रसर्पणानभ्युपगमात्, तैजसत्वसाधकप्रमाणस्य निराकृतत्वेन बाधकस्य चोपन्यस्तत्वेनोभयासिद्धिर्वा,

निदर्शनस्य च साधनविकलता अत्रापि स्पष्टैव, अर्थाभिमुख्येन प्रतीत्युत्पादकत्वे च पुनर्मनसानैकान्तिकम् । ननु शरीरात्
बहिर्देशे गोलकस्वरूपे समाश्रितत्वं बहिर्देशावस्थायित्वम्, मनसि व्यभिचारवारणाय च बाह्येति विशेषणम्, तद्धि
देहान्तर्देशसमाश्रितमिति चेत्?, तदपि न, इन्द्रियबाह्यत्वस्याप्राप्तार्थपरिच्छेदेनाप्यविरुद्धत्वात्, न चाविरुद्धं विशेषणं
विपक्षाद्धेतुं व्यावर्त्तयति, न च तत्र विरोधसाधकं किञ्चित् प्रमाणमप्यस्ति । ननु मनसि प्राप्तार्थपरिच्छेदव्यावृत्त्या बाह्येन्द्रिय-
त्वस्यापि व्यावृत्तेर्विरोधसिद्धिरुद्भाव्यत इति चेत्?, न, क्वचित् साध्यनिवृत्तौ सत्यां साधननिवृत्तावपि विरोधासिद्धेः,
अन्यथा चक्षुरप्राप्तार्थपरिच्छेदि, स्पर्शनरसनघ्राणश्रोत्रान्येन्द्रियत्वात्, मनोवदित्यनुमानतः कश्चिच्चक्षुषोऽप्राप्तार्थपरिच्छेदं
प्रसाधयन् कथं प्रतिरोत्स्यते? समस्ति चात्राप्राप्तार्थपरिच्छेदव्यावृत्त्या स्पर्शनरसनघ्राणश्रोत्रान्येन्द्रियत्वस्यापि व्यावृत्तिः
स्पर्शनादाविति । नापि तृतीयः, मनसैव व्यभिचारात्, आत्मापेक्षया बहिष्कारणं पुद्गलतत्त्वं तत्प्रभवत्वं च मनसः साधित-
मेवेति । तस्माद् व्यतिरेकानिश्चयात् सन्दिग्धव्यतिरेकी हेतुः । अथ 'चक्षुः प्राप्यकारि भौतिकत्वात् परशुवदि'त्यपि न सम्यक्,
यतः प्राप्य–संयुज्य स्वकार्यं करोतीति प्राप्यकारीति वक्तव्ये प्राप्तिरपि स्वकार्यं भवति, तदपि च प्राप्य करोत्यन्यथा वा?,
प्राप्य चेत्?, सापि प्राप्तिः प्राप्यैव कर्त्तव्येति प्राप्तिपरम्परोत्पादन एव क्षीणशक्तिकत्वेन प्रस्तुतकार्याकरणादनवस्था, द्वितीये
त्वनयैव व्यभिचारः । अथ ज्ञानस्वरूपकार्यापेक्षया चक्षुषः प्राप्यकारित्वसाधनात् नोक्तदोष इति चेत्, तन्न, प्राप्यकारीति
शब्दस्य प्राप्तिपूर्वक्रियामात्राभिधानपर्यवसितत्वात्, निदर्शनस्य साधनशून्यत्वापत्तेश्च, यतः परशुधारापि पादपं प्राप्य
द्वैधीभावं विधत्ते न तु ज्ञप्तिमिति । ननु स्वविषयज्ञप्तिकरणापेक्षया परशोः निदर्शनमुक्तं न द्वैधीभावापेक्षया, तथा च न

न खलु आत्मादिवत् स्फटिकादावपि एकत्वपरामर्शिनः प्रत्यभिज्ञानस्य किञ्चिद्बाधकं प्रमाणं समस्ति । ननु एकत्वपरामर्शि-प्रत्यभिज्ञायाः स्फटिकान्तरितार्थोपलम्भेन तद्भेदसिद्धेर्बाध इति चेत् ?, न, अन्योन्याश्रयप्रसङ्गात्, भेदसिद्धौ स्फटिकाद्य-न्तरितार्थोपलम्भः सिध्यति तत्सिद्धौ च भेदसिद्धिरिति। स्फटिकादौ चाशूत्पादविनाशयोः स्वीकारे दर्शनान्तरितमदर्शनमपि स्यात्, न च तत्र तत्कदाचिदप्यनुभूयते । नन्वाशुभाविभ्यां पूर्वोत्तरोत्पादाभ्यां विनाशस्य तिरोधानात् न तत्रादर्शनं स्यादिति चेत् ?, तर्हि, आशुभाविभ्यां पूर्वोत्तराभ्यां विनाशाभ्यामुत्पादस्यापि तिरोधानात् दर्शनमपि मा भूत् । ननु तदु-त्पादयोः स्वमध्यगतविनाशतिरोधाने सामर्थ्यमस्ति, भावस्वभावत्वेन बलीयस्त्वात्, न तु निःस्वभावयोः तद्विनाशयोः स्वम-ध्यगतोत्पादतिरोधाने सामर्थ्यम्, अभावस्वभावत्वेन दुर्बलत्वादिति चेत् ?, न, भावाभावयोः समानबलत्वात्, तयोरन्यतरब-लीयस्त्वे युगपद्भावाभावात्मकवस्तुप्रतीतिविरोधः स्यात् । न च वस्तुनो भाव एवानुभूयत इति वाच्यम्, स्वरूपादिचतुष्टये पररूपादिचतुष्केनाभावस्यापि प्रतीतेः । एतेन स्याद्वादमुद्गरेशेन "नैकस्मिन्नसम्भवात्" इति यदज्ञानविलसितं व्यासवचनम्, "नायमभ्युपगमो युक्तः एकस्मिन्नसम्भवात्, नह्येकस्मिन् धर्मिणि युगपत् सत्त्वासत्त्वादिविरुद्धयोः समावेशः सम्भवति शीतोष्णवत्" इति यच्च शाङ्करभाष्यवचनं सत्सर्वं खण्डशः चूर्णितम्, सर्वदा भावाभावात्मकस्य वस्तुनः प्रतिभासनात्, सर्वथोत्पादे विनाशे च पुनः पुनः स्फटिकादौ दर्शनसान्तरस्यादर्शनस्य प्रसञ्जनं दुर्निवारमिति स्थितम् । एवं प्रदीपेऽपि कथं नैरन्तर्यभ्रम इति नाशंकनीयम्, तत्रापि सर्वथोत्पादविनाशयोरघटमानत्वादित्यलं प्रसंगेन । अप्राप्तार्थपरिच्छेदित्वेऽपि नयनस्य व्यवहितार्थाप्रकाशकत्वाविरोधात् तव व्यवहितार्थाप्रकाशकत्वहेतुरपि सन्दिग्धव्यतिरेकी । नन्वप्राप्तत्वाविशेषादव्यवहित-

वत् कुड्यादिव्यवहितमपि किं न गृह्णीयादिति चेत् ?, न गृह्णीयात्, योग्यताभावात्। ननु अप्राप्तत्वाविशेषेऽपि कथं स्फटिकान्तरितप्रकाशने योग्यता भित्त्याद्यन्तरितप्रकाशने चायोग्यता इति चेत् ?, शृणु, यथा भवन्मते स्वच्छजलान्तरितार्थप्रकाशने योग्यता समलजलान्तरितभावप्रकाशने चायोग्यता तद्वदत्रापि। ननु नायनरश्मयः समलं जलं भित्त्वार्थं न प्रकाशयन्तीति चेत् ?, तर्हि ते स्वच्छजलान्तरितमर्थमपि न प्रकाशयिष्यन्ति, जलकृतप्रतिघातस्याविशेषात्। एतेन "तत्र कुम्भादिभिर्नेत्रकिरणानां प्रतिघातत्वस्वीकारात्, कथमन्यथा घटाद्यन्तर्गतस्य व्यवधिमतो जलादेः दीपाद्यालोकेनापि प्रकाशो नानुभूयत इत्यतो दृष्टे किञ्चिन्नानुपपन्नं नामेति न्यायेनेदृश एव तेजसः स्वभावो यत्खलु कुत्रचित्तत्प्रतिघातः कुत्रचिन्नाप्रतिघातः" इत्यन्वयार्थदीपिकाकारोक्तं निरस्तम्, नायनरश्मिभिश्च कुड्यादेः कथं न भेदः, तेजोऽविरोधात्, विरोधे तु स्फटिकादावपि विरोधत्वापत्तेः, प्रसन्नतानिमित्तको भेदस्तु प्रागेव प्रतिषिद्धः। किञ्च योग्यताऽस्वीकारे संयुक्तसमवायाविशेषात् चक्षुर्यथा कुवलयरूपं प्रकाशयति तथा तद्गन्धमपि प्रकाशयेत्, तथा चेन्द्रियान्तरवैफल्यं स्यात्। ननु यद्ययोग्यत्वेन तद्गन्धं न प्रकाशयति तर्हि योग्यताभावादेवाप्राप्यत्वेऽपि व्यवहितमतिसन्निकृष्टं वा तद्रूपं न प्रकाशयतीति को विरोधः ?, त्वयाऽपि सर्वत्र योग्यतैव समाश्रयणीया, यतः कुतो न रश्मयो लोकान्तमुपसर्पन्तीति प्रेरणायां त्वया यथा योग्यता स्वीकृता तथैवेतरत्र सैव वक्तव्या भवति। किञ्च प्राप्यकार्यपि घ्राणं यथा कुङ्कुमादेर्गन्धं प्रकाशयति तद्वत् परमाणोरपि गन्धं कथं न प्रकाशयेत् ?, अथ प्रकाशयत्येव योगिनो घ्राणं परमाणुगन्धमपि नास्मदादेः, तादृशादृष्टविशेषाभावात्, महत्त्वाद्युपेतद्रव्यगन्धादि त्वस्मदादीनामपि प्रकाशयति, तादृशादृष्टविशेषस्य सद्भावात्, इत्यदृष्टवैचित्र्यात्तद्विज्ञानाभावाभाववैचित्र्यमिति चेत् ?, स्याद्वादिनामप्येतत्तु-

ल्यम्, यतः तादृशक्षयोपशमवतामतिशयज्ञानिनामस्मदाद्यगोचरविप्रकृष्टस्वविषयं चाक्षुषं भवति, अस्मदादीनां तु स्वानुरूपतदावरणक्षयोपशमविशेषात् चाक्षुषं यथाप्रतीतिपदार्थप्रकाशकत्वं भवतीत्युभाभ्यां योग्यताऽभ्युपगन्तव्यैव । एतेन–"योग्यताभावाद् व्यवहिताग्रहणमिति चेत् ?, इन्द्रियस्य तावद्योग्यताविषयग्रहणसामर्थ्यमस्त्येव, तदानीमव्यवहितग्रहणात्, विषयस्यापि योग्यतामहत्त्वानेकद्रव्यत्वरूपविशेषाद्यात्मिका व्यवधानेऽप्यनिवृत्तैव, आर्जवावस्थानमपि तदवस्थम्" इति कन्दलीकारोक्तमप्यपास्तम्, प्रमातुस्तादृशक्षयोपशमरूपतद्ग्रहणयोग्यताया अभावात्, कथमन्यथा शशधरस्येव तद्गतेरुपलम्भो न स्यात् । ननु गतौ भास्वररूपाभावान्नोपलम्भः, निशाकरे तु तद् वैपरीत्यमिति चेत् ?, तदुत्सङ्गस्थकुरङ्गकलङ्को राहुविमानैकदेशश्च कथमुपलभ्येत ?, उद्भूतरूपाभावात् कृष्णत्वाच्च, तस्मात् बाह्येन्द्रियत्वेनापि प्राप्तार्थप्रकाशकं न सिध्यति । किञ्च किं नाम नयनस्य बाह्येन्द्रियत्वम् ?, बहिरर्थग्रहणाभिमुखत्वमुत बहिर्देशावस्थायित्वं बहिष्कारणप्रभवत्वं वा स्यादिति त्रयी गतिः । आद्यकक्षायां मनसा व्यभिचारि, मनसः बहिरर्थग्रहणाभिमुख्येन बाह्येन्द्रियत्वप्रसंगात् । द्वितीयकक्षायां विकल्पद्वयमुत्तिष्ठते, तथाहि–बहिर्देशावस्थायित्वमित्यत्रार्थदेशो बहिर्देशो विवक्षितः शरीराद्वा बहिः बहिर्देशो विवक्षितः, पौरस्त्यपक्षेऽर्थदेशाश्रितत्वमर्थाभिमुख्येन व्यवस्थायित्वं प्रवृत्तिर्वा विवक्षिता ?, आद्ये उभयासिद्धिः, वादिप्रतिवादिभ्यां गोलकान्तर्देशसमाश्रितत्वेनाभ्युपगमात्, साधनविकलता च दृष्टान्तस्य त्वगिन्द्रियस्यार्थदेशेऽनाश्रितत्वात्, द्वितीयेऽपि अर्थाभिमुख्येन प्रवृत्तिः किं प्रसर्पणरूपो व्यापारः प्रतीत्युत्पादकत्वं वा ?, आद्ये प्रतिवाद्यसिद्धिः, नयनकिरणानां तैजसत्वाभावेनार्थदेशे प्रसर्पणानभ्युपगमात्, तैजसत्वसाधकप्रमाणस्य निराकृतत्वेन बाधकस्य चोपन्यस्तत्वेनोभयासिद्धिर्वा,

निदर्शनस्य च साधनविकलता अत्रापि स्पष्टैव, अर्थाभिमुख्येन प्रतीत्युत्पादकत्वे च पुनर्मनसानैकान्तिकम् । ननु शरीरात् बहिर्देशे गोलकस्वरूपे समाश्रितत्वं बहिर्देशावस्थायित्वम्, मनसि व्यभिचारवारणाय च बाह्येति विशेषणम्, तद्धि देहान्तर्देशसमाश्रितमिति चेत्?, तदपि न, इन्द्रियबाह्यत्वस्याप्राप्तार्थपरिच्छेदेनाप्यविरुद्धत्वात्, न चाविरुद्धं विशेषणं विपक्षाद्धेतुं व्यावर्त्तयति, न च तत्र विरोधसाधकं किञ्चित् प्रमाणमप्यस्ति । ननु मनसि प्राप्तार्थपरिच्छेदव्यावृत्त्या बाह्येन्द्रियत्वस्यापि व्यावृत्तेर्विरोधसिद्धिरुन्नाय्यत इति चेत्?, न, क्वचित् साध्यनिवृत्तौ सत्यां साधननिवृत्तावपि विरोधासिद्धेः, अन्यथा चक्षुरप्राप्तार्थपरिच्छेदि, स्पर्शनरसनघ्राणश्रोत्रान्येन्द्रियत्वात्, मनोवदित्यनुमानतः कश्चिच्चक्षुषोऽप्राप्तार्थपरिच्छेदं प्रसाधयन् कथं प्रतिरोत्स्यते? समस्ति चात्राप्राप्तार्थपरिच्छेदव्यावृत्त्या स्पर्शनरसनघ्राणश्रोत्रान्येन्द्रियत्वस्यापि व्यावृत्तिः स्पर्शनादाविति । नापि तृतीयः, मनसैव व्यभिचारात्, आत्मापेक्षया बहिष्कारणं पुद्गलतत्त्वं तत्प्रभवत्वं च मनसः साधितमेवेति । तस्माद् व्यतिरेकानिश्चयात् सन्दिग्धव्यतिरेकी हेतुः । अथ 'चक्षुः प्राप्यकारि भौतिकत्वात् परशुवदि'त्यपि न सम्यक्, यतः प्राप्य-संयुज्य स्वकार्यं करोतीति प्राप्यकारीति वक्तव्ये प्राप्तिरपि स्वकार्यं भवति, तदपि च प्राप्य करोत्यन्यथा वा?, प्राप्य चेत्?, सापि प्राप्तिः प्राप्यैव कर्त्तव्येति प्राप्तिपरम्परोत्पादन एव क्षीणशक्तिकत्वेन प्रस्तुतकार्याकरणादनवस्था, द्वितीये त्वनयैव व्यभिचारः । अथ ज्ञानस्वरूपकार्यापेक्षया चक्षुषः प्राप्यकारित्वसाधनात् नोक्तदोष इति चेत्, तन्न, प्राप्यकारीति शब्दस्य प्राप्तिपूर्वक्रियामात्राभिधानपर्यवसितत्वात्, निदर्शनस्य साधनशून्यत्वापत्तेश्च, यतः परशुधारापि पादपं प्राप्य द्वैधीभावं विधत्ते न तु ज्ञप्तिमिति । ननु स्वविषयज्ञप्तिकरणापेक्षया परशोः निदर्शनमुक्तं न द्वैधीभावापेक्षया, तथा च न

साध्यविकलता निदर्शनस्येतीचेत्, अत्र तर्क्यते, चाक्षुषीं ज्ञप्तिमाश्रित्यैतदुच्यते स्पार्शनीं वा? चाक्षुषीमाश्रित्येति चेत्?, अद्यापि नयनार्थयोः प्राप्यकारित्वासिद्धेः सैव साध्यविकलता निदर्शनस्य। अथ स्पार्शनीमपेक्ष्योच्यते तर्हि, अस्त्येवं किन्तु मनः-परिच्छेद्येन सुरगिरिणा व्यभिचारः, भौतिकेनापि तेन मनसाऽप्राप्तेनैव स्वपरिच्छित्तिकरणात्। ननु येन करणभूतेन परि-च्छित्तिर्जन्यते स एवेह प्राप्यकारिसम्मतो न विषयत्वेनापीति चेत्?, तर्हि निदर्शनान्तरं वाच्यं न प्रकृतम्। न च प्रदीपादिकमत्र निदर्शनं यतः प्रदीपः करणभूतेन रश्मिद्वारेण प्राप्तः सन्नर्थं प्रकाशत इति वाच्यम्, एवमपि हेतोः व्याप्त्यनिश्चयात्, न च साधर्म्यमात्रेण व्याप्तिनिश्चयो भवति, अप्राप्यकारित्वमपि स्पृशतो भौतिकस्य न किञ्चित्प्र-तिद्वन्द्वि प्रमाणं समस्तीति। एतेन 'कारकत्वसाधनम'पि परास्तम्, अप्राप्तलोहाकर्षकायस्कान्तेन व्यभिचारात्। ननु यथा पुरुषः नालान्तर्वायुप्रयोगेण जलादिकमाकर्षति संयुक्तसंयोगत्वाच्च नाप्राप्तिस्तथाऽयस्कान्तोऽपि वायुद्वारेण प्राप्तलोहमेवाकर्ष-तीति चेत्?, तन्न, तत्र वायुसद्भावे प्रमाणाभावात्। ननु समाकर्षणस्यान्यथानुपपत्तिः प्रमाणमिति चेत्?, न, अप्राप्तस्याप्या-कर्षणोपपत्तेः। न चाप्राप्तस्याकर्षणे कथं न विश्ववर्त्ति सकललोहाकर्षणम्, अप्राप्तत्वाविशेषादिति वाच्यम्, प्राप्तस्य तवाभिप्रा-येणाकर्षणेऽपि तद्देशवर्त्तितृणतुलादिसमाकर्षणं कथं न स्यात्?, योग्यताऽभावादिति चेत्?, अप्राप्तत्वाविशेषेऽपि सकललोहा-नामत्रायोग्यत्वान्नाकर्षणम्। अपि चायसः समाकर्षणान्यथानुपपत्तिः कुतोऽवसिता?, न च कारकत्वाख्यहेतोर्यतः सकलं च कारकं प्राप्त एव वस्तुनि फलमुत्पादयदवलोकितं कारक एवायस्कान्तस्तस्मात्तथेति वाच्यम्, परस्पराश्रयात्, तथाहि—का-रकत्वस्य हेतुत्वे सिद्धे प्राप्तार्थसमाकर्षणसिद्धिस्तत्सिद्धौ च कारकत्वस्य हेतुत्वसिद्धिरिति। अन्यच्च वायुद्वारेणाकर्षणसम्भवे

तिर्यगेवाकर्षणं स्यात्, वायोस्तिर्यक्गमनस्वभावत्वात्, नोर्ध्वम्, यतो वात्यादौ विरुद्धदिक्क्रियावायुद्वयसंयोगनिमित्तत्वेनोर्ध्वगतेः भवद्भिः व्यवस्थापितत्वात्, न चात्रापि तथाविधा कल्पना ज्यायसी, अननुभवात्, अयस्कान्तो नायसो वायुद्वारेणाकर्षकः, तत्रावस्थितलघुतरतृणतूलाद्यनाकर्षणान्यथानुपपत्तेः इत्यनुमानबाधितं च। कथं च तिलकादिना परवशीभूतकान्तादीनामाकर्षणम्?, 'तत्रापि पवनोऽस्ती'तीचेत् महासाहसिकस्यायमुल्लापः। एवं मन्त्रजापेऽपि व्यभिचारः। अत्राक्षेपपरिहारौ रत्नाकरावतारिकातः प्रदर्श्येते—"यस्मादिदं मन्त्रजपोपसर्पत्प्रोद्दामरामाव्यभिचारदोषात्। उत्तालवेतालकरालकेलीकलंकितश्रीकमिवावभाति ॥ ५६ ॥ तथाहि—कनकनिकषस्निग्धां मुग्धां मुहुर्मधुरस्मिताम्, चटुलकुटिलभ्रूविभ्रान्ति कटाक्षपटुच्छटाम्। त्रिजगति गतां कश्चिन्मन्त्री समानयति क्षणा—त्तरुणरमणीमारान्मन्त्रान्मनोभुवि संस्मरन् ॥ ५७ ॥ कश्चिदत्र गदति स्म यत्पुनर्मन्त्रमन्त्रणगवी समानयेत्। युक्तमेव मदिरेक्षणादिकं तेन नाभिहितदूषणोदयः ॥ ५८ ॥ मन्त्रस्य साक्षाद् घटना प्रियादिना परम्परातो यदि वा निगद्यते। साक्षान्न तावद्यदयं विहायसो ध्वनिस्वरूपस्तव सम्मतो गुणः ॥ ५९ ॥ ततोऽस्य तेनैव समं समस्ति संसक्तिवार्त्ता न तु पक्ष्मलाक्ष्या। अथाक्षरालम्बनवेदनं स्यान्मन्त्रस्तथाप्यस्त्वियमात्मनैव ॥ ६० ॥ अथापि मन्त्रस्य निवेद्यते त्वया संसक्तिरेतत्पतिदेवतात्मना। सन्तोषपोषप्रगुणा च सा प्रिया प्रियं प्रति प्रेरयति स्वयोगिनीम् ॥ ६१ ॥ ब्रूमहेऽत्र ननु देवतात्मना मन्त्रवर्णविसरस्य का घटा। अम्बरस्य गुण एव तत्कथं देवतात्मनि भजेत सङ्गतिम् ॥ ६२ ॥ आश्रयद्वारतोऽप्यस्य संसर्गो नास्ति सर्वथा। व्यापकद्रव्ययोर्यस्मात् संसर्गो नामुना मतः ॥ ६३ ॥ व्यापकेषु वदति व्यतिषङ्गं यस्तु तेन मनसा ध्वनिना वा। ऽतीतवस्तुविषयेण विमृश्य स्पष्ट एव विलसन् व्यभिचारः ॥ ६४ ॥" इति। किञ्च चक्षुषः प्राप्यकारित्वे शाखाचन्द्रमसोर्युगपत् ग्रहणानुपपत्तिः, युगपदुभयसंयोगाभावात्। न च तिर्यग्भागावस्थितयोः

शाखाचन्द्रमसोर्युगपत्संयोगापत्तिरिति वर्धमानोक्तमपि रमणीयम्, ऊर्ध्वं प्रसृतानामेव नयनरश्मीनां तयोस्तिर्यग्भागेऽवस्थानोपपत्तेरूर्ध्वस्थितवस्तुनोपि ग्रहणप्रसङ्गात्।न चाग्रभागावच्छेदेन संयुक्तस्यैव चक्षुषो ग्राहकत्वम्, अत एव न नयनस्थिताञ्जनादिग्रहणप्रसङ्गोऽपीति वाच्यम्, तथापि तावत्पर्यन्तं प्रसृतस्यान्तरालिकवस्त्वन्तरग्रहणप्रसङ्गात्, सन्निहितं विमुच्यासन्निहितसंयोगानुपपत्तेः। ननु सन्निकृष्टदेशविशेषं विनैवानन्यगत्या विप्रकृष्टदेशसंयोगोपपत्तिः, वेगादिविशेषादिति चेत्?, न, अनन्यगत्या देशविशेषस्य तत्तच्चाक्षुषं प्रति हेतुत्वस्वीकारेण क्षतेरभावात्, अनन्तचक्षुःक्रियासंयोगविभागतत्कार्यकारणभावाद्यकल्पनेन लाघवाच्च। यद्वा नयनप्राप्तिनियामकं विशिष्टाभिमुख्यमेव तत्कार्यनियामकमस्तु। एतेन—"क्रमिकोभयसंयोगवता चक्षुषा शाखाचन्द्रमसोर्ग्रहणे कालसन्निकर्षात् यौगपद्याभिमान इति। तुल्यकालग्रहणं चासिद्धमेव तदभिमानस्य कालसन्निकर्षेणैवोपपत्तेः, अचिन्त्यो हि तैजसो लाघवातिशयेन वेगातिशयः यत्प्राचीनाचलचूडावलम्बिन्येव भगवति मयूखमालिनि भवनोदरेष्वालोक इत्यभिमानो लोकानाम्" इति दिनकरभटोक्तमपास्तम्, चन्द्रज्ञानानुव्यवसायसमये शाखाज्ञानस्य नष्टत्वेन 'शाखाचन्द्रौ साक्षात्करोमि' इत्यनुव्यवसायस्यानुपपत्तेश्च। न च क्रमिकतदुभयजनितसंस्काराभ्यां जनितायां समूहालम्बनस्मृतावेवानुभवत्वारोपात् तथानुव्यवसाय इति वाच्यम्, तादृगारोपादिकल्पनायां महागौरवादिति। एतेन—"यच्च चक्षुषः प्राप्यकारित्वे शाखाचन्द्रमसोरतुल्यकालग्रहणं न स्यादित्यापादितं तत्रेष्टापत्तिरेव। तुल्यकालाभिमानश्चाशूत्पत्त्यैव, अचिन्त्यो हि तेजसो लाघवातिशयेन वेगातिशयो यदुदयगिरिचूडावलम्बिन्येव भगवति सवितरि भवनोदरेष्वालोक इत्यभिमानो लोकानामिति सिद्धं मनोभिन्नेन्द्रियत्वस्वरूपबहिरिन्द्रियत्वेन हेतुना चक्षुषः प्राप्यकारित्वम्" इति, तथा—"प्रथमतो हि चक्षुःसन्निहितं महीधरं प्राप्य प्रकाशयति पश्चाद् दूरचारिणं

हरिणलक्ष्माणम् युगपत्प्रतिपत्त्यभिमानस्तु शतपत्रपत्रव्यतिभेदवदाशूत्पत्तिनिमित्तक" इति पण्डितवंशीधरशर्मणोक्तं च निराकृतम्। यच्च—"संसर्गिद्रव्यतया निःसरदेव नायनं तेजो बाह्यालोकेनैकाङ्गतागतं युगपदेव तावदर्थैः संसृष्टमिन्द्रियमुत्पादितवदिति भूधरशशधर-योस्तुल्यकालग्रहणमुपपद्यत" इति केनचिदुक्तम्, "चक्षुर्बाह्यालोकाभ्यामारब्धेन चक्षुषा तावदर्थसंस्पृष्टेन युगपत्तावदर्थग्रहणमिति शाखा-चंद्रमसोस्तुल्यकालग्रहणमुपपद्यत एवेति" यत् शालिकाचार्योक्तम्, "अधिष्ठानासम्बन्धार्थग्राहिण्याः प्रदीपप्रभाया इव चक्षुषोऽपि प्राप्य-कारित्वसम्भवात्, पृथुतरग्रहणस्य च गोलकनिर्गतस्य महतश्चक्षुषः पृथ्वग्रत्वेन प्रदीपप्रभाया इवोपपत्तेः, स्वाधिकपरिमाणवद्द्रव्यग्राहिणा त्वगिन्द्रियेण व्यभिचारात् तादृशनियमे मानाभावाच्च" इति यत् दिनकराभिहितं च तत्सर्वमपि प्राग् नयनस्य रश्मिवत्त्वापाक-रणादपाकृतमेव। अनुपदोक्त कस्यचिन्मते शालिकाचार्यमते च पृष्ठस्थितस्य व्यवहितस्य चार्थस्योपलम्भप्रसङ्गोऽपि स्यात्; बाह्यालोकेन नायनतेजस एकीभावंगतत्वेन चक्षुर्बाह्यालोकाभ्यामारब्धस्य नयनस्य च पृष्ठभागे व्यवहिते चार्थे सत्त्वात्। ननु पृष्ठदेशस्थबाह्यालोकैश्चक्षुरुत्पादे मानाभाव इति चेत्?, अग्रदेशस्थबाह्यालोकैरपि तदुत्पादे मानाभावः, तदनभ्युपग-मेऽपि चाक्षुषोपपादनस्यानुपदमुक्तत्वादिति दिनकरेणापि शालिकाचार्यं प्रत्युत्तरितम्। अनुपदं दिनकरेण त्वगि-न्द्रियोक्तो व्यभिचारोऽपि न, स्वपरिमाणमात्रं त्वगिन्द्रियं गृह्णाति, अधिकं त्वनुमिनोतीति। इदमुपलक्षणं यत्—'चक्षुषो-ऽप्राप्यकारित्वे सर्वदा घटादिविषयकचाक्षुषापत्तिः, कालभेदेन चाक्षुषनियामकस्य चक्षुःक्रियाजन्यस्य तव नियामकत्वा-भावात्' इति प्रभाकारोक्तौ विशेषानुपलब्धिनिमित्तकौ संशयविपर्ययावपि न स्याताम्, सामान्यवत्सन्निकृष्टानां विशेषाणा-मप्युपलम्भात्। अत्रात्रेयभाष्यकार आह—"यथा सामान्यस्य विशेषाणां च प्रदीपालोकेन सन्निकृष्टत्वेन दूरात्सामान्यमुपलभ्यते

न विशेषा इति प्रदीपालोककारितौ संशयविपर्ययौ भवतस्तथा सामान्यस्य विशेषाणां च चक्षुषा सन्निकृष्टत्वेऽपि दूरात्सामान्यमुपलभ्यते न विशेषा इति चाक्षुषौ संशयविपर्ययौ भवतः; तत्र महाविषयत्वात्सामान्यं दूरादुपलभ्यतेऽल्पविषयत्वात्तु विशेषा न दूरादुपलभ्यन्त इति संशयविपर्ययोरुत्पत्तिरिति" तत् युक्तिक्षमं न, उपलम्भं प्रति महाविषयत्वस्याप्रयोजकत्वात् । न च दूरात्तत्स्थसामान्योपलब्धौ भूयस्त्वं निमित्तं स्यादिति वाच्यम्, यत उपलभ्यमानादितरे विषया लेशतोऽपि तत्सामान्यज्ञप्तौ नोपयुज्यन्ते । प्रदीपदृष्टान्तोऽपि न सम्यक्त्वमञ्चति, यत उपलम्भकारणत्वेन सन्निकर्षस्योच्यमाने प्रदीपेऽपि सामान्यवद्विशेषाणामप्युपलम्भकत्वप्रसक्तिर्दुर्निवारा स्यात्। अस्माभिस्तु प्रदीप एवोपलम्भं प्रति निमित्तमुच्यते, स च स्वयोग्यतावशेन दूरात्सामान्यमेवोपलम्भयतीति युक्तम्, तद्वदेव यदि चक्षुषोऽपि योग्यता स्वीक्रियते तर्हि कृतं सन्निकर्षेणेति । ननु व्यवहिताप्रकाशकत्वेन चक्षुः योग्यमपि सन्निकर्षाभावे कथमुपलम्भयति, न ह्यप्राप्तं घटादिकं प्रदीपः प्रकटयतीति चेत् ?, न, व्यवहिताप्रकाशकत्वस्य निराकृतत्वात्। 'इदं रूपमिति ज्ञानं इन्द्रियसंयुक्तसमवायजन्यं विम्बवृत्तिगुणविषयकलौकिकप्रत्यक्षत्वात् तादृशस्पर्शप्रत्यक्षवदि'त्यनुमानमपि रमणीयतां नाञ्चति, 'चक्षुरप्राप्यधीकृत् व्यवधिमतोऽपि प्रकाशकत्वात् यथान्तःकरणम्, व्यतिरेके पुना रसना' इत्यनेन सत्प्रतिपक्षितत्वात्। न चैतदापातरमणीयमपि वक्तुं युज्यते, हेतोः प्राक्प्रसाधितत्वात् तवाक्षेपे युक्त्यभावात् समवायस्यान्यत्र निराकृतत्वेन साध्याप्रसिद्धेश्च । चक्षुरप्राप्तार्थप्रकाशकमत्यन्तासन्नार्थाप्रकाशकत्वात् यत्पुनः प्राप्तार्थप्रकाशकं तदत्यन्तासन्नार्थप्रकाशकमुपलब्धं यथा श्रोत्रादि, प्रत्यासन्नार्थाप्रकाशकं च चक्षुस्तस्मादप्राप्तार्थप्रकाशकमिति व्यतिरेकी हेतुरिति सूक्तमागमे 'रूपमस्पृष्टं गृह्णाती'ति । यत्तु "जं रयणिं च णं समणे भगवं महावीरे कालगए जाव सव्वदुक्खप्पहीणे तं रयणिं

च णं कुंथु अणुद्धरी नाम समुप्पन्ना जा ठ्ठिया अचलमाणा छउमत्थाणं निग्गंथाणं निग्गंथीणं य नो चक्खुफासं हव्वमागच्छइ, जा अट्ठिया
चलमाणा छउमत्थाणं निग्गंथाणं निग्गंथीणं य चक्खुफासं हव्वमागच्छइ" इत्यत्र चक्षुःस्पर्शं नाम दृष्टिविषयं शीघ्रमागच्छतीत्यर्थो
वाच्यः, तदुक्तमाचाराङ्गवृत्तौ—"स्पर्शो विषयार्थः" इति । यत्तु जम्बूद्वीपवृत्तौ "सूरिए चक्खुफासं हव्वमागच्छइ" इत्यत्र "स्पर्श-
शब्द इन्द्रियार्थसन्निकर्षपरः, चक्षुषोऽप्राप्यकारित्वेन तदसंभवात्" इत्युक्तं तत्रेन्द्रियार्थयोग्यदेशावस्थितिः सन्निकर्षशब्देन ग्राह्या ।

अत्र सौगतो 'ननु सुष्ठूक्तं नयनस्याप्राप्यकारित्वमिदं त्वयुक्तमुक्तं यद् व्यतिरेकित्वे श्रोत्रमिति, "चक्षुःश्रोत्रमनसा-
मप्राप्तार्थप्रकाशकत्वम्" इति वचनात् । प्राप्यकारित्वे तु स्वविषये शब्दे दूरादिव्यवहारो न स्यात्, अस्ति चात्रायं
शब्दो दूरे निकटे वा श्रूयत इति व्यवहारः, तथा चानुमानं यो दूरादिप्रत्ययग्राह्यः, स स्वग्राहकेणासन्निकृष्ट एव गृह्यते,
यथा तथाविधपादपः, दूरादिप्रत्ययग्राह्यश्च शब्द इति । अत्रायं विशेषः, असन्निकृष्टभास्वररूपग्रहणे नयनस्योपघातोप-
लम्भवदसन्निकृष्टशब्दस्य ग्रहणे श्रोत्राभिघातो नानुपपन्नो यतो नयने तेजस्विताऽभिघातहेतुः श्रोत्रे तीव्रतेति चेत् ?',
अत्रोच्यते, "यो दूरादिप्रत्ययग्राह्य" इत्यादि तत्र शब्दः स्वग्राहकेणासन्निकृष्ट एव गृह्यत इत्येवंविधस्य गम्यमानपक्षस्य
प्रत्यक्षबाधा, कर्णप्रविष्टस्य मशकादिशब्दस्य सन्निकृष्टस्यैव प्रत्यक्षेण प्रतीतेः । दूरादिप्रत्ययग्राह्यत्वलक्षणो हेतुरपि
गन्धेनानैकान्तिकः, सन्निकृष्टस्य गन्धस्य घ्राणेन ग्रहणेऽपि दूरादिप्रत्ययग्राह्यत्वप्रतीतेः । न च तथा प्रतीयमाने गन्धे
दूरनिकटादिव्यवहारोऽसिद्ध इति वाच्यम्, यत उक्तम्—"दूरादुच्छृङ्खलोऽयं बहुलपरिमलः काममभ्येति भूयान्, गन्धोद्गारातिरेकं
किमपि जलरुहां जृम्भतेऽसौ समीपे । मध्यस्थाः ध्माधमन्ति प्रकृतिसुरभयः सौरभं सत्कदम्बाः, सुव्यक्तेयं प्रतीतिर्निखिलतनुभृतां निर्विवादा

समस्ति-॥ १ ॥" इति । अपि च साकारज्ञानवादिनः सौगतस्य शब्दे दूरादिप्रत्ययग्राह्यत्वमनुपपन्नम्, श्रावणज्ञानेन स्वगते शब्दाकारे गृह्यमाणे दूरनिकटादिप्रत्ययस्यानुपपत्तेः, यस्य भिन्नदेशस्थमर्थं निराकारं ज्ञानं परिच्छिनत्ति तस्येदं दूरमिदं निकटमिति वक्तुमुचितम्, साकारज्ञानवादिनः सुगतस्य तु यद्दूरादिवर्त्ति न तत् ज्ञानवेद्यं यच्च ज्ञानावेद्यं न तत्र दूरादिव्यवहारो युक्तः, न चान्धस्येदं दूरमिदं निकटमिति व्यवहारस्तात्त्विकोऽस्ति । यत्तु ज्ञानस्वरूपानतिरेकात् ज्ञानस्य वेद्यं तत् स्वाकारमात्रं न तद्दूरादिस्वरूपम् । ननु यद्याकाराधायकस्य दूरादित्वेन दूरादिव्यवहारः स्यात् एवं तर्हि श्रोत्रस्य प्राप्यकारित्वेऽपि का क्षतिः ?, न च दूरादिव्यवहाराभावप्रसङ्ग इति वाच्यम्, दूरादिदेशादागतत्वेन तद् व्यवहारसम्भवात्; यथा घ्राणेन्द्रियस्य प्राप्यकारित्वेऽपि दूरादागतोऽयं परिमल इतिवत् । ननु शब्दस्य देशापेक्षया यद् दूरादित्वम् तत्किं देशस्याग्रहणे सति ग्रहणे सति वा ?, नाद्यः, देशस्य विशेषणत्वात्, यत्खलु विशेषणं तद् गृहीतमेव विशेष्ये विशिष्टप्रतीतिनियामकं भवति, कुण्डादिवत्, नापि द्वितीयः पक्षः, यतो ग्रहणं श्रोत्रेण चक्षुषा वा ?, न तावत् श्रोत्रेण, देशस्यापि शब्दत्वप्रसङ्गात्, नापि चक्षुषा, व्यवहितस्यापि शब्दस्य श्रूयमाणत्वादिति चेत् ?, अत्रोच्यते, अव्यवहितदेशोद्भवध्वनौ देशस्य चाक्षुषप्रत्यक्षं भवति, व्यवहिते त्वानुमानिकी देशप्रतिपत्तिरत एव देशविशेषेऽनुमिते ग्रामादिकं संभाव्य तत्र शब्दोत्पादं व्यपदिशति । भवताऽप्येतत् स्वीकरणीयमेव, अन्यथा कुतस्तत्र प्रतीयमाने शब्दे दूरादिप्रतीतिः ?, किं स्वभावत एवास्य दूरादित्वात्, दूरादिकारणप्रभवत्वात्, दूरदेशे स्थितत्वाद्वा ?, न तावत् प्रथमपक्षः, प्रतिनियतदूरनिकटादिव्यवहाराभावप्रसङ्गात्, नापि द्वितीयः, वक्षःस्थललुठन्मुक्ताफलहारे प्रेक्ष्यमाणे दूरत्वव्यवहारः स्यात्,

त्पम्, पिहितद्वारभूमिगृहान्तरितस्य शब्दस्यागमनाभावेनाश्रवणप्रसङ्गात्'। तदस्य श्रोत्रियस्यानुवेलं जलसम्पर्कं प्रकटयति, एवंविधगन्धस्याप्यनाघ्राणप्रसङ्गात्। ननु केचन सूक्ष्मा गन्धपरमाणवः पिहितद्वारादि भित्त्वा घ्राणेन सम्बध्यते ततो गृह्यन्त इति चेत्?, तर्हि केचित् शब्दपरमाणवोऽपि तत् भित्त्वा श्रवणेन सम्बध्यन्ते ततो गृह्यन्त इति समानम्। न च शब्दस्य परमाणवोऽसिद्धाः, पौद्गलिकत्वेन तत्सिद्धेः। पौद्गलिकत्वं तु प्राक् प्रसाधितमेव। पुद्गलपरिणामः शब्दो बाह्येन्द्रियगोचरत्वाद् गन्धवदित्यनुमानतोऽपि तत्सिद्धेः। "वर्णस्यावयवाः सन्ति सूक्ष्माः केचन पुद्गलाः। तैर्वर्णावयवा नाम जन्यन्ते पश्य कौतुकम् ॥ १ ॥ तेषामदृश्यमानानां कीदृक् क रचनाक्रमः। केन तत्सन्निवेशेन कः शब्द उपजायते ॥ २ ॥ लघवोऽवयवाश्चैते निबद्धाश्च न केनचित्। न पीनकठिनं कर्तुं येनावयविनं क्षमाः ॥ ३ ॥ कृशश्च गच्छन्स कथं न विक्षिप्येत मारुतैः। दलशो वा न भज्येत वृक्षाद्यभिहतः कथम् ॥ ४ ॥ प्रयाणकावधिः कश्चित् गच्छतोऽस्य तपस्विनः। एकश्रोत्रप्रविष्टो वा स गृह्यतां परैः कथम् ॥ ५ ॥ निष्क्रम्य कर्णादेकः स्यात् प्रवेशः श्रवणान्तरे। यदीष्येत कथं तस्य युगपद्बहुभिः श्रुतिः ॥६॥ श्रोतृसंख्यानुसारेण न नानावर्णसम्भवः। वक्तुस्तुल्यप्रयत्नत्वात् श्रोतृभेदतदैकयोः ॥ ७ ॥" इति यज्ञयन्तोक्तं तदपि वृद्धैरित्थं दूषितं—यत् नासिकाशुषिरनिविशमानसूक्ष्मगन्धाधारद्रव्येऽप्यस्य सकलस्य समानत्वात्। किञ्च कुतस्ते सूक्ष्मवर्णावयवेष्वरुचिः, न तावद्वर्णानां त्वयापि नित्यत्वमुपेतम्। वर्णानामवयवकल्पना तु कार्यानुपपत्त्या सूक्ष्माणामपि परमाणूनां कल्पनावदवसेया। स्वनक्रमसन्निवेशावपि तादृशावस्य यादृग्भ्यां श्रूयते यथा पवनस्य तौ यादृशाभ्यां स्पृश्यते। निबद्धा चामीषां लघूनामपि पुरुष एव यथोच्छ्वासावयवानाम्। मारुतैर्विक्षिप्यते चासौ अत एव प्रतिवाते प्रत्यासन्नैरपि न श्रूयते। भज्यते चासौ वृक्षाद्यभिहतः अत एव घनवनव्यवहितैरन्यवर्णसाधारणं

नामिति निष्टङ्कितम्। यच्चाभ्यधायि 'तच्छब्दतः श्रोत्राभिघातात्तेषामग्रहणं यथा भासुररूपेण चक्षुषोऽभिघातात्सूक्ष्माग्रहणमि'ति, तन्न वरम्, दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात्। तिग्मरुचिमरीचयो हि यथा मुकुरादेर्भासुररूपात् प्रतिनिवृत्त्य चक्षुषाभिसम्बध्यमानास्तस्याभिघातहेतवो दृष्टा न च तथाऽत्रास्ति तथाविधं किञ्चित् यच्छब्दात् प्रतिनिवृत्त्य श्रोत्राभिघातकारणं स्यात्। न च वातस्तत्कारणं समस्त्येवेति वाच्यम्, निर्वाते तादृशश्रोत्राभिघातकारणाभावेन भेर्यादिमहति कोलाहले सति मशकादिशब्दश्रवणप्रसङ्गात्, अत एव परस्परप्रदेशोपसर्पणेनानल्पैः शब्दैर्मशकादीनामल्पशब्दानामभिघातोऽकामेनाप्यभ्युपगन्तव्यस्त्वया। तथा च गन्धादिवत् दूरदेशादागतत्वेन दूरादिव्यवहारः श्रोत्रस्य प्राप्यकारित्वेऽपि नानुपपन्नः। यदि नयनवत् श्रोत्रस्याप्राप्यकारित्वं स्यात् तर्हि रूप इव तद्विषये देशादिसन्देहो न स्यात्। ननु नयनेन देशस्यापि ग्रहणान्न नायनप्रत्यक्षे देशादिसंशयः श्रावणप्रत्यक्षे तु श्रोत्रेण देशाग्रहणात् 'किमन्तर्जातोऽयं शब्दः बहिर्जातो वा' 'प्राच्यामन्यस्यां वा दिशि समुद्भूत' इति सन्देहः स्यादेवेति चेत्?, तर्हि क्वचिदसन्देहोऽपि न स्यात्, तत्रापि श्रोत्रेण देशस्याग्रहणात्। अथ श्रोत्रेण प्रदेशस्य ग्रहणाभावेऽपि नयनेन तद्ग्रहणं भविष्यतीति चेत्?, कुड्यादिव्यवहितदेशसमुद्भवशब्दे किं ब्रवीषि?, अनुमानेन तत्रापि देशप्रतीतिरिति चेत्?, किं तदनुमानम्?, शब्दविशेषत्वमितिचेत्?, न, स्वस्थानस्थस्य शब्दस्य ग्रहणे दूरनिकटवर्त्तिप्रमातॄन् प्रति विशेषाभावात्। प्राप्यकारित्वपक्षे त्वागतस्य शब्दस्य श्रवणेन विशिष्टत्वमपि युक्तम्, ततो देशानुमानमपीति श्रोत्रस्य प्राप्यकारित्वे सिद्धे नयनस्याप्राप्यकारित्वे साध्ये विपक्षे यत् श्रोत्रेन्द्रियमुपन्यस्तं तद्युक्तमुक्तमिति।

अत्र भाट्टो वदति-'युक्तमुक्तं श्रोत्रस्य प्राप्यकारित्वं यत्पुनरुक्तमागतस्य शब्दस्य श्रवणं तत्पायसपात्रे पिचुमन्दचूर्णप्रक्षेपक-

रूपम् , पिहितद्वारभूमिगृहान्तरितस्य शब्दस्यागमनाभावेनाश्रवणप्रसङ्गात्' । तदस्य श्रोत्रियस्यानुवेलं जलसम्पर्कं प्रकटयति, एवंविधगन्धस्याप्यनाघ्राणप्रसङ्गात् । ननु केचन सूक्ष्मा गन्धपरमाणवः पिहितद्वारादि भित्त्वा घ्राणेन सम्बध्नते ततो गृह्यन्त इति चेत् ?, तर्हि केचित् शब्दपरमाणवोऽपि तत् भित्त्वा श्रवणेन सम्बध्यन्ते ततो गृह्यन्त इति समानम् । न च शब्दस्य परमाणवोऽसिद्धाः, पौद्गलिकत्वेन तत्सिद्धेः । पौद्गलिकत्वं तु प्राक् प्रसाधितमेव । पुद्गलपरिणामः शब्दो बाह्येन्द्रियगोचरत्वाद् गन्धवदित्यनुमानतोऽपि तत्सिद्धेः । "वर्णस्यावयवाः सन्ति सूक्ष्माः केचन पुद्गलाः । तैर्वर्णावयवा नाम जन्यन्ते पश्य कौतुकम् ॥ १ ॥ तेषामदृश्यमानानां कीदृक् क रचनाक्रमः । केन तत्सन्निवेशेन कः शब्द उपजायते ॥ २ ॥ लघवोऽवयवाश्चैते निबद्धाश्च न केनचित् । न पीनकठिनं कर्तुं येनावयविनं क्षमाः ॥ ३ ॥ कृशश्च गच्छन्स कथं न विक्षिप्येत मारुतैः । दलशो वा न भज्येत वृक्षाद्यभिहतः कथम् ॥ ४ ॥ प्रयाणकावधिः कश्चित् गच्छतोऽस्य तपस्विनः । एकश्रोत्रप्रविष्टो वा स गृह्यतां परैः कथम् ॥ ५ ॥ निष्क्रम्य कर्णादेकः स्यात् प्रवेशः श्रवणान्तरे । यदीष्येत कथं तस्य युगपद्बहुभिः श्रुतिः ॥६॥ श्रोतृसंख्यानुसारेण न नानावर्णसम्भवः । वक्तुस्तुल्यप्रयत्नत्वात् श्रोतृभेदतदैकयोः ॥ ७ ॥" इति यज्ञयन्तोक्तं तदपि वृद्धैरित्थं दूषितं—यत् नासिकाशुषिरनिविशमानसूक्ष्मगन्धाधारद्रव्येऽप्यस्य सकलस्य समानत्वात् । किञ्च कुतस्ते सूक्ष्मवर्णावयवेष्वरुचिः, न तावद्वर्णानां त्वयापि नित्यत्वमुपेतम् । वर्णानामवयवकल्पना तु कार्यानुपपत्त्या सूक्ष्माणामपि परमाणूनां कल्पनावदवसेया । स्वनक्रमसन्निवेशावपि तादृशावस्य यादृग्भ्यां श्रूयते यथा पवनस्य तौ यादृशाभ्यां स्पृश्यते । निबद्धा चामीषां लघूनामपि पुरुष एव यथोच्छ्वासावयवानाम् । मारुतैर्विक्षिप्यते चासौ अत एव प्रतिवाते प्रत्यासन्नैरपि न श्रूयते । भज्यते चासौ वृक्षाद्यभिहतः अत एव घनवनव्यवहितैरन्यवर्णसाधारणं

वर्णशकलमेव श्रूयते, यतः संशयो जायते कोऽनेन वर्णोऽभिहित इति । प्रयाणकावधिरप्यस्य यः कश्चित् क्षिप्तस्य शरादेरिव, अन्यथा कोऽन्योऽवधिस्तवापि शब्दोत्पादसन्तानविरमणस्य ? । युगपत् बहुप्रमातृश्रवणश्रवणाभावादिकं दूषणं तूभयत्रापि समानमिति । ननु मूर्त्ताः श्रवणस्वभावाः पुद्गलस्कन्धा भित्त्यादिना कथं न प्रतिहन्यन्त इति चेत् ?, वायवीया ध्वनयः शब्दाभिव्यञ्जकाः कथं न तेन प्रतिहन्यन्ते ?, ननु तत्प्रतिघाते तत्र शब्दस्याभिव्यक्तेरभावात्, अनभिव्यक्तस्य चाश्रवणात् न कुड्यादिना तेषां प्रतिघातसिद्धिरिति चेत् ?, तत एव शब्दात्मकानां पुद्गलानामपि प्रतिघातो मास्तु, दृष्टहानिसंभवात् । दृष्टो हि गन्धात्मकानामप्रतिघातः तद्वत् शब्दात्मकानामपि । तदेवं समर्थितं श्रोत्रस्य प्राप्यकारित्वमुक्तानि च चत्वारीन्द्रियाणि प्राप्यकारीणि नयनं त्वप्राप्यकारीति । एतानि चाखिलानीन्द्रियाणि अनन्तैः परमाणुभिः निष्पन्नानि असंख्येयात्मप्रदेशावगाढानि च भवन्ति । तत्र सर्वस्तोकप्रदेशं नयनं, ततः श्रोत्रं सङ्ख्येयगुणप्रदेशम्, ततोऽपि घ्राणं सङ्ख्येयगुणप्रदेशाधिकम्, ततो रसनमसङ्ख्येयगुणप्रदेशाधिकम्, ततोऽपि सङ्ख्येयगुणप्रदेशाधिकं स्पर्शनम् । स्तोकप्रदेशावगाढं च नयनम्, ततः सङ्ख्येयगुणाधिकप्रदेशावगाढं श्रवणम्, ततः सङ्ख्येयगुणाधिकप्रदेशावगाढं घ्राणम्, ततोऽसङ्ख्येयगुणप्रदेशावगाढं रसनम्, ततस्त्वगिन्द्रियं सङ्ख्येयगुणाधिकप्रदेशावगाढमिति, तदुक्तं प्रज्ञापनासूत्रे—"एएसि णं भंते ! सोतिंदियचक्खिंदियघाणिंदियजिब्भिंदियफासिंदियाणं ओगाहणट्ठाए पएसट्ठयाए ओगाहणपएसट्ठयाते कतरे२हिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गो० ! सव्वत्थोवे चक्खिंदिते ओगाहणट्ठयाते, सोतिंदिए ओगाहणट्ठयाते संखेज्जगुणे, घाणिंदिए ओगाहणट्ठयाते संखेज्जगुणे, जिब्भिदिए ओगाहणट्ठयाए असंखेज्जगुणे, फासिंदिए ओगाहणट्ठयाए संखेज्जगुणे, पएसट्ठयाते सव्वत्थोवे चक्खिंदिए पदेसट्ठयाए, सोतिं-

दिए पएसट्ठयाए संखेज्जगुणे, घाणिंदिए पएसट्ठयाए संखिज्जगुणे, जिब्भिंदिए पएसट्ठयाए असंखेज्जगुणे, फासिंदिए पएसट्ठयाए संखेज्जगुणे। ओगाहणपदेसट्ठयाए सव्वत्थोवे चक्खिंदिए ओगाहणट्ठयाए, सोतिंदिए ओगाहणट्ठयाए संखेज्जगुणे, घाणिंदिए ओगाहणट्ठयाए संखिज्जगुणे, जिब्भिंदिए ओगाहणट्ठयाए असंखेज्जगुणे, फासिंदिए ओगाहणट्ठयाए संखिज्जगुणे, फासिंदियस्स ओगाहणट्ठयाहिंतो चक्खिंदिए पएसट्ठयाए अणंतगुणे, सोतिंदिए पएसट्ठयाए संखेज्जगुणे, घाणिंदिए पएसट्ठयाए संखिज्जगुणे, जिब्भिंदिए पएसट्ठयाए असंखेज्जगुणे, फासिंदिए पएसट्ठयाते संखेज्जगुणे" इति। लोकप्रकाशेऽपि–"अनन्ताणूद्भवान्येतानीन्द्रियाण्यखिलान्यपि। असङ्ख्येयप्रदेशावगाढानि निखिलानि च ॥ १ ॥ स्तोकावगाहा दृक् श्रोत्र–घ्राणे सङ्ख्यगुणे क्रमात्। ततोऽसङ्ख्यगुणा जिह्वा सङ्ख्यघ्नं स्पर्शनं ततः ॥ २ ॥ स्तोकप्रदेशं नयनं श्रोत्रं सङ्ख्यगुणाधिकम्। ततः सङ्ख्यगुणं घ्राणं, जिह्वाऽसङ्ख्यगुणा ततः ॥ ३ ॥ ततोऽपि सङ्ख्यगुणित–प्रदेशं स्पर्शनेन्द्रियम्। इत्यल्पबहुतैषां स्या–दवगाहप्रदेशयोः ॥ ४ ॥" इति।

पञ्चानामपीन्द्रियाणां पुद्गला अनन्तगुणकर्कशगुरुस्पर्शमया मृदुलघुगुणाश्चापि तथैव। एतेषामल्पबहुत्वमुच्यते, सर्वस्तोका नयनस्य कर्कशगुरुस्पर्शगुणाः, ततः श्रोत्रेन्द्रियस्यानन्तगुणाः, ततो घ्राणेन्द्रियस्यानन्तगुणाः, ततो रसनेन्द्रियस्यानन्तगुणाः, ततः स्पर्शनेन्द्रियस्यानन्तगुणाः। मृदुलघुगुणाः सर्वस्तोकाः स्पर्शनेन्द्रियस्य, ततो रसनेन्द्रियस्यानन्तगुणाः, ततो घ्राणेन्द्रियस्यानन्तगुणाः, ततः श्रवणेन्द्रियस्यानन्तगुणाः, ततो नयनस्यानन्तगुणाः। उभयोः संयोगेऽल्पबहुत्वमुच्यते, नयनस्य कर्कशगुरुगुणाः सर्वस्तोकाः, ततः श्रोत्रेन्द्रियस्य कर्कशगुरुगुणा अनन्तगुणाः, ततो घ्राणेन्द्रियस्य कर्कशगुरुगुणा अनन्तगुणाः, ततो रसनेन्द्रियस्य कर्कशगुरुगुणा अनन्तगुणाः, ततः स्पर्शनेन्द्रियस्य कर्कशगुरुगुणा अनन्तगुणाः,

ततः स्पर्शनेन्द्रियस्य कर्कशगुरुगुणेभ्यः तस्यैव मृदुलघुगुणाः अनन्तगुणाः, यतः शरीरे कतिपया एव प्रदेशा उपरिवर्तिनः शीतातपादिसम्पर्कतः कर्कशा वर्त्तन्ते अन्ये तु बहवस्तदन्तर्गता मृदव इति । ततो रसनेन्द्रियस्यापि कोमलत्वेन मृदुलघुगुणा अनन्तगुणाः, ततोऽपि कोमलतरत्वेन घ्राणेन्द्रियस्यानन्तगुणा मृदुलघुगुणाः, ततोऽपि श्रोत्रेन्द्रियस्य कोमलतरत्वेनानन्तगुणा मृदुलघुगुणाः, ततोऽपि कोमलतमत्वेन नयनस्य मृदुलघुगुणा अनन्तगुणा इति, तदुक्तं प्रज्ञापनायाम्--"सोतिंदियस्स णं भंते ! केवइया कक्खडगुरुयगुणा पं० ?, गो ! अणंता कक्खडगुरुयगुणा पं०, एवं जाव फासिंदियस्स । सोतिंदियस्स णं भंते ! केवइया मउयलहुयगुणा पं० ?, गोयमा ! अणंता मउयलहुयगुणा पं०, एवं जाव फासिंदियस्स । एतेसि णं भंते ! सोइंदियचक्खिंदियघाणिंदियजिब्भिंदियफासिंदियाणं कक्खडगुरुयगुणाणं मउयलहुयगुणाण य कयरे२हिंतो अप्पा वा ४ ?, गो० ! सव्वत्थोवा चक्खिंदियस्स कक्खडगरुयगुणा, सोतिंदियस्स कक्खडगरुयगुणा अणंतगुणा, घाणिंदियस्स कक्खडगरुयगुणा अणंतगुणा, जिब्भिंदियस्स कक्खडगरुयगुणा अणंतगुणा, फासिंदियस्स कक्खडगरुयगुणा अणंतगुणा । मउयलहुयगुणाणं सव्वत्थोवा फासिंदियस्स मउयलहुयगुणा, जिब्भिंदियस्स मउयलहुयगुणा अणंतगुणा, घाणिंदियस्स मउयलहुयगुणा अणंतगुणा, सोतिंदियस्स मउयलहुयगुणा अणंतगुणा, चक्खिंदियस्स मउयलहुयगुणा अणंतगुणा । कक्खडगरुयगुणाणं मउयलहुयगुणाण य सव्वत्थोवा चक्खिंदियस्स कक्खडगुरुयगुणा, सोतिंदियस्स कक्खडगुरुयगुणा अणंतगुणा, घाणिंदियस्स कक्खडगुरुयगुणा अणंतगुणा, जिब्भिंदियस्स कक्खडगुरुयगुणा अणंतगुणा, फासिंदियस्स कक्खडगरुयगुणा अणंतगुणा, फासिंदियस्स कक्खडगुरुयगुणेहिंतो तस्स चेव मउयलहुयगुणा अणंतगुणा, जिब्भिंदियस्स मउयलहुयगुणा अणंतगुणा, घाणिंदियस्स मउयलहुयगुणा अणंतगुणा, सोतिंदियस्स मउयलहुयगुणा अणंतगुणा, चक्खिंदियस्स मउयलहुयगुणा अणंतगुणा"

(सूत्रं १९२) इति। उक्तानीन्द्रियाणि, तैनोपलक्षिता जीवा अपि एकेन्द्रियादयः प्रोच्यन्त इत्युक्ता पञ्चधा इन्द्रियमार्गणा ॥

'काय'त्ति चीयते यथायोग्यमौदारिकादिवर्गणाभिरुपचयं नीयत इति कायः 'चिति देहावासोपसमाधाने कश्चादेः' (५-३-१९) इति सूत्रेण घञ्प्रत्ययः चकारस्य च ककारः। स च षोढा पृथिव्यप्तेजोवायुवनस्पतित्रसकायभेदात्। तत्र पृथिवी एव कायः शरीरं येषां ते पृथिवीकायाः, पृथिवीकाया एव पृथिवीकायिका एवमप्कायिकादिष्वपि व्युत्पत्तिर्वाच्या। ननु एतेषां क्रमोपन्यासे किमपि प्रयोजनं समस्ति यथाकथञ्चिद्वा इति चेत्?, सप्रयोजनोऽयं क्रमोपन्यासः, तथाहि-सर्वभूतानामाधारत्वात् पृथिवीकायिकानां पूर्वमुपादानम्, पृथिवीप्रतिष्ठितत्वेन तदनन्तरम् अप्कायिकानामुपादानम्, जलप्रतिपक्षत्वेन तदनन्तरं तैजसकायिकानामुपादानम्, तेजश्च वायुसम्पर्कतो वृद्धिमुपयाति ततस्तदनन्तरं वायुकायिकानामुपादानम्, वृक्षशाखाकम्पतः वायोरनुमानात् तदनन्तरं वनस्पतेर्ग्रहणम्, एकेन्द्रियेभ्यो निर्गतस्य च त्रसेष्ववस्थानात् ततः त्रसकायोपादानम्। ननु जीवलक्षणोपेतत्वेन त्रसकायिकेषु चैतन्यं स्पष्टतयोपलभ्यते परं पृथिवीकायिकानां तल्लिङ्गादर्शनात् कथं तत् स्वीक्रियते इति चेत्?, सत्यं, यद्यपि तेषु व्यक्तं जीवलिङ्गं नोपलभ्यते तथाप्यव्यक्तं तूपलभ्यत एव, यथा हृत्पूरव्यतिमिश्रितमद्यपानादिभिर्मूर्च्छितानां व्यक्तलिङ्गाभावेऽपि अव्यक्तलिङ्गेन चैतन्यं व्यवह्रियते एवं पृथिव्यादीनामपि सजीवत्वं वाच्यम्। ननु पृथिव्यादिषूच्छ्वासादिलिङ्गाभावात् कथमव्यक्तं चैतन्यं श्रद्धेयमिति चेत्?, अनुमानात्तत्सिद्धेः, तथाहि-पृथिवी चेतनावती स्वस्वाकारव्यवस्थितलवणविद्रुमोपलादीनां समानजातीयाङ्कुरोत्पत्तिमत्वात् अर्शाङ्कुरवत्। संभावितैकचेतनालिङ्गानामव्यक्तचेतनानां वनस्पतीनामिव वा चेतनाभ्युपगन्तव्या, वनस्पतीनां

विशिष्टफलप्रदत्वेन स्पष्टमेव चैतन्यं साधयिष्यते च। यथाऽस्थिशरीरानुगतं तत् चेतनं कठिनं च दृष्टमेवं विद्रुमादीनां कठिनत्वेऽपि चैतन्ये न विरोधः, यद्वा पृथिव्यादयो जीवशरीराणि छेद्यभेद्योत्प्रेक्ष्यभोग्यघ्रेयरसनीयस्पृश्यद्रव्यत्वात् सास्नाविषाणादिसंघातवत्, छेद्यभेद्यत्वादिकं तु प्रत्यक्षसिद्धं नापह्नोतुं शक्यते। न च पृथिव्यादयो जीवशरीराणि न भवन्तीति वाच्यम्, सर्वस्य पुद्गलद्रव्यस्य जीवशरीरत्वेनाभ्युपगमात्। केवलं जीवविप्रमुक्तस्य पुद्गलद्रव्यस्याचेतनत्वं तद्युक्तस्य तु सचेतनत्वम्, तथाहि–शस्त्रानुपहतं पृथिव्यादिकं कदाचित्सचेतनं संघातत्वात् पाणिपादसंघातवत्। एवं पृथिव्यादिकं कदाचित्किञ्चिदचेतनमपि शस्त्रोपहतत्वात् तद्वदेवेति नात्यन्तं तदचेतनमेवेति। ननु प्रस्रवणादिवज्जलस्य न जीवत्वं तल्लक्षणायोगादिति चेत्?, न, हेतोरसिद्धत्वात्, असिद्धत्वं चैवं–यथाऽधुनोत्पन्नस्य हस्तिनः शरीरं द्रवं चेतनं च दृष्टम्, यद्वाऽण्डके रसमात्रसंजातावयवानभिव्यक्तचञ्च्वादिप्रविभागं चेतनावद्दृष्टम् एषैवोपमा जलजीवानामिति। जलं सचेतनं शस्त्रानुपहतत्वे सति द्रव्यत्वात्, हस्तिशरीरोपादानभूतकललवत्, तथा सात्मकं जलमनुपहतद्रवत्वात् अण्डकमध्यस्थितकललवत्, तथा क्वचन चेतनावत्य आपः खातभूमौ स्वाभाविकेन सम्भवात् दर्दुरवत्, तथा शीतकाले जलेषूष्णस्पर्श उष्णस्पर्शवद्वस्तुप्रभव उष्णस्पर्शत्वात् मनुजशरीरोष्णस्पर्शवत्, तथा शीतकाले जलेषु वाष्प उष्णस्पर्शवद्वस्तुप्रभवः वाष्पत्वात्, शीतकाले शीतजलसंसिक्तमनुजशरीरवाष्पवत्। प्रान्तानुमानद्वयेऽपि उष्णस्पर्शस्य वाष्पस्य च यदेवोष्णस्पर्शनिमित्तं वस्तु तदेव तैजसशरीरोपेतमात्माख्यं वस्तु प्रतिपत्तव्यम्। ननु शीतकाल उत्कुरुडिकावकरतलगतोष्णस्पर्शेन तन्मध्यनिर्गतवाष्पेण च व्यभिचार इति चेत्?, न, तयोरप्यवकरमध्योत्पन्नमृतजीवशरीरनिमित्तत्वाभ्युपगमात्, यथाग्निदग्ध-

पाषाणखण्डादिषु जलप्रक्षेपे विध्यातान्युष्णस्पर्शबाष्पौ भवेताम् । तथा शीतसंयोगे सति मृतजीवशरीराण्यपि उष्णस्पर्शबाष्पयोर्निमित्तीभवन्तीति । एवमन्यत्रापि सचित्तमचित्तं वा यथासम्भवं बाष्पोष्णस्पर्शयोर्निमित्तं भवति । तथा हिमादयः क्वचित् सचेतना अप्कायत्वात् कूपजलवत् । तथान्तरिक्षोद्भवा आपः सचेतना अभ्रादिविकारे स्वत एव संभूय पातात् तथास्वरूपमत्स्यादिवदिति । एवं शीतकाले भूधरप्रत्यासन्नतरूणामधस्तात् य ऊष्मा सोऽपि जीवनिमित्तकः मनुजशरीरोष्मवत् । एवं ग्रीष्मकाले बाह्यातपेन तैजसशरीररूपाग्नेर्मन्दीभवनात् जलादिषु यः शीतस्पर्शः सोऽपि मनुजशरीरशीतलस्पर्शवत् जीवहेतुको वाच्य इति सिद्धं जले जीवत्वम् । अङ्गारादीनां प्रकाशपरिणाम आत्मसंयोगाविर्भूतः शरीरस्थत्वात् खद्योतदेहपरिणामवत् । तथाङ्गारादीनामूष्मा आत्मसंयोगपूर्वकः तत्त्वादेव ज्वरोष्मवत्, न च मृता ज्वरिणः क्वचिदुपलभ्यन्त इति अन्वयव्यतिरेकाभ्यामग्नेः सचित्तता ज्ञेया । न चादित्यादिभिर्व्यभिचारः, सर्वेषामुष्णस्पर्शस्यात्मसंयोगपूर्वकत्वात् । तथा सचेतनं तेजः यथायोग्याहारोपादानेन वृद्ध्यादिविकारोपलम्भात् पुरुषशरीरवत् । एवमादिभिस्तेजस्कायिकानां सचेतनत्वमवसेयमिति । अधुना यथा देवस्य स्वशक्तिप्रभावान्मनुजानां चाञ्जनविद्यामन्त्रैरन्तर्धाने शरीरं चक्षुषानुपलभ्यमानमपि विद्यमानं चेतनावच्चाध्यवसीयते तथा वायोरपि चक्षुर्ग्राह्यं रूपं न भवति, सूक्ष्मपरिणामत्वात्, परमाणुवत्, वह्निदग्धपाषाणखण्डिकागताचित्ताग्निवद्वा तथापि तस्य सचेतनत्वादिकमस्त्येव । तथा च वायुकायिकानामशस्त्रोपहतानां चेतनाऽवगन्तव्या, एवं बकुलाशोकचम्पकाद्यनेकविधवनस्पतीनामपि । एतानि शरीराणि नात्मव्यापारमन्तरेण मनुजशरीरसमानधर्मभाञ्जि भवन्ति, तथाहि—यथा मनुजशरीरं चेतनावदधिष्ठितं बालकुमारवृद्धतापरिणामविशेषवत्त्वात् तथा

वनस्पतिशरीरं चेतनावदधिष्ठितं बालकुमारवृद्धतापरिणामविशेषवत्त्वात् । न च वनस्पतौ हेतोरसिद्धत्वमिति वाच्यम्, केतकादितरोः बालाद्यवस्थात्रयदर्शनात् । तथा यथा मनुजशरीरं चेतनावदधिष्ठितं बालकुमाराद्यवस्थाविशेषैः निरन्तरं प्रतिनियतत्वेन वर्द्धमानत्वात् एवमेव वनस्पतिशरीरमपि चेतनावदधिष्ठितमङ्कुरकिसलयशाखाप्रशाखादिभिर्विशेषैः प्रतिनियतत्वेन वर्द्धमानत्वात् । तथा यथा मनुष्यशरीरं ज्ञानेनानुगतं एवं वनस्पतिशरीरमपि, शमीप्रपुन्नापसिद्धेसरकासुन्दकवच्छूलागस्त्यामलकीकडिप्रभृतीनां स्वापविबोधसद्भावात्, अधोनिखातद्रविणराशेः स्वप्ररोहेणावेष्टनाच्च । तथा वटपिप्पलनिम्बादीनां प्रावृड्जलधरनिनादशिशिरवायुसम्पर्कादङ्कुरोद्भवः, मत्तकामिनीसनूपुरसुकुमारचरणताडनादशोकतरोः पल्लवकुसुमोद्भेदः, युवत्यालिङ्गनात् पनसस्य, तथा पञ्चमस्वरोद्गारात् शिरीषस्य विहरकस्य च पुष्पविकिरणम्, सुरभिसुरागण्डूषसेकाद्बकुलस्य, तथा सुरभिनिर्मलजलसेकाच्चम्पकस्य, तथा कटाक्षवीक्षणात् तिलकस्य पुष्पविकिरणम्, पद्मादीनां प्रातर्विकसनम्, घोषातक्यादिपुष्पाणां च सन्ध्यायाम्, कुमुदादीनां तु चन्द्रोदये, तथासन्नमेघप्रवृष्टौ शम्या अवक्षरणम्, वल्लीनां वृत्त्याद्याश्रयोपसर्पणम्, लज्जालुप्रभृतीनां हस्तादिसंस्पर्शाच्च तत्र तत्र संकोचादिका क्रिया यद्वा सर्ववनस्पतेः विशिष्टर्तुष्वेव फलप्रदानं परिस्फुटमुपलभ्यते । न चैतदनन्तराभिहितं तरुसम्बन्धिक्रियाजालं ज्ञानमन्तरेण घटते तस्मात्सिद्धं चेतनावत्त्वं वनस्पतेरिति । तथा यथा मनुजशरीरं हस्तादिच्छिन्नं शुष्यति एवं वनस्पतिशरीरमपि पल्लवफलकुसुमादिच्छिन्नं विशोषमुपगच्छत् दृष्टम्, न चाचेतनानामयं धर्म इति । तथा यथा मनुष्यशरीरं स्तनपानाद्याहाराभ्यवहारादाहारकम् एवं तरुशरीरमपि भूजलाद्याहाराभ्यवहारादाहारकम्, नाचेतनानामाहारो दृष्टः, अतस्तत्स-

द्भावात् चेतनावस्थम् । तथा यथा मनुजशरीरं नियतायुष्कमेवं वनस्पतिशरीरमपि नियतायुष्कम् । तथा यथा मनुजशरीरमिष्टानिष्टाहारादिप्राप्त्या वृद्धिहान्यात्मकमेवं वनस्पतिशरीरमपि तथाविधाहारादिप्राप्त्या वृद्धिहान्यात्मकम् । तथा यथा मनुजशरीरस्य तत्तद्रोगसम्पर्कात् रोगपाण्डुरत्वोदरवृद्धिशोफकृशत्वाङ्गुलिनासिकानिम्नीभावविगलनादि भवति तथा वनस्पतिशरीरस्यापि तथाविधरोगोद्भवात् पुष्पफलपत्रत्वगाद्यन्यथाभवनपतनादि । तथा यथा मनुजशरीरस्यौषधप्रयोगात् वृद्धिहानिक्षतभुग्नसंरोहणानि तथा वनस्पतिशरीरस्यापि । तथा यथा मनुष्यशरीरस्य रसायनस्नेहाद्युपयोगात् विशिष्टकान्तिरसवीर्य्योपचयादि तथा वनस्पतिशरीरस्यापि विशिष्टेष्टाकाशजलादिसेकाद्विशिष्टरसवीर्यस्निग्धत्वादि । तथा यथा स्त्रीशरीरस्य तथाविधदौर्हृदपूर्त्या पुत्रादिप्रसवः तथा वनस्पतिशरीरस्यापि तत्पूरणात् पुष्पफलादिप्रसवनम् । अनुमानमपि सचेतना वनस्पतयो जन्मजरामरणरोगादीनां समुदितानां सद्भावात् स्त्रीवत् । न च 'जातं तद्दधि' इत्यादिव्यपदेशदर्शनेन व्यभिचार इति वाच्यम्, समुदितानां जन्मादीनां ग्रहणात् । तथा वृक्षमूले सिक्तो रस ऊर्ध्वं फलादिषु प्रसर्पति, उच्छ्वासादिमत्त्वात्, यथा सत्युच्छ्वासेऽस्मदादिषु, उच्छ्वासाद्यभावे चोर्ध्वसर्पणमपि रसस्य न भवति, यथा मृतकशरीरे । उच्छ्वासश्चात्मनो धर्मः । न च धर्मो धर्मिणं विना भवति । इच्छारूपो दौर्हृदोऽपीच्छावन्तं विना न स्यात् । तथा प्रागुक्ता नियतसंकोचविकाशादिसंज्ञापि संज्ञिनमन्तरेण न भवति । किञ्च केऽप्येरण्डादिवन्नीचाः केचित्तूत्तमा आम्रवत्, केचित् कंटकैः उत्कटाः केचित् कोमलतराः, केचित् कुटिलाः केचित् सरलाः, केचित् कुब्जाः केचित् दीर्घाः, केचनाशुभवर्णादिवन्तः केचन शुभवर्णादिवन्तः, केचन सविषाः केचन निर्विषाः, केचन सफलाः केचित् निष्फलाः,

आरामोद्भवाः केचन केचनोत्करोद्भवाः, केचनाल्पायुष्काः केचन दीर्घायुष्काश्चैतत्सर्वं वैचित्र्यं कर्मान्तरेण न भवति, कर्मापि कर्त्तारमन्तरेण न भवतीत्यादियुक्तितो वनस्पतेश्चेतनावत्त्वं सिध्यति। तथा चागमः–"इमं पि जाइधम्मयं एयं पि जाइधम्मयं। इमं पि वुड्ढिधम्मयं एयं पि वुड्ढिधम्मयं। इमं पि चित्तमंतयं एयं पि चित्तमंतयं। इमं पि छिन्नं मिलायइ एयं पि छिन्नं मिलायइ। इमं पि आहारगं एयं पि आहारगं। इमं पि अणिच्चयं एयं पि अणिच्चयं। इमं पि असासयं एयं पि असासयं। इमं पि चओवचइयं एयं पि चओवचइयं। इमं पि विपरिणामधम्मयं एयंपि विपरिणामधम्मयं" इत्यादि। अत्रैकं इदंशब्दवाच्यं मनुष्यशरीरं द्वितीयमेतच्छब्दवाच्यं वनस्पतिशरीरं ज्ञेयमनयोश्च दृष्टान्तदार्ष्टान्तिकयोर्योजना प्रागेव कृता। अत एवास्य योनिजातत्वमपि सिद्धम्, तथाहि–बीजस्य द्विविधाऽवस्था योनिभूता अयोनिभूता च, तत्र योनिर्जन्तोरुत्पत्तिस्थानमध्वस्तशक्तिकं तत्र जीवपरिणमनशक्तिसंपन्नमिति प्रज्ञापनावृत्तौ। लोकप्रकाशेऽप्युक्तम्, "जन्तूत्पत्तिक्षणे पूर्वजन्तुना स्याद्यदुज्झितम्। त्यक्तयोन्यवस्थं च तद्बीजं योनिभूतकम् ॥१॥ तत्र च जन्तूज्झितं निश्चयेनाधुना ज्ञातुं न शक्यते। ततोऽनतिशयि बीजं सचेतनमुतेतरत् ॥ २ ॥ योनिभूतं व्यवहरेद्यावदध्वस्तयोनिकम्। ध्वस्तयोनित्वजीवत्वादयोनिभूतमेव हि॥ ३ ॥ यन्नष्टेऽपि सजीवत्वे, योनित्वं जातुचिद्भवेत्। परिभ्रष्टे तु योनित्वे सजीवत्वं न सम्भवेत् ॥ ४ ॥ एवं चोत्पत्तिस्थानकं जन्तोर्यद् विध्वस्तशक्तिकम्। सा योनिस्तत्र शक्तिस्तु जन्तूत्पादनयोग्यता ॥ ५ ॥" इति। अथ केषां धान्यानां कियत्कालं यावत् योनित्वं न व्यावर्त्तते इति तदुच्यते–यवययवयवगोधूमव्रीहिशालीनां त्रिवर्षं यावत्, कलादमाषचवलकतिलमुद्गकुलत्थतुवरीवृत्तचणकवल्लानां पञ्चवर्षं यावत्, तथाऽलसीकुसुंभकशणकङ्गुकोरदूषककोद्रवसर्षपवरट्टरालकमूलकबीजादीनां सप्तवर्षं यावत् योनित्वं न विहन्यते। एतेषां च सर्वेषां कोष्टादिषु निक्षिप्य पिहितद्वाराणां छगणानां लिप्तानां मृत्तिकादि-

यद्यपि जघन्यतः केषाञ्चित् अन्तर्मुहूर्त्तात्
मुद्रावतामुत्कृष्टा योनिरेतावत्कालं भवति, परतस्तु योनित्वं सर्वेषां व्याहन्यते । यद्यपि जघन्यतः केषाञ्चित् अन्तर्मुहूर्त्तात्
परतो निर्जीवत्वं भवति तथापि तत्सर्वविद्वेद्यं ततो व्यवहारपथे न तेन व्यवहारः किन्तूत्कृष्टमानेनाचित्तताव्यवहारः, तथा
चोक्तं पञ्चमाङ्गे—"अह णं भंते! सालीणं वीहिणं गोधूमाणं जवाणं जवजवाणं एएसिणं धन्नाणं कोट्ठाउत्ताणं पल्लाउत्ताणं मंचाउत्ताणं
मालाउत्ताणं उल्लित्ताणं लित्ताणं पिहियाणं मुदियाणं लंछियाणं केवतियं कालं जोणी संचिट्ठइ ?, गोयमा! जहन्नेणं अन्तोमुहुत्तं उक्कोसेणं
तिन्नि संवच्छराइं, तेण परं जोणी पमिलायइ, तेण परं जोणी पविद्धंसइ, तेण परं वीए अवीए भवति, तेण परं जोणी वोच्छेदे पन्नत्ते
समणाउसो!। अह भंते! कलायमसूरतिलमुग्गमासनिप्पावकुलत्थआलिसंदगसतीणपलिमन्थगमादीणं ?, एएसिणं धन्नाणं जहा सालीणं
तहा एयाण वि नवरं पंच संवच्छराइं, सेसं तं चेव । अह भंते ! अयसिकुसुंभगकोद्दवकंगुवरगरालगकोदूसगसणसरिसवमूलगवीयसा-
दीणं ?, एएसिणं धन्नाणं एयाणि वि तहेव नवरं सत्त संवच्छराइं, सेसं तं चेव" इति। योनिभूते च बीजे स्वकर्मविवशः स एवाऽन्यो
वा भूम्यादिजीवो जलादिसामग्रीसंभवे सति उत्पद्यते। यो मूलस्य कर्त्ता स एव प्रथमपत्रस्यापि कर्त्ता भवति तथा चोक्त-
मागमे—"जो वि य मूले जीवो सो वि य पत्ते पढमयाए" इति । ननु मूलजीवकर्त्तृकं प्रथमपत्रं चेत् उद्गच्छत्किसलयेऽनन्त-
कायिकं विरुध्यते?, न चोद्गमावस्थायामनन्तकायिकत्वं न सिद्धमिति वाच्यम्, "सव्वो वि किसलओ खलु उग्गममाणो
अणंतओ भणिओ" इति वचनादिति चेत्?, अत्रोच्यते, यो मूलत्वेनोत्पन्नः स एव पूर्वमुत्सूनतावस्थां करोति ततोऽनन्तज-
न्तुभिः किसलयावस्था क्रियते, स्वायुःक्षयात् तेषु विनष्टेषु च स एव मूलजीवः अनन्तकायिकं तं शरीरं स्वाङ्गीभूतं याव-
त्प्रथमं पत्रं स्यात् तावद्वृद्धिं नयति। केचित्तु प्रथमपत्रशब्देनोत्सूनावस्थाऽभिधीयते, तस्याः प्रथमोद्भवादिति वदन्ति । ततो

मूलप्रथमपत्रयोरेककर्तृकत्वे न विरोधः, शेषं किसलयादिकमित्युभयत्राप्यविरुद्धम्, तथा चोक्तं प्रथमाङ्गवृत्तौ "यश्च मूलतया जीवः परिणमते स एव प्रथमपत्रतयापि" इति ।

अधुना कायषट्कस्य भेदाः प्रोच्यन्ते—तत्र पृथिवीकायिकाः द्विविधाः प्रज्ञप्ताः, तद्यथा—सूक्ष्मपृथिवीकायिका बादरपृथिवीकायिकाश्च। तत्र सूक्ष्मनामकर्मोदयात् सूक्ष्माः, बादरनामकर्मोदयात्तु बादराः, बादरामलकयोरिव सूक्ष्मबादरत्वेन सूक्ष्मबादरे आपेक्षिके। समुद्गकपर्याप्तप्रक्षिप्तगन्धावयववत्सकललोकव्यापिनः सूक्ष्माः, बादरास्तु प्रतिनियतस्थानवर्त्तिनः । सूक्ष्मपृथिवीकायिका अपि द्विधा उक्ताः, तद्यथा—पर्याप्तसूक्ष्मपृथिवीकायिकाः अपर्याप्तसूक्ष्मपृथिवीकायिकाश्च । तत्र पर्याप्तिराहारादिपुद्गलग्रहणपरिणमनहेतुरात्मनः शक्तिविशेषः पुद्गलोपचयात् जायते । एतदुक्तं भवति—उत्पत्तिदेशमागतेन जन्तुना प्रथमसमयगृहीतपुद्गलानां प्रतिसमयं गृह्यमाणानां च संपर्कतः तद्रूपतया जातानां पुद्गलानां या शक्तिविशेषा आहारादिपुद्गलखलरसरूपतापादनहेतुभूता सा पर्याप्तिः। सा षोढा—आहारपर्याप्तिः, शरीरपर्याप्तिः,इन्द्रियपर्याप्तिः,प्राणापानपर्याप्तिः, भाषापर्याप्तिः, मनःपर्याप्तिश्चेति । तत्र यया बाह्यमाहारमादाय खलरसरूपतया परिणमयति सा आहारपर्याप्तिः, यया रसीभूतमाहारं रसासृग्मांसमेदोऽस्थिमज्जाशुक्रलक्षणसप्तधातुरूपतया परिणमयति सा शरीरपर्याप्तिः, यया धातुरूपतया परिणमितमाहारमिन्द्रियरूपतया परिणमयति सा इन्द्रियपर्याप्तिः, तथा चायमर्थोऽन्यत्रापि भङ्ग्यन्तरेणोक्तः, 'पञ्चानामिन्द्रियाणां प्रायोग्यान् पुद्गलान् गृहीत्वाऽनाभोगनिवर्त्तितेन वीर्येण तद्भवनशक्तिरिन्द्रियपर्याप्तिः' इति, यया पुनरुच्छ्वासप्रायोग्यान् पुद्गलानादायोच्छ्वासरूपतया परिणमय्यालम्ब्य च मुञ्चति सा उच्छ्वासपर्याप्तिः, यया तु भाषाप्रायोग्यान् पुद्गलानादाय भाषात्वेन

परिणमय्यालम्ब्य च मुञ्चति सा भाषापर्याप्तिः, यया च पुनः मनःप्रायोग्यान् पुद्गलानादाय मनस्त्वेन परिणमय्यालम्ब्य च मुञ्चति सा मनःपर्याप्तिरिति। एताश्च यथार्हं सर्वा अपि युगपन्निष्पादयितुमारभ्यन्ते क्रमेण च निष्ठां नीयन्ते। तत्राहारपर्याप्तिः प्रथमसमये एव निष्पत्तिं नीयते शेषास्तु अन्तर्मुहूर्त्तेन समाप्तिं नीयन्ते। नन्वाहारपर्याप्तिः कथमेकसामयिकीति चेत्?, प्रज्ञापनावचनप्रामाण्यात्, तथा च तत्सूत्रम्–"आहारपज्जत्तीए अपज्जत्तएणं भंते! किं आहारए अणाहारए?, गोयमा! नो आहारए, अणाहारए" इति। आहारपर्याप्त्याऽपर्याप्तस्तु विग्रहगतावेव प्राप्यते नोत्पातक्षेत्रमागतोऽपि, उत्पत्तिप्रथमसमये एवाहारग्रहणात्, ततः सिद्धा एकसामयिकी आहारपर्याप्तिः। यदि पुनरुत्पातक्षेत्रमागतोऽपि आहारपर्याप्त्या अपर्याप्तः स्यात् तर्हि शरीरादि-पर्याप्तिषु "सिय आहारए सिय अणाहारए" इति वचनवत् अत्राऽपि सूत्रमेवं स्यात् यथा "सिय आहारए सिय अणाहारए" इति। परि-समाप्तिकालस्तु सर्वासामप्यन्तर्मुहूर्त्तप्रमाण एव। पर्याप्तयो विद्यन्ते येषां ते पर्याप्ताः। ये स्वयोग्यपर्याप्तिपरिसमाप्तिविकलास्ते ऽपर्याप्ताः। बादरपृथिव्यपि द्विधा–मृदुपृथिवी खरपृथिवी च। तत्र मृदुका सप्तविधा प्रज्ञप्ता, तद्यथा–कृष्णमृत्तिका, नील-मृत्तिका, लोहितमृत्तिका, हारिद्रमृत्तिका, शुक्लमृत्तिका, पाण्डुमृत्तिका–देशविशेषे या धूलीरूपा सती पाण्डु इति नाम्ना प्रसिद्धा, सप्तमी पनकमृत्तिका–सा च नद्यादिपूरप्लाविते देशे नद्यादिपूरेऽपगते सति याऽतिपिच्छले देशे मृदु श्लक्ष्णा पङ्क-रूपा इति प्रज्ञापनावृत्त्यभिप्रायः। उत्तराध्ययनवृत्तौ तु–"'पांडु'त्ति पाण्डु पाण्डुरा ईषच्छुक्लत्ववतीत्यर्थः, वर्णभेदेन षड्विध-त्वमुक्तमिह च पाण्डुरग्रहणं कृष्णादिभेदानामपि स्वस्थाने भेदान्तरसम्भवसूचकम्। पनकोऽत्यन्तसूक्ष्मरजोरूपः। स एव मृत्तिका पनकमृ-त्तिका। पनकस्य च नभसि विवर्त्तमानस्य लोके पृथिवीत्वेन रूढत्वात् भेदेनोपादानमि"त्याद्युक्तम्। खरा पृथिवी चत्वारिंशद्भेदवती,

तत्राष्टादश मणिभेदा द्वाविंशतिश्चान्ये । [1]गोमेज्ज[2]कांक्क[3]स्फटिक[4]लोहिताक्ष[5]मरकत[6]मसारगल्ल[7]भुजमोचक[8]इन्द्रनील[9]रुचक[10]चन्दन[11]गैरिक[12]हंसगर्भ[13]पुलक[14]सौगन्धिक[15]चन्द्रप्रभ[16]वैडूर्य[17]जलकान्त[18]सूर्यकान्तरूपा अष्टादशमणिजातयः । [1]शुद्धपृथिवी नदीतटभित्त्यादिरूपा, [2]शर्करा लघूपलशकलरूपा, [3]वालुका प्रसिद्धा, [4]उपलः टङ्काद्युपकरणपरिकर्मणायोग्यपाषाणः, [5]शिला घटनयोग्या देवकुलपीठाद्युपयोगी महान् पाषाणविशेषः, [6]लवणं सागराद्युद्भवम्, [7]ऊषो यद्वशात् क्षेत्रमूषरं स्यात्, [8]अयस्[9]ताम्र[10]त्रपु[11]सीसक[12]रूप्य[13]सुवर्णरूपा धातवः, [14]हीरकः, [15]हरिताल[16]हिंगुलक[17]मनःशिलरूपाः प्रसिद्धाः, [18]पारदः प्रसिद्धः, [19]अञ्जनं सौवीराभिधम्, [20]प्रवालम्, [21]अभ्रपटलम्, [22]तन्मिश्रवालुका चेति द्वाविंशतिपृथिवीभेदाः, सर्वे मिलित्वा चत्वारिंशद्भेदाः । तथा "जे यावन्ने तहप्पगारा" इति प्रज्ञापनावाक्यतोऽन्येऽपि तथा प्रकाराः सरागादयः खरपृथिवीकायत्वेन वेदितव्याः । ते च समासतः द्विधा प्रोक्ताः, पर्याप्ता अपर्याप्ताश्च । तत्र येऽपर्याप्तकास्ते स्वयोग्याः पर्याप्तीः साकल्येनासंप्राप्ता यद्वा विशिष्टवर्णादीननुपगताः, तथाहि—एते कृष्णादिवर्णभेदेन व्यपदेष्टुं न शक्यन्ते, कथमिति चेत्?, शरीरादिपर्याप्तिषु परिपूर्णासु सतीषु बादराणां वर्णादिविभागः प्रकटो भवति नापरिपूर्णासु, अपर्याप्तास्तूच्छ्वासपर्याप्त्या अपर्याप्ता एव म्रियन्ते ततो न स्पष्टतरवर्णादिविभाग इत्यसंप्राप्ताः । ननूच्छ्वासपर्याप्त्या एव अपर्याप्ताः कथं म्रियन्ते नार्वाक् शरीरेन्द्रियाभ्यां पर्याप्तिभ्यामपर्याप्ता इति चेत्?, उच्यते, आगामिभवायुः बद्ध्वैव म्रियन्ते नाबद्ध्वा, शरीरेन्द्रियपर्याप्तिभ्यां पर्याप्तानामायुर्बन्धो भवति नापरेषाम् । अन्ये तु केचन सामान्यतो वर्णादीन् सम्प्राप्ता इति वदन्ति, तन्न, यतः शरीरमात्रभाविनो वर्णादयः शरीरं च शरीरपर्याप्त्या सञ्जातमिति । पर्याप्तकनिश्रयाऽपर्याप्तका असंख्येया उत्पद्यन्ते, तदुक्तं प्रज्ञापनायां—"पज्जत्तगणिस्साए अपज्जत्तगा वक्कमंति, जत्थ एगो तत्थ

नियमा असंखेज्जा" इति पृथिवीकायिकाः । अप्कायिका अपि पृथिवीवच्चतुर्धा वाच्याः । तत्र बादरभेदा उच्यन्ते—अवश्यायः,
हिमम्, मिहिका, करकः, हरतनुः—यो भुवमुद्भिद्य गोधूमाङ्कुरतृणाग्रादिषु वद्धो विन्दुरुपजायते, शुद्धोदकमनेकप्रकारम्,
तद्यथा—शीतोदकम्, उष्णोदकम्—स्वभावतः कुत्रचित् निर्झरणादावुष्णपरिणामपरिणतं भवति, क्षारोदकम्—ईषल्लवण-
स्वभावं यथा लाटदेशादौ क्वचित्कूपे, खट्टोदकम्—ईषदम्लपरिणामं काञ्जिवत्, लवणोदकवारुणोदकक्षीरोदकघृतोदकक्षा-
रोदकरसोदकानि—स्वस्वनामाङ्कितसागरोद्भवानि वाच्यानि यथा लवणोदकं लवणसागरजं वारुणोदकं वारुणसागरजं क्षीरो-
दकं क्षीरसागरजं घृतोदकं घृतसागरजं क्षोदोदकमिक्षुसागरजं रसोदकं पुष्करवरसागरादिजम्, घनोदध्यादयश्चान्येऽपि
तादृशा भेदा वाच्या इत्यप्कायभेदाः । तेजस्कायोऽपि सूक्ष्मबादरपर्याप्तापर्याप्तभेदात् चतुर्धा । तत्र बादरतेजस्कायिकाः
पुनर्नामतोऽभिधीयन्ते यथा—शुद्धाग्निः, वज्राग्निः, ज्वालाग्निः, अङ्गाराग्निः, विद्युद्रूपाग्निः, उल्काग्निः, मुर्मुराग्निः, अला-
ताग्निः, निर्घाताग्निः, संघर्षसमुत्थाग्निः, सूर्यकान्तमणिनिःसृताग्निः, अर्च्यग्निश्चेति । तत्र शुद्धाग्निरयःपिण्डादौ, वज्राग्निराकाशे
पतन् वह्निमयः कणः, ज्वालाग्निर्जाज्वल्यमानखादिरादिज्वाला, अनलवद्धा दीपशिखेत्यन्ये, अङ्गाराग्निः निर्धूमाङ्गाररूपो-
ऽग्निः, विद्युदग्निः प्रसिद्धः, उल्का चुडुली तत्र भवो ऽग्निरुल्काग्निः, मुर्मुराग्निः फुम्फुमकादौ भस्ममिश्रिताग्निकणरूपः, अला-
ताग्निः उल्मुकाग्निः, निर्घाताग्निः वैक्रियाशनिप्रपाताग्निः, संघर्षसमुत्थाग्निः अरण्यादिकाष्ठनिर्मथनसमुद्भूताग्निः, सूर्यकान्तम-
णिनिःसृताग्निः सूर्यखरकिरणसम्पर्के सूर्यकान्तमणेर्यः समुपजायते, आर्चिश्चानलाप्रतिबद्धज्वाला, एवमन्येऽप्येवंप्रकारा
भेदा वाच्या इत्यग्निकायाः । वायुकायिका अपि सूक्ष्मबादरपर्याप्तापर्याप्तभेदात् चतुर्धा । तत्र बादरा भेदत उच्यन्ते—प्राची-

नवातः, अपाचीनवातः, दक्षिणवातः, उदीचीनवातः, ऊर्ध्ववातः, अधोवातः, तिर्यग्वातः, विदिग्वातः, अनवस्थितवातः, वातोत्कलिका, वातमण्डली, उत्कलिकावातः, मण्डलिकावातः, गुञ्जावातः, झंझावातः, संवर्त्तकवातः, घनवातः, तनुवातः, शुद्धवातश्चेति । तत्र प्राच्या दिशो यः समागच्छति वातः स प्राचीनवात एवमपाचीनवातादिष्वपि बोध्यम् । अनवस्थित उद्भ्रामकवातः, वातोत्कलिका–समुद्रस्येव वातोत्कलिका, वातमण्डली वातोली, उत्कलिकावात उत्कलिकाभिः प्रचुरतराभिः सम्मिश्रितो वातः, मण्डलिकावातः मण्डलिकाभिर्मूलत आरभ्य प्रचुरतराभिः समुत्थो वातः, गुञ्जावातः यो गुञ्जन् शब्दं कुर्वन् वाति, झंझावातः सवृष्टिः–अशुभो निष्ठुर इत्यन्ये, संवर्त्तकवातः तृणादिसंवर्त्तनस्वभावः, घनवातः घनपरिणामो रत्नप्रभा पृथिव्याद्यधोवर्त्ती, तनुवातः विरलपरिणामः घनवातस्याधःस्थायी, शुद्धवातश्च मन्दस्तिमितः–वस्तिदृत्यादिगत इत्यन्ये, अन्येऽपि तथा प्रकारा वाच्याः, तदुक्तं प्रज्ञापनायाम्–"से किं तं वाउकाइया २ दुविहा पन्नत्ता, तं जहा–सुहुमवाउकाइया य बायरवाउकाइयाय । से किं तं सुहुमवायुकाइया ? २ दुविहा पण्णत्ता, तं जहा–पज्जत्तगसुहुमवाउकाइया य अपज्जगसुहुमवाउकाइया य, से तं सुहुमवाउकाइया । से किं तं बादरवाउकाइया ? २ अणेगविहा पण्णत्ता, तं जहा–पाइणवाए पडीणवाए दाहिणवाए उदीणवाए उड्डवाए अहोवाए तिरियवाए विदिसीवाए वाउब्भामे वाउकलिया वायमंडलिया उकलियावाए मंडलियावाए गुंजावाए झंझावाए संवट्टवाए घणवाए तणुवाए सुद्धवाए जे यावण्णे तहप्पगारा" इति वायुकायिका उक्ताः । अथ वनस्पतिकायिका निरूप्यन्ते–वनस्पतिकायिका द्विविधाः प्रोक्ताः, सूक्ष्माः बादराश्च । सूक्ष्माः सूक्ष्मनिगोदरूपा अनन्तानां जन्तूनां साधारणमेकं शरीरं यत् स निगोदः, सूक्ष्माश्च ते निगोदाश्च सूक्ष्मनिगोदाः । एकनिगोदवासिनामनन्तानामपि जीवानामौदारिकमेकमेव शरीरं तैजस-

कार्मणे च प्रत्येकं स्याताम्। ते च जीवाः सहोच्छ्वासनिःश्वासाः समं चाहारकारिणः अतिसूक्ष्मशरीरे नैरयिकेभ्योऽनन्तगुणां यातनां सहन्ते, तदुक्तं—"जं नरए नेरइया दुक्खं पावन्ति गोयमा तिक्खं । तं पुण निगोयजीवा अणंतगुणियं वियाणाहि ॥ १ ॥" इति । सूक्ष्मनिगोदैश्च सकलोऽपि लोकोऽञ्जनचूर्णपूर्णसमुद्गकवत् व्याप्तो भवति । असंख्यातैर्निगोदैरेको गोलको भवति, गोलकाश्च विश्वविश्वेऽसंख्याताः । यावन्ति चोत्कृष्टपदानि तावत् प्रमाणानि गोलकानि भवन्तीत्यर्थः । यत्र षड्दिशं लोकः स्यात् तत्र संपूर्णगोलको निष्पद्यते, तन्मध्ये चोत्कृष्टपदम्, यत्र दिक्त्रयमलोकेनावृतं भूम्यासन्नापवरककोणान्तिमप्रदेशकेन सदृशं तत्र खण्डगोलकस्य निष्पत्तिः स्यात्, खण्डगोलके च जघन्यपदं स्यात्, यतस्तदल्पनिगोदकैः स्पृष्टम् । यत्र कुत्रापि लोकमध्येऽङ्गुलासंख्येयभागप्रमितेऽवगाहक्षेत्रे एको निगोदोऽवगाहते तत्र तावन्मात्रे एवावगाढक्षेत्रेऽन्येऽसंख्येया निगोदा अन्योऽन्यानुप्रवेशेनावगाहन्ते, तत्राप्यन्यापेक्षयाऽतिप्रभूतैरात्मप्रदेशैर्य आकाशप्रदेशः स्पृष्टः स एकप्रदेशकमुत्कृष्टपदं विवक्षणीयम् । विवक्षितनिगोदस्य कांश्चित्प्रदेशान् मुक्त्वाऽपरान् अवगाहनाप्रदेशान् आक्रम्योत्कृष्टं च पदममुञ्चन् असंख्याततनिगोदक एको गोलो भवति, तदुक्तं—"उक्कोसपयममोत्तुं निग्गोयओगाहणाए सव्वत्तो । निप्फाइज्जइ गोलो पएसपरिवुड्ढिहाणीहिं ॥१॥" व्याख्या—"उत्कृष्टपदं विवक्षितप्रदेशममुञ्चद्भिः निगोदावगाहनाया एकस्याः 'सर्वतः' सर्वासु दिक्षु निगोदान्तराणि स्थापयद्भिर्निष्पाद्यते गोलः, कथं ?, प्रदेशपरिवृद्धिहानिभ्यां कांश्चित्प्रदेशान् विवक्षितावगाहनाया आक्रमद्भिः कांश्चिद्विमुञ्चद्भिरित्यर्थः, एकमेकगोलकनिष्पत्तिः" इति । तमेवोक्तलक्षणं गोलकमाश्रित्यान्यो गोलको निष्पद्यते, कथं ?, प्राक्तनगोलकसम्बन्धि उत्कृष्टपदं विमुच्य योऽन्यो निगोदः तत्रोत्कृष्टपदकल्पनेन एवमुक्तक्रमेण निगोदप्रमिते अवगाहनाक्षेत्रे गोलकस्य निष्पत्तिर्भवति, विव-

क्षितनिगोदावगाहनातिरिक्तनिगोददेशानां गोलकान्तरानुप्रवेशात् । एवं च लोकेऽसंख्येयगोलकानां निष्पत्तिर्भवति, निगोदावगाहनानामसंख्येयत्वात्, प्रतिनिगोदावगाहनं च गोलकनिष्पत्तेरिति, तदुक्तं—"गोला य असंखेज्जा, होंति निगोया असंखया गोले । एक्केको उ निगोओ, अणंतजीवो मुणेयव्वो ॥१॥" इति । अनन्तानन्तजीवव्याप्तनिगोदेभ्यो नित्यं निर्गच्छद्भिः जन्तुभिरपि एकोऽपि निगोदो न रिक्तीभवति, यतो व्यवहारराशेर्यावन्तो निर्वृतिं यान्ति तावन्तोऽनादिनिगोदेभ्यो निर्गच्छन्ति, तदुक्तं प्रज्ञापनावृत्तौ—"सिज्झन्ति जत्तिया किर इह संववहाररासिमज्झाओ। इंति अणाइवणसइ–मज्झाओ तत्तिआ तम्मि ॥१॥" इति । अनन्तेनापि कालेन ये शिवं गता ये च गमिष्यन्ति ते एकस्य निगोदस्यानन्तभागे वर्त्तन्ते, तदुक्तं—"जइयाय होइ पुच्छा, जिणाण मग्गम्मि उत्तरं तइया । इक्कस्स निगोअस्स य, अणंतभागो उ सिद्धिगओ ॥ १ ॥" इति । सूक्ष्मनिगोदेष्वपि जीवा द्विप्रकारा भवन्ति, तद्यथा—व्यवहारराशिप्राप्ता अव्यवहारराशिप्राप्ताश्च । ये अनादिसूक्ष्मनिगोदेभ्यो निर्गत्य पृथिव्यादिव्यवहारमेकदापि प्राप्ताः ते व्यावहारिकाः, ये च कदापि सूक्ष्मनिगोदेभ्यो न निर्गताः तेऽव्यावहारिकाः, तदुक्तं—"अत्थि अणन्ता जीवा, जेहिं न पत्तो तसाइपरिणामो। ते वि अणंताणंता, निगोअवासं अणुहवंति ॥ १ ॥" इत्युक्ताः सूक्ष्मवनस्पतिकायिकाः । बादरवनस्पतिकायिका द्विविधाः प्रज्ञप्ताः, तद्यथा—प्रत्येकशरीरबादरवनस्पतिकायिकाः साधारणशरीरबादरवनस्पतिकायिकाश्च । तत्रैकमेकं जीवं प्रति गतं प्रत्येकम्, प्रत्येकं शरीरं येषां ते प्रत्येकशरीराः, ते च ते बादरवनस्पतिकायिकाश्च प्रत्येकबादरवनस्पतिकायिकाः । प्रत्येकलक्षणं चेदं मूलादिदशके प्रतिशरीरं प्रत्येकनामकर्मोदयतश्च ये ते पृथक् जन्तवः स्युः, तदुक्तं—"एगसरीरे एगो, जीवो जेसिं तु ते उ पत्तेया । फलफुलछल्लीकट्ठा, मूलगपत्ताणि बीयाणि ॥१॥" इति। किञ्च भग्नस्य मूलादेर्मध्ये

हीरो दृश्यते तत्प्रत्येकं शरीरं जानीहि, एवमन्यदपि तादृशं वाच्यम्। यत्र मूलकन्दस्कन्धशाखासु काष्ठतः त्वचा तनीयसी सा त्वक् प्रत्येकजीविका। समानं तुल्यं प्राणापानाद्युपभोगं यथा भवति एवमासमन्तादेकीभावेनानन्तानां जन्तूनां धारणं संग्रहणं येन तत् साधारणं, साधारणं शरीरं येषां ते साधारणशरीराः, ते च ते वादरवनस्पतिकायिकाश्च साधारणबादरवनस्पतिकायिकाः। प्रत्येकवादरवनस्पतिकायिका द्वादशधा प्रज्ञप्ताः, तद्यथा–वृक्षाः, गुच्छाः, गुल्मानि, लताः, वल्ल्यः, पर्वगाः, तृणानि, वलयानि, हरितानि, औषध्यः, जलरुहाः, कुहणाश्चेति। तत्र वृक्षा आम्रादयः, वृन्ताकीप्रभृतयो गुच्छाः, गुल्मानि नवमालिकाप्रभृतीनि, येषां स्कन्धप्रदेशे विवक्षितोर्ध्वगतैकशाखाव्यतिरेकेणान्यच्छाखान्तरं परिस्थूलं न निर्गच्छति ते चम्पकलतादयो लताः, वल्ल्यः कूष्माण्डीत्रपुषीप्रभृतयः, इक्ष्वादयः पर्वगाः, कुशजज्जुकाऽर्जुनादीनि तृणानि, केतकीकदल्यादीनि वलयानि–एतेषां हि त्वचा वलयाकारेण व्यवस्थितेति, तण्डुलीयकवास्तुलप्रभृतीनि हरितानि, ओषध्यः फलपाकान्ताः शाल्यादयः, जले रोहन्तीति जलरुहाः–उदकावकपनकादयः, कुहणाश्च भूमिस्फोटाभिधानाः–ते चाप्कायप्रभृतय इति प्रज्ञापनावृत्तौ। वृक्षा द्विधा प्रज्ञप्ताः, तद्यथा–एकास्थिका बहुबीजकाश्च, तत्र फलं फलं प्रति एकमस्थि येषां ते एकास्थिकाः। तथा प्रायेणास्थिवन्धमन्तरेणैवमेव फलान्तर्वर्त्तीनि बीजानि येषां ते बहुबीजकाः। तत्रैकास्थिका अनेकविधा भवन्ति। अत्र प्रज्ञापनातः गाथात्रयं लिख्यते–णिंबंबजंबुकोसंबसालअंकुल्ल पीलु सेलू य। सल्लइमोयइमालुय बउल पलासे करंजे य ॥ १ ॥ पुत्तंजीवयऽरिट्ठे विहेल्लए हरिडए य भिल्लाए। उंबेभरिया खीरिणि बोधव्वे धायइ पियाले ॥ २ ॥ पूइ य निम्बकरञ्जे सुह्रा तह सीसवा य असणा य। पुन्नागनागरुक्खे सीवण्णि तहा असोगे य ॥ ३ ॥" अक्षरगमनिका–"तत्र निम्बाम्रजम्बूकोशम्बाः, शालः सर्ज्जः,

‘अंकोल्ल’त्ति अङ्कोठः, पीलुः प्रतीतः, शेलुः श्लेष्मातकः, सल्लकी गजप्रिया, मोचकीमालुकौ देशविशेषप्रतीतौ, वकुलः केसरः, पलाशः किंशुकः, करञ्जो नक्तमालः, पुत्रजीवको देशविशेषप्रसिद्धः, अरिष्टः पिचुमन्दः, विभीतकः अक्षः, हरीतकः कोङ्कणदेशप्रसिद्धः कषायबहुलः, भल्लातको यस्य भल्लातकाभिधानानि फलानि लोकप्रसिद्धानि, उम्बेभरिकाक्षीरणीधातकीप्रियालपूतिनिम्बकरञ्जश्लक्ष्णाशिंशपाऽशनपुन्नागनागश्रीपर्ण्यशोका लोकप्रतीता वाच्या” इति । तथाऽन्येऽपि तथाप्रकाराः तत्तद्देशविशेषभाविनः सर्वेऽप्येकास्थिका ज्ञातव्या इति । एतेषां मूलकन्दस्कन्दत्वक्प्रवालाः प्रत्येकमसंख्येयप्रत्येकजीवा भवन्ति। तत्र मूलानि यानि कन्दस्याधस्तात् भूमेरन्तः प्रसरन्ति तानि, तेषामुपरि कन्दाः—ते लोकप्रतीताः, स्कन्धाः स्थुडाः, त्वचः छल्ल्यः, शाखा सुप्रसिद्धा, प्रवालाश्च पल्लवाङ्कुराः ।एतेषां पत्राणि एकैकजीवात्मकानि—एकैकं पत्रमेकैकेन जीवेनाधिष्ठितमिति भावः । पुष्पाण्यनेकजीवानि, प्रायः प्रतिपुष्पपत्रं जीवभावात्, फलान्येकास्थिकानीत्येकास्थिका उक्ताः। बहुबीजकाः अपि अनेकविधाः प्रज्ञप्ताः, तद्यथा—अस्थितिन्दुकपित्थाम्बाडकमातुलिंगबिल्वामलकपनसदाडिमाश्वत्थोदुम्बरवटन्यग्रोधनन्दिवृक्षपिप्पलीशतरीप्लक्षकोदुम्बरिकुस्तुम्भरिदेवदालितिलकलवकच्छत्रोपगशिरीषसप्तपर्णदधिपर्णलोध्रधवचन्दनार्जुननीपकुटजकदम्बकानां मध्ये केचिदतिप्रसिद्धाः केचन देशविशेषाश्च वेदितव्याः । नवरमिहामलकादयो न लोकप्रसिद्धाः प्रतिपत्तव्याः, तेषामेकास्थिकत्वात्, किन्तु देशविशेषप्रसिद्धा बहुबीजका एव केचन ग्राह्याः, एवं तथा प्रकारा अन्येऽपि वाच्याः । एतेषामपि मूलकन्दस्कन्धत्वक्शाखाप्रवालाः प्रत्येकमसङ्ख्येयप्रत्येकशरीरजीवकाः, पत्राणि प्रत्येकजीवकानि, पुष्पाण्यनेकजीवकानि, फलानि च बहुबीजकानि । पूर्णतरुस्कन्धव्यापी एको जीवो भवति, मूलादयश्च दशापि तदवयवा भवन्ति, तथा चोक्तं सूत्रकृताङ्गद्वितीयश्रुतस्कन्धतृती-

याध्ययनवृत्तौ—“अथापरमेतदाख्यातं ( यदाख्यातं ) तद्दर्शयति—‘इह’ अस्मिन् जगत्येके न सर्वे तथाविधकर्मोदयवर्त्तिनो वृक्षयोनिकाः सत्त्वा भवन्ति, तदवयवाश्रिताश्च परे वनस्पतिरूपा एव प्राणिनो भवन्ति, तथा यो ह्येको वनस्पतिजीवः सर्ववृक्षावयवव्यापी भवति तस्य चापरे तदवयवेषु मूलकन्दस्कन्धत्वक्शाखाप्रवालपत्रपुष्पफलवीजभूतेषु दशसु स्थानेषु जीवाः समुत्पद्यन्ते, ते च तत्रोत्पद्यमाना वृक्षयोनिका वृक्षोद्भवा वृक्षव्युत्क्रान्ताश्चोच्यन्ते” ( पत्र ३५१ ) इति । एते दशापि परस्परं सम्बद्धाः तिष्ठन्ति, सर्वेऽपि पृथिवीगतं रसमाहरन्ति, तत्रापि श्रावणादिचतुर्मास्यां प्रावृड्वर्षर्त्तुद्वये जलबाहुल्यतः प्रभूतमाहारमाहरन्ति, शरदि हेमन्ते वसन्ते च क्रमादल्पाल्पाहारा ग्रीष्मे चात्यन्तं मिताहारा भवन्ति, तदुक्तं लोकप्रकाशे—“मूलं स्याद् भूमिसम्बद्धं, तत्र कन्दः समाश्रितः । तत्र स्कन्ध इति मिथो वीजान्ताः स्युर्युताः समे ॥ १ ॥ अतः पृथिवीगतरसमाहरन्ति समेऽप्यमी । यावत्फलानि पुष्पस्थम्, वीजानि फलसङ्गतम् ॥ २ ॥ श्रावणादिचतुर्मास्यां, प्रावृट्वर्षासु भूरुहः । सर्वतो बहुलाहारा अपां बाहुल्यतः स्मृताः ॥ ३ ॥ ततः शरदि हेमन्ते, क्रमादल्पाल्पभोजिनः । यावद्वसन्तेऽल्पाहारा, ग्रीष्मेऽत्यन्तमिताशनाः ॥ ४ ॥” इति । एवं पञ्चमाङ्गेऽपि—“वणस्सइ काइयाणं भंते ! किं कालं सव्वप्पाहारगा वा सव्वमहाहारगा वा भवन्ति ?, गोयमा ! पाउसवरिसारत्तेसु णं एत्थ णं वणस्सइकाइया सव्व-महाहारगा भवन्ति तदाणंतरं च णं सरए तदाणंतरं च णं हेमन्ते तदाणंतरं च वसंते तदाणंतरं च णं गिम्हे, गिम्हाणं वणस्सइकाइया सव्वप्पाहारगा भवंति” इति । ननु ग्रीष्मर्त्तौ बहवस्तरवः पत्रपुष्पफलोद्भूताः कथमवलोक्यन्त इति चेत् ?, तदा भूयसामुष्ण-योनिकानामुत्पत्तेः, तदुक्तं भगवत्यां—“जइ णं भंते ! गिम्हासु वणस्सइकाइया सव्वप्पाहारगा भवंति कह्मा णं भंते ! गिम्हासु बहवे वणस्सइकाइया पत्तिया पुष्फिया फलिया हरियगरेज्जमाणा सिरीए अईव अईव उवसोभेमाणा चिट्ठंति ?, गोयमा ! गिम्हासु णं बहवे ...

णजोणिया जीवा य पोग्गला य वणस्सइकाइयत्ताए वक्कमंति विउक्कमंति चयंति उववज्जंति एवं खलु गोयमा ! गिह्मासु बहवे वणस्सइकाइया पत्तिया पुप्फिया जाव चिट्ठंति" इति । ननु मूलादयो दशापि प्रत्येकतनुभिर्जातास्तर्हि कथमेकमूलादिधीरिति चेत् ?, पूर्वजन्मनि रागद्वेषाभ्यां समुपार्जिततथाविधकर्मोदयात्, तथा हि—यथा श्लेषणद्रव्यव्यामिश्रितानेकसर्षपघटिता भूरिसर्षपरूपापि वर्त्तिका एकैव प्रतिभासते सर्षपाश्च एकत्वं न प्राप्ताः किन्तु स्वस्वावगाहनासु पृथक् पृथक् स्थितास्तथा मूलादयोऽपि स्वस्वावगाहनासु व्यवस्थिताः तथाविधकर्मोदयात् तथात्वेन प्रतिभासन्ते । एवं तिलशष्कुलिकादृष्टान्तोऽपि परिभावनीयः। वृन्ताकी कर्पासी जपा आढकी कुसुम्भपिप्पली वदरी नीली तुलसी कर्मदिका यवासा इत्याद्या अनेका गुच्छजातयः, तथा चोक्तं प्रज्ञापनायाम्—"से किं तं गुच्छा ?, गुच्छा अणेगविहा पन्नत्ता, तं०—वाइंगणिसल्लइथुण्डई य तह कत्थुरी य जीमुमणा । रूवी आढइ णीली तुलसी तह माउलिंगी य ॥ १ ॥ कच्छुंभरि पिप्पलिया अतसी बिल्ली य काइमाईया । वुच्चू पडोलकंदे विउव्वा वत्थलंदेरे ॥२॥ पत्तउर सीयउरए हवंति तहा जवसए य बोद्धव्वे । णिग्गुमिअंकतवरी अत्थई चेव तलउदाडा ॥३॥ सणपाणकासमुद्दग अग्घाडग साम सिंदुवारे य । करमद्दअद्दूसग करीर एरावणमहित्थे ॥ ४ ॥ जाउलगमीलपरिली गयमारिणि कुव्वकारिया भंडा । जीवइ केयइ तह गंज पाडलादासिअंकोले ॥ ५ ॥ जे यावन्ना तहप्पगारा, से त्तं गुच्छा" इति । मूलिका कुन्दकोरिंटसेरियवन्धुजीवकबाणकरवीरसिन्दुवारविचकिलयूथिका नवमल्लिका मुद्गरकणवीरजात्यादयो गुल्मजातयः । अत्र प्रज्ञापनागाथात्रयम्—"सेणयए णोमालिय कोरंटय बंधुजीवगमणोज्जे । पिइयं पाणं कणयर कुज्जय तह सिंदुवारे य ॥ १ ॥ जाई मोग्गर तह जूहिया य तह मल्लिया य वासंती । वत्थूल कत्थुल सेवाल गंठी मगदंतिया चेव ॥२॥ चंपगजीइ णीइया, कुन्दो (कन्दो) तहा महाजाई ।

एवमणेगागारा हवंति गुम्मा मुणेयव्वा ॥ ३ ॥" इति । अशोकलता चम्पकलता पद्मलता नागलताऽतिमुक्तकलता वासं-
तीलता चूतलता वनलता कुन्दलताप्रमुखा लताभेदा वाच्याः । कुष्माण्डी त्रपुषी तुम्बी कालिङ्गी चिर्भटी गोस्तनी
वालुङ्की एलालुकी पटोली कारवेल्ली कर्कोटकादिका अनेका वल्ल्यः । इक्ष्विक्षुवाटिकावीरुणीसुंठिशतपर्वैक्कडवंशशर-
वेत्रनडकासप्रमुखाः पर्वगा वाच्याः । मधुतृणसंकुलितृणकुशपर्वकदूर्वादर्भार्जुनैरण्डकुरुविन्दकरोहिषसंकुलीक्षीरबिसाद्याः
तृणजातयः । तक्कलिशालकन्दलीपूगखर्जूरसरलनालिकेरीकेतकीतमालतालधर्मवृक्षहिंगुवृक्षलविंगवृक्षकन्दल्याद्या वलय-
जातयो ज्ञेयाः । आर्यकदमनकमरुवकमण्डुकीसर्षपतन्दुलीयवास्तुकप्रमुखा हरितका वाच्याः । औषध्यश्चतुर्विंशतिधा-
न्यजातयस्तथाहि—"धन्नाइं चउवीसं जवगोहुमसालिवीहिसट्ठिका । कोद्दवअणुया कंगू रालयतिलमुग्गमासाय ॥ १ ॥ अयसि हरि-
मंथतिउडगनिप्फावसिलं (च) रायमासा य । उक्खू मसूरतुवरी कुलत्थ तह धन्न य कलाया ॥ २ ॥" इति । जलमध्ये रोहन्तीति
जलरुहाः, ते चेमे—उदकावकपनकसैवलकलंबुकोत्पलपद्मकुमुदनलिनसुभगसौगन्धिकपौंडरिकमहापौंडरिकशतपत्रसहस्रप-
त्रारविन्दतामरसाद्या अनेका जातयो वाच्याः, एवं कुहणा भूमिस्फोटकाभिधाना आयकायकुहणकुणक्कोद्दहलिका-
शलाकासर्पच्छत्रादयो वाच्याः, तदुक्तं प्रज्ञापनायाम्—"से किं तं जलरुहा ?, जलरुहा अणेगविहा पन्नत्ता, तं०—उदए अवए
पणए सेवाले कलंबुया हढे कसेरुया कच्छभाणी उप्पले पउमे कुमुदे णलिणे सुभए सुगंधिए पोण्डरीयए महापुंडरीयए सयपत्ते सहस्सपत्ते
कल्हारे कोकणदे अरविंदे तामरसे भिसे भिसमुणाले पोक्खले पोक्खलत्थिभूए, जे यावन्ने तहप्पगारा, से त्तं जलरुहा। से किं तं कुहुणा ?,
कुहुणा अणेगविहा पन्नत्ता, तं०—आए काए कुहणे कुणक्के दव्वहलिया सफाए सज्झाए छत्तोए वंसीण हिताकुरए, जे यावन्ना तहप्पगारा,

सें सं कुहुणा" इति । गुच्छादीनां मूलाद्याः षडपि संख्यातजीवात्मका भवन्ति, यतः सूत्रे वृक्षमूलादेरेवासंख्येयजीवतोक्ता तदुक्तं वनस्पतिसप्ततौ—"रुक्खाणमसंखजिआ मूला कन्दा तया य खन्धा य। साला तहा पवाला पुढो पुढो हुंति नायव्वा ॥ १ ॥ गुच्छाईणं पुण संखजीविया नज्जइ इमं पायं । रुक्खाणं चिय जमसंखजीवभावो सूए भणिओ ॥ २ ॥" इति । अत्रायं विशेषः यत् तालसरलनालिकेराणां स्कन्धोऽप्येकजीवाधिष्ठितः, तदुक्तं प्रज्ञापनायां—"खंधा वि एगजीवा तालसरलणालिएरीणं" इति। उपलक्षणादन्येषामपि स्कन्धानामेकजीवाधिष्ठितत्वमागमानुसारेण भावनीयमिति, तदुक्तं प्रज्ञापनावृत्तौ—"तालसरलनालिकेरीग्रहणमुपलक्षणं तेनान्येषामपि यथाऽऽगममेकजीवाधिष्ठितत्वं स्कन्धस्य प्रतिपत्तव्यम्, अन्येषां तु स्कन्धाः प्रत्येकमनेकप्रत्येकशरीरजीवात्मका इति सामर्थ्यादवसेयम्" इति। पञ्चमाङ्गे शृंगवेराद्या अनन्तजीवात्मकाः प्रोक्ताः कपित्थाम्रादिकाश्चासंख्येयजीवात्मका उक्ताः । संख्येयजीवात्मकाश्चेमे—"ताले तमाले तक्कलि तोयलि साली य सारकत्ताणे । सरले जावति केतइ कंदलि तह धम्मरुक्खे य ॥ १ ॥ मुयरुक्ख हिंगुरुक्खे लवंगुरुक्खे य होइ वोद्धव्वे । पूयफली खज्जुरी बोद्धव्वा णालिएरी य ॥ २ ॥" इति । अत्र किञ्चिद्विशेषस्वरूपमुच्यते—शृङ्गाटकस्यानेकजीवात्मको गुच्छः स्यात् त्वक्शाखादीनामनेकजीवत्वात्, केवलं तत्रापि पत्राणि पृथक् पृथक् जीवाधिष्ठितानि, द्वाभ्यां जीवाभ्यामधिष्ठितं च फलं भवति, तदुक्तं लोकप्रकाशे—"शृङ्गाटकस्य गुच्छः स्यादनेकजीवात्मकः किल । पत्राण्येकैकजीवानि द्वौ द्वौ जीवौ फलं प्रति ॥ १ ॥" इति । पुष्पाणि द्विविधानि, तद्यथा—जलजानि स्थलजानि च । एकैकानि पुनर्द्विविधानि, वृन्तबद्धानि नालबद्धानि च । वृन्तबद्धान्यतिमुक्तप्रभृतीनि, नालबद्धानि जातिपुष्पप्रभृतीनि । एतेषां मध्ये कानिचित्पत्रादिगतजीवापेक्षया संख्येयजीवानि कानिचिदसंख्येयजीवानि कानिचिच्चानन्तजीवानि यथागमं

एतेषां मध्ये कानिचित्

बोद्धव्यानि । तत्रापि यानि जात्यादीनि नालबद्धानि पुष्पाणि तानि सर्वाण्यपि संख्यातजीवात्मकानि । स्नुहीपुष्पं तत्क-ल्पानि चान्यानि पुष्पाणि अनन्तजीवाधिष्ठितानि भवन्ति । एवं पद्मिनीकन्दोत्पलिनीकन्दान्तरकन्दाः (अन्तरकन्दो जलजवनस्पतिविशेषकन्दः) अनन्तजीवमया भवन्ति, सिल्लिकाभिधवनस्पतिरपि अनन्तजीवात्मिका भवति । पद्मिन्यादीनां नाले मृणाले चैको जीवः । पलाण्डुकन्दो लसुनकन्दः कन्दलीकन्दः कस्तुम्बक एते सर्वेऽपि वनस्पतिविशेषाः प्रत्येकशरीरिणो वाच्याः । पद्मोत्पलनलिनसुभगसौगन्धिकारविन्दकोकनदशतपत्रसहस्रपत्राणां प्रत्येकं यत् प्रसवबन्धनं यानि प्रायो हरितरूपाणि बाह्यपत्राणि यच्च पत्राधारभूता कर्णिका त्रीण्यप्येतान्येकजीवात्मकानि भवन्ति । यानि पुनरभ्यन्तरपत्राणि केसराणि फलानि एतानि प्रत्येकमेकैकजीवाधिष्ठितानि भवन्ति । वंशनडाभिधतृणेक्षुवाटिकासमासेक्षिवक्कडरंडकरकरसुंठिविहंगतृणपर्वगानां यदक्षि यच्च पर्व यच्च चक्राकारपर्वपरिवेष्टनमेतान्येकजीवात्मकानि भवन्ति । एतेषां पत्राण्येकैकजीवात्मकानि भवन्ति-प्रतिपत्रं पृथक् जीव इत्यर्थः । पुष्पाण्यनेकजीवात्मकानि स्युः । कालिङ्गतुम्बत्रपुषचिर्भटघोषातकपटोलतिन्दुकतेन्दुसेषु प्रत्येकं यत् मांसं गिरं कटाहश्चैतानि त्रीण्येकजीवात्मकानि । एतेषां च पत्राणि सकेसराणि अकेसराणि वा मिञ्जाणि प्रत्येकमेकैकजीवाधिष्ठितानि स्युः, तदुक्तं **प्रज्ञापनायां**—"पुप्फा जलया थलया य विंटबद्धा य नालबद्धा य । संखिज्जमसंखिज्जा बोद्धव्वाऽणंतजीवा य ॥ १ ॥ जे केइ नालियाबद्धा पुप्फा संखिज्जजीविया भणिया । निहुया अणंतजीवा जे यावन्ने तहाविहा ॥ २ ॥ पउमुप्पलिणीकंदे अन्तरकन्दे तहेव झिल्ली य । एए अणन्तजीवा एगो जीवो विसमुणाले ॥ ३ ॥ पलंडूलहसुणकंदे य, कंदली य कुसुंवए । एए परित्तजीवा, जे यावन्ने तहाविहा ॥४॥ पउमुप्पलनलिणाणं सुभगसोगंधियाण य । अरविंदकुंकणाणं, सयपत्तसहस्सपत्ताणं ॥५॥

विंटं बाहिरपत्ता य, कन्निया चेव एगजीवस्स । अब्भितरगा पत्ता पत्तेयं केसरा मिञ्जा ॥ ६ ॥ वेणुनल इक्खुवाडिय समासइक्खू य इक्कडे रंडे। करकर सुंठि विहंगू तणाण तह पव्वगाणं च ॥ ७ ॥ अच्छि पव्वं बलिमोडओ य एगस्स होंति जीवस्स। पत्तेयं पत्ताइं पुप्फाइं अणेगजीवाइं ॥ ८ ॥ पुसफलं कालिंगं तुंबं तउसेल एलवालुंकं। घोसाडय पंडोलं तिंदूयं चेव तेंदूसं॥ ९॥ बिंटसमं सकडाहं एयाइं हवंति एगजीवस्स । पत्तेयं पत्ताइं सकेसरं अकेसरं मिंजा ॥ १० ॥ सप्फाए सज्झाए उव्वेहलिया य कुहणकंदुके । एए अणंतजीघा कंदुके होइ भयणा उ ॥ ११ ॥" इति । "वृन्तसमं'सकडाह'ति समांसं सगिरं तथा कटाह एतानि त्रीण्येकस्य जीवस्य भवन्ति" इत्युक्तं प्रज्ञापना-वृत्तौ। कन्दुके भजना इति एकोऽपि देशविशेषात् अनन्तकायिको देशविशेषात् असंख्येयजीवात्मक इति। लोकप्रकाशे तु—"पुष्पफलं कालिङ्गं तुम्बं चिर्भिटमथ त्रपुषसंज्ञम्। घोषातकं पटोलं तिन्दूकं चैव तेन्दूषम् ॥ १ ॥ एतेषां च वृन्तगर्भकटहानामेको जीवः समर्थकः । पृथक् जीवानि पत्राणि वीजानि केसराण्यपि ॥ २ ॥" इति । सर्वोऽपि वनस्पतिकायः प्रत्येकशरीरः साधारणो वा; किसलयावस्थामुपगतः सन् अनन्तकायः स एव वृद्धिं गच्छन् अनन्तो वा भवति परीत्तो वा, यदि साधारणशरीरं निर्व-र्त्यते तदा साधारण एव भवति, प्रत्येकशरीरं निर्वर्त्यते तदा प्रत्येक इति । ननु कियत्कालादूर्ध्वं प्रत्येको भवतीति चेत्?, अन्तर्मुहूर्त्तात्, यतो निगोदानामुत्कृष्टतोऽप्यन्तर्मुहूर्त्तकालं यावत् स्थितिरुक्ता ततोऽन्तर्मुहूर्त्तात्परतः प्रत्येको भवतीत्युक्ताः प्रत्येकवनस्पतिकायिकाः । अथ बादरसाधारणवनस्पतिकायिकाः प्रोच्यन्ते—अवकपनकसैवाललोहीनिमि-हुस्तुहुस्तिभायिकाश्वकर्णीसिंहकर्णीशृंगवेरमूलककृष्णकन्दसूरणकन्दकाकोलीक्षीरकाकोलीहरिद्रामधुसृङ्गीप्रभृतयः । तदुक्तं प्रज्ञापनायां—"अवए पणए सेवाले लोहिणी सिहुत्थु हुत्थिभागा (य)। अस्सकन्नि सीहकन्नी सिंउढि तत्तो मुसुंढी य ॥ १ ॥ रुरु

कुण्डरिया जीरु छीर विराली तहेव किट्टीया। हालिद्दा सिंगबेरे य आतूलुगा मूलए इय ॥ २ ॥ कंबूयं कन्नुकड सुमत्तओ वलइ तहेव महुसिंगी। नीरुह सप्पसुयंधा छिन्नरुहा चेव बीयरुहा ॥३॥ पाढामियवालुंकी महुररसा चेव रायवत्ती य। पउमा माढरि दंतीति चंडी किट्टीत्ति यावरा ॥ ४ ॥ मासपण्णि मुग्गपण्णी जीवियरसहे य रेणुया चेव। काओली खीरकाओली तहा भंगी नही इय ॥ ५ ॥ किमिरासि भद्द मुच्छा णंगलई पेलुगा इय किण्ह पउले य। हढे हरतणुया चेव लोयाणी ॥ ६ ॥ कण्हे कंदे वज्जे सूरणकंदे तहेव खल्लुरे। एए अणंतजीवा जे यावन्ने तहाविहा ॥ ७ ॥" इति। साधारणलक्षणं त्विदं–प्रागुक्ते मूलादिदशकेषु येषां भङ्गे सति समो भङ्गः स्यात् तदनन्तकायिकम्, तदुक्तं समभङ्गलक्षणं वनस्पतिसप्ततौ–"खडिआइ चुन्ननिप्फाइ याइ वत्तीइ जारिसो भंगो। सव्वत्थ समरुवो केआरतरीइ तुल्लो वा ॥ १ ॥ इत्थ पुण विसेसो यं समभंगा हुंति जे सयाकालं। ते च्चिय अणंतकाया नउणो जे कोमलत्तेण ॥ २ ॥" इति। भग्नस्य मूलादिदशकस्य मध्ये हीरो विषमच्छेद उद्दन्तुरो वा न दृश्यते तदपि साधारणम्, यत्र मूलस्कन्धशाखासु त्वचा काष्ठात् स्थूलतरा दृश्यते सा त्वचाऽनन्तजीवात्मिका, येषां च मूलकन्दपत्रपुष्पफलत्वचां यत् चक्राकारः समच्छेदः स्यात् तदनन्तकायिकं, यद्वा सामान्यतः पर्वात्मिका ग्रन्थिर्भङ्गस्थानं तत् यस्य भङ्गे रजसा छुरितं तदपि साधारणम्, यच्च केदारशुष्कतरिकापुटवत् भिद्यते तदुक्तलक्षणाभावेऽप्यनन्तकायिकम्, तदुक्तं प्रथमाङ्गनिर्युक्तौ–"चक्कागं भज्जमाणस्स गंठी चुण्णघणो भवे। पुढविसरिसभेएणं अणंतजीवं वियाणेहि ॥ १ ॥" अस्या अक्षरगमनिकेयम्–"यस्य मूलकन्दत्वक्पत्रपुष्पफलादेर्भज्यमानस्य चक्रकं भवति, चक्राकारः समच्छेदो भवतीति यावत्, यस्य च ग्रन्थिः पर्वभङ्गस्थानं वा 'चूर्णेन' रजसा व्याप्तो भवति, यो वा भिद्यमानो वनस्पतिः पृथिवीसदृशेन भेदेन केदारोपरि शुष्कतरिवत् पुटभेदेन भिद्यते तमनन्तकायं विजानीहि" ति। तथा सक्षीरमक्षीरं वा गूढशिरमलक्ष्य-

माणपत्रार्धद्वयसन्धि च यत्पत्रं तदपि साधारणं, तदुक्तं निर्युक्तौ—"गूढसिरागं पत्तं सच्छीरं जं च होइ निच्छीरं। जं पुण पणसंधिय अणंतजीवं वियाणाहि ॥ १ ॥" इति। एकस्मिन् समये उत्पन्नानां सर्वेषां साधारणजीवानां शरीरनिष्पत्तिरेककालं भवति। तथा सर्वेषां साधारणानां जीवानामाहारग्रहणं प्राणापानग्रहणं च साधारणमेकस्मिन्नाहृतवति सर्वेऽप्याहृतवन्तः। तथा य आहारः एकेन जीवेन गृहीतः तमेवाहारं तत्समयोत्पन्नाः सर्वेऽपि गृह्णन्ति, तथैकस्मिन्नुच्छ्वसिते निःश्वसिते वा सर्वेऽप्युच्छ्वसिताः निःश्वसिता वेति। उक्ताः साधारणवनस्पतिकायिकाः। सर्वेऽप्येते वनस्पतिजीवाः सामान्यतः षोढा भवन्ति। अग्रबीजाः कुरण्टादयः, मूलबीजा उत्पलादयः, पर्वबीजा इक्ष्वादयः, स्कन्धबीजाः शल्लक्यादयः, बीजरुहाः शाल्यादयः, सम्मूर्च्छनजास्तृणादयश्चेति, तदुक्तं निर्युक्तौ—"अग्गबीया मूलबीया खंधबीया चेव पोरबीयाय। बीयरुहा संमुच्छिमसमासओ वणस्सइजीवा ॥ १ ॥" इति। एवं दशवैकालिकेऽप्युक्तम्, तथाऽभिधानचिन्तामणौ कलिकालसर्वज्ञश्रीमद्धेमचन्द्रसूरिपादा अपि प्राहुः—"कुरण्टाद्या अग्रबीजा मूलबीजास्तूत्पलादयः। पर्वयोनय इक्ष्वाद्याः, स्कन्धजाः सल्लकीमुखाः ॥१॥ शाल्यादयो बीजरुहाः, सम्मूर्च्छजास्तृणादयः। स्युर्वनस्पतिकायस्य, षडेता मूलजातयः ॥ २ ॥" इति। जीवाभिगमे तु मुख्यवल्ल्यः चतस्रः तद्भेदानां चतुःशती, मुख्यलता अष्टौ तद्भेदानामष्टशती, हरितका त्रयः जलस्थलोभयोद्भवाः तद्भेदानां त्रिशती, वृन्ताकादिफलानि वृन्तबद्धानि सहस्रं, सहस्रं च नालबद्धानि, एतान्यपि हरितेष्वेवान्तर्भवन्ति। किञ्च मूलत्वक्काष्ठनिर्यासपत्रपुष्पफलानि सप्ताप्यमी गन्धाङ्गभेदाः, तत्र मूलमौशीरादि, तजादिका त्वक्प्रसिद्धा, काकतुण्डादि काष्ठम्, निर्यासः घनसारवत्, तमालपत्रादि पत्रम्, प्रियंग्वादीनि कुसुमानि, कक्कोलैलालवङ्गजातिफलादीनि फलानि, एतानि सप्त-

गन्धाङ्गानि वर्णादिभेदैर्गुणितानि सप्तशतानि भवन्ति, तथाहि–पञ्चभिर्वर्णैर्गुणिताः पञ्चत्रिंशत्, ते च पञ्चभिः रसैर्गुणिताः पादोनशतद्वयं, यद्यपि तत्राष्टावपि स्पर्शाः संभवन्ति तथापि गन्धाङ्गानां प्रशस्तत्वेन प्रशस्तैर्लघूष्णमृदुस्निग्धैर्गुणिताः सप्तशतानि गन्धाङ्गानि जातानि, तदुक्तं जीवाभिगमवृत्तौ–"मूलतयकट्ठनिज्जासपत्तपुप्फफलनाइगंधंगा। वण्णादुत्तरभेया गंधंगसया मुणेयव्वा ॥ १ ॥" इति, सूत्रालापश्च–"कति णं भंते! गन्धंगा पन्नत्ता?, गोयमा! सत्तगंधंगा सत्तगंधंगसया" इत्यादि। एवं वल्ल्यादिसूत्रालापा अपि वाच्याः। लोकैश्च–"शून्यसप्ताङ्कहस्ताश्वसूर्येन्दुवसुवह्नयः। एतत्संख्याङ्कनिर्दिष्टो वनभारः प्रकीर्त्तितः ॥ १ ॥ (३८११७२९७०) पाठान्तरे च–रामो वसवश्चन्द्रः सूर्यो भूमिस्तथैव च। मुनिः शून्यं समादिष्टः भारसंख्या निगद्यते ॥ २ ॥ (३८१११७०) एकैकजातेरेकैकपत्रप्रचयतो भवेत्। प्रोक्तसंख्यैर्मणैर्भारस्तें त्वष्टादश भूरुहाम् ॥ ३ ॥ तथा चत्वारोऽपुष्पका भारा अष्टौ च फलपुष्पिता। स्युर्वल्लीनां च षड्भाराः शेषनागेन भाषितम् ॥ ४ ॥" इति। सर्वोऽपि वनस्पतिकायः पर्याप्तापर्याप्तभेदेन द्विविधो वाच्यः, उक्तो वनस्पतिकायः, उक्ताश्च भूम्यादयः पञ्च कायाः।

साम्प्रतं त्रसकायिकाः प्रोच्यन्ते, ते च द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियपञ्चेन्द्रियभावात् चतुर्धा, तत्र द्वीन्द्रियाः पर्याप्तापर्याप्तभेदात् द्विप्रकाराः। एवं त्रीन्द्रियचतुरिन्द्रिया अपि वाच्याः। तेषां क्रमशः नामान्यभिधीयन्ते,–तत्र बेइन्द्रियाः–काष्ठकीटपुरीषकीटालसवंशीमुरकमातृवाहमेहरजातकनानाशंखशंखनकशुक्तिकाचन्दनककपर्दकजलूकापायुप्रदेशोद्भवकुक्षिप्रदेशोद्भवकृमिगण्डोलकपूतरकादयोऽन्येऽपि प्रज्ञापनायामप्रसिद्धनामान उक्ताः सन्ति, तथा च तद्ग्रन्थः "से किं तं बेइंदिया?, २ अणेगविहा पन्नत्ता, तं जहा–पुलाकिमिया कुच्छिकिमिया गंडूयलगा गोलोमा णेउरा सोमंगलगा वंसीमुहा सूइमुहा गोजलोया

जलोया जालाउया संखा संखणगा घुल्ला खुल्ला गुलया खंधा वराडा सोत्तिया मुत्तिया कलुयावासा एगओवत्ता दुहओवत्ता नंदियावत्ता संबुक्का माइवाहा सिप्पिसंपुडा चंदणा समुद्दलिक्खा, जे यावन्ने तहप्पगारा" इति । अथ त्रीन्द्रियनामान्युच्यन्ते—धृतेलालिक्षागोमयकीटचौरकीटधान्यकीटतृणकाष्ठफलपत्रवृत्ताशियूकामत्कुणगर्दभेन्द्रियगोपपञ्चवर्णकुन्थुमत्कोटिकपिपीलिकोपदेहिकाकर्पासास्थिकत्रपुषबीजकतुम्बरुकादयः अन्येऽपि अप्रसिद्धाभिधाना देशविशेषे प्रसिद्धाः प्रज्ञापनायामुक्ताः सन्ति, तथा च तद्ग्रन्थः—"से किं तं तेइंदियसंसारसमावन्नजीवपन्नवणा ?, तेइंदियसंसारसमावन्नजीवपन्नवणा अणेगविहा पन्नत्ता, तं जहा—ओवइय रोहिणिया कुंथू पिपीलिया उद्दंसगा उद्देहिया उक्कलिया उप्पाया उप्पडा तणहारा कट्ठहारा मालुया पत्ताहारा तणवेंटिया पत्तवेंटिया पुप्फवेंटिया फलवेंटिया वीयवेंटिया तेबुरणमिंजिया तओसिमिंजिया कप्पासट्ठिमिंजिया हिल्लिया झिल्लिया झिंगिरा किंगिरिडा बाहुया लहुया सुभगा सोवत्थिया सुयवेंटा इंदकाइया इंदगोवया तुरुतुंबगा कुच्छलवाहगा जूया हालाहला पिसुया सयवाइया गोम्ही हत्थिसोंडा, जे यावन्ने तहप्पगारा" इति । चतुरिन्द्रिया भ्रमरमक्षिकादंशमशकवृश्चिकोर्णनाभपतङ्गकंसारीतिडमधुमक्षिकाखद्योतपञ्चवर्णयक्षकीटनन्द्यावर्त्तकपिलडोलादयोऽनेके प्रज्ञापनायामुक्ताः, तत्सूत्रम्—"से किं तं चउरिंदियसंसारसमावन्नजीवपन्नवणा ?,२ अणेगविहा पं०, तं०—अंधिय पत्तिय मच्छिय मसगा कीडे तहा पयंगे य । ढंकुण कुक्कड कुक्कुह नंदावत्ते य सिंगिरडे ॥ १०६ ॥ किण्हपत्ता नीलपत्ता लोहियपत्ता हालिद्दपत्ता सुक्किल्लपत्ता चित्तपक्खा विचित्तपक्खा ओहंजलिया जलचारिया गंभिरा णीणिया तंतवा अच्छिरोडा अच्छिवेहा सारंगा नेउरा दोला भमरा भरिली जरुला तोट्टा विंछुया पत्तविच्छुया छाणविच्छुया जलविच्छुया पियंगाला कणगा गोमयकीडा, जे यावन्ने तहप्पगारा" इति । पञ्चेन्द्रियाः चतुर्विधाः, तद्यथा—नैरयिकाः, तिर्यञ्चः, मनुष्याः, देवाश्च । तत्रायम्

इष्टफलं कर्म, निर्गतमयं येभ्यस्ते निरयाः नरकावासाः, तेषु भवा नैरयिकाः। तिरोऽञ्चन्तीति तिर्यञ्चः "तिरसस्तिर्यति"
( ३-२-१२४ ) इति तिरसस्तिर्यादेशः। मनुशब्दो मनुष्यवाची यथा राजशब्दो राजन्याभिधायकः, मनोरपत्यानि मनुष्याः
"मनोर्याणौ षश्चान्तः" (६-१-९४) इति यः प्रत्ययः षकारश्चागमः, अयं च यप्रत्ययान्तो मनुष्यशब्दो "जातौ राज्ञः"
( ६-१-९२ ) इति जातिवाची राजन्यशब्दवत्। दीव्यन्ति स्वेच्छया क्रीडन्तीति देवाः। तत्र नैरयिकाः सप्तविधाः, तद्य-
था-रत्नप्रभापृथिवीनैरयिकाः, शर्करप्रभापृथिवीनैरयिकाः, वालुकाप्रभापृथिवीनैरयिकाः, पङ्कप्रभापृथिवीनैरयिकाः, धूमप्र-
भापृथिवीनैरयिकाः, तमःप्रभापृथिवीनैरयिकाः, तमस्तमःप्रभापृथिवीनैरयिकाश्च। तत्र रत्नानि वज्रवैडूर्यादीनि, प्रभाश-
ब्दोऽत्र स्वभाववाची, रत्नानि प्रभा-स्वरूपं यस्याः सा रत्नप्रभा रत्नबहुला रत्नमयीति भावार्थः, सा चासौ पृथिवी च
रत्नप्रभापृथिवी तस्यां भवा नैरयिका रत्नप्रभापृथिवीनैरयिकाः, एवं सर्वत्रापि भावनीयम्। एते सप्तापि पर्याप्तापर्याप्तभे-
दात् द्विविधाः। तिर्यक्पञ्चेन्द्रियास्त्रिविधा जलचरस्थलचरखेचरभेदात्। तत्र जलचराः पञ्चविधाः, तद्यथा-मत्स्याः, कच्छपाः,
ग्राहाः, मकराः, शिशुमाराश्च। तत्र श्लक्ष्णतिमितिमिंगिलनक्ररोहितकणिकपीठपाठीनशकुलसहस्रदंष्ट्रनलमीनोलूपीप्रोष्ठिमद्गु-
रचटचटकरपताकातिपताकातंदुलमत्स्यादयोऽनेकप्रकारा मत्स्याः, तदुक्तं प्रज्ञापनायां-"से किं तं मच्छा?, मच्छा अणेगविहा
पन्नत्ता, तं०-सण्हमच्छा खवल्लमच्छा जुंगमच्छा विज्झडियमच्छा हलिमच्छा मगरिमच्छा रोहियमच्छा हलीसागारा गागरा वडा वडगरा
गब्भया उसगारा तिमितिमिंगिला णक्का तंदुलमच्छा कणिक्कामच्छा सालिसत्थियामच्छा लंभणमच्छा पडगा पडागाइपडागा, जे यावन्ने
तहप्पगारा, से त्तं मच्छा" इति। तथाऽस्थिकच्छपमांसकच्छपभेदात् द्विप्रकाराः कच्छपाः, तदुक्तं प्रज्ञापनायां-"से किं तं

कच्छभा?, कच्छभा दुविहा पन्नत्ता, तं०—अट्ठिकच्छभा य मंसकच्छभा य, से त्तं कच्छभा" इति । ग्राहाः पञ्चप्रकाराः—दिलिवेष्टक-मुग्धकपुलकसीमाकारा इति । तथा च प्रज्ञापनासूत्रम्—"से किं तं गाहा?, गाहा पंचविहा पन्नत्ता, तं०—१ दिली २ वेढगा ३ मुद्धया ४ पुलया ५ सीमागारा, से त्तं गाहा" इति । मकरा अपि शौंडमट्ठभेदात् द्विप्रकाराः, तदुक्तं प्रज्ञापनायाम्—"मगरा दुविहा पं० तं०—१ सोंडमगरा मट्ठमगरा य, से त्तं मगरा" इति । शिशुमारा एकाकाराः, तदुक्तं प्रज्ञापनायाम्—"से किं तं सुसुमारा?, सुसुमारा एगागारा पन्नत्ता, से त्तं सुसुमारा" इति । एते सर्वेऽपि संमूर्छिमगर्भजभेदात् द्विप्रकाराः, तेऽपि पर्याप्तापर्याप्तभेदेन द्विविधाः । स्थलचरपञ्चेन्द्रिया द्विप्रकारास्तद्यथा—चतुष्पदाः परिसर्पाश्च । तत्र चतुष्पदस्थलचरपञ्चेन्द्रियतिर्यग्योनिकाः चतुष्प्रकाराः प्रज्ञप्ताः, तद्यथा—एकखुरा द्विखुरा गण्डीपदाः सनखपदाश्च । तत्र प्रतिपदमेकः खुरः शफो येषां ते एकखुराः—अश्वाश्वतरघोटकगर्दभादयः, तदुक्तं प्रज्ञापनायाम्—"से किं तं एगखुरा?, एगखुरा अणेगविहा पं०, तं०—अस्सा अस्सतरा घोडगा गद्दहा गोक्खरा कंदलगा आवत्तगा, जे यावन्ने तहप्पगारा, से त्तं एगखुरा" इति । एते च रोमन्थं न कुर्वन्ति, तदुक्तं लोकप्रकाशे—"गर्दभाश्वादयस्ते तु रोमन्थं रचयन्ति न" इति । प्रतिपदं द्वौ द्वौ खुरौ येषां ते द्विखुराः—उष्ट्रछगलैडकरुरुशरभचमररोहिषगोकर्णमृगवराहादयः, तदुक्तं प्रज्ञापनायाम्—"से किं तं दुखुरा?, दुखुरा अणेगविहा पन्नत्ता, तं जहा—उट्टा गोणा गवया रोज्झा पसुया महिसा मिया संबरा वराहा अया एलगरुरुसरभचमरकुरंगगोकन्नमादि जे यावन्ने तहप्पगारा, से त्तं दुखुरा" इति । एते च रोमन्थं कुर्वन्ति, तदुक्तं लोकप्रकाशे—"अमी सर्वे रोमन्थं रचयन्ति वै" इति । गण्डी सुवर्णकाराधिकरणीस्थानमिति प्रज्ञापनावृत्तौ, गण्डी पद्मकर्णिकेत्युत्तराध्ययनवृत्तौ च, तद्वत्पदं येषां ते गण्डीपदाः—हस्तिगण्डकखङ्गादयः, तदुक्तं प्रज्ञापनायाम्—"से

किं तं गंडीपया ?, गंडीपया अणेगविहा पं०, तं०—हत्थी हत्थपूयणया मंकुणहत्थी खगा(ग्गा) गंडा जे यावन्ने०, से त्तं गंडीपया" इति। सनखानि दीर्घनखपरिकलितानि पदानि येषां ते सनखपदाः—सिंहव्याघ्रसारमेयशशकद्वीपिशृगालमार्जारादयः, तदुक्तं प्रज्ञापनायाम्—"से किं तं सणप्फया ?, २ अणेगविहा पं०, तं०—सीहा वग्घा दीविया अच्छा मरच्छा परस्सरा सियाला विडाला सुणगा कोलसुणगा कोकंतिया ससगा चित्तगा चिल्लगा जे यावन्ने०, से त्तं सणप्फया" इति। एते सर्वेऽपि सम्मूर्च्छिमा गर्भजाश्च, पुनरप्येकैको द्विविधः पर्याप्तापर्याप्तभेदादित्युक्ताः स्थलचरचतुष्पदाः। उरसा भुजाभ्यां वा परिसर्पन्तीति परिसर्पास्ते द्विविधाः, तत्रोरःपरिसर्पाश्चतुर्विधाः—अहयोऽजगरा आसालिका महोरगाश्च। तत्राहयो द्विविधाः—दर्वीकरा मुकुलिनश्च। तत्र दर्वीव दर्वी—फणा—तत्करणशीलाः दर्वीकराः, मुकुलं—फणाविरहयोग्या शरीरावयवविशेषाकृतिः—सा विद्यते येषां ते मुकुलिनश्च। एके फणाकरणशीलाः अन्ये तद्विकला इत्यर्थः। आशीविषाः, दृष्टिविषाः, उग्रविषाः, भोगविषाः, त्वग्विषाः, लालाविषाः, उच्छ्वासविषाः, निःश्वासविषाः, कृष्णसर्पाः, स्वेदसर्पाः, काकोदराश्चेत्येवंविधा दर्वीकरा अनेके प्रज्ञापनायामुक्ताः, तथा च तत्सूत्रम्—से किं तं परिसप्पथलयरपंचिंदियतिरिक्खजोणिया ?, परिसप्पथलयरपंचिंदियतिरिक्खजोणिया दुविहा पं०, तं०—उरपरिसप्पथलयरपंचिंदियतिरिक्खजोणिया य भुयपरिसप्पथलयरपंचिंदियतिरिक्खजोणिया य, से किं तं उरपरिसप्पथलयरपंचिंदियतिरिक्खजोणिया ?, उरपरिसप्पथलयरपंचिंदियतिरिक्खजोणिया चउविहा पं०, तं०—अही अजगरा आसालिया महोरगा। से किं तं अही ?, अही दुविहा पं०, तं०—दव्वीकरा य मउलिणो य, से किं तं दव्वीकरा ?, दव्वीकरा अणेगविहा पं०, तं०—आसीविसा दिट्ठीविसा उग्गविसा भोगविसा तयाविसा लालाविसा उस्सासविसा नीसासविसा कण्हसप्पा सेदसप्पा काओदरा दज्झपुप्फा कोलाहा मेलिमिंदा सेसिंदा जे यावन्ने तहप्पगारा, से त्तं

दर्व्वीकरा" इति। तत्राऽऽश्यो दंष्ट्राः, तासु विषं येषां ते आशीविषाः, तदुक्तं–"आसी दाढा तग्गयविसा य आसीविसा मुणेयव्वा" इति। दृष्टौ विषं येषां ते दृष्टिविषाः, उग्रं विषं येषां ते उग्रविषाः, भोगं शरीरम्, तत्र विषं येषां ते भोगविषाः, त्वचि विषं येषां ते त्वग्विषाः, लाला मुखात् स्रावः, तत्र विषं येषां ते लालाविषाः, उच्छ्वासे विषं येषां ते उच्छ्वासविषाः, निःश्वासे विषं येषां ते निःश्वासविषाः, कृष्णसर्पादयो जातिभेदाश्च लोकतोऽवगन्तव्याः। एवं गोणसादयो ये मुकुलिनोऽपि ते प्रज्ञापनातोऽवसेयाः, तथा च तत्सूत्रम्–"से किं तं० ?, मउलिणो अणेगविहा पं०, तं–दिव्वागा गोणसा कसाहीया वइउला चित्तलिणो मंडलिणो मालिणो अही अहिसलागा वासपडागा जे यावन्ने तहप्पगारा, से त्तं मउलिणो, से त्तं अही" इति। अजगरा: एकाकाराः। असालिकाः सम्मूर्च्छिमा एव भवन्ति, न गर्भजाः। ते च निर्व्याघातेन पञ्चसु भरतेषु पञ्चसु ऐरवतेषु पञ्चसु महाविदेहेषु व्याघातं चाश्रित्य पञ्चसु महाविदेहेषु एवोत्पद्यन्ते। तत्रापि न सर्वत्र किन्तु चक्रवर्त्तिबलदेववासुदेवमाण्डलिकमहामाण्डलिकस्कन्धावाराणां ग्रामनगरनिगमखेटकर्वटमण्डपपट्टनद्रोणमुखाकराश्रमसम्बाहराजधानीनिवेशानां च विनाशे सति असालिका अन्तर्मुहूर्त्तायुः संमूर्च्छति। सापि चक्रवर्त्त्यादीनां स्कन्धावाराऽधस्तनभूमिं विदार्य समुपतिष्ठति। तस्याः शरीरं जघन्यतोऽङ्गुल्यसंख्येयभागमात्रमुत्कृष्टतो विष्कम्भवाहुल्येन तदनुरूपं द्वादशयोजनपरिमितं भवति, तदुक्तं प्रज्ञापनायाम्–"से किं तं असालिया ?, कहि णं भंते ! असालिया संमुच्छति ?, गोयमा ! अंतो मणुस्सखित्ते अड्ढाइज्जेसु दीवेसु निव्वाघाएणं पन्नरससु कम्मभूमिसु वाघायं पडुच्च पंचसु महाविदेहेसु चक्कवट्टिखंधावारेसु गामनिवेसेसु णगरनिवेसेसु णिगमनिवेसेसु खेडनिवेसेसु कव्वडनिवेसेसु मंडवनिवेसेसु दोणमुहनिवेसेसु पट्टणनिवेसेसु आगरनिवेसेसु संवाहनिवेसेसु रायहाणीनिवेसेसु एएसु चेव विणासेसु एत्थ णं

असालिया संमुच्छंति । जहन्ने णं अंगुलस्स असंखेज्जइभागमित्ताए ओगाहणाए उक्कोसे णं बारसजोयणाइ तयणुरूवं च णं विक्खंभबहल्लेणं भूमीं दालित्ता णं समुट्ठेइ, असन्नी मिच्छादिट्ठि अण्णाणि अंतोमुहुत्तऽद्धाउया चेव कालं करेइ" इति । यत्तु सूत्रकृताङ्गे आहारपरिज्ञाध्ययने आसालिका गर्भजतयोक्तास्ते तत्सदृशनामानो विजातीया एव संभाव्यन्ते, अन्यथा प्रज्ञापनासूत्रेण सह विरोधापत्तेः ।

महोरगनामान उरःपरिसर्पस्थलचरभेदाः स्थले भवन्ति, स्थलचरत्वेन स्थलेऽपि चरन्ति स्थलमिव जलेऽपि च चरन्ति । ते चावगाहनामानतोऽनेकविधा अङ्गुलप्रमितदेहाः, अङ्गुलपृथक्त्वप्रमितदेहाः, वितस्तिप्रमितदेहाः, वितस्तिपृथक्त्वप्रमितदेहाः, हस्तप्रमितदेहाः, हस्तपृथक्त्वप्रमितदेहाः, कुक्षिप्रमितदेहाः, कुक्षिपृथक्त्वप्रमितदेहाः, धनुष्प्रमितदेहाः, धनुष्पृथक्त्वप्रमितदेहाः, गव्युतप्रमितदेहाः, गव्युतपृथक्त्वप्रमितदेहाः, योजनप्रमितदेहाः, योजनपृथक्त्वप्रमितदेहाः, शतयोजनप्रमितदेहाः, शतयोजनपृथक्त्वप्रमितदेहा यावत् योजनसहस्रप्रमितदेहाश्च, एते पुनर्मनुष्यलोकात् बहिर्वर्त्तिद्वीपसमुद्रेषु भवन्ति, तदुक्तं प्रज्ञापनायाम्–"से किं तं महोरगा ?, महोरगा अणेगविहा पं०, तं०–अत्थेगइआ अंगुलंपि अंगुलपुहुत्तियावि वियत्थिंपि वियत्थिपुहुत्तियावि रयणिंपि रयणिपुहुत्तियावि कुच्छिंपि कुच्छिपुहुत्तियावि धणुंपि धणुपुहुत्तियावि गाउयंपि गाउयपुहुत्तियावि जोयणंपि जोयणपुहुत्तियावि जोयणसयंपि जोयणसयपुहुत्तियावि जोयणसहस्संपि । ते णं थले जाता जलेऽवि चरंति थलेऽवि चरंति । तेणं णत्थि इहं, बाहिरएसु दीवेसु समुद्देसु हवन्ति, जे यावन्ने तहप्पगारा, से त्तं महोरगा" इति । आसालिकवर्जाः सर्वेऽपि उरःपरिसर्पाः सम्मूर्च्छिमा गर्भजाश्च भवन्ति । पुनरपि पर्याप्तापर्याप्तभेदात् द्विप्रकारा इति । भुजाभ्यां परिसर्पन्तीति भुजपरिसर्पाः नकुलसरटगोधा-

ब्राह्मणीगृहगोधिकाछुच्छुंदरीमूषकहालिनीजाहकादयोऽनेकप्रकारा ज्ञेयाः, तदुक्तं प्रज्ञापनायां—"से किं तं भुयपरिसप्पा?, भुयपरिसप्पा अणेगविहा पं०, तं०—नउला सेहा सरडा सल्ला सरंठा सारा खोरा घरोइला विस्संभरा मूसा मंगुसा पयलाइया छीरविरालिया जहा चउप्पाइया, जे यावन्ने तहप्पगारा" इति। एतेऽपि संक्षेपतः सम्मूर्च्छिमगर्भजभेदात् द्विप्रकारा भवन्ति । पुनरपि पर्याप्तापर्याप्तभेदाद् द्विविधा इत्युक्ताः स्थलचराः। खे चरन्तीति खेचरास्ते चतुर्धा—चर्मपक्षिणः, लोमपक्षिणः, समुद्गपक्षिणः, विततपक्षिणश्च। तत्र चर्मपक्षिणो वल्गुलीचर्मचटिकभारण्डपक्षिसमुद्रकाकजीवंजीवाद्याः। लोमपक्षिणो हंसकलहंसकपोतकेकिवायसढंककङ्कचक्रवाकचकोरक्रौंचसारसकपिञ्जलकुकुटशुकतित्तिरलावकहारीतकोकिलचापवकचातकखञ्जनशकुनिचटकश्येनसारिकशतपत्रभरद्वाजकुम्भकारटिट्टिभप्रमुखा अनेके भवन्ति। येषां उड्डयनसमयेऽपि समुद्गकवत् संघटितौ पक्षौ ते समुद्गकपक्षिणः। येषां पक्षौ अवस्थानेऽपि विततौ ते विततपक्षिणः। एतौ द्वावपि मनुजक्षेत्रबहिर्वर्त्तिनौ। एते सर्वेऽपि गर्भजसंमूर्च्छिमभेदात् द्विप्रकारा भवन्ति। पुनरेकैकपर्याप्तापर्याप्तभेदात् द्विप्रकाराः, तदुक्तं प्रज्ञापनायाम्—"से किं तं खहयरपंचिंदियतिरिक्खजोणिया?, खहयरपंचिंदियतिरिक्खजोणिया चउव्विहा पं०, तं०—चम्मपक्खी लोमपक्खी समुग्गपक्खी वियय-पक्खी। से किं तं चम्मपक्खी?, चम्मपक्खी अणेगविहा पं०,तं०—वग्गुली जलोया अडिल्ला भारंडपक्खी जीवंजीवा समुदवायसा कण्णत्तिया पक्खिविरालिया, जे यावन्ने तहप्पगारा, से त्तं चम्मपक्खी। से किं तं लोमपक्खी?, लोमपक्खी अणेगविहा पं०, तं०—ढंका कंका कुरला वायसा चक्कवागा हंसा कलहंसा रायहंसा पायहंसा आडा सेडी वगा वलागा पारिप्पवा कोंचा सारसा मेसरा मसूरा मयूरा सत्तहत्था गहरा पोंडरिया कागा कामिंजुया वंजुलगा तित्तिरा वहगा लावगा कवोया कविंजला पारेवया चिडगा चासा कुक्कुडा सुगा

बरहिणा मयणसलागा कोइला सेहावरिल्लगमाइ, से त्तं लोमपक्खी । से किं तं समुग्गपक्खी ?, समुग्गपक्खी एगागारा पन्नत्ता, ते णं नत्थि इहं, बाहिरएसु दीवसमुद्देसु भवन्ति, से त्तं समुग्गपक्खी । से किं तं वियपक्खी ?, वियपक्खी एगागारा पन्नत्ता, ते णं नत्थि इहं, बाहिरएसु दीवसमुद्देसु भवन्ति, से त्तं वियपक्खी । ते समासओ दुविहा पं०, तं०—संमुच्छिमा य गब्भवक्कंतिया य ।" इति उक्ताः तिर्यक्पञ्चेन्द्रियाः ।

मनुष्या द्विविधाः सम्मूर्च्छिमा गर्भजाश्च । तत्र सम्मूर्च्छिमाः षट्पञ्चाशदन्तर्द्वीपेषु त्रिंशदकर्मभूमिषु पञ्चदशकर्मभूमिषु ये गर्भजा मनुजास्तेषां १ पुरीषे २ प्रस्रवणे ३ श्लेष्मणि ४ सिंघाणे ५ वान्ते ६ पित्ते ७ शोणिते ८ शुक्रे ९ मृतकलेवरे १० पूये ११ स्त्रीपुंसंयोगेषु १२ शुक्रपुद्गलविच्युतौ १३ नगरनिर्धमनेषु १४ सर्वेषु अपवित्रस्थानेषु च सम्मूर्च्छन्ति । तदुक्तं प्रज्ञापनासूत्रे—"से किं तं मणुस्सा ?, मणुस्सा दुविहा पं०, तं०—संमुच्छिममणुस्सा य गब्भवक्कंतियमणुस्सा य । से किं तं संमुच्छिममणुस्सा ?, कहं णं भंते ! संमुच्छिममणुस्सा संमुच्छंति ?, गोयमा !, अंतो मणुस्सखित्ते पणयालीसाए जोयणसयसहस्सेसु अड्ढाइज्जेसु दीवसमुद्देसु पन्नरससु कम्मभूमीसु तीसाए अकम्मभूमिसु छप्पन्नाए अंतरदीवएसु गब्भवक्कंतियमणुस्साणं चेव उच्चारेसु वा पासवणेसु वा खेलेसु वा सिंघाणेसु वा वंतेसु वा पित्तेसु वा पूएसु वा सोणिएसु वा सुक्केसु वा सुक्कपुग्गलपरिसाडेसु वा विगयजीवकलेवरेसु वा थीपुरिससंयोगेसु वा णगरनिद्धमणेसु वा सव्वेसु चेव असुइट्ठाणेसु एत्थ णं संमुच्छिममणुस्सा संमुच्छंति, अंगुलस्स असंखेज्जइभागमेत्ताए ओगाहणाए, असन्नी, मिच्छादिट्ठी, अन्नाणी, सव्वाहिं पज्जत्तीहिं अपज्जत्तगा, अंतोमुहुत्ताउया चेव कालं करेंति, से त्तं संमुच्छिममणुस्सा" इति । गर्भजमनुजास्त्रिविधाः, तद्यथा कर्मभूमिजा अकर्मभूमिजा अन्तर्द्वीपोद्भवाश्च । तत्र कर्म—

कृषिवाणिज्यादि मोक्षानुष्ठानं वा तत्प्रधाना भूमिः कर्मभूमिः, यद्वा शिवमार्गदर्शकास्तीर्थकरा यत्र भवन्ति सा कर्मभूमिः, तदुक्तं तत्त्वार्थभाष्ये—"संसारदुर्गान्तगमकस्य सम्यग्ज्ञानदर्शनचारित्रात्मकस्य मोक्षमार्गस्य ज्ञातारः कर्त्तार उपदेष्टारश्च भगवन्तः परमर्षयः तीर्थकरा अत्रोत्पद्यन्ते । अत्रैव जाताः सिद्ध्यन्ति नान्यत्र । अतो निर्वाणाय कर्मणः सिद्धभूमयः कर्मभूमय" इति, तत्र जाताः कर्मभूमिजाः । तेऽपि द्विप्रकारास्तद्यथा—म्लेच्छा आर्याश्च । वक्ष्यमाणार्येभ्यो भिन्ना अनार्याः, यद्वा स्वप्नेऽपि यैर्धर्म इत्यक्षराणि न श्रुतानि ते अनार्याः, तदुक्तं सूत्रकृताङ्गवृत्तौ—"धम्मेति अक्खराइं जे सुविणेसु वि न सुव्वंति" इति । ते शक-यवन-मुरुंड-शवरादयोऽनेकविधा उक्ताः । आरात् हेयधर्मेभ्यो याता इत्यार्याः । ते च द्विप्रकाराः—ऋद्धिप्राप्ता अनृद्धिप्राप्ताश्च । तत्राद्याः षोढा, तद्यथा—तीर्थेशाः, सार्वभौमाः, वलदेवाः, वासुदेवाः, विद्याधराः, चारणाश्चेति । अनृद्धिप्राप्ता नवविधाः—क्षेत्रार्याः, जात्यार्याः, कुलार्याः, कर्म्मार्याः, शिल्पार्याः, भाषार्याः, ज्ञानार्याः, दर्शनार्याः, चारित्रार्याश्च । क्षेत्रार्याः तत्रार्यदेशोत्पन्नाः, ते चार्द्धपञ्चविंशतिः, तथा हि लोकप्रकाशे—"तत्र क्षेत्रार्या आर्यदेशोत्था—स्ते सार्धा पञ्चविंशतिः । अङ्गा वङ्गाः कलिङ्गाश्च, मगधाः कुरुकोशलाः ॥ १ ॥ काश्यः कुशार्त्ताः पञ्चाला विदेहा मलयास्तथा। वत्साः सुराष्ट्राः शाण्डिल्या वराटा वरणास्तथा ॥ २ ॥ दशार्णा जङ्गलाश्चैयाः, सिन्धुसौवीरका अपि । भङ्ग्या वृत्ताः शूरसेनाः, कुणाला लाटसंज्ञकाः ॥ ३ ॥ केकयार्द्धमिमे सार्द्धपञ्चविंशतिरीरिताः । नामानि राजधानीनां ब्रवीम्येषु क्रमादथ ॥ ४ ॥ चम्पा तथा ताम्रलिप्ती स्यात्काञ्चनपुरं पुरम् । राजगृहं गजपुरं, साकेतं च वाणारसी ॥ ५ ॥ शौर्यपुरं काम्पिल्यं, मिथिला भद्दिलं पुरं । कौशाम्बी च द्वारावती

नन्दिवच्छाभिधे पुरे ॥ ६ ॥ अच्छापुरं मृत्तिकावत्यहिच्छत्राभिधा पुरी । शुक्तिमती वीतभयं पापा माषपुरं पुरम् ॥ ७ ॥ मथुरा नगरी चैव श्रावस्ती नगरी वरा । कोटीवर्षं श्वेताम्बिका राजधान्यः क्रमादिमाः ॥ ८ ॥" इति ।

प्रज्ञापनायामप्येवं दृश्यते, तद्यथा—"रायगिह मगह च चंपा, अंगा तह तामलित्ति वंगा य । कंचणपुरं कलिंगा, वाणारसी-चेव कासी य ॥ १०८ ॥ साएय कोसला गय-पुरं च कुरुसोरियं कुसट्टा य । कंपिल्लं पंचाला, अहिछत्ता जंगला चेव ॥ १०९ ॥ वार-वई सोरट्ठा, मिहिला विदेहा य वच्छ कोसंवी । नंदिपुरं संडिल्ला, भद्दिलपुरमेव मलया य ॥ ११० ॥ वइराड वच्छ वरणा, अच्छा तह मत्तियावई दसण्णा । सोत्तियवई य चेदी, वीयभयं सिंधुसोवीरा ॥ १११ ॥ महुरा य सूरसेणा, पावा भंगी य मासपुरिवट्टा, सावत्थी य कुणाला, कोडीवरिसं च लाटा य ॥ ११२ ॥ सेयवियावि य णयरी केकयअद्धं च आरियं भणियं । इत्थुप्पत्ती जिणाणं, चक्कीणं राम-कण्हाणं ॥ ११३ ॥" इति । तथा च मगधविषये राजगृहं नगरम्, अङ्गविषये चम्पापुरी, वङ्गविषये तामलिप्तिपुरी, कलिङ्गविषये काञ्चनपुरम्, काशिदेशे वाराणसी, कोसलविषये साकेतपुरम्, कुरुदेशे गजपुरम्, कुशावर्त्तदेशे सौरिकपुरम्, पञ्चालदेशे काम्पिल्यपुरम्, जङ्गलेषु अहिच्छत्रा, सुराष्ट्रदेशे द्वारावती, विदेहविषये मिथिला, वत्सदेशे कौशाम्बी, शाण्डिल्यदेशे नन्दिपुरम्, मलयदेशे भद्दिलपुरम्, वैराटविषये वत्सपुरम्, वरणविषये अच्छापुरी, दशार्णविषये मृत्तिकावती, चेदिषु शौक्तिकावती, सिन्धुसौवीरविषये वीतभयम्, शूरसेनविषये मथुरा, भङ्गविषये पापापुरी, वर्त्तविषये मासानगरी, कुणालविषये श्रावस्ती, लाटविषये कोटिवर्षम्, केकयजनपदार्द्धे श्वेताम्बिकानगरीत्येतेषु सार्द्धषड्विंशतिजनपदेषु तीर्थकर-

चक्रवर्त्तिवलदेववासुदेवानामुत्पत्तिरत एवार्यक्षेत्रम्, शेषमनार्यमित्युक्ताः क्षेत्रार्याः । अधुना जात्यार्या उच्यन्ते–अभ्यर्चनीया जातयोऽम्बष्ठकलिन्दवैदेहवेंदगहरितचुञ्चुणरूपाः षट् एताभिर्जातिभिरुपेता जात्यार्या न शेषजातिभिरिति, तदुक्तं प्रज्ञापनायाम्–"से किं तं जाइआरिया ? जाइआरिया छव्विहा पं०, तं०–अंवट्ठा य कलिंदा य, विदेहा वेंदगाइया । हरिया चुंचुणा चेव, छ एया इब्भजाईओ ॥ ११४ ॥" इति उक्ता जात्यार्याः । कुलार्याः षट्प्रकाराः तद्यथा–उग्रकुला, भोगकुला, राजकुला, ईक्ष्वाकुकुलाः, कौरवकुला, ज्ञातकुलाश्च । एतेषु षट्सु कुलेषूत्पन्नाः कुलार्या इति । कर्म्मार्या वास्त्रिकसौत्रिककार्पासिकाद्या अनेकविधाः, तथा च प्रज्ञापनासूत्रम्–"से किं तं कम्मारिया ? कम्मारिया अणेगविहा पं०, तं०–दोसिया सुत्तिया कप्पासिया सुत्तवेयालिया भंडवेयालिया कोलालिया नरवाहणिया जे यावन्ने तहप्पगारा, से त्तं कम्मारिया" इति । तुन्नागाः, तन्तुवायाः, पट्टकाराः, दृतिकाराः, पिच्छिकाः, कटादिकाराः, काष्ठपादुकाकाराः, मुञ्जपादुकाकाराः, छत्रकाराश्चेत्याद्यनेकप्रकाराः शिल्पार्या भवन्ति, तदुक्तं प्रज्ञापनायाम्–"से किं तं सिप्पारिया ? सिप्पारिया अणेगविहा पं०, तं०–तुण्णागा तंतुवाया पट्टागा देयडा वरुट्टा छव्विया कट्ठपाउयारा मुंजपाउयारा छत्तारा वज्झारा पुच्छारा लेप्पारा चित्तारा संखारा दंतारा भंडारा जिज्झगारा सेल्लारा कोडिगारा, जे यावन्ने तहप्पगारा" इति शिल्पार्याः । भाषार्याः पुनर्येऽर्द्धमागध्या भाषया भाषन्ते । ज्ञानार्याः पञ्चविधाः प्रज्ञप्ताः, तद्यथा–आभिनिवोधिकज्ञानार्याः, श्रुतज्ञानार्याः, अवधिज्ञानार्याः, मनःपर्यवज्ञानार्याः, केवलज्ञानार्याश्चेति ज्ञानार्याः । अथ के ते दर्शनार्याः ? दर्शनार्या द्विविधाः प्रज्ञप्ताः, सरागदर्शनार्याः, वीतरागदर्शनार्याश्च । तत्र सकषायं यद्दर्शनं तेनार्यास्ते सरागदर्शनार्याः, वीतरागमुपशान्तकषायं क्षीणकषायं वा यद्दर्शनं तेनार्यास्ते वीतरागदर्श-

नार्याः। तत्र सरागदर्शनार्या दशप्रकारा भवन्ति–१ निसर्गरुचिः, २ उपदेशरुचिः, ३ आज्ञारुचिः, ४ सूत्ररुचिः,
५ बीजरुचिः, ६ अधिगमरुचिः, ७ विस्ताररुचिः, ८ क्रियारुचिः, ९ संक्षेपरुचिः, १० धर्मरुचिश्च, तत्र निसर्गः–स्वभाव-
स्तेन रुचिः–जिनप्रणीततत्त्वाभिलाषरूपा यस्य स निसर्गरुचिः, तेन यः परोपदेशमन्तरेणैव जातिस्मरणप्रतिभादिरूपया
मत्या जिनदृष्टान् जीवादीन् पदार्थान् द्रव्यक्षेत्रकालभावभेदतो नामादिभेदतो वा 'यथा जिनैः प्रज्ञप्तं तदेव सत्यं
नान्यदि'ति तत्त्वरूपतयाऽनुरोचयति आत्मसात्परिणामयति स निसर्गरुचिः। उपदेशो गुर्वादिना वस्तुतत्त्वकथनं तेन
रुचिः जिनोपदिष्टतत्त्वाभिलाषरूपा यस्य स उपदेशरुचिः। आज्ञा–सर्वज्ञप्रवचनात्मिका तस्यां रुचिः–अभिलाषो यस्य स
आज्ञारुचिः, 'जिनाज्ञैव मे प्रमाणं न शेषं युक्तिजालमि'ति योऽभिमन्यते स आज्ञारुचिरिति भावः। सूत्रम्–आचाराङ्गा-
दिकमङ्गप्रविष्टमावश्यकदशवैकालिकप्रमुखमङ्गबाह्यं च तेन रुचिर्यस्य स सूत्ररुचिः, सूत्रमधीयमानो यः सम्यक्त्वमवगाहते
प्रसन्नप्रसन्नतराध्यवसायो भवति स सूत्ररुचिरिति भावः। बीजं–यदेकमप्यनेकार्थप्रबोधोत्पादकं वचस्तेन रुचिर्यस्य स
बीजरुचिः, इदमत्र हृदयम्–यथोदकैकदेशगतोऽपि तैलबिन्दुः समस्तमुदकमाक्रामति तथैकदेशोत्पन्नरुचिरप्यात्मा तथा-
विधक्षयोपशमभावादशेषेषु रुचिमान्भवतीति बीजरुचिः। अधिगमोऽर्थतोऽङ्गोपाङ्गप्रकीर्णकस्य विशिष्टं यत् परिज्ञानं
तेन रुचिर्यस्य असावधिगमरुचिः। विस्तारः–व्यासः सकलद्वादशाङ्गस्य प्रत्यक्षादिप्रमाणैर्नैगमादिनयैश्च पर्यालोचनमिति
भावः, तेनोपबृंहिता रुचिर्यस्य स विस्ताररुचिः। क्रिया–सम्यक्संयमानुष्ठानं तत्र रुचिर्यस्य स क्रियारुचिरुपलक्षणात्
सम्यग्दर्शनज्ञानतपोविनयाष्टप्रवचनमात्रादिषु यः क्रियाभावः सोऽपि क्रियारुच्यन्तर्भूत एवेति। संक्षेपः–संग्रहस्तत्र रुचि-

र्यस्य स संक्षिप्तरुचिः, उपादेयत्वेनानभिगृहीतकुदृष्टिः परदर्शनपरिज्ञानमात्रविकलो जिनप्रवचनेऽविशारद इत्थंभूतः संक्षिप्तरुचिर्भवतीति भावः । धर्मे–धर्मास्तिकायादीनां गत्युपष्टम्भकत्वादिरूपे स्वभावे, जिनाभिहिते श्रुतधर्मे चारित्रधर्मे वा–रुचिर्यस्य स धर्मरुचिश्च । तदुक्तं–"निसग्गुवएसरुई, आणरुई सुत्तवीयरुइमेव । अभिगमवित्थाररुई, किरियासंखेवधम्मरुई ॥ १ ॥ भुयत्थेणाहियगया, जीवाजीवे य पुण्णपावं च । सहसंमुइया आसवसंवरे य रोएइ उ निसग्गो ॥ २ ॥ जो जिणदिट्ठे भावे, चउविहे सद्दहाइ सयमेव । एमेव नन्नहत्ति य निसग्गरुइत्ति नायव्वो ॥ ३ ॥ एए चेव उ भावे, उवदिट्ठे जो परेण सद्दहइ । छउमत्थेण जिणेण व, उवएसरुइत्ति नायव्वो ॥ ४ ॥ जो हेउमयाणंतो, आणाए रोयए पवयणं तु । एमेव नन्नहत्ति य, एसो आणारुई नाम ॥ ५ ॥ जो सुत्तमहिज्जन्तो सुएण ओगाहई उ सम्मत्तं । अंगेण वाहिरेण व सो सुत्तरुइत्ति णायव्वो ॥ ६ ॥ एगपएणेगाइं पदाइं जो पसरइ उ सम्मत्तं । उदए व्व तिल्लबिंदू सो वीयरुइत्ति नायव्वो ॥ ७ ॥ सो होइ अभिगमरुई, सुयनाणं जस्स अत्थओ दिट्ठं । इक्कारस अंगाइं, पइन्नगा दिट्ठिवाओ य ॥ ८ ॥ दव्वाण सव्वभावा, सव्वपमाणेहिं जस्स उवलद्धा । सव्वाहिं नयविहीहिं, वित्थाररुइत्ति नायव्वो ॥ ९ ॥ दंसणनाणचरित्ते, तव विणए सव्वसमिइगुत्तीसु । जो किरियाभावरुई, सो खलु किरियारुई नाम ॥ १० ॥ अणभिग्गहियकुदिट्ठी संखेवरुइत्ति होइ नायव्वो । अविसारओ पवयणे अणभिग्गहिओ य सेसेसु ॥ ११ ॥ जो अत्थिकायधम्मं, सुयधम्मं खलु चरित्तधम्मं च । सद्दहइ जिणाभिहियं, सो धम्मरुइत्ति नायव्वो ॥ १२ ॥ परमत्थसंथवो वा, सुदिट्ठपरमत्थसेवणा वावि । वावन्नकुदंसणवज्जणा य सम्मत्तसद्दहणा ॥ १३ ॥ निस्संकिय निक्कंखिय निव्वितिगिच्छा अमूढदिट्ठी य । उववूहथिरीकरणे वच्छल्लपभावणे अट्ठ ॥ १४ ॥" इत्युक्ताः सरागदर्शनार्याः । वीतरागदर्शनार्या द्विप्रकाराः–उपशान्तकषायवीतरागदर्शनार्याः क्षीणकषायवीतरागदर्शनार्याश्च ।

उपशान्तकपायवीतरागदर्शनार्या अपि द्विप्रकाराः—प्रथमसमयोपशान्तकषायवीतरागदर्शनार्या अप्रथमसमयोपशान्तक-
पायाश्च, यद्वा चरमसमयोपशान्तकपायवीतरागदर्शनार्या अचरमसमयोपशान्तकषायवीतरागदर्शनार्याश्च । क्षीणकषाय-
वीतरागदर्शनार्या अपि द्विप्रकाराः—छद्मस्थक्षीणकपायवीतरागदर्शनार्याः केवलिक्षीणकषायवीतरागदर्शनार्याश्च । छद्मस्थ-
क्षीणकपायवीतरागदर्शनार्या अपि द्विविधाः—स्वयंबुद्धछद्मस्थ क्षीणकषायवीतरागदर्शनार्या बुद्धवोधितछद्मस्थवीतरागदर्श-
नार्याश्च । तत्राप्याद्या द्विप्रकाराः—प्रथमसमयस्वयंबुद्धछद्मस्थक्षीणकषायवीतरागदर्शनार्या अप्रथमसमयस्वयंबुद्धच्छद्मस्थ-
क्षीणकपायवीतरागदर्शनार्याश्च, यद्वा चरमसमयस्वयंबुद्धछद्मस्थक्षीणकषायवीतरागदर्शनार्या अचरमसमयस्वयंबुद्धछद्मस्थ-
क्षीणकपायवीतरागदर्शनार्याश्च । बुद्धवोधितछद्मस्थक्षीणकपायवीतरागदर्शनार्या द्विप्रकारास्तद्यथा—प्रथमसमयबुद्धवोधितछ-
द्मस्थक्षीणकपायवीतरागदर्शनार्या अप्रथमसमयबुद्धवोधितछद्मस्थक्षीणकषायवीतरागदर्शनार्याश्च, यद्वा चरमसमयबुद्धवोधि-
तच्छद्मस्थक्षीणकपायवीतरागदर्शनार्या अचरमसमयबुद्धवोधितच्छद्मस्थक्षीणकषायवीतरागदर्शनार्याश्च । केवलिक्षीणकषाय-
वीतरागदर्शनार्या द्विप्रकारास्तद्यथा—सयोगिकेवलिक्षीणकषायवीतरागदर्शनार्या अयोगिकेवलिक्षीणकषायवीतरागदर्शना-
र्याश्च । सयोगिकेवलिक्षीणकषायवीतरागदर्शनार्या अपि द्विभेदाः—प्रथमसमयसयोगिकेवलिक्षीणकषायवीतरागदर्शनार्या अ-
प्रथमसमयसयोगिकेवलिक्षीणकषायवीतरागदर्शनार्याश्च । यद्वा चरमसमयसयोगिकेवलिक्षीणकषायवीतरागदर्शनार्या अचरम-
समयसयोगिकेवलिक्षीणकपायवीतरागदर्शनार्याश्च । अयोगिकेवलिक्षीणकषायवीतरागदर्शनार्या अपि द्विविधाः प्रज्ञप्तास्तद्य-
था—प्रथमसमयायोगिकेवलिक्षीणकषायवीतरागदर्शनार्या अप्रथमसमयायोगिकेवलिक्षीणकषायवीतरागदर्शनार्याश्च । यद्वा च-

रमसमयायोगिकेवलिक्षीणकषायवीतरागदर्शनायां अचरमसमयायोगिकेवलिक्षीणकषायवीतरागदर्शनायांश्च । तदुक्तं प्रज्ञापनायाम्—"से किं तं वीयरायदंसणायरिया ? वीयरायदंसणायरिया दुविहा पं०, तं०—उवसंतकसायवीयरायदंसणारिया य खीणकसायवीयरायदंसणारिया य । से किं तं उवसंतकसायवीयरायदंसणारिया ? उवसंतकसायवीयरायदंसणारिया दुविहा पं०, तं०—पढमसमयउवसंतकसायवीयरायदंसणारिया य अपढमसमयउवसंतकसायवीयरायदंसणारिया य, अहवा चरिमसमयउवसंतकसायवीयरायदंसणारिया य अचरिमसमयउवसंतकसायवीयरायदंसणारिया य । से किं तं खीणकसायवीयरायदंसणारिया ? खीणकसायवीयरायदंसणारिया दुविहा पं०, तं०—छउमत्थखीणकसायवीयरायदंसणारिया य केवलिखीणकसायवीयरायदंसणारिया य । से किं तं छउमत्थखीणकसायवीयरायदंसणारिया ? छउमत्थखीणकसायवीयरायदंसणारिया दुविहा पं०, तं०—सयंबुद्धछउमत्थखीणकसायवीयरायदंसणारिया य बुद्धबोहियखीणकसायवीयरायदंसणारिया य । से किं तं सयंबुद्धछउमत्थखीणकसायवीयरायदंसणारिया ? सयंबुद्धछउमत्थखीणकसायवीयरायदंसणारिया दुविहा पं०, तं०—पढमसमयसयंबुद्धछउमत्थखीणकसायवीयरायदंसणारिया य अपढमसमयसयंबुद्धछउमत्थखीणकसायवीयरायदंसणारिया य अहवा चरिमसमयसयंबुद्धछउमत्थखीणकसायवीयरायदंसणारिया य अचरिमसमयसयंबुद्धछउमत्थखीणकसायवीयरायदंसणारिया य, से तं सयंबुद्धछउमत्थखीणकसायवीयरायदंसणारिया । से किं तं बुद्धबोहियछउमत्थखीणकसायवीयरायदंसणारिया ? बुद्धबोहियछउमत्थखीणकसायवीयरायदंसणारिया दुविहा पं०, तं०—पढमसमयबुद्धबोहियछउमत्थखीणकसायवीयरायदंसणारिया अपढमसमयबुद्धबोहियछउमत्थखीणकसायवीयरायदंसणारिया य, अहवा चरिमसमयबुद्धबोहियछउमत्थखीणकसायवीयरायदंसणारिया य अचरिमसमयबुद्धबोहियछउमत्थखीणकसायवीयरायदंसणारिया य, से त्तं बुद्धबोहियछउमत्थखीणकसायवीयरायदंसणारिया, से त्तं छउमत्थखीणकसायवीयराय-

दंसणारिया । से किं तं केवलिखीणकसायवीयरायदंसणारिया ? केवलिखीणकसायवीयरायदंसणारिया दुविहा पं०, तं०—सजोगिकेवलिखीणकसायवीयरायदंसणारिया य अजोगिकेवलिखीणकसायवीयरायदंसणारिया य । से किं तं सजोगिकेवलिखीणकसायवीयरायदंसणारिया ? सजोगिकेवलिखीणकसायवीयरायदंसणारिया दुविहा पं०, तं०—पढमसमयसजोगिकेवलिखीणकसायवीयरायदंसणारिया य अपढमसमयसजोगिकेवलिखीणकसायवीयरायदंसणारिया य, अहवा चरिमसमयसजोगिकेवलिखीणकसायवीयरायदंसणारिया य, अचरमसमयसजोगिकेवलिखीणकसायवीयरायदंसणारिया य, से त्तं सजोगिकेवलिखीणकसायवीयरायदंसणारिया । से किं तं अजोगिकेवलिखीणकसायवीयरायदंसणारिया ? अजोगिकेवलिखीणकसायवीयरायदंसणारिया दुविहा पं०, तं०—पढमसमयअजोगिकेवलिखीणकसायवीयरायदंसणारिया य अपढमसमयअजोगिकेवलिखीणकसायवीयरायदंसणारिया य, अहवा चरिमसमयअजोगिकेवलिखीणकसायवीयरायदंसणारिया य अचरिमसमयअजोगिकेवलिखीणकसायवीयरायदंसणारिया य, से त्तं अयोगिकेवलिखीणकसायवीयरायदंसणारिया, से त्तं केवलिखीणकसायवीयरायदंसणारिया, से त्तं खीणकसायवीयरायदंसणारिया, से त्तं दंसणारिया" इत्युक्ता दर्शनार्याः । चारित्रार्या द्विप्रकारास्तद्यथा—सरागचारित्रार्या वीतरागचारित्रार्याश्च । सरागचारित्रार्या द्विभेदाः—सूक्ष्मसम्परायसरागचारित्रार्या बादरसम्परायसरागचारित्रार्याश्च । सूक्ष्मसम्परायसरागचारित्रार्या द्विविधाः प्रज्ञप्ताः—प्रथमसमयसूक्ष्मसम्परायसरागचारित्रार्या अप्रथमसमयसूक्ष्मसम्परायसरागचारित्रार्याश्च, अथवा चरमसमयसूक्ष्मसम्परायसरागचारित्रार्या अचरमसमयसूक्ष्मसम्परायसरागचारित्रार्याश्च । अथवा सूक्ष्मसम्परायसरागचारित्रार्या द्विविधाः—संक्लिश्यमानसूक्ष्मसम्परायसरागचारित्रार्या विशुद्ध्यमानसूक्ष्मसम्परायसरागचारित्रार्याश्च । बादरसम्परायसरागचारित्रार्या अपि

द्विप्रकाराः—प्रथमसमयबादरसम्परायसरागचारित्रार्या अप्रथमसमयबादरसम्परायसरागचारित्रार्याश्च, अथवा चरमसमयबादरसम्परायसरागचारित्रार्या अचरमसमयबादरसम्परायसरागचारित्रार्याश्च । यद्वा बादरसम्परायसरागचारित्रार्या द्विविधाः—संक्लिश्यमानबादरसम्परायसरागचारित्रार्या विशुद्ध्यमानबादरसम्परायसरागचारित्रार्याश्चेत्युक्ताः सरागचारित्रार्याः । वीतरागचारित्रार्या उपशान्तक्षीणकषायभेदेन द्विविधाः । उपशान्तकषायवीतरागचारित्रार्या द्विभेदाः—प्रथमसमयोपशान्तकषायवीतरागचारित्रार्या अप्रथमसमयोपशान्तकषायवीतरागचारित्रार्याश्च, अथवा चरमसमयोपशान्तकषायवीतरागचारित्रार्या अचरमसमयोपशान्तकषायवीतरागचारित्रार्याश्च । क्षीणकषायवीतरागचारित्रार्या द्विप्रकारास्तद्यथा—छद्मस्थक्षीणकषायवीतरागचारित्रार्याः केवलिक्षीणकषायवीतरागचारित्रार्याश्च । छद्मस्थक्षीणकषायवीतरागचारित्रार्याः पुनर्द्विभेदाः—स्वयंबुद्धछद्मस्थक्षीणकषायवीतरागचारित्रार्या बुद्धबोधितछद्मस्थक्षीणकषायवीतरागचारित्रार्याश्च । स्वयंबुद्धछद्मस्थक्षीणकषायवीतरागचारित्रार्या द्विप्रकारास्तद्यथा—प्रथमसमयस्वयंबुद्धछद्मस्थक्षीणकषायवीतरागचारित्रार्या अप्रथमसमयस्वयंबुद्धछद्मस्थक्षीणकषायवीतरागचारित्रार्याश्च, अथवा चरमसमयस्वयंबुद्धच्छद्मस्थक्षीणकषायवीतरागचारित्रार्या अचरमसमयस्वयंबुद्धछद्मस्थक्षीणकषायवीतरागचारित्रार्याश्च । बुद्धबोधितच्छद्मस्थक्षीणकषायवीतरागचारित्रार्या अप्येवं प्रकारा बोद्धव्याः । केवलिक्षीणकषायवीतरागचारित्रार्या द्विप्रकाराः—सयोगिकेवलिक्षीणकषायवीतरागचारित्रार्या अयोगिकेवलिक्षीणकषायवीतरागचारित्रार्याश्च । सयोगिकेवलिक्षीणकषायवीतरागचारित्रार्या द्विप्रकाराः—प्रथमसमयसयोगिकेवलिक्षीणकषायवीतरागचारित्रार्या अप्रथमसमयसयोगिकेवलिक्षीणकषायवीतरागचारित्रार्याश्च, अथवा चरमसमयसयोगि-

केवलिक्षीणकषायवीतरागचारित्रार्यां अचरमसमयसयोगिकेवलिक्षीणकषायवीतरागचारित्रार्याश्च । अयोगिकेवलिक्षीणक-
पायवीतरागचारित्रार्या द्विप्रकाराः—प्रथमसमयायोगिकेवलिक्षीणकषायवीतरागचारित्रार्या अप्रथमसमयायोगिकेवलिक्षीण-
कषायवीतरागचारित्रार्याश्च, अथवा चरमसमयायोगिकेवलिक्षीणकषायवीतरागचारित्रार्या अचरमसमयायोगिकेवलिक्षी-
णकषायवीतरागचारित्रार्याश्च । अथवा चारित्रार्याः पञ्चप्रकाराः—१ सामायिकचारित्रार्याः, २ छेदोपस्थापनीयचारि-
त्रार्याः, ३ परिहारविशुद्धिचारित्रार्याः, ४ सूक्ष्मसम्परायचारित्रार्याः, ५ यथाख्यातचारित्रार्या इति । सामायिकचारि-
त्रार्या द्विप्रकारास्तद्यथाइत्वरसामायिकचारित्रार्या यावत्कथिकसामायिकचारित्रार्याश्च । छेदोपस्थापनीयचारित्रार्या द्विप्र-
काराः—सातिचारछेदोपस्थापनीयचारित्रार्या निरतिचारछेदोपस्थापनीयचारित्रार्याश्च । परिहारविशुद्धिकचारित्रार्या अपि
द्विभेदाः—निर्विशमानका निर्विष्टकायिकाश्च । सूक्ष्मसम्परायचारित्रार्या द्विधा—संक्लिश्यमाना विशुद्ध्यमानाश्च । यथा-
ख्यातचारित्रार्या अपि छद्मस्थकेवलिभेदात् द्विप्रकारा भवन्तीत्युक्ताश्चारित्रार्याः । तदेवं नवविधा अनृद्धिप्राप्ता आर्या
भाविताः । एते कर्मभूमिजा गर्भजमनुष्याः पञ्चभरतपञ्चैरावतपञ्चमहाविदेहसम्भवा एव भवन्ति, तत्र भरतदेवनिवासस-
म्बन्धात् भारतम्, एवमन्यत्रापि वाच्यम् । उक्ताः कर्म्मभूमिजाः । तत्र कर्म कृषिवाणिज्यादि मोक्षानुष्ठानं वा, तत्-
प्रधाना भूमिः कर्मभूमिस्तत्र जाताः कर्मभूमिजाः, यथोक्तकर्मविकलभूमौ जाताश्चाकर्मभूमिजाः, ते च त्रिंशद्विधाः प्रज्ञप्ताः,
तच्च त्रिंशद्विधत्वं क्षेत्रभेदात्, तद्यथा—पञ्चभिर्हैमवतैः, पञ्चभिर्हैरण्यवतैः, पञ्चभिर्हरिवर्षैः, पञ्चभी रम्यकवर्षैः, पञ्चभि-
र्देवकुरुभिः, पञ्चभिरुत्तरकुरुभिश्च भिद्यमानास्त्रिंशद्विधा भवन्तीत्युक्ता अकर्मभूमका गर्भजमनुष्याः । तत्रान्तरशब्दो

मध्यवाची, अन्तरे लवणसमुद्रस्य मध्ये द्वीपाः, अन्तरद्वीपाः, तद्गता अन्तरद्वीपगाः, ते च षट्पञ्चाशत्प्रकाराः कर्म्मविपाकवृत्तितो भाव्यन्ते–'इह जंबूद्वीपे भरतस्य हैमवतक्षेत्रस्य च सीमाकारी भूमिनिमग्नपञ्चविंशतियोजनो योजनशतोच्छ्रयपरिमाणो भरतक्षेत्रापेक्षया द्विगुणविष्कम्भो हेममयश्चीनपट्टवर्णो नानावर्णविशिष्टद्युतिमणिनिकरपरिमण्डितोभयपार्श्वः सर्वत्र तुल्यविस्तारो गगनमण्डलोल्लेखिरत्नमयैकादशकूटोपशोभितो वज्रमयतलविविधमणिकनकमण्डिततटभागदशयोजनावगाढपूर्वपश्चिमयोजनसहस्रायामदक्षिणोत्तरपञ्चयोजनशतविस्तारः पद्महदशोभितशिरोमध्यभागः, सर्वतः कल्पपादपश्रेणिरमणीयः पूर्वापरपर्यन्ताभ्यां लवणोदार्णवजलसंस्पर्शी हिमवान् नाम पर्वतः, तस्य लवणोदार्णवजलसंस्पर्शादारभ्य पूर्वस्यां पश्चिमायां च दिशि प्रत्येकं द्वे द्वे गजदन्ताकारे दंष्ट्रे विनिर्गते, तत्रैशान्यां दिशि या विनिर्गता दंष्ट्रा तस्यां त्रीणि योजनशतानि लवणसमुद्रमवगाह्य योजनशतत्रयायामविष्कम्भः किञ्चिन्न्यूनैकोनपञ्चाशदधिकनवयोजनशतपरिरय एकोरुकनामा द्वीपो वर्त्तते । अयं च पञ्चधनुःशतप्रमाणविष्कम्भया द्विगव्यूतोच्छ्रितया पद्मवरवेदिकया सर्वतः परिमण्डितोऽस्ति, सापि पद्मवरवेदिका सर्वतो वनखण्डपरिक्षिप्ता, तस्य च वनखण्डस्य चक्रवालतया विष्कम्भो देशोने द्वे योजने परिक्षेपश्च पद्मवरवेदिकाप्रमाणः । तथा तस्यैव हिमवतः पर्वतस्य पर्यन्तादारभ्य दक्षिणपूर्वस्यां दिशि त्रीणि योजनशतानि लवणसमुद्रमवगाह्य द्वितीयदंष्ट्राया उपरि एकोरुकद्वीपप्रमाण आभासिकनामा द्वीपो वर्त्तते । तथा तस्यैव हिमवतः पश्चिमायां दिशि पर्वतादारभ्य दक्षिणपश्चिमायां त्रीणि योजनशतानि लवणसमुद्रमवगाह्य दंष्ट्राया उपरि यथोक्तप्रमाणो वैषाणिकनामा द्वीपः । तथा तस्यैव हिमवतः पश्चिमोत्तरस्यां दिशि त्रीणि योजनशतानि लव-

णसमुद्रमवगाह्य दंष्ट्राया उपरि पूर्वोक्तप्रमाणो नाङ्गुलिकनामा द्वीपः । एवमेते चत्वारो द्वीपा हिमवतश्चतसृष्वपि विदिक्षु तुल्यप्रमाणा अवतिष्ठन्ते । तत एषामेकोरुकादीनां चतुर्णां द्वीपानां परतो यथाक्रमं पूर्वोत्तरादिविदिक्षु प्रत्येकं चत्वारि चत्वारि योजनशतान्यतिक्रम्य चतुर्योजनशतायामविष्कम्भाः किञ्चिन्न्यूनपञ्चषष्टिसहितद्वादशयोजनशतपरिक्षेपा यथोक्तपद्मवरवेदिकावनखण्डमण्डितपरिसरा जम्बूद्वीपवेदिकातः चतुर्योजनशतप्रमाणान्तरा हयकर्णगजकर्णगोकर्णशष्कुलीकर्णनामानश्चत्वारो द्वीपाः, तद्यथा–एकोरुकस्य परतो हयकर्णः, आभासिकस्य परतो गजकर्णः, वैषाणिकस्य परतो गोकर्णः, नाङ्गुलिकस्य च परतः शष्कुलीकर्णः, एवमग्रेऽपि भावना कार्या । तत एतेषामपि हयकर्णादीनां चतुर्णां द्वीपानां परतः पुनरपि यथाक्रमं पूर्वोत्तरादिविदिक्षु प्रत्येकं पञ्च योजनशतान्यतिक्रम्य पञ्चयोजनशतायामविष्कम्भा एकाशीत्यधिकपञ्चदशयोजनशतपरिक्षेपाः पूर्वोक्तप्रमाणपद्मवरवेदिकावनखण्डमण्डितबाह्यप्रदेशा जम्बूद्वीपवेदिकातः पञ्चयोजनशतप्रमाणान्तरा आदर्शमुखमेण्ढमुखायोमुखगोमुखनामानश्चत्वारो द्वीपाः । एतेषामपि आदर्शमुखादीनां चतुर्णां द्वीपानां परतो भूयोऽपि यथाक्रमं पूर्वोत्तरादिविदिक्षु प्रत्येकं षड्योजनशतान्यतिक्रम्य षड्योजनशतायामविष्कम्भाः सप्तनवत्यधिकाष्टादशयोजनशतपरिक्षेपा यथोक्तप्रमाणपद्मवरवेदिकावनखण्डमण्डितपरिसरा जम्बूद्वीपवेदिकातः षड्योजनशतप्रमाणान्तरा अश्वमुख–हस्तिमुख–सिंहमुख–व्याघ्रमुखनामानश्चत्वारो द्वीपाः । एतेषामप्यश्वमुखादीनां चतुर्णां द्वीपानां परतो यथाक्रमं पूर्वोत्तरादिविदिक्षु प्रत्येकं सप्त सप्त योजनशतान्यतिक्रम्य सप्तयोजनशतायामविष्कम्भास्त्रयोदशाधिकद्वाविंशतियोजनशतपरिरयाः पूर्वोक्तप्रमाणपद्मवरवेदिकावनखण्डसमवगूढा जम्बूद्वीपवेदिकातः सप्तयोजनशतप्रमाणान्तरा

अश्वकर्णहरिकर्णाकर्णकर्णप्रावरणनामानश्चत्वारो द्वीपाः। तत एतेषामश्वकर्णादीनां चतुर्णां द्वीपानां परतो यथाक्रमं पूर्वोत्तरादिविदिक्षु प्रत्येकमष्टावष्टौ योजनशतान्यतिक्रम्याष्टयोजनशतायामविष्कम्भा एकोनत्रिंशदधिकपञ्चविंशतियोजनशतपरिक्षेपा यथोक्तप्रमाणपद्मवरवेदिकावनखण्डमण्डितपरिसरा जम्बूद्वीपवेदिकातोऽष्टयोजनशतप्रमाणान्तरा उल्कामुख-मेघमुख-विद्युन्मुख-विद्युद्दन्ताभिधानाश्चत्वारो द्वीपाः। ततोऽमीषामप्युल्कामुखादीनां चतुर्णां द्वीपानां परतो यथाक्रमं पूर्वोत्तरादिविदिक्षु प्रत्येकं नवनवयोजनशतान्यतिक्रम्य नवयोजनशतायामविष्कम्भाः पञ्चचत्वारिंशदधिकाष्टाविंशतियोजनशतपरिक्षेपा यथोक्तप्रमाणपद्मवरवेदिकावनखण्डमण्डितपरिसरा जम्बूद्वीपवेदिकातो नवयोजनशतप्रमाणान्तरा घनदन्त-लष्टदन्त-गूढदन्त-शुद्धदन्तनामानश्चत्वारो द्वीपाः। एवमेते सप्त चतुष्का हिमवति पर्वते चतसृष्वपि विदिक्षु व्यवस्थिताः सर्वसंख्ययाऽष्टाविंशतिः। एवं हिमवत्तुल्यवर्णप्रमाणे पद्महृदप्रमाणायामविष्कम्भावगाहपुण्डरीकहृदोपशोभिते शिखरिण्यपि लवणोदार्णवजलसंस्पर्शादारभ्य यथोक्तप्रमाणान्तराश्चतसृषु विदिक्षु व्यवस्थिता एकोरुकादिनामानोऽक्षुण्णापान्तरालायामविष्कम्भा अष्टाविंशतिसंख्या द्वीपा वक्तव्याः, एवं सर्वसंख्ययैते षट्पञ्चाशदन्तरद्वीपा भवन्ति। एतद्गता मनुष्या अपि उपचारात् एतन्नामानो भवन्ति, तात्स्थ्यात्तद्व्यपदेशो यथा पञ्चालदेशनिवासिनः पुरुषाः पञ्चाला इति। ते च मनुष्या वज्रऋषभनाराचसंहनिनः समचतुरस्रसंस्थानाः सर्वाङ्गोपाङ्गसुन्दराः कमण्डलुकलशयूपस्तूपवापीध्वजपताकासौवस्तिकयवमत्स्यमकरकूर्मरथवरस्थालांशुकाष्टापदाङ्कुशसुप्रतिष्ठकमयूरश्रीदामाभिषेकतोरणमेदिनीजलधिवरभवनादर्शपर्वतगजवृषभसिंहछत्रचामररूपप्रशस्तोत्तमद्वात्रिंशल्लक्षणधराः, स्वभावत एव सुरभिवदनाः, प्रतनुक्रोधमानमायालोभाः, सन्तो-

षिणो निरौत्सुक्याः, मार्दवार्जवसम्पन्नाः, सत्यपि मनोहारिणि मणिकनकमौक्तिकादौ ममत्वकारणे ममत्वाभिनिवेशरहिताः, सर्वथापगतवैरानुबन्धाः, हस्त्यश्वकरभगोमहिष्यादिसद्भावेऽपि तत्परिभोगपराङ्मुखाः, पादविहारिणो ज्वरादिरोगयक्षभूतपिशाचादिग्रहमारिव्यसनोपनिपातविकलाः, परस्परप्रेष्यप्रेषकभावरहितत्वादहमिन्द्रा इव; तेषां पृष्ठकरण्डकानि चतुःषष्टिसंख्याकानि, चतुर्थातिक्रमे चाहारग्रहणं—आहारोऽपि च न शाल्यादिधान्यनिष्पन्नः किन्तु पृथिवीमृत्तिका, कल्पद्रुमाणां पुष्पफलानि च, तथाहि—'जायन्ते खलु तत्रापि विस्रसात एव शालिगोधूममुद्गमाषादीनि धान्यानि परं न तानि मनुष्याणामुपभोगं गच्छन्ति'। या तु पृथिवी सा शर्करातोऽप्यनन्तगुणमाधुर्या, यश्च कल्पद्रुमफलानामास्वादः, स चक्रवर्त्तिभोजनादप्यधिकगुणः, यदुक्तम्—'तेसि णं भंते ! पुप्फफलाणं केरिसए आसाए पन्नत्ते ? गोयमा ! से जहानामए रन्नो चाउरंतस्स चक्कवट्टिस्स कल्लाणे भोयणजाए सयसहस्सनिप्फन्ने वन्नोवए गंधोवए रसोवए फासोवए आसायणिज्जे दप्पणिज्जे मयणिज्जे बिंहणिज्जे सव्विंदियगायपल्हायणिज्जे आसाएणं पन्नत्ते, एत्तोपि इट्ठतराए चेव पन्नत्ते" इति। ततः पृथिवी कल्पपादपपुष्पफलानि च तेषामाहारः। तथाभूतं चाहारमाहारिणः प्रासादादिसंस्थाना ये गृहाकाराः कल्पद्रुमास्तेषु यथासुखमवतिष्ठन्ते। न च तत्र क्षेत्रे दंशमशकयूकामत्कुणमक्षिकादयः शरीरोपद्रवकारिणो जन्तव उपजायन्ते। येऽपि जायन्ते भुजगव्याघ्रसिंहादयस्तेऽपि मनुष्याणां न बाधायै प्रभवन्ति। नापि ते परस्परं हिंस्यहिंसकभावे वर्त्तन्ते, क्षेत्रानुभावतो रौद्रभावराहित्यात्। मनुष्ययुगलानि च पर्यवसानसमये युगलं प्रसुवते, तत्पुनर्युगलमेकोनाशीतिं दिनानि पालयन्ति। तेषां शरीरोच्छ्रयमष्टौ धनुःशतानि। पल्योपमासंख्येयभागप्रमाणायुः। स्तोककषायतया स्तोकप्रेमानुबन्धतया च मृत्वा दिवमुपसर्पन्ति। मरणं च तेषां जृम्भिका-

काशक्षुतादिमात्रव्यापारपुरस्सरं भवति, न शरीरपीडारंभपुरस्सरमिति । एते चान्तरद्वीपवासिनो मनुष्या म्लेच्छा एव भवन्ति, तदुक्तं तत्त्वार्थवृत्तौ–"तथान्तरद्वीपकाः किल म्लेच्छा एवेति, क्षेत्रादिषट्कविपर्यासात्" इति । तीर्थकरजन्मादिरहितत्वेनाकर्म्मभूमिजाश्चैते उच्यन्त इत्युक्ता अन्तरद्वीपवासिनो मनुजाः । सम्मूर्च्छिममनुजान् विहाय सर्वेऽपि मनुजाः पर्याप्तापर्याप्तभेदात् द्विप्रकाराः, सम्मूर्च्छिमास्तु अपर्याप्ता एवेत्युक्तमेव प्रागित्युक्ता मनुजाः ।

अथ त्रसकायान्तर्गताः प्राग्निरूपितशब्दार्था देवाः किंस्वरूपाः? किमेकरूपा भेदभाजो वेति चेत्? अत्रोच्यते–स्वच्छन्दचारित्वेन दीव्यन्ति क्रीडन्तीति देवाः, अनवरतक्रीडासक्तचेतस इति भावः । यद्वाऽस्थिमांसासृक्प्रबन्धवर्जितसर्वाङ्गसुन्दरभास्वरशरीरत्वेन द्योतन्त इति देवाः । अथवा विद्यामन्त्राञ्जनादिभिर्विना पूर्वकृततपोऽपेक्षजन्मलाभसमनन्तरमेवाकाशगतिभाजो देवाः, अनालम्बनाकाशचारिणां देवानां गतिरप्यतिशयवती, तदुक्तं लोकस्य महत्त्वनिरूपणप्रसङ्गे विवाहप्रज्ञप्त्याम्–"के महालए णं भंते! लोए पन्नत्ते?, गोयमा! अयं च णं जंबुद्दीवे दीवे सव्वदीवसमुद्दाण मज्झे खुड्डुलए पण्णत्ते। ते णं काले णं ते णं समए णं छद्दे वा महड्ढिया जम्बुद्दीवे दीवे मंदरपव्वए मंदरचूलियं सव्वओ समन्ता संपरिक्खिवित्ता णं चिट्ठेज्जा अहे णं चत्तारि दिसाकुमारी महयरियाओ चत्तारि बलिपिंडे गहाय जंबुद्दीवस्स दीवस्स चउसु वि दारेसु बहिराभिमुहीओ ठिच्चा ते चत्तारि बलिपिंडे जमगसमगं बहिराभिमुहे पव्वाहेज्ज। पभू णं गोयमा! ततो एगमेगे देवे ते चत्तारि वि बलिपिण्डे धरणितलमसंपत्ते खिप्पामेव पडिसाहरित्तए ते णं गोयमा उक्किट्ठाए जाव देवगतीए एगदेवे पुरत्थाभिमुहे पयाते एवं छस्सु वि दिसासु पयाता। ते णं काले णं ते णं समए णं वाससहस्साउए दारए पयाते, तए णं तस्स दारगस्स अम्मापियरो पहीणा भवन्ति नो चेव णं ते देवा लोयंतं संपाउणंति, तए णं तस्स दारगस्स आउए पहीणे

भवति नो चेव णं ते देवा लोयंतं संपाउणंति, तए णं तस्स दारगस्स अट्ठिमिंजे पहीणा भवन्ति नो चेव णं ते लोयंतं संपाउणंति, तए णं तस्स दारगस्स सत्तमे वि कुलवंसे पहीणे भवति नो चेव णं ते लोयंतं संपाउणंति, तते णं तस्स दारगस्स नामगोत्ते विप्पहीणे भवति नो चेव णं संपाउणंति । तेसि णं भंते देवाणं किं गए बहुए अगए बहुए, गोयमा! गए बहुए नो अगए बहुए, गतातो से अगते असंखिज्जति भागे, अगतातो से गए असंखेज्जगुणे, एवं महालए गोयमा! लोए पण्णत्ते" इति । तथा प्रज्ञापनायां विमानमहत्त्वनिरूपणप्रसङ्गेऽप्युक्तम्—"के महालया णं भंते! विमाणा पण्णत्ता ?, गोयमा! अयण्णं जंबुद्दीवे दीवे सव्वदीवसमुद्दाणं मज्झे खुड्डुलए देवे महिड्ढिए जाव महाणुभागे जाव इणामेवत्ति कट्टु केवलकप्पं जम्बुद्दीवं दीवं तिहिं अच्छराणिवातेहिं तिसत्तक्खुत्तो अणुपरियट्टित्ता णं हव्वमागच्छेज्जा, से णं देवे ताए उक्किट्ठाए तुरियाए चंडाए चवलाए सीहाए उद्धूताए जयणाए छेयाए दिव्वाए देवगतीए जाव एगाहं वा वियाहं वा तियाहं वा उक्कोसेणं छम्मासे वितिवएज्जा अत्थेगइयं विमाणं वीइवएज्जा अत्थेगइयं नो वीतिवएज्जा, एवं महालया णं गोयमा! विमाणा पण्णत्ता" इति एवंविधा गतयः किल देवानां विमध्यमाः । देवानां चोत्कृष्टतमा अपि गतयः सन्ति, अत एव तीर्थपादिजन्मकल्याणकादिष्वच्युतान्ता अपि देवा अत्र शीघ्रतया समागच्छन्ति । एवमन्येऽपि विजिगीषादयो धात्वर्था यथासम्भवं वाच्याः । एषा च गतिर्नामकर्मोदयजनिता सातिशयक्रीडागतिद्युतिस्वभावा, तद्वन्तः प्रतिविशिष्टस्थानाध्यासिनः समचतुरस्रसंस्थानाः सुखप्राया देवा भवन्ति । ते च देवाः चतुर्निकाया भवन्ति, तत्र चत्वारो निकाया वासाः सङ्घा वा येषां ते चतुर्निकायाः । निवासः—उत्पत्तिस्थानम्, तच्च चतुर्विधानामपि देवानां विभिन्नम्, तथाहि—रत्नप्रभायाः पृथिव्या अशीतिसहस्राधिकयोजनशतसहस्रं बाहल्यम्, तन्मध्यादूर्ध्वमधश्च योजनसहस्रमपहाय तत्र भवनपती-

नामुत्पत्तिः, तदुक्तं **प्रज्ञापनायाम्**—"कहि णं भंते! भवणवासीणं देवाणं पज्जत्तापज्जत्ताणं ठाणा पं० ? कहि णं भंते ! भवणवासी देवा परिवसन्ति ? गोयमा ! इमीसे रयणप्पभाए पुढवीए असीउत्तरजोयणसयसहस्स बाहल्लाए उवरिं एगं जोयणसहस्सं ओगाहित्ता हेट्ठा चेगं जोयणसहस्सं वज्जित्ता मज्झे अट्ठहुत्तरे जोयणसयसहस्से एत्थ णं भवणवासीणं देवाणं सत्त भवणकोडीओ बावत्तरि भवणावाससयसहस्सा भवन्तीतिमक्खायं" इति । **तत्त्वार्थभाष्यकाराभिप्रायस्त्वग्रे स्फुटीभविष्यति । व्यन्तरास्त्वस्यामेवोपरि यत्परित्यक्तं योजनसहस्रं तस्योपर्यधश्च योजनशतमपहाय मध्येऽष्टासु योजनशतेषूत्पत्तिमाश्रित्य प्रतिलभ्यन्ते, तदुक्तं तत्त्वार्थवृत्तौ**—"रत्नप्रभाप्रथमरत्नकाण्डे योजनशतद्वयवर्जितेऽष्टासु योजनशतेषूत्पन्नाः सन्तस्त्रिलोक्यां स्वभवनेषु स्वनगरेषु स्वावासेषु च प्रतिवसन्ति, बालवत् स्वभावानवस्थानादतो विविधमन्तरमावसनमेषामिति व्यन्तरा" इति । **ज्योतिष्कास्तु समतलाद् भूभागात् सप्तशतानि नवत्यधिकानि योजनानामारुह्य दशोत्तरयोजनशताभ्यन्तरे पृथुनभोदेशे लोकान्तात् किञ्चिन्न्यूने जन्मानि गृह्णन्ति । तदुक्तं**—"कहि णं भंते! जोइसियाणं पज्जत्तापज्जत्ताणं ठाणा पन्नत्ता ? कहि णं भंते! जोइसिया देवा परिवसन्ति ?, गोयमा ! इमीसे रयणप्पभाए पुढवीए बहुसमरमणिज्जाओ भूमिभागाओ सत्तणउइजोयणसए उड्ढं उप्पइत्ता दसुत्तरजोयणसयबाहल्ले तिरियमसंखेज्जे जोइसविसए एत्थ णं जोइसियाणं देवाणं तिरियमसंखेज्जा जोइसियविमाणावाससयसहस्सा भवन्तीतिमक्खायं" **इति । वैमानिका ज्योतिष्कोपरि प्रभूतयोजनकोटाकोट्यूर्ध्वं गत्वा परिवसन्ति, तदुक्तं प्रज्ञापनायाम्**—"कहि णं भंते! वेमाणियाणं देवाणं पज्जत्तापज्जत्ताणं ठाणा पन्नत्ता ? कहि णं भंते! वेमाणिया देवा परिवसन्ति ? गोयमा ! इमीसे रयणप्पभाए पुढवीए बहुसमरमणिज्जाओ भूमिभागाओ उड्ढं चंदिमसूरियगहनक्खत्ततारारूवाणं बहूइं जोयणसयाइं बहुइं जोयणसहस्साइं बहुइं जोयणसय-

सहस्साइं बहुगाओ जोयणकोडीओ बहुगाओ जोयणकोडाकोडीओ उड्ढं दूरं उप्पइत्ता एत्थ णं सोहम्मीसाणसणंतकुमारमाहिंदबंभलोयलंतग-महासुक्कसहस्सारआणयपाणयआरणच्चुयगेवेज्जणुत्तरेसु एत्थ णं वेमाणियाणं देवाणं चउरासीइं विमाणावाससयसहस्सा सत्ताणउइं च सहस्सा तेवीसं च विमाणा भवन्तीतिमक्खायं, एत्थ णं विमाणा सव्वरयणामया अच्छा सण्हा लण्हा घट्ठा मट्ठा नीरया निम्मला निप्पंका निक्कंकडच्छाया सप्पभा सस्सिरिया सउज्जोया पासादीया दरिसणिज्जा अभिरूवा पडिरूवा, एत्थ णं वेमाणियाणं देवाणं पज्जत्तापज्जत्ताणं ठाणा पन्नत्ता" इति। तत्त्वार्थवृत्तौ तु—"वैमानिका रज्जुमध्यर्धमारुह्यामुतः सौधर्मादिषु कल्पेषु सर्वार्थसिद्धिविमानपर्यवसानेषूत्पद्यन्ते जन्मतः" इति। एते—"स्वधामसूत्पन्ना भवनपत्यादयोऽन्यत्रापि लवणजलधिमन्दरवंशधराद्रिद्रुमगहनप्रभृतिषु वसन्त्युक्तस्थानव्यतिरेकेण अत्रैषामुत्पादो न जन्मनास्तीति निवासार्थः, समूहार्थोऽपि प्रकृष्टाप्रकृष्टतद्योग्यास्रवासेवनाद्बहुलीकृतकर्मोदयापेक्षः आर्यानार्यमनुष्यसमूहभेदवत् अतः स्वधर्मापेक्षजातिविशेषसामर्थ्यान्निकाया" इति तत्त्वार्थवृत्तिकाराभिप्रायः।

ननु 'प्रज्ञप्त्यां' देवाः पञ्चविधाः प्रज्ञप्ताः, तथा च प्रज्ञप्तिसूत्रम्—"कतिविधा णं भंते! देवा पन्नत्ता?, गोयमा! पञ्चविधा देवा पण्णत्ता, तं जहा—भवियदव्वदेवा नरदेवा धम्मदेवा देवाहिदेवा भावदेवा य"। तत्र तिर्यक्पञ्चेन्द्रियो मनुजो वाऽऽगामिभवसत्कबद्धदेवायुष्को यो देवत्वेनोत्पत्स्यते स आगामिभवमाश्रित्य भव्यद्रव्यदेव इत्युच्यते। नरदेवाश्चक्रवर्त्तिनश्चतुर्दशरत्नाधिपतयः, शेषजनापेक्षयोत्कृष्टत्वात्। धर्मदेवा यथोक्तप्रवचनार्थानुष्ठायिनः, सद्धर्मप्रधानव्यवहारत्वात्। देवाधिदेवास्तीर्थकरनामकर्मोदयवर्त्तिनः कृतार्थाः, सदुपदेशदानेन भव्यसत्त्वानामनुग्राहकत्वात् शेषदेवपूज्यत्वाच्च। भावदेवा देवगतिनामकर्मविपाकोदयिनो देवायुर्वेदका भवनपतिव्यन्तरज्योतिष्कवैमानिकाः, क्रीडाद्यतिशयवर्त्तित्वादिति पञ्चसु भेदेषु सत्स्वपि कथमत्र

चतुर्विधा देवा उक्ता' इति । अत्रोच्यते–आद्याश्चत्वारो मनुष्या एवातिशयविशेषमङ्गीकृत्य देवतया व्यपदिश्यन्त इति ते नात्राधिकृताः किन्तु भावदेवा एवाधिकृता इति । ते च चतुर्निकायिका देवा भवनपतयो व्यन्तरा ज्योतिष्का वैमानिका इति । तत्र भूमिछत्वात् भवनानि, तेषु प्रायेण वस्तुं शीलं येषां ते भवनवासिनः, प्रायोग्रहणात् कदाचिदावासेष्वपि वसन्ति, इयं व्युत्पत्तिर्नागादिकुमारमपेक्ष्य द्रष्टव्या, यतोऽसुरकुमारा बाहुल्यत आवासेषु क्वचिच्च भवनेषु वसन्ति । आवासाः कायमानस्थानीया महामण्डपा नानारत्नप्रभासितोल्लोचाः । भवनानि च बहिर्वृत्ताकाराणि मध्ये समचतुरस्राणि अधः पुष्कर-कर्णिकासंस्थानसंस्थितानि इति । तदुक्तं प्रज्ञापनावृत्तौ–"एतत् बाहुल्यतो नागकुमाराद्यपेक्षया द्रष्टव्यम्, ते हि प्रायो भवनेषु वसन्ति कदाचिदावासेषु । असुरकुमारास्तु प्राचुर्येणावासेषु कदाचित् भवनेषु । अथ भवनानामावासानां च कः प्रतिविशेषः ? उच्यते–भवनानि बहिर्वृत्तान्यन्तःसमचतुरस्राणि अधः पुष्करकर्णिकासंस्थानानि, आवासाः कायमानस्थानीया महामण्डपा विविधमणिरत्नप्रदीपप्रभासितसकलदिक्चक्रवाला" इति । आवासभवनयोः स्थानं तत्त्वार्थाभिप्रायेणोच्यते–"महामन्दरस्य दक्षिणोत्तरयोर्दिग्विभागयोर्बहीषु योजनशतसहस्रकोटीकोटीष्वावासाः । भवनानि च दक्षिणाधिपतीनामुत्तरार्द्धाधिपतीनां च यथास्वं भवन्ति । तत्र भवनानि रत्नप्रभायां बाहल्यार्द्धमवगाह्य मध्ये भवनेषु वसन्तीति भवनवासिन" इति । "रत्नप्रभायां बाहल्यार्द्धमवगाह्य मध्ये भवनानि भवन्ति, तस्मिन्नेव स्थाने नवतिसहस्राण्यधोऽवगाह्य, आवासास्तु सहस्रद्वयपरिवर्जितायां सर्वत्रेत्यभिप्रायः" इति तद्वृत्तिः । प्रज्ञापनाभिप्रायस्तु–प्रागुक्त एव । भवनपतयश्च दशप्रकाराः, तद्यथा–असुरकुमारा नागकुमाराः सुपर्णकुमारा विद्युत्कुमारा अग्निकुमारा द्वीपकुमारा उदधिकुमारा दिक्कुमारा वायुकुमाराः स्तनितकुमाराश्चेति, प्रज्ञापनानुसारेणायं क्रमः । तत्त्वार्थाभिप्रायेण

तु–असुरकुमाराः, नागकुमाराः, विद्युत्कुमाराः, सुपर्णकुमाराः, अग्निकुमाराः, वायुकुमाराः, स्तनितकुमाराः, उदधिकुमाराः, द्वीपकुमाराः, दिक्कुमाराश्च, तत्सूत्रम्–"भवनवासिनोऽसुरनागविद्युत्सुपर्णाग्निवातस्तनितोदधिद्वीपदिक्कुमाराः" (४–११) इति। कुमारवत् कान्तदर्शनत्वेन मृदुमधुरललितगतित्वेन शृङ्गाराभिजातरूपवैक्रियत्वेन रूपवेषभाषाभरणप्रहरणावरणपातयानवाहनैः कुमारवदुद्धतत्वेन कुमारवदुत्कटरागत्वेन क्रीडापरत्वेन च कुमारा इत्युच्यन्ते, तदुक्तम्–"कुमारवदेते कान्तदर्शना मृदुमधुरललितगतयः शृङ्गाराभिजातरूपविक्रियाः कुमारवच्चोद्धतरूपवेषभाषाभरणप्रहरणावरणपातयानवाहनाः कुमारवच्चोल्बणरागाः क्रीडनपराश्चेत्यतः कुमारा इत्युच्यन्ते" इति। तत्रासुरकुमाराः कृष्णवर्णा लोहिताक्षबिम्बोष्ठा धवलपुष्पदन्ताः कृष्णकेशाः। केशा दन्ताश्चैतेषां वैक्रिया द्रष्टव्याः। एककर्णावसक्तकुण्डलधारिण आर्द्रचन्दनानुलिप्तगात्रधारिणो मृदुलघुस्पर्शयुक्तात्यन्तसुखजनकेषद्रक्ताच्छवस्त्रधारिणः कुमारत्वलक्षणां प्रथमामवस्थामतिक्रम्य द्वितीयामवस्थामसम्प्राप्तास्तलभङ्गतुटितवरभूषणनिर्मलरत्नमण्डितभुजा दशमुद्रामण्डिताग्रहस्ताश्चूडामणिचिह्नगता गम्भीराः श्रीमन्तो रत्नोत्कटमुकुटभास्वरा भवन्ति। शिरोमुखेष्वधिकप्रतिरूपाः कृष्णाः श्यामाः मृदुललितगतयः शिरस्सु फणिचिह्ना नागकुमाराः। अधिकप्रतिरूपग्रीवोरस्काः श्यामावदाता गरुडचिह्नाः सुपर्णकुमाराः। स्निग्धा भ्राजिष्णवोऽवदाता वज्रचिह्ना विद्युत्कुमाराः। मानोन्मानयुक्ता भास्वन्तोऽवदाता घटचिह्ना अग्निकुमाराः। उरःस्कन्धबाह्वग्रहस्तेष्वधिकप्रतिरूपाः श्यामावदाताः सिंहचिह्ना द्वीपकुमाराः। उरुकटिष्वधिकप्रतिरूपाः कृष्णश्यामाः मकरचिह्ना तत्त्वार्थे, सङ्ग्रहण्यां त्वश्वचिह्नाः उदधिकुमाराः। जङ्घाग्रपादेष्वधिकप्रतिरूपाः श्यामा हस्तिचिह्ना दिक्कुमाराः। स्थिरपीनवृत्तगात्रा निमग्नोदरा अश्वचिह्ना तत्त्वार्थे, सङ्ग्रहण्यां मकर-

चिह्ना अवदाता वायुकुमाराः[9]। स्निग्धाः स्निग्धगम्भीरानुनादमहास्वनाः कृष्णा वर्द्धमानचिह्नाः स्तनितकुमाराः[10]। एतेषामधिकं स्वरूपं प्रज्ञापनातोऽवसेयम् । दशानामपि भुवनपतीनां द्वौ द्वौ इन्द्रौ स्तः, तद्यथा—असुरकुमाराणां दक्षिणदिग्वर्त्तिचमरेन्द्र उत्तरदिग्वर्त्तिबलीन्द्रश्च, नागकुमाराणां धरणेन्द्रो दक्षिणदिग्वर्त्ती उत्तरदिग्वर्त्ती भूतानन्देन्द्रश्च, सुपर्णकुमाराणां वेणुदेवेन्द्रो दाक्षिणात्यः, उत्तरत्यो वेणुदालीन्द्रश्च, विद्युत्कुमाराणां दाक्षिणात्यो हरिकान्तेन्द्रः, उत्तरत्यो हरिस्सहेन्द्रश्च, अग्निकुमाराणां दाक्षिणात्योऽग्निशिखेन्द्रः, उत्तरत्योऽग्निमानवेन्द्रश्च, द्वीपकुमाराणां दाक्षिणात्यः पूर्णेन्द्रः, उत्तरत्यः वसिष्ठेन्द्रश्च, उदधिकुमाराणां दाक्षिणात्यो जलकान्तेन्द्रः, उत्तरत्यो जलप्रभेन्द्रश्च, दिक्कुमाराणां दाक्षिणात्योऽमितगतीन्द्रः, उत्तरत्योऽमितवाहनेन्द्रश्च, वायुकुमाराणां दाक्षिणात्यो वेलम्बेन्द्रः, उत्तरत्यः प्रभञ्जनेन्द्रश्च, स्तनितकुमाराणां दाक्षिणात्यः सुघोषेन्द्र उत्तरत्यो महाघोषेन्द्रश्चेति । असुरकुमारान्तर्गताः परमाधार्मिका देवाः पञ्चदशप्रकाराः प्रोच्यन्ते, तद्यथा—अम्ब[1] अम्बरीषः[2] शबलः[3] श्यामो[4] रौद्रे[5] उपरौद्र[6] असिपत्रो[7] धनुः[8] कुम्भो[9] महाकालः[10] कालः[11] वैतरणी[12] वालुको[13] महाघोषः[14] खरस्वरश्चेति[15] । तत्राम्बाभिधः परमाधार्मिकदेवो नारकानूर्ध्वं नीत्वाधः पातयति, अम्बरीषः भ्राष्ट्रपाकार्हान् खण्डशः करोति, शबलः नारकाणां हृदादिभेदकारी, श्यामो नारकाणां शातनादिकारी, रौद्रो नारकाणां कुन्तादौ प्रोतकः, उपरौद्रो नारकाणामङ्गोपाङ्गभेदकर्त्ता, असिपत्रोऽस्याकारपत्रयुक्तं वनं सृजति, धनुर्धनुर्मुक्तार्धचन्द्रादिबाणैर्नारकान् विध्यति । कुम्भो नारकान् पचति, महाकालोऽसकृत् खण्डयित्वा श्लक्ष्णमांसखण्डानि खादति, कालो नारकान् कण्ड्वादौ पचति, वैतरणी रक्तपूयादिपूरितां वैतरणीं नदीं विकुर्वति, वालुकः कदम्बपुष्पाद्याकारवालुकासु नारकान् पचति, महाघोषो नश्यतस्तान् भैरवान् शब्दान् कुर्वन्

निरुणद्धि, खरस्वरस्तु वज्रकण्टकभीषणं शाल्मलीवृक्षं प्रति नारकान् समारोप्य पुनराकर्षति। एते महापापा मृत्वाऽण्डगोलिकमत्स्यत्वेनोत्पद्यन्ते। तत्स्वरूपं च लोकप्रकाशतो लिख्यते—"परमाधार्मिकास्ते च, सञ्चितानन्तपातकाः। मृत्वाण्डगोलिकतयोत्पद्यन्तेऽत्यन्तदुःखिताः ॥ १३ ॥ यत्र सिन्धुः प्रविशति, नदी लवणवारिधिम्। योजनैर्दिशि याम्यायां, पञ्चपञ्चाशता ततः ॥ १४ ॥ अस्ति स्थलं वेदिकान्तः, प्रतिसन्तापदायकम्। प्रमाणतो योजनानि, सार्द्धानि द्वादशैव तत् ॥ १५ ॥ योजनानि त्रीणि सार्द्धा—न्युद्वेधोऽत्र महोदधेः। सप्तचत्वारिंशदत्र, गुहाः सन्त्यतितामसाः ॥ १६ ॥ आद्यसंहननास्तासु, वसन्त्युरुपराक्रमाः। नरा जलचरा मद्य—मांसस्त्रीभोगलोलुपाः ॥ १७ ॥ दुर्वर्णाः कठिनस्पर्शा, भीषणा घोरदृष्टयः। अध्यर्द्धद्वादशकर—देहाः संख्येयजीविताः ॥ १८ ॥ तत्र रत्नद्वीपमस्ति, स्थलात् सन्तापदायकात्। वारिधौ योजनैरेक—त्रिंशता भूरिमानवम् ॥ १९ ॥ घरट्टान् वज्रिकांस्तेऽथ, मनुष्यास्तन्निवासिनः। लिम्पन्ति मद्यैर्मांसैश्च तेषु तानि क्षिपन्ति च ॥ २० ॥ मद्यमांसालावुपात्रैः, प्रपूर्य वाहनानि ते। गच्छन्ति जलधौ मद्य—मांसैस्तान् लोभयन्ति च ॥ २१ ॥ मद्यमांसास्वादलुब्धाः, ततस्तदनुपातिनः। निपतन्ति घरट्टेषु, क्रमात्ते जलमानुषाः ॥ २२ ॥ मांसानि वह्निपक्वानि, जीर्णमद्यानि ते नराः। यावद्दिनानि द्वित्राणि, भुञ्जानाः सुखमासते ॥ २३ ॥ तावद्भटाः सुसन्नद्धा, रत्नद्वीपस्य वासिनः। संयोजितान् घरट्टांस्तान्, वेष्टयन्ति समन्ततः ॥ २४ ॥ वर्षं यावत् वाहयन्ति, घरट्टानतिदुःसहान्। तथाऽपि तेषामस्थीनि, न त्रुटन्ति मनागपि ॥ २५ ॥ ते दारुणानि दुःखानि, सहमाना दुराशयाः। प्रपीड्यमाना वर्षेण, म्रियन्तेऽत्यन्तदुर्मराः ॥ २६ ॥ अथाण्डगोलकांस्तेषां, जनास्ते रत्नकांक्षिणः। चमरीपुच्छवालाग्रैः, गुम्फित्वा कर्णयोर्द्वयोः ॥ २७ ॥ निबद्ध्य प्रविशन्त्यब्धौ, तानन्ये जलचारिणः। कुलीरतन्तुमीनाद्याः, प्रभवन्ति न बाधितुम् ॥ २८ ॥ इत्युक्ता भवनपतयः। व्यन्तरा अष्टप्रकाराः प्रज्ञप्ताः, तद्यथा—पिशाचाः, भूताः, यक्षाः, राक्षसाः, किन्नराः, किंपुरुषाः, महोरगा

गान्धर्वाश्चेति। तत्र 'वि'-विविधम् 'अन्तरम्'-आवसनमेषामिति व्यन्तराः, बालवदनवस्थितस्वभावाः। स्वभवनेषु स्वनगरेषु स्वावासेषु पर्वतवनादिषु च ते परिवसन्ति, तदुक्तम्-"यस्माद्वाधस्तिर्यगूर्ध्वं च त्रीनपि लोकान् स्पृशन्तः स्वातन्त्र्यात् पराभियोगाच्च प्रायेण प्रतिपतन्त्यनियतगतिप्रचारा मनुष्यानपि केचिदुपचरन्ति, विविधेषु च शैलकन्दरान्तरवनविवरादिषु प्रतिवसन्ति अतो, यद्वा नरेभ्यो विगतमन्तरमिति व्यन्तरा इत्युच्यन्ते" इति। चञ्चलचपलचित्तक्रीडनपरिहासप्रिया गम्भीरहसितगीतनर्त्तनरतयो वनमालापीडनमुकुटकुण्डलस्वच्छन्दविकुर्विताभरणचारुभूषणधराः सर्वर्त्तुकसुरभिकुसुमसुरचितप्रलम्बशोभमानकान्तविकसच्चित्रवनमालारचितवक्षसोऽनियतकामाः स्वेच्छाविकुर्वितनानारूपदेहधारिणो नानाविधवर्णरागवरवस्त्रचित्रदेदीप्यमाननिवसना विविधदेशनेपथ्यगृहीतवेषाः कन्दर्पकलहकेलिकोलाहलप्रिया हास्यबहुला असिमुद्गरशक्तिकुन्तहस्ता नानाविधमणिरत्नविविधनियुक्तचित्रचिह्ना महर्द्धिका महाद्योता महायशा महाबला महानुभावा महासौख्या हारविराजितवक्षस्काः कटकत्रुटितस्तम्भितभुजा अङ्गदकुण्डलमृष्टगण्डतलकर्णपीठधारिणो विचित्रहस्ताभरणा विचित्रमालामौलिमुकुटाः कल्याणकप्रवरवस्त्रपरिहिताः कल्याणकप्रवरमाल्यानुलेपनधरा भास्वरबोन्दयः प्रलम्बवनमालाधरा दिव्येन वर्णेन दिव्येन गन्धेन दिव्येन स्पर्शेन दिव्येन संहननेन-शक्तिविशेषमपेक्ष्य संहननेनेव संहननेन न तु साक्षात्, देवानां संहननाभावात्, संहननं हि अस्थिरचनात्मकं, न च देवानामस्थीनि सन्ति, तथा चोक्तं जीवाभिगमे-"देवा असंघयणी जम्हा तेसिं नेवत्थी नेव सिरा" इत्यादि-दिव्यया ऋद्ध्या परिवारादिकया दिव्ययेष्टार्थसम्प्रयोगलक्षणया द्युत्या-'द्यु अभिगमने' इति वचनात्-दिव्यया प्रभया दिव्यया छायया दिव्यया शरीरस्थरत्नादितेजोज्वलयाऽर्चिषा दिव्येन तेजसा दिव्यया लेश्यया दशदिश उद्योतयन्तः शोभमानास्ते व्य-

न्तराः स्वकीयस्वकीयनगरेषु दिव्यान् भोगान् भुञ्जमाना विचरन्ति। तदुक्तं प्रज्ञापनायाम्—"चंचलचलचवलचित्तकीलणदवप्पिया गहिरहसियगीयणच्चणरई वणमालामेलमउडकुंडलसच्छंदविउव्वियाभरणचारुभूसणधरा सव्वोउयसुरभिकुसुमसुरइयपलंबसोहंतकंतविहसंतचित्तवणमालारइयवच्छा कामकामा कामरूवदेहधारी णाणाविहवण्णरागवरवत्थललंतचित्तचिल्लगनिअंसणा विविहदेसिनेवत्थगहियवेसा पमुइयकंदप्पकलहकेलिकोलाहलप्पिया हासबोलबहुला असिमुग्गरसत्तिकुंतहत्था अणेगमणिरयणविविहनिज्जुत्तविचित्तचिंधगया महिड्ढिया महज्जुइया महायसा महाबला महाणुभागा महासुक्खा हारविराइयवच्छा कडयतुडियथंभियभुया अंगयकुंडलमट्ठगंडयलकन्नपीढधारी विचित्तहत्थाभरणा विचित्तमालामउली कल्लाणगपवरवत्थपरिहिया कल्लाणगपवरमल्लाणुलेवणधरा भासुरबोंदी पलंबवणमालधरा दिव्वेणं वन्नेणं दिव्वेणं गंधेणं दिव्वेणं फासेणं दिव्वेणं संघयणेणं दिव्वेणं संठाणेणं दिव्वाए इड्ढीए दिव्वाए जुईए दिव्वाए पभाए दिव्वाए छायाए दिव्वाए अच्चीए दिव्वेणं तेएणं दिव्वाए लेस्साए दस दिसाओ उज्जोवेमाणा पभासेमाणा ते णं तत्थ साणं साणं असंखेज्जभोमेज्जनगरावाससयसहस्साणं साणं साणं सामाणीयसाहस्सीणं साणं साणं अग्गमहिसीणं साणं साणं परिसाणं साणं साणं अणीयाणं साणं साणं अणीयाहिवईणं साणं साणं आयरक्खदेवसाहस्सीणं अन्नेसिं च बहूणं वाणमन्तराणं देवाणं य देवीण य आहेवच्चं पोरेवच्चं सामित्तं भट्टित्तं महत्तरगत्तं आणाईसरसेणावच्चं कारेमाणा पालेमाणा महया हयनट्टगीयवाइयतंतीतलतालतुडियघणमुइंगपडुप्पवाइयरवेणं दिव्वाइं भोगभोगाइं भुंजमाणा विहरंति" इति। तत्र पिशाचाः सहजसुरूपाः सौम्यदर्शना हस्तग्रीवासु मणिरत्नविभूषणाः श्यामवर्णाः कदम्बवृक्षध्वजा भवन्ति। श्यामाः सुरूपाः सौम्या आपीवरा नानाभक्तिविलेपनाः सुलसध्वजाः काला भूता भवन्ति। श्यामावदाता गम्भीरास्तुन्दिला वृन्दारकाः प्रियदर्शना मानोन्मानप्रमाणयुक्ता रक्तपाणिपादतलनखतालुजिह्वोष्ठा भास्वरमुकुटधरा नानारत्नविभू-

पणा वटवृक्षध्वजा यक्षाः सन्ति । अवदाता भीमा भीमदर्शनाः शिरःकराला रक्तलम्बौष्ठास्तपनीयविभूषणा नानाभक्तिविलेपनाः शुक्लवर्णाः खट्वाङ्गध्वजा राक्षसाः सन्ति । प्रियङ्गुश्यामाः–'नीलवर्णा' इति संग्रहण्यां–सौम्याः सौम्यदर्शना मुखेष्वधिकरूपशोभा मुकुटमौलिभूषणा अशोकवृक्षध्वजा अवदाताः किन्नरा भवन्ति । ऊरुबाहुष्वधिकशोभा मुखेष्वधिकभास्वरा विविधाभरणभूषणाश्चित्रस्रगनुलेपना धवलवर्णाश्चम्पकवृक्षध्वजाः किंपुरुषाः सन्ति । महोरगाः श्यामावदाता महावेगाः सौम्याः सौम्यदर्शना महाकायाः पृथुपीनस्कन्धग्रीवा विविधविलेपना विचित्राभरणभूषणा नागवृक्षध्वजा भवन्ति । गान्धर्वा रक्तावदाता–'श्यामा' इति संग्रहण्यां–गम्भीराः प्रियदर्शनाः सुरूपाः सुमुखाकाराः सुस्वरा मौलिधरा हारविभूषणाः तुम्बरुवृक्षध्वजा भवन्ति । तत्त्वार्थसूत्रेत्विदमभिधानक्रमसूत्रम्–"व्यन्तराः किन्नरकिंपुरुषमहोरगगान्धर्वयक्षराक्षसभूतपिशाचाः" (४-१२) इति । अष्टानामपि व्यन्तराणां यन्नानात्वमुक्तं तत्तत्त्वार्थभाष्यानुसारेणेति । तेषां प्रभेदा अपि तदनुसारेणोच्यन्ते । तत्र किन्नरा दशप्रकाराः, तद्यथा–किंपुरुषाः, किंपुरुषोत्तमाः, किन्नराः, किन्नरोत्तमाः, हृदयंगमाः, रूपशालिनः, अनिन्दिताः, मनोरमाः, रतिप्रियाः, रतिश्रेष्ठाश्चेति । किंपुरुषा दशप्रकाराः, तद्यथा–पुरुषाः, सत्पुरुषाः, महापुरुषाः, पुरुषवृषभाः, पुरुषोत्तमाः, अतिपुरुषोत्तमाः, मरुदेवाः,–'महादेवा' इति प्रज्ञापनावृत्तौ–मरुतः, मरुत्प्रभाः,–'मेरुप्रभा' इति प्रज्ञापनावृत्तौ–यशस्वन्तश्चेति । महोरगा दशप्रकारा भवन्ति, तद्यथा–भुजगाः, भोगशालिनः, महाकायाः, अतिकायाः, स्कन्धशालिनः, मनोरमाः, महावेगाः, महेष्वक्षाः, मेरुकान्ताः, भासवन्तश्चेति । गान्धर्वा द्वादशविधाः, तद्यथा–हाहाः, हूहूः, तुम्बुरवः, नारदाः, ऋषिवादकाः, भूतवादिकाः, कादम्बाः, महाकादम्बाः, रैवताः, विश्वा-

वसवः, गीतरतयः, गीतयशसश्चेति । यक्षास्त्रयोदशप्रकाराः, तद्यथा–पूर्णभद्राः, माणिभद्राः, श्वेतभद्राः, हरिभद्राः, सुमनोभद्राः, व्यतिपातिकभद्राः, सुभद्राः, सर्वतोभद्राः, मनुष्ययक्षाः, वनाधिपतयः, वनाहाराः, रूपयक्षाः, यक्षोत्तमाश्चेति । सप्तविधा राक्षसाः, तद्यथा–भीमाः, महाभीमाः, विघ्नाः, विनायकाः, जलराक्षसाः, राक्षसराक्षसाः, ब्रह्मराक्षसाश्चेति । भूता नवविधाः, तद्यथा–सुरूपाः, प्रतिरूपाः, अतिरूपाः, भूतोत्तमाः, स्कन्दिकाः, महास्कन्दिकाः, महावेगाः, प्रतिच्छन्नाः, आकाशगाश्चेति । पिशाचाः पञ्चदशप्रकाराः प्रज्ञप्ताः, तद्यथा–कूष्माण्डाः, पटकाः, जोषाः, आह्निकाः, कालाः, महाकालाः, चोक्षाः, अचोक्षाः, तालपिशाचाः, मुखपिशाचाः, अधस्तारकाः, देहाः, महाविदेहाः, तूष्णीकाः, वनपिशाचाश्चेति । प्रज्ञापनावृत्तौ विदेहाख्या अधिका उक्ता जोषास्थाने सुजोषाश्चेति। लोकप्रकाशे अष्टमे सर्गे तु पिशाचाः षोडशप्रकारा उक्ताः । केषाञ्चिन्निकाये नाम्नामपि भेदो दृश्यते, तथा च तद्ग्रन्थः–"पिशाचा भूतयक्षाश्च, राक्षसाः किन्नरा अपि । किंपुरुषा महोरगा, गन्धर्वा व्यन्तरा इमे ॥२९॥ पिशाचास्तत्र सहज–सुरूपाः सौम्यदर्शनाः । रत्नाभरणवद्ग्रीवा–हस्ताः षोडशधा मताः ॥३०॥ कूष्माण्डाः पटका जोषाः, अह्निकाः कालका अपि । चोक्षाचोक्षमहाकाला–स्तथा वनपिशाचकाः ॥ ३१ ॥ तूष्णीकास्तालमुखर–पिशाचा देहसंज्ञकाः । विदेहाश्च महादेहा–स्तथाधस्तारका इति ॥३२॥ सुरूपप्रतिरूपाति–रूपा भूतोत्तमा इति । स्कन्दिकाख्या महावेगा, महास्कन्दिकसंज्ञकाः ॥ ३३ ॥ आकाशकाः प्रतिच्छन्ना, भूता नवविधा अमी । सौम्याननाः सुरूपाश्च, नानाभक्तिविलेपनाः ॥ ३४ ॥ मानोन्मानप्रमाणोप–पन्नदेहा विशेषतः । रक्तपाणिपादतल–तालुजिह्वौष्ठपाणिजाः ॥३५॥ किरीटधारिणो नाना–रत्नात्मकविभूषणाः । यक्षास्त्रयोदशविधा, गंभीराः प्रियदर्शनाः ॥३६॥ पूर्णमाणिश्वेतहरि–सुमनोव्यतिपाकतः । भद्राः स्युः सर्वतोभद्राः, सुभद्रा अष्टमाः स्मृताः ॥३७॥ यक्षोत्तमा रूपयक्षा, धनाहारा धनाधिपाः ।

मनुष्ययक्षा इत्येवं, सर्वेऽप्येते त्रयोदश ॥ ३८ ॥ करालरक्तलम्बौष्ठा–स्तपनीयविभूषणाः । राक्षसाः सप्तधा प्रोक्ता–स्तेऽमी भीषणदर्शनाः ॥ ३९ ॥ विघ्ना भीममहाभीमा–स्तथा राक्षसराक्षसाः । परे विनायका ब्रह्म–राक्षसा जलराक्षसाः ॥ ४० ॥ मुखेष्वधिकरूपाढ्याः, किन्नरा दीप्रमौलयः । दशधा किन्नरा रूप–शालिनो हृदयंगमाः ॥४१॥ रतिप्रिया रतिश्रेष्ठाः, किंपुरुषा मनोरमाः । अनिन्दिताः किंपुरुषो–त्तमाश्च किन्नरोत्तमाः ॥ ४२ ॥ मुखोरुबाहूद्यद्रूपा–श्चित्रस्रगनुलेपनाः । दश किंपुरुषास्ते स–त्पुरुषाः पुरुषोत्तमाः ॥ ४३ ॥ यशस्वन्तो महादेवा, मरुन्मेरुप्रभा इति । महातिपुरुषाः किञ्च, पुरुषाः पुरुषर्षभाः ॥ ४४ ॥ महोरगा दशविधा, भुजगा भोगशालिनः । महाकाया अतिकाया, भास्वन्तः स्कन्धशालिनः ॥ ४५ ॥ महेश्वक्षा मेरुकान्ता, महावेगा मनोरमाः । सर्वेऽप्यमी महावेगा, महांगाश्चित्रभूषणाः ॥४६॥ गन्धर्वा द्वादशविधाः, सुस्वराः प्रियदर्शनाः । सरूपा मौलिमुकुट–धरा हारविभूषणाः ॥४७॥ हाहाहूहूतुंबरवो, नारदा ऋषिवादिकाः । भूतवादिककादम्बा, महाकदंबरैवताः ॥ ४८ ॥ विश्वावसुगीतरति–सद्गीतयशसस्तथा । सप्ताशीतिरिमे सर्वे, तृतीयाङ्गेऽष्ट ते त्वमी ॥ ४९ ॥" इति ।

पिशाचादीनामष्टानामपि निकायानां दक्षिणोत्तरभेदेन द्वौ द्वौ इन्द्रौस्तस्तेषां क्रमशो नामानि लिख्यन्ते–तत्र कालमहाकालौ पिशाचनिकायस्य, सुरूपप्रतिरूपौ भूतनिकायस्य, पूर्णभद्रमाणिभद्रौ यक्षनिकायस्य, भीममहाभीमौ राक्षसनिकायस्य, किन्नरकिंपुरुषौ किन्नरनिकायस्य, किंपुरुषस्य सत्पुरुषमहापुरुषौ, अतिकायमहाकायौ महोरगनिकायस्य, गीतरतिगीतयशसौ गन्धर्वनिकायस्येति । अन्येऽपि व्यन्तराणामवान्तभेदाः स्थानाङ्गसूत्रेऽष्टौ उक्ताः, तद्यथा–'अणपर्णी पणपर्णी ऋषिवादी भूतवादी कन्दी महाकन्दी कुष्माण्डः पतङ्गश्चेति । एते च रत्नकाण्डस्योपर्यधः योजनशतं परित्यज्य अष्टशतयोजनमध्ये वर्त्तन्ते । तदुक्तं प्रज्ञापनायाम्–"कहि णं भंते ! वाणमन्तराणं देवाणं पज्जत्तापज्जत्ताणं ठाणा पन्नत्ता?, कहि णं भंते ! वाणमंतरा देवा परिवसंति ?,

गोयमा! इमीसे रयणप्पभाए पुढवीए रयणामयस्स कंडस्स जोयणसहस्सबाहल्लस्स उवरि एगं जोयणसयं ओगाहित्ता हिट्ठावि एगं जोयणसयं वज्जित्ता मज्झे अट्ठसु जोयणसएसु एत्थ णं वाणमंतराणं देवाणं तिरियमसंखेज्जा भोमेज्जा नगरावाससयसहस्सा भवन्तीति मक्खायं, ते णं तत्थ णं बहवे वाणमंतरा देवा परिवसन्ति" इति। संग्रहण्यां तु–"इय पढमजोयणसए रयणाए अट्ठ वंतरा अवरे। तेसिं इह सोलसिंदा रुअगअहोदाहिणुत्तरओ ॥ १ ॥" इति। योगशास्त्रचतुर्थप्रकाशवृत्तौ तु–"रत्नप्रभायामेव प्रथमस्य शतस्याध उपरि च दश दश योजनानि मुक्त्वा मध्येऽशीतियोजनेषु अणपन्नियप्रभृतयः" इति। स्वरूपं चैषां पिशाचादिवद्वाच्यम्। इन्द्रनामानि तु दक्षिणोत्तरभेदेन क्रमशो द्वे द्वे स्तः। तानि चामूनि–सन्निहितसामानिकौ प्रथमनिकायस्य, धातृविधात्रिन्द्रौ द्वितीयनिकायस्य, ऋषिऋषिपालितेन्द्रौ तृतीयनिकायस्य, ईश्वरमहेश्वरौ चतुर्थनिकायस्य, सुवत्सविशालौ पञ्चमनिकायस्य, हास्यहास्यरतीन्द्रौ षष्ठनिकायस्य, श्रेयोमहाश्रेयांसौ सप्तमनिकायस्य, पतङ्गपतङ्गपतीन्द्रौ अष्टमनिकायस्य भवत इति। तिर्यग्जृम्भका व्यन्तरजातिविशेषा दशधा प्रज्ञप्ताः, तद्यथा–अन्नजृम्भकाः, पानजृम्भकाः, वस्त्रजृम्भकाः, गृहजृम्भकाः, पुष्पजृम्भकाः, फलजृम्भकाः, पुष्पफलजृम्भकाः, शयनजृम्भकाः, विद्याजृम्भकाः, अव्यक्तजृम्भकाश्चेत्युक्ता व्यन्तरनिकायिका देवाः। ज्योतिष्काः चराचरविमानस्थभेदात् द्विविधाः, पुनरपि चन्द्रसूर्यग्रहनक्षत्रतारकभेदात् पञ्चधा ज्योतिष्का इत्युक्ता ज्योतिष्काः। वैमानिका द्विधा–कल्पोत्पन्नाः कल्पातीताश्च। कल्पोत्पन्ना द्वादशधा, तद्यथा–सौधर्मदेवलोकनिवासिनः, ईशानदेवलोकनिवासिनः, सनत्कुमारदेवलोकनिवासिनः, महेन्द्रदेवलोकनिवासिनः, ब्रह्मदेवलोकनिवासिनः, लान्तकदेवलोकनिवासिनः, शुक्रदेवलोकनिवासिनः, सहस्रारदेवलोकनिवासिनः, आनतदेवलोकनिवासिनः, प्राणतदेवलोकनिवासिनः, आरणदेवलोकनिवासिनः, अच्युतदे-

वलोकनिवासिनश्च । त्रिविधाः किल्बिषिकाः, त्रिपल्योपमायुष्काः प्रथमकिल्बिषिकाः, त्रिसागरोपमायुष्का द्वितीयकिल्बिषिकाः, त्रयोदशसागरोपमायुष्कास्तृतीयकिल्बिषिकाश्च । एते च यथाक्रमं प्रथमतृतीयषष्ठदेवलोकादधो वर्त्तन्त इति । ब्रह्मदेवलोकान्तवर्त्तिनो लोकान्तिका नवधा प्रज्ञप्ताः, तद्यथा–सारस्वतादित्यवह्न्यरुणगर्दतोयतुषिताव्याबाधाग्नेयारिष्टभेदादिति । कल्पातीता ग्रैवेयका अनुत्तराश्च । ग्रैवेयका नवधा, तद्यथा–सुदर्शनसुप्रतिष्ठितमनोरमसर्वतोभद्रविशालसौम्यसौमनसप्रीतिकरादित्याः । अनुत्तरा विजयवैजयन्तजयन्तापराजितसर्वार्थसिद्धभेदात् पञ्चप्रकारा भवन्तीत्युक्ता वैमानिकाः । प्रागुक्ताश्चतुर्निकायिकाः सर्वेऽपि देवाः पर्याप्तापर्याप्तभेदाद् द्विधा भवन्तीत्युक्ता देवास्तदुक्तौ चोक्तास्त्रसकायिकाः, एवमुक्ता षड्विधा कायमार्गणेति ।



"जोएत्ति"–योजनं योगः जीवस्य वीर्यं शक्तिः स्थामः पराक्रमः चेष्टा परिस्पन्दः सामर्थ्यमित्यनर्थान्तरम् । यद्वा युनक्ति जीवो वीर्यान्तरायक्षयोपशमजनितं पर्यायमिति योगः । वीर्यान्तरायक्षयोपशमजनितेन पर्यायेण धावनवल्गनादिक्रियासु युज्यते व्यापार्यते य इति वा योगः । यद्वा युज्यते संबध्यते धावनवल्गनादिक्रियया वीर्यान्तरायक्षयोपशमजनितं पर्यायमिति योगः । स च दुर्बलस्य स्थविरस्य वा बाह्यालम्बनयष्टिवद्विषमेषूपग्राहकः, तदुक्तं–"मणसा वाया काएण वा वि जुत्तस्स वीरियपरिणामो । जीवस्स अप्पणिज्जो स जोगसन्नो जिणक्खाओ ॥ १ ॥ तेजोजोगेण जहा रत्तताइ घडस्स परिणामो । जीवकरणप्पओगे वीरियमवि तहप्पपरिणामो ॥ २ ॥" इति । स च त्रिविधः–मनोवाक्कायभेदात् । तत्र मनःप्रायोग्याणि द्रव्याणि सर्वात्मप्रदेशैः काययोगेन गृहीत्वा मनस्त्वेन परिणमितानि वस्तुचिन्ताप्रवर्त्तकानि मनांस्युच्यन्ते, तैः सहकारिकारणभूतैर्योगो मनोयोगः । मनोविषयो वा योगो मनोयोगः, तदुक्तं–"आत्मना शरीरत्वेन सर्वप्रदेशैर्गृहीता मनोवर्गणायोग्यस्कन्धाः शुभादिम-

नतार्थं करणभावमवलम्ब्यन्ते, तत्सम्बन्धादात्मनः पराक्रमविशेषो योग" इति। यद्यप्यत्र सत्यादिव्यपदेशभाजो न मनोवर्गणापुद्गलाः किन्तु नोइन्द्रियावरणक्षयोपशमजनितमनोविज्ञानपरिणतावात्मनो वलाधानकारित्वादात्मसहचरितत्वादुपचारतः सत्यादिव्यपदेशः कृत इत्यग्रे स्फुटं भविष्यति। स च सत्यादिभेदेन चतुर्विधः। तत्र सन्तो मुनयः प्रशस्ता वा गुणाः, जीवादीनि तत्त्वानि वाऽभिधीयन्ते, तेषां यथाक्रमं मोक्षप्रापकत्वेन यथावस्थितस्वरूपचिन्तनेन च हितः सत्यः, यथा 'अस्ति जीवो देहमात्रव्यापी परिणामी कथञ्चिन्नित्यानित्यरूपः सदसद्रूप' इत्यादिस्वरूपचिन्तनपरः, सत्यश्चासौ मनोयोगश्च सत्यमनोयोगः। तथा सत्यविपरीतोऽसत्यः, यथा 'नास्ति जीवः, सर्वव्यापकः, अपरिणामी, एकान्तेन नित्यः, अनित्यरूपो वा, सद्रूप एव, असद्रूप एव वा' इत्यादिविपरीतवस्तुचिन्तनपरः, असत्यश्चासौ मनोयोगश्चासत्यमनोयोगः। तथा सत्यश्चासावसत्यश्च सत्यासत्यः यद्वा सत्येनोपलक्षितमसत्यं यत्र स सत्यासत्यः, सत्यासत्यश्चासौ मनोयोगश्च सत्यासत्यमनोयोगः। यथा धवखदिरपलाशादिमिश्रेषु वहुष्वाम्रवृक्षेष्वाम्रवनमेवेदमिति विकल्पनपरः। अत्र हि कतिपयानामाम्रवृक्षाणां सद्भावेन सत्यता, अन्येषामपि धवखदिरादिवृक्षाणां सत्त्वेनासत्यता च, इदं तु व्यवहारनयापेक्षयोक्तम्। परमार्थतः पुनरिदमसत्य एवान्तर्भवति, यथाविकल्पितार्थायोगात्। तथा न विद्यते सत्यं यत्र स भवत्यसत्यो न विद्यते मृषा यत्र स भवत्यमृषोऽसत्यश्चासावमृषश्चेति असत्यामृषः, असत्यामृषश्चासौ मनोयोगश्चासत्यामृषमनोयोगः, यथा 'हे देवदत्त! गां देहि मह्यं, घटमानय' इत्यादि चिन्तनपरो मनोव्यापारः। एतदुक्तं भवति—विप्रतिपत्तौ सत्यां सर्वज्ञमतानुसारेण वस्तुप्रतिष्ठाशया यद्विकल्प्यते, यथा 'अस्ति जीवः चेतनावत्त्वात्, यन्नैवं तन्नैवं यथा घटमित्यादि' तत्सत्यमाराधकत्वात्। यत्तु विप्रतिपत्तौ सत्यां वस्तुप्रतिष्ठा-

शया सर्वज्ञमतोत्तीर्णं किञ्चिद्विकल्प्यते यथा 'जीवाजीवनोजीवरूपराशित्रयं' तदसत्यम्, विराधकत्वात्। 'शैवमते जैनमते वा कुत्र धर्म ?' इति प्रश्ने कृते सति 'उभयत्रापी'ति चिन्तने मिश्रत्वमुभयधर्मोपेतत्वात्, यत्तु वस्तु प्रतिष्ठाशामन्तरेण स्वरूपमात्रप्रतिपादनपरं व्यवहारपतितं किञ्चिद्विकल्प्यते, यथा-'याहि, भक्षय, पिब' इत्यादि, एतत् स्वरूपमात्रचिन्तनपरं व्यावहारिकं विकल्पज्ञानं न सत्यं न मृषा नापि मिश्रं किन्त्वसत्यामृषमिति विकल्पितमतो भवति व्यवहारमनोयोगस्य विषयः। परमार्थतस्त्वयमपि योगः परस्य विप्रतारणबुद्ध्यभावे सत्येऽन्तर्भवति, विप्रतारणबुद्धौ त्वसत्येऽन्तर्भवति। यद्यप्यत्र मनोयोगस्य सत्यत्वमसत्यत्वं मिश्रत्वमसत्यामृषत्वं च नास्ति तथापि नोइन्द्रियावरणक्षयोपशमेन मनोविज्ञानपरिणतस्यात्मनो बलाधारभूतस्य योगस्य सहचरितत्वेन सत्यादिव्यपदेशो भवति, यथा बालस्य बलाधानकारणमन्नं प्राणा इति। यद्वा योगस्यैव प्राधान्यविवक्षणात् सत्यादिपरिणामो भवति, यथा बाह्यकारणनिरपेक्षो ज्ञानपरिणामस्तथ्यातथ्यव्यपदेशभाग् भवति, तदुक्तं शतकचूर्णौ-"मणजोगस्स सच्चत्तं मोसत्तं सच्चमोसत्तं असच्चमोसत्तं वा णत्थि, किंतु णोइंदियावरणखयोवसमेण मणणाणपरिणयस्स जीवस्स बलाधारभूयस्स जोगस्स सहचरित्तातो सच्चादिववदेसो, जहा बालस्स बलाधानकारणं अन्नं पाणा इति। अहवा जोगस्सेव पाहन्नविवक्खया सच्चासच्चाइपरिणामो, जहा बाहिरकारणनिरवेक्खो नाणपरिणामो तच्चातच्चववएसो भवति" इति। तथा वाग्योगोऽपि चतुर्धा यथा व्याख्यात एव, यतः प्रायः मनोविकल्पितार्थमेव भाषते, तथापि स्थानाशून्यार्थं किञ्चिदुच्यते, तथाहि-उच्यत इति वाक्, भाषापरिणाममापन्नः पुद्गलद्रव्यसमूहः, तया सहकारिकारणभूतया योगो वाग्योगः, यद्वात्मयुक्तकायायत्ता वाग्वर्गणायोग्यस्कन्धा विसृज्यमाना वाक्त्वेन करणतामापद्यन्ते, अनेन च वाक्करणेन सम्बन्धादात्मनो यद्वीर्यसमुत्थभाषक-

शक्तिः स वाग्योगः सत्यादिभेदाच्चतुर्विधः । पुद्गलास्तु वस्तुतो न सत्यादिभेदभाजः, किन्तु मुख्यतः ज्ञानमेव सत्यादिभेदं स्याद् । तथापि तद्बलाधानसाधकतमत्वात् वागपि सत्यादिभेदेनोपचर्यते । तत्र सतां हिता सत्या, सत्या चासौ वाक् चेति सत्यवाक् तया सहकारिकारणभूतया योगः सत्यवाग्योगः, यद्वा वचनगतं सत्यत्वं तत्कार्यत्वात् योगेषूपचर्यते । ततः सत्यश्चासौ वाग्योगश्च सत्यवाग्योगः । सत्याद् विपरीता असत्या, सा चासौ वाक् चेत्यसत्यवाक्, तया योगोऽसत्यवाग्योगः । तथा सत्या चासावसत्या चेति सत्यासत्या, सत्यासत्या चासौ वाग्योगश्च सत्यासत्यवाग्योगः । तथा न विद्यते सत्यं यत्र सोऽसत्यः, न विद्यते मृषा यत्र स अमृषः, असत्यश्चासावमृषश्चेत्यसत्यामृषः, स चासौ वाग्योगश्चेत्यसत्यामृषवाग्योग इति चतुर्णां वाग्योगानां समासविधिरुक्तः । भावार्थस्तूच्यते—तत्र सन्तः मुनयस्तेषामेव भगवदाज्ञायाः सम्यक्तयाऽऽराधकत्वेन परमशिष्टत्वात्, तेभ्यो हिता इहपरलोकाराधकत्वेन मुक्तिप्रापिका सत्या, यद्वा यो यस्मै हितः स तत्र साधुरिति, सत्सु साध्वी सत्या, यद्वा सन्तो मूलोत्तरगुणाः सर्वज्ञोपदिष्टा एव वा जीवादिपदार्थाः, न तु सौगताद्युपदिष्टाः, तेषां कल्पनामात्ररचितसत्ताकत्वेन तत्त्वतोऽसत्त्वात्, तेभ्यो हिता तेषु वा साध्वी यथावस्थितवस्तुतत्त्वप्ररूपकत्वेन सत्या, तस्या विपरीतस्वरूपाऽसत्या, उभयस्वभावा मिश्रा, तिसृष्वपि भाषासु या नान्तर्वर्त्तिनी साऽऽमन्त्रणी ज्ञापनादिविषयाऽसत्यामृषा, तदुक्तं—"सच्चा हिया सयामिह, सन्तो मुणयो गुणा पसत्था वा। तव्विवरीया मोसा मीसा जा तदुभयमहवा ॥१॥ अणहिगया जा तिसु वि सद्दो च्चिय केवलो असच्चमुसा" इति । इदमत्र हृदयं, इह विप्रतिपत्तौ सत्यां वस्तुप्रतिष्ठापनबुद्ध्या सर्वज्ञमतानुसारेण 'अस्ति जीवः सदसन्नित्यानित्याद्यनेकधर्मोपेत' इत्यादिरूपा यथावस्थितवस्तुस्वरूपप्रतिपादिका या भाषा भाष्यते साऽऽराधनी,

आराध्यते मोक्षमार्गोऽनयेत्याराधनी, आराधनीयत्वादेव सत्येति। विराध्यते मोक्षमार्गोऽनयेति विराधनी असत्या, विप्रतिपत्तौ सत्यां वस्तुप्रतिष्ठापनाशया सर्वज्ञमतप्रातिकूल्येन या भाषा भाष्यते, यथा—'नास्ति जीव, एकान्तेन नित्य एव, अनित्य एव वा' इत्यादि, सा विपरीतवस्त्वभिधानात् विराधनीयत्वाच्च मृषेति । या तु परपीडोत्पादिका कर्कशादिवचनात्मिका सा सत्यापि परपीडोत्पादकत्वेन विराधनीयत्वात् मृषा। तथा कस्मिँश्चिन्नगरे पत्तने वा पञ्चसु दारकेषु जातेषु 'अद्यात्र दश दारका जाताः' सा परिस्थूलनयापेक्षयाऽऽराधनीविराधनी, पञ्चानां दारकाणां जातत्वेन तदंशे संवादसम्भवादाराधनी, दशसङ्ख्याऽपूर्णेन विसंवादसंभवात् विराधनी च, उभयधर्मोपेतत्वेनैव च सत्यामृषा । परमार्थतः पुनरसत्यैव यथास्थितार्थायोगात् । तथा आराधकलक्षणायोगात् नैवाराधनी, विपरीतवस्त्वनभिधानात् परपीडोत्पादनाभावाच्च नैव विराधनी, एकदेशविसंवादसंवादनाभावाच्च नैवोभयधर्मोपेता किन्तु 'त्वं गच्छ, ग्रामं गत्वा च बलिवर्दं विक्रीय गामानय', यद्वा 'भो मुने ! स्वाध्यायं कुरु, प्रतिक्रमणं कुरु, प्रत्युपेक्षस्व, मासकल्पः पूर्णो जातः, विहारं कुरुष्व' इत्यादि व्यवहारनयपतिताऽऽमन्त्रण्यादिभेदभिन्ना या भाष्यते सा असत्यामृषा। इयमपि व्यवहारनयापेक्षया द्रष्टव्या, अन्यथा विप्रतारणबुद्धौ सत्यामसत्याऽन्यथा तु सत्येति । जनपदसत्यादिभेदात् सत्या भाषा दशविधा, तद्यथा—जनपदसत्या, सम्मतसत्या, स्थापनासत्या, नामसत्या, रूपसत्या, प्रतीत्यसत्या, व्यवहारसत्या, भावसत्या, योगसत्या, औपम्यसत्या चेति । तत्र तं तं जनपदं देशमधिकृत्येष्टार्थप्रतिपत्तिजनकत्वेन व्यवहारहेतुत्वात् सत्या जनपदसत्या, यथा कोङ्कणादिषु जनपदेषु पयः 'पिच्चमि'त्यादि । सकललोकसामान्येन या प्रसिद्धा सा सम्मतसत्या, यथा कुमुदकुवलयोत्पलतामरसानां पङ्कजन्यत्वे समानेऽपि पङ्कजशब्देनारविन्दमे-

बोध्यते, न कुमुदादि, इत्यरविन्दे पङ्कजमिति सम्मतसत्या । तथाविधाङ्कविन्यासं मुद्राविन्यासं चोपलभ्य प्रयुज्यतेऽयमेकः, पुरतो बिन्दुद्वयं दृष्ट्वा शतं, बिन्दुत्रयं दृष्ट्वा सहस्रमिति, तथा मृत्तिकादिषु मुद्राविन्यासं समुपलभ्य मापोऽयं, कार्षापणोऽयं, कुम्भोऽयं, कुण्डिका वेत्यादि स्थापनासत्या। तथा नामतः सत्या नामसत्या, यथा कुलमवर्धयन्नपि कुलवर्धनः, एवं निर्धनत्वेऽपि धनपतिः । तथा रूपतो लिङ्गतः वा सत्या रूपसत्या, यथा दम्भतो गृहीतमुनिवेषोऽपि 'प्रव्रजितोऽयं', यथा विनयरत्नः। तथा प्रतीत्य–आश्रित्य वस्त्वन्तरं सत्या प्रतीत्यसत्या, यथाऽनामिकायाः कनिष्ठामाश्रित्य दीर्घत्वं मध्यमामाश्रित्य ह्रस्वत्वमिति । नन्वेकस्यामेवाङ्गुल्यां कथं दीर्घत्वं ह्रस्वत्वं च, विरुद्धत्वादिति चेत्? न, भिन्ननिमित्तत्वेन परस्परविरोधासम्भवात् । यदि एकामेव कनिष्ठां मध्यमां चाश्रित्य दीर्घत्वं ह्रस्वत्वं च प्रतिपाद्येत तदा विरोधः स्यात्, एकनिमित्तकपरस्परविरुद्धकार्यद्वयासम्भवात् । यदि चैकामधिकृत्य दीर्घत्वमपरामाश्रित्य ह्रस्वत्वं तदा सत्त्वासत्त्वयोरिव भिन्ननिमित्तत्वात् न परस्परं विरोधः । नन्विमे दीर्घह्रस्वत्वे काल्पनिके परोपाधिकत्वात्, तात्त्विके चेत् ऋजुत्ववक्रत्वे इव कस्मात् परनिरपेक्षे न प्रतिभासेते इति चेत्? न, सहकारिकारणव्यङ्ग्यत्वात्तयोः, तथाहि–द्विविधा हि वस्तुनो धर्माः, सहकारिकारणव्यङ्ग्या इतरे च, तत्र ये सहकारिकारणव्यङ्ग्यास्ते स्वकारणं समासाद्य प्रतीतिपथमायान्ति, यथा जलसम्पर्कात् पृथिव्यां गन्धः, इतरे तु सहकारिकारणमन्तरेणापि प्रतीतिपथमायान्ति, यथा कर्पूरगन्धः । दीर्घत्वह्रस्वत्वे अपि च सहकारिकारणव्यङ्ग्यरूपे, ततस्ते तं सहकारिकारणं समासाद्याभिव्यक्तिमायात इत्यदोषः । तथा व्यवहारो–लोकविवक्षा, व्यवहारतः सत्या व्यवहारसत्या, यथा गिरिर्दह्यते, कुण्डिका स्रवति, अनुदरा कन्या, अलोमिकैडकेति; लोका हि गिरिस्थतृणादिके

दह्यमाने तृणादिना सह गिरेरभेदं विवक्षित्वा गिरिर्दह्यत इति ब्रुवन्ति, कुण्डिकातः जले स्रवति जलकुण्ड्योरभेदं विवक्षित्वा कुण्डिका स्रवतीति ब्रुवन्ति, सम्भोगप्रभवोदराभावेऽनुदरेति, लवनयोग्यरोमाभावेऽलोमिकैडका, ततो लोकव्यवहारमनुसृत्य साधोरपि तथा ब्रुवतः सत्या भाषा भवति । तथा भावो वर्णादिः, भावतः सत्या भावसत्या, यो वर्णादिभावो यस्मिन्नुत्कटो भवति स तद्वर्णो व्यपदिश्यते, यथा पञ्चवर्णसम्भवेऽपि काकाः कृष्णाः, शुक्ला बलाकाश्चेति । तथा योगः सम्बन्धः, तस्मात् सत्या योगसत्या, यथा छत्रयोगात् विवक्षितशब्दप्रयोगकाले छत्राभावेऽपि छत्री, तस्य योगस्य सम्भवात्, एवं दण्डयोगात् दण्डी । औपम्यसत्या यथा समुद्रवत्तडाग इति, तदुक्तं प्रज्ञापनायां–"सच्चा णं भंते! भासा पज्जत्तिया कतिविहा प० ? गो० ! दसविहा प०, तं०–जणवयसच्चा सम्मयसच्चा ठवणसच्चा नामसच्चा रूवसच्चा पडुच्चसच्चा ववहारसच्चा भावसच्चा जोगसच्चा ओवम्मसच्चा" इति । 'पज्जत्तिय'त्ति पर्याप्ता नाम या प्रतिनियततयाऽवधारयितुं शक्यते सा पर्याप्ता, सा च सत्या मृषा वा द्रष्टव्या, उभयोरप्यवधारयितुं शक्यत्वादिति । असत्या भाषाऽपि दशप्रकारा, तद्यथा–क्रोधनिःसृता, माननिःसृता, मायानिःसृता, लोभनिःसृता, प्रेमनिःसृता, द्वेषनिःसृता, हास्यनिःसृता, भयनिःसृता, आख्यायिकानिःसृता, उपघातनिःसृता चेति । तत्र क्रोधात् निःसृता–विनिर्गता क्रोधनिःसृता, एवमेव सर्वत्रापि परिभावनीयम् । तत्र क्रोधानलदन्दह्यमानो विसंवादबुद्ध्या यत् सत्यमसत्यं वा परप्रत्यायनाय भाषते तत्सर्वं मृषैव, अतीव दुष्टाशयत्वात्, घुणाक्षरन्यायेनर्जुबुद्ध्या वा यद्यपि सत्यमपि भाषते तथापि दुष्टाशयत्वेन मृषेति । तथा पूर्वावस्थायां दरिद्रोऽपि स्वकीयोत्कर्षख्यापनायास्माभिः प्रागैश्वर्यमनुभूतमित्यादि वदतो माननिःसृता । तथा यत्परवञ्चनाय सत्यम-

सत्यं वा भाषते तन्मायानिःसृता । तथा लोभाभिभूतः पुमान् कूटतुलादिकं विधाय यथोक्तप्रमाणमिदं तुलादीति ब्रुवतो लोभनिःसृता । तथा यदतिस्नेहवशात् किङ्करोऽहं तवेत्यादि वदतः प्रेमनिःसृता । तथा यत्प्रतिनिविष्टः तीर्थकरादीनामप्यवर्णं भाषते सा द्वेषनिःसृता । तथा परेषामुपहासं कुर्वन् कश्चिद्वक्ति–'सर्पाभावेऽपि भो ! भो ! उत्तिष्ठन्तु सर्पः समागच्छती'त्यादिका हास्यनिःसृता । तथा तस्करादिभयात् यदसमञ्जसं भाषते सा भयनिःसृता । तथा यत्कथासु असंभाव्याभिधानं सा आख्यायिकानिःसृता । तथाऽव्यभिचारिण्यपि व्यभिचारारोपणमचौर्ये च चौर्यारोपणमित्याद्यभ्याख्यानमुपघातनिःसृता इति । तदुक्तं **प्रज्ञापनायां**–"मोसे णं भंते ! भासा पज्जत्तिया कतिविहा प० ? गो० ! दसविहा प०, तं०–कोहनिस्सिया माणनिस्सिया मायानिस्सिया लोभनिस्सिया पेज्जनिस्सिया दोसनिस्सिया हासनिस्सिया भयनिस्सिया अक्खाइयानिस्सिया उवघायनिस्सिया" इति । सत्यामृषाऽपि दशप्रकारा, तद्यथा–उत्पन्नमिश्रिता, विगतमिश्रिता, उत्पन्नविगतमिश्रिता, जीवमिश्रिता, अजीवमिश्रिता, जीवाजीवमिश्रिता, अनन्तमिश्रिता, प्रत्येकमिश्रिता, अद्धामिश्रिता, अद्धद्धामिश्रितेति । तत्रोत्पन्नमिश्रिताया अनुत्पन्नैः सह सङ्ख्यापूर्त्यर्थं यत्र भाषायां भाष्यते सा उत्पन्नमिश्रिता, एवमन्यत्रापि यथायोगं परिभावनीयम् । तत्र कस्मिंश्चिद् ग्रामे नगरे वा न्यूनाधिकेषु दारकेषु जातेषु दश दारका अद्यास्मिन्नुत्पन्ना इत्यादि उत्पन्नमिश्रा । तथा न्यूनाधिकेषु मृतेषु अद्यात्र दश मृता इत्यादि सा विगतमिश्रा । तथा कस्मिंश्चिद् ग्रामे नगरे वा दश दारका उत्पन्नाः पञ्च मृताश्च, तत्र सप्तोत्पन्ना अष्टौ च मृता इति ब्रुवतो जन्मतो मरणतश्च विसंवादित्वेनोत्पन्नविगतमिश्रिता । तथा प्रभूतानां जीवतां स्तोकानां च मृतानां शङ्खशङ्खनकादीनामेकत्र राशौ दृष्टे यदा कश्चिदेवं ब्रूते–अहोऽत्र महान् जीव-

राशिरयमिति, तदा सा जीवमिश्रिता, जीवत्सु सत्यत्वात् मृतेषु मृषात्वात् सत्यामृषात्वमिति । तथा बहुषु मृतेषु स्तोकेषु च जीवत्सु एकीकृतेषु शङ्खादिषु अहोऽयं महान् मृतो जीवराशिरिति ब्रुवतोऽजीवमिश्रिता, मृतेषु सत्यत्वात् जीवत्सु मृषात्वात् सत्यामृषात्वं भावनीयमिति । तथा तस्मिन्नेव राशौ परिणामावधारयतो विसंवादे जीवाजीवमिश्रिता । तथा मूलकादिकमनन्तकायं प्रत्येकवनस्पतिना सार्द्धं मिश्रमवलोक्य सर्वोऽप्येषोऽनन्तकायिक इति ब्रुवतोऽनन्तमिश्रिता । तथाऽनन्तकायिकेन सार्द्धं मिलितं प्रत्येकवनस्पतिसंघातमवलोक्य सर्वोऽप्ययं प्रत्येकवनस्पतिरिति वदतः प्रत्येकमिश्रिता । तथाऽद्धा कालः स चेह प्रस्तावात् दिवसो रात्रिर्वा परिगृह्यते स मिश्रितो यया साऽद्धामिश्रिता, यथा कश्चित् पुमान् शीघ्रतया दिवसे वर्त्तमान एव रात्रिः पतिता, रात्रौ वा वर्त्तमानायामुत्तिष्ठ सूर्य उद्गत इत्यद्धामिश्रिता । तथा दिवसस्य रात्रेर्वा एकदेशोऽद्धद्धा सा मिश्रिता यया साऽद्धद्धामिश्रिता, यथा प्रथमपौरुष्यामेव वर्त्तमानायां कश्चन पुमान् त्वरयन् चल मध्याह्नीभूतमिति वदतः, तदुक्तं प्रज्ञापनायां—"सच्चामोसा णं भंते ! भासा अपज्जत्तिया कतिविहा प० ? गो० ! दसविहा प०, तं०—उप्पन्नमिस्सिया विगतमिस्सिया उप्पन्नविगतमिस्सिया जीवमिस्सिया अजीवमिस्सिया जीवाजीवमिस्सिया अणंतमिस्सिया परित्तमिस्सिया अद्धामिस्सिया अद्धद्धामिस्सिया" इति । 'अपज्जत्तिया' नाम मिश्रतया उभयप्रतिषेधात्मकतया वा न प्रतिनियतरूपेणावधारयितुं शक्यते तेन साऽपर्याप्ता, सा सत्यामृषा असत्यामृषा चेति । असत्यामृषा द्वादशधा, तद्यथा—आमन्त्रणी, आज्ञापनी, याचनी, पृच्छनी, प्रज्ञापनी, प्रत्याख्यानी, इच्छानुलोमा, अनभिग्रहा, अभिगृहीता, संशयकरणी, व्याकृता, अव्याकृता चेति । तत्र 'हे देवदत्त !' इत्यादिरूपाऽऽमन्त्रणी, प्रागुक्तसत्यादित्रिकलक्षणविरहात् न सत्या, नाप्यसत्या,

न मिश्रा, किन्तु व्यवहारमात्रप्रवृत्तिहेतुकत्वादसत्यामृषेति । एवं सर्वत्र भावना कार्या । तथा परस्य कार्ये प्रवर्त्तनं यथेदं कुर्वित्यादि आज्ञापनी । तथा कस्यचित्पार्श्वे वस्तुविशेषं देहीति मार्गयतो याचनी । अविज्ञातार्थस्य सन्दिग्धस्य वार्थस्य परिज्ञानाय तद्विदः पार्श्वे चोदना पृच्छनी । विनीतविनेयजनस्योपदेशप्रदानं, यथा 'ये प्राणिवधान्निवृत्ता भवन्ति ते परत्र नीरोगिणो दीर्घायुषश्च भवन्ती'ति प्रज्ञापनी, तदुक्तं—"पाणिवहाओ नियत्ता हवन्ति दीहाऊया अरोगा य । एमाई पण्णत्ता पण्णवणी वीयरागेहिं ॥ १ ॥" इति । मार्गयतः प्रतिषेधवचनं प्रत्याख्यानी । तथा इच्छानुलोमा नाम यथा केनचित् पुरुषेण किञ्चित्कार्यारम्भः कृतोऽन्यस्तं प्रति प्राह—करोतु भवान् ममाप्येतदभिप्रेतमिति । यत्र प्रतिनियतार्थानवधारणं साऽनभिग्रहा, यथा प्रभूतेषु कार्येषु सत्सु केनचिदागत्य पृष्टं किं करोमि ? प्रत्युत्तरितं 'यद्रोचते तत्कुर्वि'ति । यत्र प्रतिनियतार्थावधारणं साभिगृहीता यथेदमिदानीं कर्त्तव्यमिदं नेति । याऽनेकार्थाभिधायिनी सा संशयकरणी, यथा केनचिदुक्तं 'भो राम ! सैन्धवमानय' तदा सन्दिहानो रामो विकल्पयति 'किमश्वो मार्गितः उत लवणमि'त्युभयत्रापि सैन्धवशब्दस्य प्रयोगादिति । या प्रकटार्था सा व्याकृता, यथा 'घटमानये'त्यादि । यातिगम्भीरशब्दार्था अव्यक्तशब्दार्था वा साऽविभागितार्थत्वादव्याकृतेति, तदुक्तं प्रज्ञापनासूत्रे—"असच्चमोसा णं भंते ! भासा अपज्जत्तिया कइविहा प० ? गो० ! दुवालसविहा प०, तं०—आमंतणि आणवणी, जायणि तह पुच्छणी य पण्णवणी य । पच्चक्खाणी भासा, भासा इच्छानुलोमा य ॥१॥ अणभिग्गहिया भासा, भासा य अभिग्गहम्मि वोद्धव्वा । संसयकरणी भासा, वोगड अवोगडा चेव ॥ २ ॥" इति । विस्तरार्थिना भाषारहस्यमवलोकनीयमिति । उक्ताः प्रसङ्गतो भाषाया द्विचत्वारिंशद्भेदाः ।

काययोगव्याख्याने च यद्यपि भवनक्रममपेक्ष्य पूर्वं मिश्रकाययोगा भवन्ति, ततः शुद्धास्तथापि शुद्धं काययोगमन्तरेण केवलस्य मिश्रस्य व्याख्यां कर्त्तुमशक्यत्वादादौ शुद्धाः काययोगाः व्याख्यायन्ते, ततो मिश्राश्च । चीयत इति कायः शरीरम्, आत्मनः पुद्गलद्रव्यघटितनिवासः, बालवृद्धयष्टिवदुपग्राहकः, तद्योगात् जीवस्य वीर्यपरिणामः काययोगः, यथाग्निसम्पर्कात् घटस्य रक्ततापरिणामस्तथात्मनः कायकरणसम्बन्धात् वीर्यपरिणामः । तत्र विविधा विशिष्टा वा क्रिया विक्रिया, विक्रिया एव वैक्रियं, विक्रियायां भवं वा वैक्रियम्, तदुक्तं–"विविहा विसिट्ठगा वा, किरिया तीए उ जं भवंतमिह । वेउव्वियं तयं पुण, नारगदेवाण पगईए ॥ १ ॥" इति । यद्वा विशिष्टं कुर्वन्ति तदिति निपातनात् वैक्रियम्, यद्वा विविधर्द्धिगुणयुक्तं वैक्रियम्, तदेव कायः वैक्रियकायस्तेन योगो वैक्रियकाययोगः । यद्वा वैकुर्विककाययोगः, तत्र विकुर्व इति सिद्धान्तप्रसिद्धो धातुः, विकुर्वणं विकुर्वः, विविधा क्रिया इत्यर्थः, तेन निर्वृत्तं वैकुर्विकम्, तदेव कायः वैकुर्विककायः, तेन योगः वैकुर्विककाययोगः । विविधा क्रिया त्वस्यैवम्, तथाहि–समासादितवैक्रियलब्धेरिच्छानुलोम्यादनेकं भूत्वैकं भवति, एकं वा भूत्वाऽनेकं भवति, स्थूलं भूत्वा सूक्ष्मं भवति, सूक्ष्मं वा भूत्वा बादरं भवति, दृश्यं भूत्वाऽदृश्यं भवति, अदृश्यं वा भूत्वा दृश्यं भवति, एकाकृतिर्भूत्वाऽनेकाकृतिर्भवति, अनेकाकृतिर्भूत्वा एकाकृतिर्भवति, भूमिचरं भूत्वा खेचरं भवति, खेचरं भूत्वा भूमिचरं भवति, प्रतिघाति भूत्वाऽप्रतिघाति भवति, अप्रतिघाति भूत्वा प्रतिघाति भवतीति क्रियायां भवं वैक्रियमित्युक्तमेवेति, तदुक्तं भगवत्यां तृतीयशतकपञ्चमोद्देशके–"अणगारे भंते ! भाविअप्पा केवतियाइं पभू इत्थिरूवाइं विकुवित्तए ? गोयमा ! से जहा नामए जुवइं जुवाणे हत्थेणं गेण्हेज्जा चक्कस्स वा नाभी आरगा उत्तासिया एवामेव अणगारेवि

भाविअप्पा विउव्वियसमुग्घाएणं सम्मोहणइ जाव पभू णं गोयमा ! अणगारेणं भावियप्पा केवलकप्पं जंबूद्दीवं दीवं बहूहिं इत्थीरूवेहिं आइन्नं वितिकिन्नं जाव एस णं गोयमा ! अणगारस्स भावि० अयमेयारूवे विसए विसमेत्ते वुच्चइ नो चेव णं संपत्तीए विकुव्विंसु वा ३" तथा चतुर्दशशतकाष्टमोद्देशके—"अत्थि णं भंते ! अव्वाबाहा देवा अव्वाबाहा देवा ? हन्ता अत्थि, से केणट्ठेणं भंते ! एवं वुच्चइ अव्वाबाहा देवा २ ! गोयमा ! पभू णं एगमेगे अव्वाबाहे देवे एगमेगस्स पुरिसस्स एगमेगंसि अच्छिपत्तंसि दिव्वं देवड्ढिं दिव्वं देवज्जुत्तिं दिव्वं देवाणुभावं दिव्वं बत्तीसविहं नट्टविहिं उवदंसेत्तए णो चेव णं तस्स पुरिसस्स किंचि आवाहं वा वाबाहं वा उप्पाएइ छविच्छेयं वा करेंति सुहुमं च णं उवदंसेज्जा से तेणट्ठेणं जाव अव्वाबाहा देवा २"। एवमष्टादशशतकसप्तमोद्देशकेऽपि—"देवे णं भंते ! महड्ढिए जाव महसक्खे रूवसहस्सं विउव्वित्ता पभू अण्णमण्णेणं सद्धिं संगामं संगामित्तए, हंता पभू । तओ णं भंते ! बोंदीओ किं एगजीवफुडाओ अणेगजीवफुडाओ, गोयमा ! एगजीवफुडाओ नो अणेगजीवफुडाओ, तेसि णं भन्ते ! बोंदीणं अन्तरा किं एगजीवफुडा अणेगजीवफुडा, गोयमा ! एगजीवफुडा नो अणेगजीवफुडा। पुरिसे णं भंते ! अन्तरेणं हत्थेणं वा एवं जहा अट्ठमसए तइए उद्देसए जाव नो खलु तत्थ सत्थं संकमति" इति । एवमनेकानि सूत्राणि विविधशक्तियुक्तनानाविधवैक्रियशरीरप्रतिपादकानि समुपलभ्यन्त इति । तच्च द्विधा औपपातिकं लब्धिप्रत्ययं च । तत्रौपपातिकमुपपातजन्मनिमित्तं तच्च देवनारकाणां, लब्धिप्रत्ययं तिर्यग्मनुष्याणां च । तथा वैक्रियं मिश्रं यत्र कार्मणेनौदारिकेण चेति गम्यते तद् वैक्रियमिश्रम्, तत्रापर्याप्तावस्थायामुत्पत्त्यनन्तरद्वितीयादिसमयेषु देवनारकाणां कार्मणेन सह मिश्रम्, तथा गर्भजानां तिर्यग्मनुजां पर्याप्तानां केषाञ्चिद्वायुकायिकानां चौदारिकेण सह वैक्रियप्रारम्भकाले वैक्रियपरित्यागकाले च वैक्रियमिश्रं भवति । मिश्रमप्रतिपूर्णं यथा गुडमिश्रमन्नद्रव्यं गुडमिति अन्नमिति वा न

व्यपदेष्टुं शक्यते, गुडेतरद्रव्याभ्यामप्रतिपूर्णत्वात्, एवमत्रापि वैक्रियकार्मणशरीराभ्यां औदारिकवैक्रियशरीराभ्यां वा मिश्रत्वात् तद्व्यपदेशः, यद्वा शरीरकार्याकरणात् अपरिनिष्ठितघटवत् मिश्रमिति व्यपदिश्यते, यथा जलधारणाद्यसमर्थोऽपरिनिष्ठितो घटोऽपि घटव्यपदेशं न लभते, तद्वदत्रापीति । ननूभयनिष्ठं मिश्रं कथं वैक्रियमिश्रमित्युच्यते, तथाहि—यथा कार्मणं वैक्रियेण मिश्रं तथा वैक्रियमपि कार्मणेन मिश्रं ततः कथं वैक्रियमिश्रमेवोच्यते, न कार्म्मणमिश्रम्, तथा वैक्रियमौदारिकेण मिश्रं तद्वदौदारिकमपि वैक्रियेण मिश्रमिति कथमुच्यते वैक्रियमिश्रमेव नौदारिकमिति चेत्?, अत्र यथाक्रममुच्यते—इह स एव व्यपदेशः कर्त्तव्यो येन विवक्षितार्थप्रतिपत्तिर्निष्प्रतिपक्षा श्रोतॄणामुपजायते, अन्यथा सन्देहापत्तितः विवक्षितार्थाप्रतिपत्त्या न तेषामुपकारः कृतः स्यात्, कार्मणं शरीरं च संसारं यावत् सर्वजीवानां सदैव भवति, ततो न ज्ञायते कार्मणमिश्रमित्युक्ते तिर्यग्मनुजानामपर्याप्तावस्थायां तद्विवक्षितम्, उत देवनारकाणामिति, तत उत्पत्तिमाश्रित्य वैक्रियस्य प्रधानत्वात् कादाचित्कत्वाच्च निष्प्रतिपक्षविवक्षितार्थप्रतिपत्त्यर्थं वैक्रियमिश्रमिति व्यपदेशः कृतः। तथा वैक्रियस्य प्रारभ्यमाणत्वेन प्रारम्भकाले परित्यागकाले वहुव्यापारत्वेन च वैक्रियस्य प्राधान्यविवक्षया वैक्रियमिश्रमिति व्यपदेशः कृतः, नौदारिकेणेति । ततः वैक्रियमिश्रश्चासौ काययोगश्च वैक्रियमिश्रकाययोगः। तथा स्वच्छस्फटिकमिव सकलवस्तुप्रतिबिम्बाधारभूतैः प्रशस्तवर्णगन्धरसस्पर्शवद्भिर्विशुद्धैराहारकशरीरप्रायोग्यैर्वर्गणाद्रव्यैश्चतुर्दशपूर्वधरैस्तीर्थकरर्द्धिदर्शनादितथाविधकार्यसमुत्पन्ने सति विशिष्टलब्धिवशादाह्रियन्ते निवर्त्त्यन्त इत्याहारकम्, यद्वा ह्रियन्ते गृह्यन्ते तीर्थकरादिसमीपे जीवादयः पदार्था अनेनेत्याहारकम्, तदुक्तं पूज्यैः—"कज्जंमि समुप्पन्ने सुयकेवलिणा विसिट्ठलद्धीए । जं एत्थ आहरिज्जइ भणंति आहारगं तं तु ॥ १ ॥" इति । प्रयोजनं

''पाणिदयरिद्धिदंसणसुहुमपयत्थावगाहणहेउं वा । संसयवोच्छेयत्थं गमणं जिणपायमूलंमि ॥ १ ॥'' अत्र प्राणिदयोनाम तीर्थ-
ल्विदम्, ''पाणिदयरिद्धिदंसणसुहुमपयत्थावगाहणहेउं वा । संसयवोच्छेयत्थं गमणं जिणपायमूलंमि ॥ १ ॥'' अत्र प्राणिदयोनाम तीर्थ-
क्रूर इति। एतच्च घनैः शुक्लवर्णोपेतैर्द्रव्यैर्निष्पन्नत्वात्, आद्यसंस्थानोपेतत्वात्, हिंसादावप्रवर्त्तनात्, व्याहन्तुमशक्यत्वात्,
स्वस्यान्येन कस्याप्यव्याहननाच्च शुभं विशुद्धमव्याघातीति, तदुक्तं श्रीपूज्यवाचकमुख्यैः–''शुभं विशुद्धमव्याघाति चाहारकं
चतुर्दशपूर्वधर एव'' इति। तच्चाभिन्नाक्षरचतुर्दशपूर्वधराः कुर्वन्ति, न भिन्नाक्षरश्रुतकेवलिनः, प्रयोजनाभावात्, तथाहि–चतु-
र्दशपूर्वधरा द्विधा, भिन्नाक्षरा अभिन्नाक्षराश्च। तत्रैकैकमक्षरं श्रुतज्ञानगम्यैः पर्यायैः सत्कारिकाभेदेन भिन्नं वितिमिरतां नीतं
यैस्ते भिन्नाक्षराः, यतस्तेषां श्रुतज्ञानसंशयापगमेन प्रश्नाभावादाहारकलब्ध्योपजीवनं न युक्तम्, वीतरागप्रायत्वाच्च त एव
श्रुतकेवलिनो भण्यन्ते, शेषा असंपूर्णश्रुतज्ञानलाभात् वीतरागत्वाभावाच्चाचार्यकृतसूत्रन्यासात् केचिदतुष्यन्तोऽधिकम-
वीयामह इति मत्वाऽऽहारकं निर्वर्त्तयन्ति। अत्यन्तगहने कस्मिंश्चिदर्थे सन्दिहानास्तदर्थनिश्चितये विदेहक्षेत्रान्तर्वर्त्तिवि-
हरमाणजिनपादमूले औदारिकेण गन्तुं न शक्यमिति मत्वा लब्धिप्रत्ययमाहारकं निर्वर्त्तयन्ति। प्रभोः पादमूले गत्वा च
तत्र सकललोकालोकावलोकनलम्पटालोकावलोकितलोकालोकं भगवन्तमवलोक्याभिवन्द्य पृष्ट्वा च च्छिन्नसंशयास्ते भग-
वन्तः यत्र प्रागुपन्यस्तमौदारिकशरीरमात्मप्रदेशसंवद्धं तत्रागत्याहारकशरीरप्रविष्टमात्मप्रदेशसमूहमुपसंहृत्यौदारिकतनुम-
नुप्रविशन्तीति। तदुक्तं तत्त्वार्थभाष्ये–''तच्चतुर्दशपूर्वधर एव कस्मिंश्चिदर्थे कृच्छ्रेऽत्यन्तसूक्ष्मे सन्देहमापन्नो निश्चयाधिगमार्थं
क्षेत्रान्तरितस्य भगवतोऽर्हतः पादमूलमौदारिकेणाशक्यगमनं मत्वा लब्धिप्रत्ययमेवोत्पादयति। पृष्ट्वाथ भगवन्तं छिन्नसंशयः पुनरागत्य
व्युत्सृजत्यन्तर्मुहूर्त्तस्य'' व्याख्या–''तदेवंविधमाहारकं चतुर्दशपूर्वधर एव लब्धिप्रत्ययमेवोत्पादयतीति क्रियोपरिष्टादभिधास्यते।

चतुर्दशेति सङ्ख्या, पूर्वं प्रणयनयात् पूर्वाण्युच्यन्ते, तानि धारणाज्ञानेनालम्वत इति चतुर्दश पूर्वधरः, स च द्विविधो भिन्नाक्षरोऽभिन्नाक्षरश्च, ते च यस्यैकैकमक्षरं श्रुतज्ञानगम्यपर्यायैः सत्कारिकाभेदेन भिन्नं वितिमिरतामितं स भिन्नाक्षरस्तस्य च श्रुतज्ञानसंशयापगमात् प्रश्नाभावस्ततश्चाहारकलब्धिता( ब्धिसती )मपि नैवोपजीवति, विनालम्वनेन स एव श्रुतकेवली भण्यते । शेषः करोत्यकृत्स्नश्रुतज्ञानलाभादवीतरागत्वाच्च, अत एव केचिदपरितुष्यन्तः सूत्रमाचार्यकृतन्यासादधिकमधीयते—"अकृत्स्नश्रुतस्यर्द्धिमत" इत्यनेन विशेषणकलापेनेति, एवंविधश्चतुर्दशपूर्वधर एव सञ्जातलब्धिस्तन्निर्वर्त्तयति, नान्यः श्रुतविदन्यो वा अवधारणफलम् । किमर्थं पुनरसौ तां लब्धिमुपजीवतीत्याह—'कस्मिंश्चिदर्थे' इत्यादि श्रुतज्ञानगम्ये कस्मिंश्चिदेवार्थेऽत्यन्तगहने सन्दिहानस्तदर्थनिश्चितये विदेहादिक्षेत्रवर्त्तिनोऽर्हतश्चरणकमलाभ्यासमौदारिकेण वपुषा न खलु पार्यते गन्तुमित्यवबुध्य सञ्जातर्द्धिविशेषोपलब्धिप्रत्ययमेव नान्यप्रत्ययमुपजनयत्याहारकशरीरं गत्वा च तत्राशु भगवन्तमालोकितसमस्तलोकालोकमालोक्याभिवन्द्य पृष्ट्वा च विच्छिन्नसंशयः परिभूतपाप्मा पुनरागत्य तमेव देशं यत्र प्राग्गच्छतौदारिकमनाबाधबुद्ध्या न्यासकवन्निक्षिप्तं स्वप्रदेशजालाववद्धं तदवस्थमास्ते, ततो विहायाहारकमुपसंहारमानीयात्मप्रदेशजालं प्रागौदारिकमेवानुप्रविशत्येष चारम्भात् प्रभृत्या अपवर्गात् सर्वोऽन्तर्मुहूर्त्तपरिणामः कालो भवतीति, प्रमाणं चास्यावतरतो न्यूनः पाणिरुत्कर्षेण सम्पूर्ण" इति, तदेव कायस्तेन योगः आहारककाययोगः । आहारकं मिश्रं यत्रौदारिकेणेति गम्यते स आहारकमिश्रः, आहारकस्य प्रारम्भकाले परित्यागकाले च प्राप्यते । तथा 'उदि'ति उद्गता उत्कृष्टा आराच्छाया यस्य तदुद्गतारमुदारं प्रधानं, प्रधानता चास्य तीर्थकरगणधरशरीरापेक्षया द्रष्टव्या, नहि तीर्थकरादिशरीरेभ्योऽन्यत्प्रधानतरमस्ति त्रिलोक्यां शरीरम्, तदपेक्षया अनुत्तरसुरस्याप्यनन्तगुणहीनरूपत्वात् । यद्वोद्गम एवोदारः, उद्गमनमुद्गमः प्रादुर्भावः, स एवोदारशब्देन विवक्ष्यते, यतः

शुक्रशोणिताद्याहारोपादानात् प्रभृत्यनुसमयमुद्गच्छति उपचयं च प्राप्नोति जरामधिगच्छति शिथिलसन्धिवन्धनमालम्ब मानचर्ममण्डलं शीर्यते समन्तात् जराभारविधुरमानमति परिपेलवग्रहणशक्तीन्द्रियग्रामं वलीवलयलेखाविचित्रमन्यदिवोपजायते, अतो मुहुर्मुहुरुद्गमनादुदारं तदेव स्वार्थे इकप्रत्ययविधानादौदारिकम्। यद्वोद्गतं ऊर्ध्वंगतमुच्छ्रायमुद्गच्छतीत्युदारम्। यद्वा उदारं पुष्टं शुक्रशोणितादिप्रचितत्वात्, यद्वा उदारं बृहत् प्रतिक्षणं वृद्धियोगात्। उदारं स्थूलं स्वल्पप्रदेशोपचितत्वात् बृहत्त्वाच्च भेण्डवत्। यद्वा उदारं महत् योजनसहस्रप्रमाणावस्थितारोहपरिणाहत्वात्। यद्वा "उदि"ति उत्कृष्टा आरा मर्यादा प्रमाणं यस्य तदुत्कटारमुदारम्। यद्वोरालं विस्तरवत् तच्च वनस्पतिमाश्रित्य वाच्यम्, तस्य सातिरेकसहस्रयोजनप्रमाणत्वात्। अन्यच्चैवंविधं नास्ति। ननु वैक्रियमधिकं योजनलक्षप्रमाणमस्तीति चेत्? सत्यम्, परमेतदुत्तरवैक्रियम्, न त्ववस्थितं भवधारणीयं वैक्रियशरीरम्, तच्च सप्तमनरकमपेक्ष्य पञ्चशतधनुःप्रमाणम्। औदारिकं त्ववस्थितमेव साधिकसहस्रयोजनप्रमाणम्, तदुक्तं प्रज्ञापनाचूर्णौ—"ओरालं नाम वित्थरालं विसालंति जं भणियं होइ, कथं? साइरेगजोयणसहस्समवट्ठियमाणमोरालियं अन्नमेद्दहमेत्तं नत्थित्ति, विउव्वियं होज्जा? तं तु अणवट्ठियप्पमाणं, अवट्ठियं पुण पंचधणुसयाइं, इमं पुण अवट्ठियप्पमाणं साइरेगं जोयणसहस्सं" इति। अन्यत्रापि—"भन्नइ य तहोरालं वित्थरवंतं वणस्सई पप्प। पगइए नत्थि अन्नं एद्दहमित्तं विसालंति॥ १॥" इति। यद्वा यथोद्गतं निःशेषं निरतिशयं वा, मांसास्थिस्नाय्वाद्यवयवनिबद्धत्वात् सर्वमेव तुल्यम्, पाण्याद्यवयवैरिन्द्रियैर्वा ग्राह्यधर्मत्वात् ग्राह्यम्। परश्वादिना छेद्यम्, छेद्यधर्मयोगात्, तोमरादिना भेद्यम्, भेद्यधर्मोपेतत्वात्, दाह्यधर्मयोगाद् वह्निभान्वादिना दाह्यम्, हरणधर्मयोगाद् महावातादिना हार्यमित्युदाहरणादौदारिकं

पृषोदरादित्वेनेष्टरूपसिद्धिः । अन्यानि तु न तथा, तदुक्तं तत्त्वार्थभाष्ये—"उद्गतारमुदारम्, उत्कटारमुदारम्, उद्गम एवोदारम्, उपादानात् प्रभृति अनुसमयमुद्गच्छति वर्धते जीर्यते शीर्यते परिणमतीत्युदारम्, उदारिकमेवौदारिकम्, नैवमन्यानि, यथोद्गमं वा निरतिशेषं माह्यं छेद्यं भेद्यं दाह्यं हार्यमित्युदाहरणादौदारिकम्, नैवमन्यानि, उदारमिति च स्थूलमुद्गतं पुष्टं बृहन्महदित्युदारमेवौदारिकम्, नैवं शेषाणि तेषां हि परं परं सूक्ष्ममित्युक्तम्" इति । यद्वोरलं विरलप्रदेशं न तु घनं स्वल्पप्रदेशोपचितत्वात् भेण्डवद्बृहत्त्वाच्च, तदुक्तं—"उरलं थोवपएसोवचियंति महल्लगं जहा भिण्डम्" इति । यद्वोदारं बृहदसारं यद्द्रव्यं तन्निवृत्तमौदारिकमसारस्थूलद्रव्यवर्गणारब्धमौदारिकप्रायोग्यपुद्गलग्रहणकारणपुद्गलविपाक्यौदारिकशरीरनामकर्मोदयनिष्पन्नमौदारिकम् । औदारिकमेव चीयमानत्वात् कायः औदारिककायः, तेन योगः औदारिककाययोगः । औदारिकं कार्मणेन मिश्रं यत्र तद् भवत्यौदारिकमिश्रम्, मिश्रत्वं चाप्रतिपूर्णघटवत् गुडमिश्रान्नद्रव्यवद्वा वाच्यम् । उत्पत्तिदेशे ह्यनन्तरमागतो जीवः प्रथमसमये कार्मणेनैवाहारयति, ततः परमौदारिकस्याप्यारब्धत्वात् औदारिकमिश्रेणाहारयति, तदुक्तमाराध्यपादैर्निर्युक्तिकृद्भिः—"जोएण कम्मएणं आहारेइ अणंतरं जीवो । तेण परं मीसेणं जाव सरीरस्स निप्फत्ती ॥ १ ॥" इति । केवलिसमुद्घातावस्थायां द्वितीयषष्ठसप्तमसमयेषु औदारिकमिश्रेणाहारयति । औदारिकमिश्रश्चासौ कायश्चौदारिकमिश्रकायस्तेन योग औदारिकमिश्रकाययोगः । तथा कर्म्मणो जातं कर्मणो विकारो वा कार्मणं, कर्मणि भवं कर्मैव वा कार्मणम्, तदुक्तं—"कम्मविगारो कम्मणमट्ठविहविचित्तकम्मनिप्फन्नं । सव्वेसिं सरीराणं कारणभूयं मुणेयव्वं ॥ १ ॥" इति । तत्त्वार्थभाष्ये च—"कर्मणो विकारः कर्मात्मकं कर्ममयमिति कार्मणं" एवमिति । लोकप्रकाशे च—"क्षीरनीरवदन्योऽन्यं श्लिष्टा जीवप्रदेशकैः । कर्मप्रदेशा येऽनन्ताः कर्मणां स्यात्त-

दात्मकम् ॥ १ ॥" इति । यत्तु "विग्रहगतौ कार्मणयोगः" इति तत्त्वार्थसूत्रभाष्यवृत्तौ जातभवाद्यर्थसम्बन्धः प्रतिषिद्धस्तत्केनाभिप्रायेणेति न ज्ञायते, तथा च तद्वृत्तिः—"कर्मशरीरयोग इत्यर्थः, कर्मैव शरीरं कर्मशरीरं कार्मणमिति स्फुटयति, स्वार्थे च व्युत्पत्तिमावेदयति, कर्म एव कार्मणं न पुनर्जातभवाद्यर्थसम्बन्धोऽत्र कश्चित्समस्ति" इति । न च जातभवाद्यर्थसम्बन्धः वृत्तिकृद्भिर्न स्वीकृतः इति वाच्यम्, कार्मणशरीरवर्णनाधिकारे स्वीकृतत्वात्, तथा च तद्ग्रन्थः—"कर्मणा निर्वृत्तं कार्मणम्, अशेषकर्मराशेराधारभूतं कुण्डवद्बदरादीनामशेषकर्म्मप्रसवसमर्थं वा यथा बीजमङ्कुरादीनाम्, एषा च किलोत्तरप्रकृतिः शरीरनामकर्मणः पृथगेव कर्माष्टकात् समुदायभूतादित्यतः कर्मैव कार्मणं परे नेच्छन्ति । स्वार्थप्रत्ययमुपपत्तीश्चाभिदधते—न किल कर्माण्येव कार्मणं ज्ञानावरणादीनां तदाश्रयत्वाच्चक्षुरादिवत् ज्ञानावरणादीनां भूतकार्मणमाश्रयत्वेन व्यतिष्ठमानं कथं ज्ञानावरणादिमात्रमेव स्यात् यथा चक्षुरादीनामौदारिकशरीरमाश्रयकारणमन्यत् अन्यानि चेन्द्रियाणि । तथा कार्मणमपि कर्मभ्योऽन्यत्, यदि च तन्न स्यात् कुण्डभेदाद्बदराणामितस्ततः पतनं स्यात् कर्मणामनिष्टं चैतत्, तस्मात् यदेषामाश्रयकारणं तत्कार्मणशरीरमिति । उत्पत्तिकारणभेदाच्च पृथक्कर्मभ्यः कार्मणम्, बन्धननामकर्मप्रत्ययं प्रद्वेषादिनिमित्तं च कर्मोत्पद्यत इत्याप्तोपदेशः, शरीराणां तु स्वशरीरनामकर्मोदयादुत्पत्तिरतोऽन्यत्वम् । पाकभेदाच्चान्यत्, ज्ञानावरणादिकर्म पच्यमानं मूढताद्युत्पादयति, कार्मणशरीरकारणपाकस्तु कार्मणमेव शरीरमारभते तस्मादन्यत् । पूर्वोत्तरकालं बन्धविनिवृत्तेश्चान्यत्वं, मोहज्ञानावरणादिवत्, अनिवृत्तिस्थाने हि विनिवर्त्तते बन्धः कार्मणस्य, कर्मणस्तु सह तेन पूर्वमुत्तरत्र च यथा पूर्वं मोहक्षयः पश्चात् ज्ञानावरणक्षय इति । तदेतत्सर्वमुपपत्तिजालमनैकान्तिकम्, अभिन्नकर्मस्वपि दर्शनात् । अन्यच्च ज्ञानावरणादिकर्माष्टकात् पृथक्त्वकल्प्यमाने कार्मणे नवकर्मप्रसङ्गः कार्यकारणवादाभ्युपगमे वा कर्मकार्मणयोः स्यादन्यत्वं स्यादनन्यत्वमभ्युपेयमन्यथा वा त एव दीर्घायुषोऽवगच्छन्ति येऽत्रान्यत्वै-

कान्तेनाभिनिविशन्त इति । वयं तु ब्रूमः कर्म्मभिर्निष्पन्नं कर्मसु भवं कर्मसु जातं कर्मैव वा कार्मणमिति न कश्चिद्दोषः प्रक्रियायामाहितनैपुण्यस्य" इति। **शतकचूर्णौ कार्मणकाययोगवर्णनाधिकारे तु**—"कम्मकम्मइगाणमणाणत्तमिति चेत, तन्न, कम्मइगस्स कम्मइयसरीरणामोदयनिष्पन्नत्वात् किन्तु कम्मइगसरीरपोग्गलाणं कम्मपोग्गलाणं च सरिसवग्गणत्तातो तंमि चेव तस्स ववदेसो सव्वकम्मप्परोणुप्पातगसुहदुक्खाणबीयभूयं कम्मइगसरीरं" **इत्याद्युल्लेखैः कार्मणशरीरकार्मणशरीरनामकर्मणोः स्पष्ट एव भेदोऽवसीयते । कार्मणशरीरनामकर्मवर्णनाधिकारेऽपि तदेव शतकचूर्णौ वृत्तौ च स्पष्टीकृतं—तच्च यथाक्रमं**—"कम्मइगं सव्वकम्माधारभूतं जहा कुण्डं बदराईणं सर्वकर्मप्रसवसमर्थं यथा वीजं अंकुरादीनां । एसा उत्तरप्रकृतिः शरीरनामकम्मस्स पृथगेव कर्म्माष्टकसमुदायभूतादिति" । "यस्य कर्म्मण उदयात् कार्मणवर्गणापुद्गलान् गृहीत्वा कार्मणशरीरत्वेन परिणमयति तत्कार्मणशरीरनाम । इदं च सत्यपि समानवर्गणापुद्गलमयत्वे स्वकार्यभूतात् कार्मणशरीरादन्यदेव, इदं हि कार्मणशरीरस्य कारणभूता नामकर्मण उत्तरप्रकृतिः, कार्मणशरीरं पुनरेतदुदयसंभवित्वादेतत्कार्यम्, निःशेषकर्मणां प्ररोहभूमिराधारो वा संसार्यात्मनां च गत्यन्तरसंक्रमणे साधकतमं कारणमन्यदेव स्वकायात्कार्मणशरीरात् कारणभूतं प्रस्तुतं कार्मणशरीरनामकर्म" इति । **तदेव तत्त्वार्थवृत्तावपि कार्मणयोगवर्णनाधिकारे यथा**—"सर्वकर्मप्ररोहवीजं सांसारिकसुखदुःखभाजनं कर्मैव कार्मणशरीरं तेन योगः कार्मणकाययोगः । स च विग्रहसमापत्तौ केवलिसमुद्घाते वा त्रिचतुर्थपञ्चमसमयेषु भवति । कर्मणि वा भवं कार्मणं । न च कर्मकार्मणयोरैक्यम्, कार्मणस्य कर्मणा निष्पादितत्वात्, किन्तु कर्मकार्मणवर्गणानां सदृशत्वात् तथैव तस्य व्यपदेशः कार्मणमिति" इति । **ननु कार्मणशरीरकार्मणशरीरनामकर्मणोः कार्यकारणरूपत्वेन भिन्नत्वेऽपि कर्मपरमाणव एवात्मप्रदेशैः सह ये क्षीरनीरवत् अन्योऽन्यानुगताः सन्तः शरीररूपतया परिणतास्ते कर्मजास्ते एव कार्म-**

कारीष्यते, अन्यथा चानेकदोषापत्तिः स्यात् । एवं कार्मणमित्यादि । एवमेतेनादित्यप्रकाशनिदर्शनेन कार्मणं शरीरमात्मनश्च स्वरूपस्य कारणमन्येषां चौदारिकादिवपुषाम्, न पुनर्ज्ञानावरणादिकर्मव्यतिरिक्तमस्य कारणमन्वेषितव्यम्, कर्ममात्रत्वात् कर्मस्वभावत्वात् कार्मणस्येति, एतयोश्च तैजसकार्मणयोर्जघन्यतः प्रमाणमङ्गुलासङ्ख्येयभाग उत्कृष्टतश्चौदारिकशरीरप्रमाणम् । केवलिनः समुद्घाते लोकप्रमाणे वा भवतो मारणान्तिकसमुद्घाते वा आयामतो लोकान्ताल्लोकान्तायते स्यातामिति" । इदं च शरीरं जन्तोर्गत्यन्तरसंक्रान्तौ साधकतमं कारणं, तथाहि–कर्मजेनैव वपुषा परिकरितो जन्तुर्मरणदेशमपहायोत्पत्तिदेशमभिसर्पति । ननु यदि कार्मणवपुः परिकरितो जन्तुर्गत्यन्तरं संक्रामति तर्हि स गच्छन्नागच्छन् वा कस्मान् न दृष्टिपथमवतरतीति चेत् ?, उच्यते–कर्मपुद्गलानामतिसूक्ष्मत्वेन चक्षुरादीन्द्रियाविषयत्वात्, तदुक्तमन्यैरपि–"अन्तराभवदेहोऽपि सूक्ष्मत्वान्नोपलभ्यते । निष्क्रमन् वा प्रविशन् वा नाभावोऽनीक्षणादपि ॥१॥" इति । तदेव कायः कार्मणकायः, तेन योगः कार्मणकाययोगः । अयं च योगः विग्रहगतौ उत्पत्तिप्रथमसमये केवलिसमुद्घाते च तृतीयचतुर्थपञ्चमसमयेषु मतान्तरेणानाहारकेष्वेवेत्यग्रे परिस्फुटं भविष्यति । ननु तैजसमपि शरीरं विद्यते, तथाहि–तेजोगुणोपेतद्रव्यवर्गणाप्रारब्धं तेजोविकारस्तेज एव वा तैजसमुष्णगुणयुतं शापानुग्रहसामर्थ्याविर्भावनम्, तदेव यदोत्तरगुणप्रत्यया लब्धिरुत्पन्ना भवति तदा परं प्रति दाहाय विसृजति रोषावेशाध्मातमानसो गोशालकादिवत्, प्रसन्नस्तु शीततेजसानुगृह्णाति । यस्य पुनरुत्तरगुणलब्धिरसती तस्य सततमभ्यवहृताहारमेव पाचयति । यच्च तत्पाचनशक्तियुक्तं तत्तैजसमिति कथं तैजसशरीरकाययोगोऽष्टमो न भवतीति चेत् ? न, कार्मणेन सहाव्यभिचरितत्वेन तद्ग्रहणेन तस्यापि गृहीतत्वात् । यद्वा नयवादापेक्षया तैजसशरीरमनादिसंबद्धं नास्त्येव, यतस्तैजसं लब्ध्यपेक्ष्यं स्वसत्तामासा-

साधनैरुत्पद्यते । तल्लब्धिसम्पन्नस्तु
दयति, सा च लब्धिर्न सर्वेषां सर्वदा, किन्तु केषाञ्चिदेव विशिष्टतपोऽनुष्ठानादिभिः साधनैरुत्पद्यते । तल्लब्धिसम्पन्नस्तु
क्रोधावेशादरुणलोचनश्चलत्कपोलाधरपुटः, कृशानुपुञ्ज इव दुष्प्रेक्ष्यः, दुर्ग इवातिदूरपास्तः शापप्रदानकृताध्यवसायः, स्फुलि-
ङ्गमालाकुलामत्युष्णां तेजोलेश्यां प्रयत्नविशेषात् गोशालकादिवत् तथा मुञ्चति यथा परस्तदैव भस्मसाद्भवति । तथा मनःप्र-
सादावेशादनुकम्पया वाऽनुग्राह्यपक्षं प्रति प्रह्लादकारिणममृतकल्पं तेजोविशेषमनुष्णदीधितिवत् विधूतसकलपरितापतिमिर-
राशिमनुग्रहप्रवणमानसः क्षिपति, येनाशु सुखास्वादविनिमीलितलोचनोऽपूर्व इव जायते, यथा च भगवद्भिः कृपापूरितचे-
तोभिरुष्णलेश्यापरितप्ताङ्गो गोशालकोऽनुगृहीतः शीततेजोलेश्याभिः । तस्माद् यल्लब्ध्या समुद्भाव्यते तत्कथमनादिसम्बन्धं
सर्वस्य वा स्यात् ? या पुनरभ्यवहृताहारं प्रति पाचकशक्तिर्विनापि लब्ध्या सा तु कार्मणस्यैव भविष्यति कर्मण उष्णत्वात् ।
कार्मणं हीदं शरीरमनेकशक्तिगर्भत्वादनुकरोति विश्वकर्मणस्तदेव हि समासादितपरिणतिर्व्यपदिश्यते यदि तैजसशरीरतया
तदा न कश्चिद्दोष इति न तैजसशरीरकाययोगोऽतिरिक्त इत्यादिकं सुविवेचितं नयवादापेक्षया तत्त्वार्थवृत्तौ, तदुक्तं—
"ननु चानादिसम्बन्धे च सर्वस्येति वचनात् तैजसयोगसद्भावोऽप्यतोऽष्टविधेन काययोगेन भवितव्यम् । ततश्च षोडशभेदो योगः स्यात्, अव-
धारणं च भाष्ये कर्मकृत एवेति तदप्यसमीक्ष्य कृतं स्यात्, तत्रोच्यते, सर्वस्येत्यत्र सूत्रे तैजसयोगमाचार्योऽन्यमतेन निराकरिष्यति, एके
त्वाचार्याः नयवादापेक्षमित्यादिना भाष्येण, अतः क्रममुदीक्षस्व, मा त्वरिष्ठाः, तत्रैवेदं निश्चयिष्यते, समासतस्तावद्गृहाण तैजसं कार्मणान्न
भिन्नमेकमेवेदमित्यतः पञ्चदशधा योगः, अवधारणमपि भाष्ये नासमञ्जसमिति" । अत्र सिद्धान्ताभिप्रायेणायं विशेषः—वैक्रिय-
लब्धिसम्पन्नः पर्याप्तो वायुकायिको गर्भजतिर्यक्पञ्चेन्द्रियो मनुष्यो वौदारिकशरीरस्थो यदा वैक्रियं करोति तदौदारिकका-

यथोगे वर्त्तमानः प्रदेशान् विक्षिप्य वैक्रियपुद्गलानुपादाय वैक्रियशरीरपर्याप्त्या पर्याप्तिभावं यावत् नाभ्युपगच्छति तावत् यद्यपि मिश्रतोभयनिष्ठा तथाप्यौदारिकस्य प्रारम्भकत्वेन प्राधान्यात् औदारिकमिश्रमिति व्यपदिश्यते न वैक्रियमिश्रमिति, वैक्रियशरीरी भूत्वा कृतकार्यस्तु वैक्रियं परिजिहीर्षुरौदारिके प्रवेष्टुं यतते तदा वैक्रियबलेनौदारिकोपादानाय प्रवर्त्तते इति वैक्रियस्य बहुव्यापारत्वेन प्राधान्यात् वैक्रियमिश्रमिति व्यपदिश्यते नौदारिकमिश्रमिति । तथाऽऽहारकमपि शरीरं यदा कश्चित् आहारकलब्धिसम्पन्नश्चतुर्दशपूर्वधरः करोति तदा यद्यपि मिश्रतोभयनिष्ठा तथापि प्रारम्भकत्वेनौदारिकस्य प्राधान्यात् तेन व्यपदेशः औदारिकमिश्रमिति, नाहारकमिश्रमिति । परित्यागकाले त्वाहारकस्य बहुव्यापारत्वेन प्राधान्यात् आहारकमिश्रं नौदारिकमिश्रमिति । ननु कायिक एवैको योगोऽस्तु किं शेषयोगाभ्यां? तद्द्रव्याणां कायिकेनैव योगेनोपादानात् । न च तद्द्रव्याणां वाचिकेन मानसिकेन व्युत्सर्जनात् चिन्तनाच्च क्रमशस्तद्व्यपदेश इति वाच्यम्, विकल्पद्वयानतिक्रमात्, तथाहि–कोऽयं वाग्योगः को वा मनोयोगः? किं यथाक्रमं निसृज्यमानभाषावर्गणावर्गरूपो मन्यमानमनोवर्गणाद्रव्यरूपो वा? किं वा कायव्यापाररूपो वा?, न निसृज्यमानभाषावर्गणावर्गरूपो, न वा मन्यमानमनोवर्गणाद्रव्यरूपो, भाषामनोद्रव्याणां रूपरसादिवत् पुद्गलपरिणामत्वेन जीवाधिष्ठितकायव्यापारवत् जीवव्यापाररूपयोगाभावात्तयोः । अपि च वाचा न किञ्चिन्निसृज्यते तस्या एव निसृज्यमानत्वात् । द्वितीये तु कायिकेन निसृजतीति वाक्येनैव निर्वाहात् "निसिरइ तह वाइएण जोएणं" इति निर्युक्तिवाक्यवैयर्थ्यं स्यात् इति चेत्? अत्रोच्यते–द्वितीयविकल्प एवात्र स्वीक्रियते, केवलमविशिष्टः काययोगो वाग्योगतया मनोयोगतया वा नास्माभिरिष्यते किन्तु तनुयोगविशेषितावेव मनोवा-

ग्योगाविष्येते । काययोगस्तु मननकाले निसर्गादिकाले च वर्त्तत एव, यतः काययोगोऽयोगिवर्जानां सर्वेषां जन्तूनां सर्वास्ववस्थासु विद्यत एव । इदमुक्तं भवति–यद्यपि काययोगः सर्वत्रानुगतोऽस्ति तथापि येन मनोवाग्द्रव्याणामुपादानं करोति स कायिकयोगः, येन संरंभेण वाग्द्रव्याणि मुञ्चति स वाचिकः, येन तु मनोद्रव्याणि चिन्तायां व्यापारयति स मनोयोग इत्येवं तनुयोग एवैक उपाधिभेदेन त्रिधा विभक्त इति एतावन्मात्रभेदेन त्रयोऽप्यमी योगा व्यवह्रियन्ते । परमार्थतस्तु एक एव सर्वत्र कायिकः, तथा चात्रानुमानं–काययोगान्तर्गतावेव मनोवाग्योगौ, कायेनैव तद्द्रव्यग्रहणात्, प्राणापानवदिति । यथा काययोगेन प्राणापानद्रव्यग्रहणात् प्राणापानव्यापारो न कायिकयोगात् भिद्यते एवं मनोवाग्योगावपि न कायिकयोगात् भिद्येते इति भावः । ननु तर्हि तुल्ये तनुयोगत्वे मनोवाग्योगवत् प्राणापानयोगोऽपि चतुर्थः कथं न स्वीकृतः, तनुयोगत्वाविशेषात्, अन्यथा मनोवाग्योगावपि न पृथक् स्यातामिति चेत्? न, यतो लोकलोकोत्तररूढव्यवहारप्रसिद्धिनिमित्तं मनोवाग्योगावेव पृथक्कृतौ न प्राणापानयोगः । ननु व्यवहारोऽपि कथमित्थं प्रवृत्त इति चेत्? उच्यते, यतो वाचः स्वाध्यायविधानपरप्रत्यायनादिकं मनसश्च धर्मध्यानादिकं विशिष्टं कायक्रियाव्यतिरिक्तं स्फुटं फलमुपलभ्यते, नैवं प्राणापानयोरिति तनुयोगाभ्यन्तर्वर्त्येवासौ प्राणापानव्यापारो व्यवह्रियते, न पृथक् । न च 'जीवत्यसा'विति प्रतीतिजननादिकं फलमुपलभ्यते एवेत्यपि वक्तुमुचितम्, यत एवम्भूतस्य प्रयोजनमात्रस्य सर्वत्र विद्यमानत्वेन धावनवल्गनादिव्यापारस्यापि पृथग्योगत्वप्रसङ्गात्, तस्माद्विशिष्टव्यवहाराङ्गभूतपरप्रत्यायनादिफलत्वात् पृथक्कृतौ मनोवाग्योगौ, न प्राणापानयोगः, तदेवं तनुयोगो वाग्निसर्गविषये व्याप्रियमाणो वाग्योगो, मनने तु व्याप्रियमाणो मनोयोगः, अत एवा-

स्माभिरपि प्रागुक्तं वाग्विषयो वा योगो वाग्योगः, मनोविषयो वा योगो मनोयोग इति । यद्वा मनोवाग्योगौ स्वतन्त्रौ, तथाहि--काययोगगृहीतभाषाद्रव्यवर्गेण सहकारिकारणभूतेन भाषाद्रव्यनिसर्गार्थं जीवस्य व्यापारः स वाग्योगः, सहकारिकारणभूतया वाचा जीवस्य योगो वाग्योग इति कृत्वा, जीवव्यापारेण परप्रत्ययनार्थमुच्यत इति तात्पर्यम् । तनुव्यापारगृहीतमनोद्रव्येण सहकारिकारणभूतेन मननार्थं योऽसौ जीवस्य व्यापारः स मनोयोगः, मनसा सहकारिकारणभूतेन जीवस्य योगो मनोयोग इति प्राग्व्युत्पत्तिः कृतैव । अत्र पक्षे निसर्गादिकाले सन्नपि तनुयोगो न विवक्षितः, किन्तु जीवस्य स्वतन्त्रावेव तौ विवक्षितौ न तनुयोगविशेषितौ । तथा व्यवहाराभावेन प्राणापानव्यापारस्तु न स्वतंत्र इति । ननु कोऽयमुपन्यासक्रमो येनैवं योगोपन्यासः कृत इति चेत् ?, अल्पवक्तव्यत्वेनागमे चैवमेव प्रसिद्धत्वात् पश्चानुपूर्व्योपन्यासात् । निरोधकाले चैवमेव निरोधादयमेव क्रमो युज्यते, पूर्वं मनोयोगस्तदनन्तरं वाग्योगस्ततः काययोग इति । यत्तु मनोयोगविषये प्रथमं सत्यमनोयोगस्योपन्यासः कृतः स प्राधान्यख्यापनार्थम्, तद्विपरीतत्वादितरस्य, तत उभयाश्रयस्य, ततः पुनरागमेऽन्त्यभावत्वेन प्रसिद्धस्यासत्यामृषामनोयोगस्येति । एवमेव वाग्योगविषयेऽपि द्रष्टव्यम् । यस्तु काययोगोपन्यासे प्रथमं वैक्रियस्य स चतुर्गतिकजीवसम्भवव्यापकत्वात्, तदनन्तरमाहारकस्य प्राधान्यात्, पुनरप्राधान्यस्यौदारिकस्य, भवनक्रमापेक्षया पूर्वं मिश्राण्युक्तानि, ततः शुद्धानि । कार्मणं तु विग्रहगतौ केवलिसमुद्घाते वा कस्यचिदेव जीवस्यातोऽन्ते निर्देशः कृतः । यद्वा भवान्ते तदन्तत्वात् कृतोऽन्ते निर्देश इत्युक्ता सोत्तरभेदा त्रिविधा योगमार्गणा ।

"वेय" त्ति वेद्यत इति वेदः, निर्माणाङ्गोपाङ्गादिनामकर्मोदयेन शरीरे आकारविशेषः । स च त्रिविधः पुंस्त्रीनपुं-

पुंसि स्त्रिया अभिलाषो भावस्त्रीवेदः, पित्तोदय सक्रमेदात् । पुंसः स्त्रियामभिलाषो भावपुंवेदः, यथा श्लेष्मवशादाम्लं प्रति; मधुराभिलाषवत्; उभयत्राभिलाषो भावनपुंसकः, पित्तश्लेष्मोदये मज्जिष्ठवत् । निर्माणाङ्गोपाङ्गादिनामकर्मोदयेन पुंसः श्मश्रुकूर्चशिश्नादिलिङ्गाङ्कितशरीरविशिष्टो द्रव्यपुंवेदः, तथा निर्माणाङ्गोपाङ्गादिनामकर्म्मण उदयेन योषितो निर्लोममुखस्त-नयोन्यादिलिङ्गलक्षितशरीरयुक्तो द्रव्यस्त्रीवेदः, तथा निर्माणाङ्गोपाङ्गादिनामकर्मोदयेनोभयविलक्षणलिङ्गाङ्कितशरीरयुक्तो द्रव्यनपुंसकवेदः । यस्य यल्लिङ्गं तस्य तदेव प्रायेणोदेतीति सम्भाव्यते, अत एव वन्धहेतुषु संवेधप्रसङ्गे संज्ञिवर्जशेषजीवा-नामेक एव नपुंसकवेदो गृहीतः । सामान्यसंवेधप्रसङ्गे तु मलयगिरिपादैः सप्ततिकावृत्तौ—"इह च दशादय उदयास्तद्भङ्गाश्च जघन्येन एकसामयिका उत्कृष्टत आन्तर्मौहूर्त्तिकाः, तथाहि—चतुरादिषु दशोदयपर्यन्तेष्ववश्यमन्यतमो वेदोऽन्यतरयुगलञ्च मध्येऽन्यतरद-वश्यं मुहूर्त्तादारतः परावर्त्तते" इति । तथा पञ्चसङ्ग्रहमूलटीकायामपि—"वेदेन युगलेन वा अवश्यं मुहूर्त्तादारतः परावर्त्तितव्य-मिति", तत्त्वं पुनस्तद्विदो विदन्ति । कदाचित् लिङ्गमपि परावर्त्तते, तदुक्तं तत्त्वार्थवृत्तौ—"लिङ्गं त्रिभेदं स्त्रीत्वादि, तच्च लीनत्वाल्लिङ्गमुच्यते, यस्मात् पुरुषलिङ्गनिर्वृत्तावतिप्रकटायामपि कदाचित् स्त्रीलिङ्गमुदेति, न च स्पष्टं वहिरुपलभ्यते, नपुंसकलिङ्गं वा । तथा स्त्रियाः स्वलिङ्गनिर्वृत्तावतिस्पष्टतायामेव जातुचित् पुन्नपुंसकलिङ्गोदयः । नपुंसकस्याप्येवं स्वलिङ्गनिर्वृत्तावुत्तरकालभाविनी कदाचित् पुंस्त्रीलिङ्गे भवतः, न च निर्वृत्तितो लक्ष्यते, कपिलवदिति सर्वत्र योज्यम् । एतदेव त्रिविधं लिङ्गं वेद उच्यते, यस्य कर्मण उदयात् पौंस्नं स्त्रैणं नपुंसकत्वं च भवति तल्लिङ्गम्, अत्राप्यभेदेन निर्देशः, पुमान् स्त्री नपुंसकमिति" । स्त्रीपुंनपुंसकानां लक्षणमिदम्—"योनि-र्मृदुत्वमस्थैर्यं मुग्धता क्लीवता स्तनौ । पुंस्कामितेति लिङ्गानि सप्त स्त्रीत्वे प्रचक्षते ॥ १ ॥ मेहनं खरता दार्ढ्यं शौण्डीर्यं श्मश्रु धृष्टता । स्त्रीका-

मितेति लिङ्गानि सप्त पुंस्त्वे प्रचक्षते ॥२॥ स्तनादिश्मश्रुकेशादि—भावाभावसमन्वितम् । नपुंसकं बुधाः प्राहु—र्मोहानलसमन्वितम् ॥ २.॥" इत्युक्ता त्रिविधा वेदमार्गणा ।

"कसायत्ति" कष्यन्ते हिंस्यन्ते परस्परं प्राणिन इति कषः संसारः, कषमयन्ते एभिर्जन्तव इति कषायाः । यद्वा कषस्यायो लाभो येभ्यस्ते कषायाः, यद्वा कृष् विलेखने धातुः, कृषन्ति विलेखयन्ति सुखदुःखरूपशस्योत्पादनाय कर्म्मरूपं क्षेत्रमिति कषायाः, आयप्रत्ययविधानात् ऋकारस्याकारनिपातनाच्चेष्टरूपसिद्धिः । यद्वा कलुषयन्ति शुद्धस्वभावमात्मानं सन्तं कर्म्ममलिनं कुर्वन्तीति कषायाः, अत्रापि निपातनादिष्टरूपनिष्पत्तिः, तदुक्तमाराध्यपादैः श्रीमद्भिर्मलयगिरिभिः—"निपातनाच्च णिजन्तस्य कलुषशब्दस्य कषायादेश" इति, तदुक्तं—"सुखदुक्खबहुसस्सयं, कम्मखेत्तं कसंति ते जम्हा । कलुसन्ति जं च जीवं, तेण कसाय त्ति वुचंति ॥ १ ॥" इति । ते च क्रोधमानमायालोभरूपाश्चत्वारोऽपि आत्मप्रतिष्ठिताः परप्रतिष्ठिता उभयप्रतिष्ठिता अप्रतिष्ठिताश्चेति। तत्र स्वोत्पादितस्यैहिकं कष्टमवलोक्य कश्चित् स्वस्योपरि क्रुध्यति तदा स्वप्रतिष्ठितः क्रोधः, कोपादिना परः कश्चिदुदीरयति कोपं तदा स क्रोधस्तद्विषय उपजायत इति स परप्रतिष्ठितः, एतन्नैगमाभिप्रायेणोक्तम् । नैगमो हि तद्विषयमात्रेणापि तत्प्रतिष्ठितं मन्यते, तथा चोक्तं सम्यक्त्वाधिकारे तत्त्वार्थभाष्ये—"अधिकरणं त्रिविधमात्मसन्निधानेन परसन्निधानेनोभयसन्निधानेनेति वाच्यम् । आत्मसन्निधानमभ्यन्तरसन्निधानमित्यर्थः । परसन्निधानं वाह्यसन्निधानमित्यर्थः । उभयसन्निधानं वाह्याभ्यन्तरसन्निधानमित्यर्थः। कस्मिन् सम्यग्दर्शनमात्मसन्निधाने परसन्निधाने उभयसन्निधाने इति। आत्मसन्निधाने तावत् जीवे सम्यग्दर्शनम्, जीवे ज्ञानम्, जीवे चारित्रमित्येतदादि, वाह्यसन्निधाने जीवे सम्यग्दर्शनं नोजीवे सम्यग्दर्शनम्" इति। यदा कश्चित् तथाविधं कारणं

प्राप्योभयविषयं क्रोधमाधत्ते इत्युभयप्रतिष्ठितः क्रोधः । केवलात् क्रोधमोहनीयोदयादुपजायते स हि नात्मप्रतिष्ठितः, स्वयं दुश्चरणाभावात्; नापि परप्रतिष्ठितः, निरपराधत्वेनापराधसम्भावनाया अप्यभावतः क्रोधालम्बनत्वायोगात्; नाप्युभयप्रतिष्ठितः, उभयनिमित्तत्वाभावात्। दृश्यते च निर्निमित्तक्रोधमोहनीयोदयात् क्रोधः, यतः पश्चात् स एव वदति 'अहो मया निर्निमित्त एव कोपः कृतः, न केनापि विरूपं भाषितं किमपि विनाशितं वाऽत एव महर्षिभिरुक्तम्—"सापेक्षाणि निरपेक्षाणि च कर्म्माणि फलविपाकेषु। सोपक्रमं निरुपक्रमं च दृष्टं यथाऽऽयुष्कम्॥" इत्यप्रतिष्ठितः क्रोधः। एवं मानमायालोभा अपि आत्मपरोभयप्रतिष्ठिता अप्रतिष्ठिताश्च वेदितव्या इति, तदुक्तं प्रज्ञापनायाम्—"कतिपतिट्ठिए णं भंते ! कोहे पं० ? गो० ! चउपतिट्ठिए कोहे पं०, तं०—आयपतिट्ठिए परपतिट्ठिए तदुभयपतिट्ठिए अप्पइट्ठिते" इति। क्षेत्रवस्तुशरीरोपधीराश्रित्य क्रोधादीनामुत्पत्तिर्भवति। तत्र नारकाणां नरकमाश्रित्य, तिरश्चां तिर्यक्क्षेत्रं प्रतीत्य, मनुष्याणां मनुष्यक्षेत्रं, देवानां च देवक्षेत्रमाश्रित्य क्रोधादेरुत्पत्तिर्भवति। तथा सचेतनमचेतनं च वस्तु आश्रित्य, कुरूपं दुःस्थितं वा शरीरमाश्रित्य, यस्य यदुपकरणं तस्य तत्तस्करादिनाऽपह्रियमाणमन्यथा वाश्रित्य च क्रोधादेरुत्पत्तिर्भवति, तदुक्तं प्रज्ञापनायां—"कतिहिं भंते! ठाणेहिं कोहुप्पत्ती भवति ? गोयमा ! चउहिं ठाणेहिं कोहुप्पत्ती भवति, तं०—खेत्तं पडुच, वत्थुं पडुच, सरीरं पडुच, उवहिं पडुच" इति। तत्र क्रोधोऽक्षमाप्रकृतिः, मानः सर्वदात्मपूजाभिलापरूपो जातिलाभैश्वर्यादिसमुत्थोऽहङ्कारः, माया जन्तोस्तिर्यग्योन्यादिजन्मानुमापिका, लोभश्च सर्वदात्मपूजाभिलाषरूपोऽसन्तोपात्मकगृद्धिपरिणामः। एतेषां चतुर्णामपि कषायाणामेकार्थिकानि अभिधानान्यभिधीयन्ते, तत्र क्रोधः कोपो रोषो द्वेषो दोषोऽक्षमा सञ्ज्वलनः कलहः चाण्डिक्यं भण्डनं विवादो भाम इति क्रोधस्य पर्यायाः। तत्र क्रुध्यत इति क्रोधः सामा-

न्यतोऽक्षमाप्रकृतिः, कुप्यत इति कोपः कोपनं वा कोपः क्रोधोदयात् पूर्वावस्थातोऽन्यथा परिणामः, रोषणं रोषः क्रोधस्यैवानुबन्धः, द्वेषणं द्वेषोऽप्रीतिमात्रम्, दोष आत्मनः परस्य वा दूषणप्रकाशनम्, अक्षमा परकृतापराधस्यासहनम्, सञ्ज्वलनो मुहुर्मुहुः क्रोधाग्निना ज्वलनम्, कलहो महता शब्देनान्योऽन्यमसमञ्जसभाषणम्, चाण्डिक्यं रौद्राकारकरणम्, भण्डनं दण्डादिभिर्युद्धम्, विवादो विप्रतिपत्तिसमुत्थवचनानि, भाम ईर्ष्यालक्षणः क्रोधविशेष इति । मानो मदो दर्पः स्थम्भो गर्वमुत्कर्षणं परपरिवादः परितापः आत्मोत्कर्षणमुत्काशनमवकर्षणमुन्नतमुन्नमनं दुर्नाम इति मानैकार्थिकाः । तत्राहम्भावेन मीयत इति मानः, मदो हर्षमात्रम्, दर्पः दृप्तता, स्थम्भ अनम्रता, गर्वः शौण्डीर्यम्, उत्कर्षणमात्मनः परस्य वा मनाक् क्रिययोत्कर्षताकरणम्, परपरिवादः परेषामपवदनम्, परितापो गुणेभ्यः परितापनम्, आत्मोत्कर्षणमात्मनः परेभ्यः सकाशात् गुणैरुत्कृष्टताभिधानम्, उत्काशनमभिमानात् स्वकीयारम्भस्य प्रकाशनम्, अवकर्षणमात्मनः परस्य वा क्रियारम्भस्याप्रकाशनम्, अपकर्षणमात्मनः परस्य वा क्रियारम्भात् व्यावर्त्तनम्, उन्नतमभिमानादनमनम्, उन्नमनं प्रणतस्य मदानुप्रवेशनम्, दुर्नाम मदाद्दुष्टं नमनमिति । माया प्रणिधिः, उपधिः, निकृतिः, वलयम्, गहनम्, नूमम्, कल्कम्, कुरूपम्, जैह्मयम्, किल्विषः, आदरणम्, आचरणम्, गूहनम्, वञ्चनम्, प्रतिकुञ्चनम्, आवरणी, दम्भः, कूटः, अनार्जवम्, सातिशययोगश्चेति मायापर्यायाः। तत्र मीयतेऽनयेति माया, प्रकर्षेण गुप्तो निधीयते इति प्रणिधिः, उपधीयते येनासावुपधिर्वञ्चनीयसमीपगमनहेतुपरिणामः, नितरां करणं निराक्रियते पराभूयतेऽनयेति वा निकृतिरादरकरणेन परवञ्चनं पूर्वकृतमायाप्रच्छादनार्थं वा मायान्तरकरणम्, येन भावेन वलयमिव वक्रं वचनं चेष्टा वा प्रवर्त्तते स भावो वलयम्, परव्यामोहनाय यद्वचनजालं

तद्गहनमिव गहनम्, परवञ्चनाय निम्नताया निम्नस्थानस्य वाश्रयणं तन्नूनम्, यद् हिंसादिरूपं पापं तन्निमित्तो यो वञ्चनाभिप्रायः स कल्कमित्युच्यते, कुत्सितं यथा भवति तथा रूपयति विमोहयति यत्तत्कुरूपं भाण्डादिकर्म मायाविशेष एव, परवञ्चनाभिप्रायेण क्रियासु मान्द्यमालम्बते स भावः जैह्म्यमिति, यतो मायाविशेषात् जन्मान्तरेऽत्रैव वा जन्मनि किल्बिषिको भवति स किल्बिष एवेति, यतो मायाविशेषात् कस्यापि वस्तुनोऽभ्युपगमनं करोति असावादरणम्, आचरणं परप्रतारणाय विविधक्रियाणामाचरणम्, स्वरूपस्य गोपायनं गूहनम्, परस्य प्रतारणं वञ्चनम्, सरलतया प्रवृत्तस्य वचनस्य खण्डनं प्रतिकुञ्चनम्, आवार्यतेऽभिगम्यते भैक्ष्यते वा परस्तदुपायभूतयेत्यावरणं 'ईप्' प्रत्ययविधानादावरणी, दम्भनं दम्भो वेषवचनाद्यनुमेयः, कूब्यते दह्यतेऽमुना परः परिणामान्तरेणेति यद्वा कूटयति दहति अनेनेति वा कूटं तद्वत्परिणामः कूट इत्यभिधीयते, ऋजोर्भाव आर्जवं नार्जवमनार्जवं कायमनसोर्वक्रतेति, सातिशयेन द्रव्येण निरतिशयस्य योगस्तत् प्रतिरूपकरणं सातिशययोगः, अतिसन्धानमप्येतदेवोच्यते, तथाहि—अतिसन्धीयतेऽनेन पर इत्यतिसन्धानम्, अतीवानुप्रविश्य सन्धानमन्तरङ्गताप्रदर्शनमिति भाव इति। लोभः, इच्छा, मूर्च्छा, काङ्क्षा, गृद्धिस्तृष्णा, भिध्या, अभिध्या, आशंसनं, प्रार्थनं, लालपनं, कामाशा, भोगाशा, जीविताशा, मरणाशा, नन्दिरागः, स्नेहः, रागः, अभिष्वङ्ग इति लोभपर्यायाः। तत्र लुभ्यतेऽनेन जीव इति लोभः, इच्छा—अभिलाषमात्रम्, मूर्च्छा प्रकर्षप्राप्ता मोहवृद्धिः संरक्षणानुबन्धो वा, काङ्क्षा भविष्यत्कालोपादानविषया अप्राप्तार्थाशंसा वा, गृद्धिः प्राप्तार्थेष्वासक्तिः, तृष्णा—प्राप्तार्थानामव्ययेच्छा, भिध्या—पिधानादिवदभिशब्दस्याकारलोपात् अभि—व्याप्त्या विषयाणां ध्यानं तदेकाग्रत्वम् भिध्या, अभिध्या—न भिध्या

अभिध्या भिध्यासदृशं भावान्तरं, तत्र दृढाभिनिवेशो भिध्या, ध्यानलक्षणत्वात्तस्याः, अदृढाभिनिवेशस्त्वभिध्या, चित्तलक्षणत्वात्तस्याः, ध्यानचित्तयोस्त्वयमेव विशेषः, तदुक्तं–"जं थिरमज्झवसाणं तं झाणं जं चलं तयं चित्त"मिति । आशंसनम्–इदं मम पुत्रस्य शिष्यस्य वा स्यादित्यादिरूपा आशीः, प्रार्थनं–परं प्रतीष्टार्थयाञ्चा, पुनः पुनर्लपनं लालपनम्, शब्दरूपप्राप्तिसम्भावना कामाशा, गन्धादिप्राप्तिसम्भावना भोगाशा, जीवितव्यप्राप्तिसम्भावना जीविताशा, कस्याञ्चिदवस्थायां मरणप्राप्तिसम्भावना मरणाशा, नन्दौ समृद्धौ सत्यां रागः हर्षः नन्दिरागः, स्निह्यतेऽनेन पुत्रपत्न्यादिष्विति स्नेहः, आत्मरञ्जनाद्रागः, अभिष्वङ्गः–वाह्याभ्यन्तरोपकरणसुखसङ्गशक्तिरिति । एतेषां क्वचिदर्थभेदेऽपि शक्रपुरन्दरादिवत् क्रोधादीनां पर्याया वाच्या इति । तथा क्रोधादयः प्रत्येकं चतुर्भेदाः, तद्यथा–अनन्तानुबन्धिक्रोधः, अप्रत्याख्यानावरणक्रोधः, प्रत्याख्यानावरणक्रोधः; सञ्ज्वलनक्रोधश्च, एवं मानमायालोभा अपि ज्ञेयाः । लोकप्रकाशे तु तीव्रमन्दतादिभेदेन पुनः षोडशापि कषायाश्चतुःषष्टिभेदा भवन्तीत्युक्तम् । तत्रानन्तं नारकतिर्यङ्मनुष्यदेवजन्मजरामरणपरम्परालक्षणं संसारमनुबध्नन्तीत्येवंशीला अनन्तानुबन्धिनः, तदुक्तं–प्रज्ञापनावृत्तौ "यस्मादनन्तसंसारमनुबध्नन्ति देहिनाम् । ततोऽनन्तानुबन्धीति संज्ञाद्येषु निवेशिता ॥ १ ॥" अन्यत्रापि अनन्तान्यनुबध्नन्ति यतो जन्मानि भूतये । ततोऽनन्तानुबन्धाख्या क्रोधाद्येषु नियोजिता ॥ १ ॥" इति । एषां संयोजना इति द्वितीयमपि नाम, तत्रायं शब्दार्थः–संयुज्यन्ते सम्बध्यन्तेऽनन्तसंख्याकैर्भवैर्यैस्ते संयोजनाः, तदुक्तम्–"संयोजयन्ति यन्नरमनन्तसंख्यैर्भवैः कषायास्ते । संयोजनताऽनन्तानुबन्धिता वाप्यतस्तेषाम् ॥ १ ॥" इति । ननूत्कृष्टतोऽपि कर्मणां स्थितिः संख्यातकोटाकोटीसागरोपमप्रमाणा, तथाहि–ज्ञानावरणीयदर्शनावरणीयवेदनीया-

न्तरायाणां त्रिंशत्कोटाकोटीसागरोपमप्रमाणा, आयुषस्त्रयस्त्रिंशत्सागरोपमप्रमाणा, नामगोत्रयोर्विंशतिः सागरोपमकोटाकोटीप्रमाणा, मोहनीयस्य सप्ततिसागरोपमकोटाकोटिप्रमाणा, ततो न कस्यापि अनन्तकालप्रमाणा स्थितिरिति कथमुच्यतेऽनन्तसंसारमनुवध्नन्तीति चेत्? सत्यम्, किन्तु येनोत्कृष्टास्थितिः तीव्रतराध्यवसायेनानन्तानुवन्ध्युदयवर्त्तिना जन्तुना बद्धा तेनैव जन्तुना पुनस्तदक्षीणायामपरा बद्धा, पुनस्तदपरिक्षीणायामपरा बद्धेत्येवंरूपेणानन्तं संसारं बध्नन्तीत्यनन्तानुबन्धिनः, अत एवोत्सूत्रभाषिणामशुभानुबन्धयोगात् अनन्तसंसारिता भाषिता, तदुक्तं—न्यायाचार्यैर्धर्मपरीक्षायाम्—"कम्मं वंधइ पावं जो खलु अणुवरयतिव्वपरिणामो। असुहाणुवंधजोगा अणंतसंसारिआ तस्स ॥ ७ ॥" वृत्तिलेशः—"कम्मं ति—कर्म बध्नाति पापं यः खल्वनुपरततीव्रपरिणामः—अविच्छिन्नतथाविधसंक्लिष्टाध्यवसायः स्वेच्छानुरोधान्नियतास्रवप्रवृत्तो वाऽनियतास्रवप्रवृत्तो वा नियतोत्सूत्रभाषी वाऽनियतोत्सूत्रभाषी वाऽप्राप्तानुशयस्तस्याशुभानां—ज्ञानावरणीयादिपापप्रकृतीनामनुबन्धस्योत्त(रोत्त)रवृद्धिरूपस्य बध्यमानप्रकृतिपु तज्जननशक्तिरूपस्य वा योगात्—सम्वन्धादनन्तसंसारिता भवति। ग्रन्थिभेदात् प्रागप्यनन्तसंसारार्जनेऽशुभानुबन्धस्यैव हेतुत्वात् प्राप्तसम्यग्दर्शनानामपि प्रतिपातेन तत एवानन्तसंसारसम्भवात्, तदुक्तमुपदेशपदे—"गंठीइ आरओ वि हु असईबन्धो ण अन्नहा होइ। ताए सो वि हु एवं णेओ असुहाणुबन्धो त्ति ॥ १ ॥" ततश्च बन्धमात्रात् नानन्तसंसारिता, किन्त्वनुबन्धादिति स्थितम्" इति। नन्वप्रत्याख्यानावरणादीनामपि तदानीमवश्यमनन्तानुबन्धिना सहोदयो भवतीति कथमेषामेवानन्तानुबन्धित्वव्यपदेशो नाप्रत्याख्यानावरणादीनामिति चेत्? शृणु, अनन्तानुबन्धिनां शेषकषायोदयविरहविशिष्टोदयाभावेऽपि अनन्तसंसारमौलिककारणमिथ्यात्वोदयापेक्षकत्वादेषामेव तद्व्यपदेशः, शेषकषाया हि नावश्यं मिथ्यात्वोदयमाक्षिपन्त्यतस्तेषामुदययौगपद्ये सत्यपि

नायं व्यपदेश इति। तथा न विद्यते स्वल्पमपि प्रत्याख्यानं येषामुदयात् तेऽप्रत्याख्यानाः, यदभाणि—"नाल्पमप्युत्सहेत् येषां प्रत्याख्यानमिहोदयात्। अप्रत्याख्यानसंज्ञाऽतो द्वितीयेषु निवेशिता ॥ १ ॥" इति। यद्वा प्रत्याख्यानं द्विविधं देशसर्वविरतिलक्षणम्, तत्र देशविरतिलक्षणमल्पं, तदावारकाः कषाया अप्रत्याख्यानावरणकषायाः, ये स्वल्पमपि देशविरतिलक्षणं प्रत्याख्यानमावृण्वन्ति ते सर्वविरतिलक्षणं प्रत्याख्यानमावृण्वन्त्येव, नात्र चित्रमिति, तदुक्तम्—"आवृण्वन्ति प्रत्याख्यानं स्वल्पमपि येन जीवस्य। तेनाप्रत्याख्यानावरणास्ते निर्विशेषोक्त्या ॥ १ ॥" इति। उपमानार्थोऽत्र नञ्, प्रत्याख्यानावरणसदृशा इत्यर्थः; तदुक्तम्—"प्रत्याख्यानावरणसदृक्त्वाद्वा तत्तथा भवति सिद्धम्। नन्वब्राह्मणवचने तत्सदृशः पुरुष एवेष्टः ॥ १ ॥" इति। एषामुदये सम्यक्त्वलाभः सर्वविरत्यभावश्च। तथा सर्वविरतिरूपं प्रत्याख्यानमावृण्वन्तीति प्रत्याख्यानावरणाः तदुक्तम्—"सर्वसावद्यविरतिः प्रत्याख्यानमिहोच्यते। तदावरणसंज्ञातस्तृतीयेषु निवेशिता ॥ १ ॥" इति। तत्रायं शब्दार्थः—प्रतिशब्दो निषेधवाची उपसर्गः, ख्यानं प्रकाशनं, तस्यावरणाः प्रत्याख्यानावरणाः, निषिद्धस्य वस्तुन आचार्यादिसन्निधौ भावतः प्रकाशनं प्रत्याख्यानं 'सर्वान् प्राणिनो यावज्जीवं न हन्मि' इत्यादिरूपं प्रत्याख्यानमावृण्वन्ति स्थगयन्तीति प्रत्याख्यानावरणाः; तदुक्तं—"सर्वं प्रत्याख्यानं येनावृण्वन्ति तदभिलपतोऽपि। तेन प्रत्याख्यानावरणास्ते निर्विशेषोक्त्या ॥ १ ॥" इति। प्रत्याख्यानपरिणामजन्मविघातकारित्वात् प्रत्याख्यानावरणाः, न तु सत एव प्रत्याख्यानस्येति वाक्यार्थः। तथा चाहुः पूज्याः—नासन्तस्सावरणं न सतोऽभव्वाइविरमणपसंगा। पच्चक्खाणावरणा तम्हा तस्संभवावरणा ॥ १ ॥ उदए विरइपरिणई न होइ जेसिं खयाइओ होइ। पच्चक्खाणावरणा त इह जहा केवलावरणं ॥ २ ॥" इति। तदुदयवर्त्तिनश्च द्वादशविधगृहस्थधर्मावाप्तिः, यथाह—

"श्रावकधर्मो द्वादशभेदः संजायते ततस्तस्य । पञ्चत्रिचतुःसंख्यो व्रतगुणशिक्षामयः शुद्धम् ॥ १ ॥" इति । तथा परीषहोपसर्गोपनिपाते सति चारित्रिणमपि सम्–ईषद् ज्वलयन्ति दीपयन्तीति सञ्ज्वलनाः, तन्यगादि–'सञ्ज्वलयन्ति यतिं यत् संविग्नं सर्वपापविरतमपि । तस्मात् सञ्ज्वलना इत्यप्रशमकरा निरुच्यन्ते ॥ १ ॥ अन्यत्राप्युक्तम् शब्दादीन् विषयान् प्राप्य, सञ्ज्वलयन्ति यतो मुहुः । ततः सञ्ज्वलनाह्वानं चतुर्थानामिहोच्यते ॥ २ ॥" इति । षोडशापि कषायाः आभोगनिर्वर्त्तितानाभोगनिवर्त्तितोपशान्तानुपशान्तभेदैश्चतुष्प्रकारा भवन्ति । तत्र परकीयमपराधं सम्यगवलोक्य ताडनादिकमन्तरेण नास्य शिक्षोपजायते इत्याभोग्य व्यवहारतः कोपकरणं–पुष्टावलम्बनं मत्वा यः कोपं विधत्ते तस्याभोगनिर्वर्त्तितः कोपः । यस्तु गुणदोषविचारशून्यः परवशीभूय तथाविधनिमित्तं प्राप्य कोपं विधत्ते तस्यानाभोगनिवर्त्तितः कोपः । अनुदयावस्थ उपशान्तः, निर्निमित्तेनापि कोपमोहनीयोदयादेव केवलात् जायते सोऽनुपशान्त इति, तदुक्तं प्रज्ञापनायामार्यश्यामपादैः–"कतिविहे णं भन्ते ! कोहे पन्नत्ते ? गोयमा ! चउव्विहे कोहे पन्नत्ते, तं जहा–आभोगनिवत्तिए अणाभोगनिवत्तिए उवसंते अणुवसंते" इति । एवं मानमायालोभेष्वपि भावनीयमिति ।

अथ दृष्टान्तद्वारेण कषायाणां तीव्रमन्दताऽभिधीयते–तथाहि–अनन्तानुबन्धिक्रोधः पर्वतराजिसदृशः । तत्र पर्वतः पाषाणपुञ्जः, तदेकदेशः शिलादिविभागो वोपचारात् पर्वतः, तत्र राजिः रेखा पर्वतराजिस्तया सदृशः पर्वतराजिसदृशः, एतदुक्तं भवति–शिलायां पुरुषव्यापारेण स्वभावेन वोभाभ्यां भिदोत्पन्ना सती नैव कदाचिदपि प्रतिसंदधाति, एवमनन्तानुबन्धिक्रोध इष्टसंयोगानिष्टवियोगाद्यभिलषितार्थाऽलाभादीनामन्यतमेन हेतुना उत्पन्ना भवापेक्षया यावत्तत्र भवे जीवति

तावदप्यनुवर्त्तते भवान्तरं चानुगच्छति जात्यन्तरानुबन्धित्वात्, परचाटुकरणादिक्रियाभावेनापि निरनुनयः, पश्चात्तापपरिणामस्याविद्यमानत्वेनाप्रत्यवमर्शः, भूयसानुसरणात् नरकगमनं च भवति, नरकगतिगमनहेतुत्वेन नरकोऽयमित्यपि 'घृतमायुः' इत्यादिवदुपचारादुच्यते, तदुक्तं भाष्ये—"तत्र पर्वतराजिसदृशो नाम यथा प्रयोगविस्रसामिश्रकाणामन्यतमेन हेतुना पर्वतराजिरुत्पन्ना नैव कदाचिदपि संरोहति, एवमिष्ट(वि)योजनानिष्टयोजनाभिलषितालाभादीनामन्यतमेन हेतुना यस्योत्पन्नः क्रोधः आमरणान्न व्यपगच्छति, जात्यन्तरानुबन्धी निरनुनयः तीव्राननुशयोऽप्रत्यवमर्शश्च भवति, स पर्वतराजिसदृशस्तादृशं क्रोधमनुसरन्तो नरकेषूत्पत्तिं प्राप्नुवन्ति" इति । एवमनन्तानुबन्धिमानमायालोभेष्वपि वाच्यम्, नवरं दृष्टान्तवैषम्यं वक्ष्यामः । भूमिराजिसदृशोऽप्रत्याख्यानावरणक्रोधो यथा स्फुटितपृथिवीसम्बन्धिनी राजिः कचवरादिना पूरिता कष्टेन निवर्त्तते, यद्वा दिनकरकिरणजालात्तस्नेहायाः पवनाभिहताया वा भूमेः या रेखोत्पन्ना सा यदा मेघो वर्षति तदा पूर्यते, परमप्रकृष्टाष्टमासस्थितिस्तथायं क्रोधोऽप्यनेकवर्षावस्थायी निरनुनयो भवतीति तत्त्वार्थभाष्ये । तथा च तद्ग्रन्थः—"भूमिराजिसदृशो नाम यथा भूमेर्भास्कररश्मिजालात्तस्नेहाया वाय्वभिहताया राजिरुत्पन्ना वर्षापेक्षसंरोहा परमप्रकृष्टाष्टमासस्थितिर्भवति । एवं यथोक्तनिमित्तो यस्य क्रोधोऽनेकवर्षावस्थायी दुरनुनयो भवति स भूमिराजिसदृशस्तादृशं क्रोधमनुसरन्तः तिर्यग्योनावुत्पत्तिं प्राप्नुवन्ति" इति । संवत्सरमात्रकालानुबन्धी भूमौ राजिरुद्भूता वर्षास्ववश्यंतया सा निधनमायातीति वृत्तौ, "जाजीववरिस" इति श्रीमद्देवेन्द्रसूरयः । तिर्यग्गतिकारणत्वेनाप्रत्याख्यानावरणस्य क्रोधस्य तिर्यक्त्वेनापि व्यपदेशः क्रियते, एवमप्रत्याख्यानावरणमानमायालोभेष्वपि वाच्यम् । तथा प्रत्याख्यानावरणः क्रोधस्तु रेणुमध्ये काष्ठादिना विहितरेखासदृशः, यथा रेणुरेखाप्रकर्षतश्चतुर्मास्यभ्यन्तरे

भूयः सन्धत्ते, एवं प्रत्याख्यानावरणक्रोधः चतुर्मास्यभ्यन्तरे नियमेनोपशाम्यतीति, तदुक्तम्—"वालुकाराजिसदृशो नाम यथा वालुकायां काष्ठशलाकाशर्करादीनामन्यतमेन हेतुना राजिरुत्पन्ना वाय्वीरणाद्यपेक्षसंरोहा अर्वाग् मासस्य संरोहति, एवं यथोक्तनिमित्तो यस्य क्रोधोऽहोरात्रं, पक्षं, मासं, चातुर्मास्यं चावतिष्ठते स वालुकाराजिसदृशस्तादृशं क्रोधमनुसरन्तो मनुष्येषूत्पत्तिं प्राप्नुवन्ति", अस्य वृत्तौ तु 'जघन्येनाहोरात्रमुत्कर्षेण संवत्सरपरिणाम' इत्युक्तम् । तथा मनुष्यगतिकारणत्वेन मनुष्यतयापि प्रत्याख्यानावरणः क्रोधो व्यपदिश्यते, एवं मानमायालोभेष्वपि वाच्यमिति । तथा सञ्ज्वलनः क्रोधो यथा यष्ट्यादिभिर्जलमध्ये क्रियमाणा रेखा शीघ्रमेव निवर्त्तते, तथा कथमप्युदयं प्राप्तोऽपि सत्वरमेव व्यावर्त्तते, उत्कृष्टतः पाक्षिकप्रतिक्रमणकाले तु व्यावर्त्तत एव, तदुक्तम्—"उदकराजिसदृशो नाम यथोदके दंडशलाकाङ्गुल्यादीनामन्यतमेन हेतुना राजिरुत्पन्ना द्रवत्वादियमुत्पत्त्यनन्तरमेव संरोहति, एवं यथोक्तनिमित्तोत्पन्नो यस्य क्रोधो विदुषोऽप्रमत्तस्य प्रत्यवमर्शेनोत्पत्त्यनन्तरमेव व्यपगच्छति, स उदकराजिसदृशस्तादृशं क्रोधमनुसरन्तो देवेषूत्पत्तिं प्राप्नुवन्ति" इति । देवत्वाभिधानेनापि सञ्ज्वलनक्रोधोऽभिधीयते, देवगतिकारणत्वादिति । एवं मानमायालोभेष्वपि वाच्यम् । शिलाघटितस्तम्भोपमोऽनन्तानुबन्धिमानः कथमप्यनमनीय इत्यर्थः । अस्थ्युपमानोऽप्रत्याख्यानावरणो मानः, यथा अस्थि बहुतरैरुपायैरतितरां महता कष्टेन नमति, एवं जीवोऽप्यस्योदयान्महता कष्टेन नमतीति । यथा स्तब्धं किमपि काष्ठमग्निस्वेदादिबहूपायैः कष्टेन नमति, एवं जीवोऽपि यस्य मानस्योदयेन कष्टेन नमति, स काष्ठोपमः प्रत्याख्यानावरणमानः । सञ्ज्वलनो मानो यथा तिनिशलता सुखेन नमति तथोपमानः, एवं जीवोऽपि अस्योदये स्वाग्रहं मुक्त्वा सुखेनैव नमति । यस्या उदयात् मनसः कुटिलतोत्पन्ना कथमपि न निवर्त्तते साऽनन्तानुबन्धिनी माया, यथा निबि-

डवंशीमूलस्य कुटिलताग्निनापि न दह्यते, तद्वदित्यर्थः । अप्रत्याख्यानावरणमाया मेषशृङ्गवत् कष्टतरेण निवर्त्तनीया । बलीवर्दमूत्रधारावत् प्रत्याख्यानावरणी माया, यथा मार्गे गच्छतो बलीवर्दस्य प्रस्रवणधारा वक्रतया पतितापि मरुदादिभिः शुष्कीभूता किञ्चित्कष्टेन निवर्त्तते, एवमस्याः कुटिलतापि कष्टेनापगच्छतीत्यर्थः । यथोल्लिख्यमानायां धनुरादीनां याऽवलेखिका वक्रत्वरूपा पतति, सा च कोमलत्वात् सुखेन प्राञ्जलीक्रियते, एवं यस्या उदये समुत्पन्नापि हृदये कुटिलता सुखेनैव निवर्त्तते सा सञ्ज्वलनी माया। कृमिरागरक्तपट्टसूत्रसदृशः कथमप्यपनेतुमशक्योऽनन्तानुबन्धी लोभः, वस्त्रविलग्ननिविडकर्दमसदृशः कष्टतरापनेयोऽप्रत्याख्यानावरणलोभः, वस्त्रविलग्नप्रदीपखञ्जनसदृशोऽल्पकष्टापनेयः प्रत्याख्यानावरणलोभः, वस्त्रविलग्नहारिद्ररंगसदृशः सूर्यातपादिना सुखापनेयः सञ्ज्वलनलोभ इत्युक्ता सोत्तरभेदा चतुर्विधा कषायमार्गणा ॥

इति श्रीमार्गणाद्वारविवरणे प्रथमो विभागः समाप्तः ।

# अथ श्रीमार्गणाद्वारविवरणे द्वितीयो विभागः प्रारभ्यते।

'नाण'त्ति ज्ञप्तिर्ज्ञानं ज्ञायते परिच्छिद्यते वस्त्वनेनास्मादस्मिन् वेति ज्ञानम्, जानाति स्वविषयं परिच्छिनत्तीति वा ज्ञानम् । ज्ञानावरणक्षयोपशमक्षयजन्यः सामान्यविशेषात्मके वस्तुनि विशेषग्रहणात्मको बोध इत्यर्थः । तच्च ज्ञानं पञ्चविधम्, तद्यथा–मतिज्ञानम्, श्रुतज्ञानम्, अवधिज्ञानम्, मनःपर्यवज्ञानम्, केवलज्ञानमिति । तत्र मननं मतिः, यद्वा मन्यते इन्द्रियमनोद्वारेण नियतं वस्तु परिच्छिद्यतेऽनेनास्मादस्मिन् वेति मतिः, योग्यदेशावस्थितवस्तुविषयः श्रुतानुसारी इन्द्रियमनोनिमित्तोऽवगमविशेषः, मतिश्चासौ ज्ञानं च मतिज्ञानम्। मतेर्ज्ञानं मतिज्ञानमिति विग्रहस्तु नैव कार्यः, यतः तत्पुरुषस्य उत्तरपदार्थप्राधान्यात् तन्मात्रग्रहणप्रसक्तिः, न चेन्द्रियानिन्द्रियनिमित्तज्ञानस्य, तथा च सति ज्ञानशब्दस्य सामान्यवाचकत्वेन व्यभिचारप्रसङ्गः स्यात्, एवमुत्तरत्रापि वाच्यम्। इदं त्वागमे आभिनिबोधिकज्ञानमुच्यते, तत्राभीत्याभिमुख्ये, नीति नैयत्ये, ततश्चाभिमुखोऽर्थाभिमुखोऽर्थग्रहणप्रवणो वस्तुयोग्यदेशावस्थानापेक्षी, नियत इन्द्रियाण्याश्रित्य स्वस्वविषयापेक्षी, बोधनं बोधः, स्वार्थिकतद्धितोत्पादनात्, स एवाभिनिबोधिकमिति । यद्वाऽर्थाभिमुखे नियते बोधे भवमाभिनिबोधिकम्, यद्वा तेन निर्वृत्तं तन्मयं वा तत्प्रयोजनं वाऽऽभिनिबोधिकम्, यद्वाऽऽभिमुख्येन निश्चितत्वेनावबुध्यते संवेद्यते आत्मेति अभिनिबोधः स एवाभिनिबोधिकम्, यद्वात्मा प्रस्तुतज्ञानेन मतिज्ञानावरणक्षयोपशमेन वा करणभूतेन घटादिवस्त्वभिनिबुध्यत इत्यभिनिबोधः, प्रकृतज्ञानात्, प्रकृतज्ञाने सति वा, तदावरणक्षयोपशमात्, क्षयोपशमे

सति वा, अभिनिबुध्यतेऽवगच्छतीत्यभिनिबोधो ज्ञानं क्षयोपशमो वा, यद्वाभिनिबुध्यते वस्त्वभिगच्छतीत्यभिनिबोधो ज्ञानज्ञानवतोः कथञ्चिदव्यतिरेकादात्मा स एवाभिनिबोधिकम्। नन्वात्मक्षयोपशमयोराभिनिबोधशब्दवाच्यत्वे ज्ञानेन सह कथं सामानाधिकरण्यं स्यादिति चेत्?, सत्यम्, किन्तु ज्ञानस्यात्माश्रयत्वेन क्षयोपशमस्य ज्ञानकारणत्वेनोपचारतोऽत्रापि पक्षे आभिनिबोधिकशब्दो ज्ञाने वर्त्तते, ततश्चाभिनिबोधिकं च तत् ज्ञानं चाभिनिबोधिकज्ञानम्, अश्रुतानुसारीन्द्रियपञ्चकमनोनिमित्तो बोध इत्यर्थः। श्रूयते आत्मा तदिति श्रुतं शब्दः, यद्वा श्रूयतेऽनेनास्मादस्मिन् वेति श्रुतं सर्वत्र श्रुतज्ञानावरणक्षयोपशमः, अथवा शृणोतीति श्रुतम्, शब्दस्य श्रुतज्ञानकारणत्वेन क्षयोपशमस्य तद्धेतुत्वेनात्मनः कथञ्चित्तदव्यतिरेकेणोपचारतः श्रुतम्। यद्वा श्रवणं श्रुतम्–अभिलापप्लावितार्थग्रहणहेतुरुपलब्धिविशेषः, एवमाकारो घटशब्दाभिलाप्यजलधारणाद्यर्थक्रियासमर्थमन्तर्जल्पाकारमित्यादिरूपतया प्रधानीकृतत्रिकालसाधारणसमानपरिणामः शब्दार्थपर्यायानुलोचनानुसारीश्रुतग्रन्थानुसारी चेन्द्रियमनोनिमित्तोऽवगमविशेष इत्यर्थः। श्रुतं च तत् ज्ञानं च श्रुतज्ञानम्। अवशब्दस्याव्ययत्वेनानेकार्थत्वादधोऽधो विस्तृतं धीयते परिच्छिद्यते रूपिवस्तु अनेनेत्यवधिः, इयं च व्युत्पत्तिरनुत्तरादिदेवापेक्षया विषयबहुत्वमुररीकृत्य वाच्या, अन्यथा तिर्यगूर्ध्वं वा विषयं परिच्छिन्दानस्यावधिव्यपदेशो न स्यात्, यद्वाऽव–मर्यादया एतावत्क्षेत्रं पश्यन् एतावन्ति द्रव्याणि एतावन्तं कालं पश्यतीत्यादिपरस्परनियमितक्षेत्रादिलक्षणया धीयते परिच्छिद्यते रूपिवस्तु अनेनेत्यवधिः, यद्वाऽवशब्दस्यार्थद्वयं तथैव, अवधीयते जीवेन तस्मिन् सति वस्त्वित्यवधिः, अवधानं वावधिः, साक्षादर्थपरिच्छेदनमित्यर्थः, यद्वाऽवधीयते परिच्छिद्यते अस्मात् जीवेन साक्षात् वस्त्वित्यवधिः, यद्वावधिर्मर्यादा रूपिष्वेव

द्रव्येषु परिच्छेदकतया प्रवृत्तिरूपा, तदुपलक्षितं ज्ञानमप्यवधिः, तच्चेन्द्रियनिरपेक्षं मनःप्रणिधानवीर्यकं प्रतिविशिष्टक्षयोपशमनिमित्तं पुद्गलपरिच्छेदि चतुर्गतिकानां भवति, अवधिश्च तज्ज्ञानं चावधिज्ञानम्। तथा परिः सर्वतो भावे अवनमवः, अवनं गमनं वेदनमिति पर्यायाः, परि अवः पर्यवः, मनसि मनसो वा पर्यवः मनःपर्यवः, सर्वतस्तत्परिच्छेद इत्यर्थः, स चासौ ज्ञानं च मनःपर्यवज्ञानं मनःपर्ययज्ञानमिति वा पाठान्तरम्, तत्र पर्ययणं पर्ययः, शेषं तथैव। मनःपर्याय इत्यपि पाठान्तरम्, तत्र मनांसि पर्येति सर्वात्मना परिच्छिनत्ति मनःपर्यायः, मनःपर्यायं च तत् ज्ञानं च मनःपर्यायज्ञानम्, यदि वा मनसः पर्याया मनःपर्यायाः, पर्याया धर्मा वाह्यवस्त्वालोचनप्रकारा इत्यनर्थान्तरम्, तेषु तेषां वा संबन्धि ज्ञानं मनःपर्यायज्ञानम्। इदमुक्तं भवति–संज्ञिभिर्जीवैः काययोगेन गृहीतानि मनःप्रायोग्यवर्गणाद्रव्याणि चिन्तनीयवस्तुचिन्तनव्यापृतेन मनोयोगेन मनस्त्वेन परिणमय्यावलम्ब्यमानानि द्रव्यमनांसीत्युच्यन्ते, तदुक्तं **विशेषावश्यकबृहद्वृत्तौ**–"काययोगसहायजीवगृहीतचिन्ताप्रवर्त्तकमनोवर्गणान्तःपातिद्रव्यसमूहात्मकं द्रव्यमनः" इति, **तत्त्वार्थवृत्तौ** "समनस्कामनस्काः" इति। २–११–सूत्रव्याख्यायामेवमुक्तम्–"द्विविधं तद् द्रव्यभावभेदात्, तत्र मनोऽभिनिर्वृत्त्यै यद्दलिकं द्रव्यमुपात्तमात्मना सा मनःपर्याप्तिर्नाम करणविशेषः, तेन करणविशेषेण सर्वात्मप्रदेशवर्त्तिना याननन्तप्रदेशान् मनोवर्गणायोग्यान् स्कन्धान् चित्तार्थमादत्ते ते करणविशेषपरिगृहीताः स्कन्धाः द्रव्यमनोऽभिधीयन्ते" इति। ननु **तत्त्वार्थवृत्तावेव मनःपर्यायज्ञानशब्दार्थविवरणे**–"मनो द्विविधम्, द्रव्यमनो भावमनश्च, तत्र द्रव्यमनो मनोवर्गणा, भावमनस्तु ता एव वर्गणा जीवेन गृहीताः सत्यो मन्यमानाश्चिन्त्यमाना भावमनोऽभिधीयते। तत्रेह भावमनः परिगृह्यते, तस्य भावमनसः पर्यायाः, ते चैवंविधाः, यदा कश्चिदेवं चिन्तयेत् 'किं स्वभाव आत्मा?, ज्ञानस्वभावोऽमूर्त्तः

कर्त्ता सुखादीनामनुभविता' इत्यादयो ज्ञेयविषयाऽध्यवसायाः परगतास्तेषु यज्ज्ञानं तेषां वा यज्ज्ञानं मनःपर्यायज्ञानम्" एवमुक्तम्, अत्र द्रव्यमनः कथं भावमनस्त्वेनोक्तमिति चेत्? कारणे कार्योपचारादुक्तमिति व्यवसीयते, यतस्तैरेव भावमनः आत्मपरिणामत्वेनोक्तत्वात्, तदुक्तम्-"भावमनस्तु जीवस्योपयोगश्चित्तचेतनायोगाध्यवसानावधानस्वान्तमनस्काररूपः परिणामः" इति। विशेषावश्यके तद्वृत्तावपि च-'आत्मपरिणाम एव भावमनस्त्वेनोक्तः', यथाक्रमं च तत्पाठः-"जीवो य होइ भावमणो" "भावमनसश्चिन्ताज्ञानपरिणामरूपत्वात् तस्य च जीवद्रव्यानतिरिक्तत्वात् जीव एव भावमनो भवति" इति। तेषां मनसां पर्यायाश्चिन्तनानुगताः परिणामा एव परमार्थतो ज्ञायन्ते मनःपर्यवज्ञानिभिः, बाह्यांस्त्वर्थाननुमानादेवेति। तथा केवलमेकमसहायकं तद्भावे शेषच्छाद्मस्थिकज्ञानचतुष्टयविनिर्वृत्तेः-"नट्ठम्मि छाउमत्थिए नाणे" इति वचनप्रामाण्यात्। ननु मत्यादीनि ज्ञानानि स्वस्वावरणक्षयोपशमेऽपि प्रादुःषन्ति तर्हि निःशेषतः स्वस्वावरणक्षये तु सुतरां तानि भविष्यन्ति, चारित्रपरिणामवत्, तथाहि-यथा यथा कषायस्थानानि मन्दीभवन्ति तथा तथा संयमस्थानानि विशुद्धानि भवन्ति, क्षीणे तु कषाये सुविशुद्धं यथाख्यातचारित्रं प्रादुर्भवति, एवमत्रापि, तदुक्तं-"आवरणदेसविगमे जाइ विज्जंति मइसुयाईणि। आवरणसव्वविगमे कह ताइ न होंति जीवस्स॥ १॥" इति चेत्?, अत्रोच्यते, इह यथातिसमुन्नतजिमूतघनपटलान्तरितसहस्रभानोरपान्तरालावस्थितकटकुड्यादिविवरप्रविष्टप्रकाशो घटादीन् प्रकाशयति, तथा केवलज्ञानावरणावृत्तस्य केवलज्ञानस्यापान्तरावस्थितमतिज्ञानावरणादिक्षयोपशमरूपविवरविनिर्गतप्रकाशो जीवादीन् प्रकाशयति, स च तथा प्रकाशयन्मतिज्ञानमित्यादिलक्षणं तत्तत्क्षयोपशमानुरूपमभिधानमुद्वहति, ततो यथा सकलघनपटलकटकुड्याद्यावरणव्यपगमे सहस्रभानोस्तथाविधः प्रकाशोऽ-

स्पष्टरूपो न भवति, किन्तु परिस्फुटरूपोऽन्य एव, एवं केवलज्ञानस्यापि निःशेषावरणविलयेन तथाविधो मतिज्ञानादिसंज्ञितो न भवति किन्तु सर्वात्मना निखिलज्ञेयं परिच्छिन्दन् परिस्फुटरूपोऽन्य एव, तदुक्तमाराध्यपादैः—"कटविवरागयकिरणा मेहन्तरियस्स जह दिणेसस्स । ते कडमेहावगमे न हुंति जह तह इमाइं पि ॥ १ ॥" इति । यथा वा मलोपदिग्धस्य जात्यमरकतादिमणेर्यावन्नाद्यापि समूलमलापगमस्तावत् यथा यथा देशतो मलापगमस्तथा तथा देशतोऽभिव्यक्तिरुपजायते, सा च क्वचित्कदाचित् कथञ्चित् भवत्यनेकप्रकारास्तथात्मनोऽपि सकलकलाकलापावलम्बिनिखिलपदार्थपरिच्छेदकरणपारमार्थिकस्वरूपस्याप्यावरणमलपटलतिरोहितस्वरूपस्य यावन्नाद्यापि निखिलकर्ममलापगमस्तावत् यथा यथा देशतः कर्ममलापगमः तथा तथा देशतो विज्ञप्तिरुपजायते, सा चानेकप्रकारा क्वचित् कदाचित् कथञ्चित् भवति, तदुक्तं—"मलविद्धमणेर्व्यक्तिर्यथाऽनेकप्रकारतः । कर्मविद्धात्मविज्ञप्तिस्तथानेकप्रकारतः ॥ १ ॥" इति । सा चानेकप्रकारता मतिश्रुतादिभेदेन वाच्या, ततो यथा मणेर्निःशेषमलापगमे सति परिस्फुटरूपैकाभिव्यक्तिरुपजायते तद्वदात्मनोऽपि ज्ञानदर्शनचारित्रप्रभावतो निःशेषावरणविलये सति परिस्फुटरूपा सर्ववस्तुपर्यायसाक्षात्कारिणी विज्ञप्तिरन्यैवोपजायते, तदुक्तं—"यथा जात्यस्य रत्नस्य निःशेषमलहानितः । स्फुटैकरूपाभिव्यक्तिर्विज्ञप्तिस्तद्वदात्मनः ॥ १ ॥" इति मत्यादिज्ञाननिरपेक्षं केवलम् । यत्तु चारित्रपरिणामरूपं ज्ञातं तदपि न प्रतिकूलम्, यतः कषायमन्दताजन्यचारित्रपरिणामो मोहनीयक्षये न विद्यत एव, यो वीतरागचारित्रपरिणामः सोऽन्य एवेति । अन्ये पुनः स्वीकुर्वन्त्यपि, केवलं निष्फलत्वेन तेषां विवक्षां न कुर्वन्ति, तदुक्तम्—"अन्ये तु केवलिनोऽपि मतिज्ञानादीनि विद्यन्त एव, परं देशमात्रपरिच्छित्तिलक्षणस्वफलविकलानि सन्त्यपि न सन्त्येवेति विवक्ष्यन्ते, यथा निशि स्वफलसाधका-

न्यपि चन्द्रमहनक्षत्रादीनि सूर्योदये प्रादुर्भूते सत्यफलानि भवन्ति" इति । तथा धर्म्मसंग्रहण्यां श्रीमद्धरिभद्रसूरिपादैरप्युक्तम्–"अन्ने भणंति आभिणिबोधादीणि वि जिणस्स विज्जंति । अफलाणि य सूरुदए जहेव णक्खत्तमादीणि ॥ १ ॥" इति । ननु प्राक् सफलानि ज्ञानानि कथं पश्चादफलानि भवन्तीति चेत्, छद्मस्थभावलक्षणसहकारिकारणाभावात्, यथा निशालक्षणसहकारिकारणाभावात् नक्षत्रादीनि दिवाऽफलानि प्रकाशकानि न भवन्तीत्यर्थः । तथा मत्यादिज्ञानानामप्येवंभूतः स्वभावो यत् यावत् न केवलाभिव्यक्तिस्तावत् तेषां सफलता, तदभिव्यक्तौ च निष्फलतेति, तदुक्तं–तत्त्वार्थभाष्येऽपि–"केचिदाचार्या व्याचक्षते, नाभावः किन्तु तदभिभूतत्वादकिञ्चित्कराणि भवन्ति, इन्द्रियवद् । यथा वा व्यभ्रे नभसि आदित्य उदिते भूरितेजस्वित्वेनाभिभूतान्यतेजांसि ज्वलनमणिचन्द्रनक्षत्रप्रभृतीनि प्रकाशनं प्रत्यकिञ्चित्कराणि भवन्ति तद्वदिति ।"

यद्वा केवलं निरपेक्षं ग्राह्यं आलोकेन्द्रियादीनामनपेक्षणात्, यद्वा केवलं सर्वभावज्ञापकं सर्वेषां जीवादिभावानां प्ररूपकत्वात् । ननु मूकं केवलज्ञानं कथं सर्वभावज्ञापकमुच्यते ? यतः सर्वज्ञोऽपि शब्दद्वारेणैव सर्वभावान् ज्ञापयतीति चेत् ?, उपचारादुच्यते ज्ञापकं, यतः केवलज्ञाने सर्वान् भावान् ज्ञात्वैव जिनः शब्दद्वारेण प्रकाशयति, नान्यथेति केवलज्ञानमुपचारेण सर्वभावप्ररूपकमुच्यत इति । यद्वा केवलं शुद्धं निःशेषावरणमलपङ्कापगमात्, यद्वा केवलं परिपूर्णं प्रथमत एवाशेषतदावरणापगमतः सम्पूर्णतयोत्पत्तेः, यद्वा केवलमसाधारणमनन्यसदृशत्वात्, यद्वा केवलमनन्तं ज्ञेयानन्तत्वादपर्यवसितानन्तकालावस्थायित्वाद्वा, यद्वा केवलं निर्व्याघातं लोकालोके क्वापि व्याघाताभावात्, तदुक्तं–"केवलमेगं सुद्धं सगलमसाहारणं अणंतं च" इति, केवलं च तत् ज्ञानं च केवलज्ञानम्, कालत्रयवर्त्तिसमस्तद्रव्यपर्यायपरिच्छेदीति । ननु

'सकलस्यापि ज्ञानस्य ज्ञस्त्येकस्वभावत्वात् किंनिमित्तक आभिनिबोधिकादिभेदः ? न निर्बन्धनोऽसौ युक्तः, न च ज्ञेयनिबन्धनोऽसौ, तथाहि–वर्त्तमानकालभाविवस्तु मतिज्ञानस्य ज्ञेयम्, श्रुतज्ञानस्य त्रिकालसाधारणः समानपरिणामः शब्दगोचरः, रूपिद्रव्यमवधिज्ञानस्य, मनोद्रव्याणि मनःपर्यायज्ञानस्य, समस्तपर्यायान्वितं सर्वं वस्तु केवलज्ञानस्येति वाच्यम्, एवं सति केवलज्ञानस्य भेदबाहुल्यप्रसक्तेः, तथाहि–ज्ञेयभेदात् ज्ञानस्य भेदः, यानि च मतिज्ञानादीनां ज्ञेयानि तानि सर्वाणि केवलज्ञानस्यापि ज्ञेयानि भवन्ति, अन्यथा केवलज्ञानेन तेषामग्रहणप्रसङ्गात्, तथा च मत्यादिज्ञानचतुष्टयविषयजातस्य तदविषयत्वेन केवलिनोऽप्यसर्वज्ञत्वप्रसङ्गः, न चैतदिष्टमिति । ननु प्रतिपत्तिप्रकारभेदात् मत्यादिज्ञानभेदस्तथाहि–केवलज्ञानस्य यादृशी प्रतिपत्तिः न तादृशी मतिज्ञानस्य प्रतिपत्तिः, यादृशी मतिज्ञानस्य न तादृशी श्रुतादिज्ञानानां प्रतिपत्तिः, यादृशी श्रुतज्ञानादीनां प्रतिपत्तिर्न तादृशी मतिज्ञानस्येत्येवं पञ्चानामपि ज्ञानानां प्रतिपत्तिप्रकारभेदात् भेद इति चेत् ? न, एवं सत्येकस्मिन्नपि ज्ञाने भेदबाहुल्यप्रसक्तेः, तथाहि–एकैकमपि ज्ञानं तत्तद्देशकालपुरुषस्वरूपभेदेन विविच्यमानं प्रतिपत्तिप्रकारानन्त्यं प्रतिपद्यत इति नैषोऽपि पक्षः शुभावहः । ननु तदावरकं ज्ञानावरणं पञ्चप्रकारं प्रज्ञापनादावभिहितम्, आवरकपञ्चविधात् तदावार्यमपि ज्ञानं पञ्चप्रकारं न विरुध्यत इति चेत् ? तदप्यतीवासङ्गतम्, यत आवार्यापेक्षमावरकमत आवार्यभेदादेव तद्भेदो युक्तः, नावरकभेदात्, आवार्यं च ज्ञप्तिरूपापेक्षया सकलमप्येकरूपमिति नावरकमपि पञ्चप्रकारं स्यात् येन तद्भेदात् ज्ञानस्यापि पञ्चविधत्वमुद्गीर्येत । ननु स्वभावत एव ज्ञानस्य पञ्चविधत्वम्, न च स्वभावः पर्यनुयोगमश्नुते, न खलु दहनो न दहतीति कोऽपि पर्यनुयोगमाचरतीति चेत् ? तदपि न युक्तम्, सर्वज्ञस्याप्यसर्वज्ञत्वप्रसङ्गात्,

तथाहि–आत्मधर्मो हि ज्ञानं, तच्च स्वभावत एव मत्यादिभेदरूपेण व्यवस्थितम्, न च स्वभावस्थितो धर्मः केनापि हातुं शक्यते, अत एव सर्वज्ञे भगवति तद्भावप्रसङ्गेनास्मादृशामिव भगवतोऽप्यसर्वज्ञत्वमापद्यते, न च केवलज्ञानेन सर्ववस्तु-परिच्छेदान्नासर्वज्ञत्वमिति वाच्यम्, केवलज्ञानोपयोगकाले भगवतः सर्वज्ञत्वेऽपि मत्याद्युपयोगकाले भगवतोऽसर्वज्ञत्व-प्रसक्तेः, न च मत्यादिज्ञानोपयोगः सर्वज्ञस्य भगवतो न संभवतीति वाच्यम्, तस्याप्यात्मस्वभावत्वेन क्रमेण भवत उपयो-गस्य निवारयितुमशक्यत्वात्, केवलज्ञानानन्तरं केवलदर्शनोपयोगवत्, ततो बलादेव प्राप्तं केवलज्ञानोपयोगकाले सर्वज्ञ त्वं शेषज्ञानोपयोगकालेऽसर्वज्ञत्वम्, तच्च विरुद्धमतोऽनिष्टमिति, तदुक्तं–"णत्तेगसहावत्ते अभिणिबोहादि किं कओ भेदो ? । नेय-विसेसाओ चे ण सवविसयं जओ चरमं ॥ १ ॥ अह पडिवत्तिविसेसा णेगम्मि अणेगभेदभावातो। आवरणविभेदो वि हु सहावभेदं विणा न भवे ॥ २ ॥ तम्मि य सति सवेसिं खीणावरणस्स पावती भावो । तद्धम्मत्ततो चिय जुत्तिविरोहा स चाणिट्ठो ॥ ३ ॥ अरहा वि अस-वन्नू आभिणिबोहादिभावतो नियमा । केवलभावा तो चे सवन्नू णणु विरुद्धमिदं ॥ ४ ॥" इति, ततोऽवसीयते ज्ञानस्य द्वैविध्यं सकलासकलभेदादिति, तत्र सकलं परिपूर्णं केवलज्ञानमिति यावत्, अवग्रहज्ञानादारभ्योत्कर्षप्राप्तं परमावधिज्ञानं यावद-सकलमपरिपूर्णमशेषवस्तुविषयत्वाभावादिति, तदुक्तम्–"तम्हा अवग्गहाओ आरब्भ इहेगमेव नाणत्ति । जुत्तं छउमत्थस्सासगलं इयरं च केवलिणो ॥ १ ॥" इति । किञ्च केवलज्ञानावरणस्य क्षयः किं प्रतिसमयं स्यात् चरमसमये वा ? तत्र यद्याद्यः पक्ष-स्तर्हि प्रतिसमयं खण्डरूपस्य केवलज्ञानस्य सद्भावः, प्रतिसमयं तदावरकापगमात्, न च मतिज्ञानादिष्वन्तर्भावस्तस्येति वाच्यम्, तदावरकक्षयोपशमस्य वैलक्षण्येन तद्विलक्षणत्वात्, न च केवलज्ञानेऽन्तर्भावः, छद्मस्थस्य तदनभ्युपगमात् ।

न च वक्तव्यं प्रतिसमयं देशतः सत्यप्यावरणक्षये न केवलज्ञानसद्भावः समस्तावरणक्षयादेव तदुत्पत्तेरिति न प्रागुक्तो दोष इति, उभयत्रापि न्यायस्य समानत्वेन प्रतिसमयं मतिज्ञानाद्यावरणानां देशतः क्षयेऽपि सर्वावरणक्षयाभावेन मतिज्ञानादीनामप्यभावप्रसङ्गात् । नापि द्वितीयः पक्षः, अनन्तकालोपार्जितकेवलज्ञानावरणसंघातस्यातीव प्रभूतत्वेन चरमसमयरूपकालस्यात्यल्पत्वेन क्षयीकर्त्तुमशक्यत्वात्, यद्वा समयमात्रेणापि तावतः कर्मसंघातस्य क्षयसम्भवेऽपि नैतदभ्युपगन्तुं शक्यते, आगमविरोधात्, तथाहि-नागमे पुद्गलानां स्थितिरनन्तकालप्रमाणोक्ता, किन्त्वसङ्ख्येयकालप्रमाणा, चरमसमये तदावरणक्षये तु जीवस्यानादित्वेनानन्तकालप्रमाणा कर्मस्थितिर्भवति, न चैतदिष्टमित्यागमविरोधः, तदुक्तम्-
"चरमावरणस्स खओ पइसमयं चरमसमय एव होज्जाहि । पतिसमए तब्भावोऽसगलो सो कस्स भेदो त्ति ॥ १ ॥ अह सति वि तम्मि भावो ण पतिसमयमेव इट्ठो त्ति । कहमाभिणिवोहादिसु तब्भावे हंत भावो त्ति ॥ २ ॥" इति । तस्मात् सकलासकलरूपं द्विविधमेव ज्ञानमस्तु न पञ्चप्रकारमि'ति चेत्?, अत्र प्रतिविधीयते-तत्र यत्तावदुक्तं-'ननु सकलस्यापि ज्ञानस्य ज्ञप्त्येकस्वभावत्वात् किंनिमित्तक आभिनिवोधिकादिभेदः? न निर्बन्धनोऽसौ युक्तः,' तत्र ज्ञप्त्येकस्वभावता सामान्येन भवताऽभ्युपगम्यते, विशेषेण वा? आद्ये सिद्धसाध्यतया बाधकाभावः, ज्ञानत्वेन सकलस्यापि ज्ञानस्यैकत्वाभ्युपगमात्, द्वितीयः पक्षस्त्वसिद्ध एव, प्रतिप्राणि स्वसंवेदनप्रत्यक्षेणोत्कर्षापकर्षदर्शनात् न विशेषेण ज्ञानमेकरूपमुपलभ्यते । ननूत्कर्षापकर्षमात्रभेदतो ज्ञानस्य भेदाभ्युपगमे प्रतिप्राणि द्रव्यकालाद्यपेक्षयोत्कर्षापकर्षयोर्भिन्नत्वेन भेदानन्त्यं स्यात् कथं पञ्चरूपतेति चेत्? नैष दोषः, परिस्थूलनिमित्तभेदेन पञ्चविधत्वस्य प्रतिपादनात्, तथाहि-केवलज्ञानस्य निमित्तं घातिकर्मक्षयः, मनः-

पर्यायज्ञानस्य त्वामर्षौषध्यादिलब्धियुतस्य प्रमादांशेनाप्यकलंकितस्य मुनेर्विशिष्टाध्यवसायानुगतोऽप्रमादः, तदुक्तम्-"तं
संजयस्स सव्वप्पमायरहियस्स विविहरिद्धिमत" इति, तथाऽवधिज्ञानस्यानिन्द्रियरूपिद्रव्यसाक्षादवगमनिबन्धनक्षयोपशमविशेषः, "णंतेगसहावत्तं, ओहेण विसेसओ पुण
मतिश्रुतयोस्तु लक्षणभेदादिकं तच्चाग्रे वक्ष्यामः, तदुक्तं धर्मसंग्रहण्यामाराध्यपादैः-
असिद्धं । एगंततस्सहावत्तेण उ कह हाणिवुड्ढीओ ॥ १ ॥ जं अविचलियसहावे तत्ते एगंततस्समावत्तं । ण य तं तहोवलद्धा उक्करिसा-
पकरिसविसेसा ॥ २ ॥ तम्हा परिथूरातो निमित्तभेदातो समयसिद्धातो । उववत्तिसंगओ च्चिय आभिणिबोहादिगो भेदो ॥ ३ ॥ घाति-
क्खयो निमित्तं केवलनाणस्स वन्निओ समए । मणपज्जवनाणस्स उ तहाविहो अप्पमादो त्ति ॥ ४ ॥ ओहीनाणस्स तहा अणिंदिएसुं पि
जो खओवसमो । मतिसुयनाणाणं पुण लक्खणभेदादिणा भेओ ॥ ५ ॥" इति, तदेवं परिस्थूलनिमित्तभेदात् मतिज्ञानादिको भेदो
ज्ञानस्य युक्तियुक्तः । यदुक्तम्-'न च ज्ञेयनिबन्धोऽसौ' इत्यादि, तदनभ्युपगमादेव निराकृतम्, नहि वयं ज्ञेयभेदमात्रतो
ज्ञानस्य भेदमिच्छामः, एकेनाप्यवग्रहादिना बहुबहुविधवस्तुग्रहणोपलम्भात्, यद्वा ज्ञेयकृतभेदस्वीकारेऽपि न क्षतिः,
तथा हि-परिस्थूरनिमित्तभेदेन ज्ञानस्य पञ्चप्रकारत्वसिद्धौ तज्ज्ञेयतया पञ्चप्रकारत्वं सिद्ध्यत्येव, तस्या अपि धर्मान्तरयुक्त-
त्वात्, ततो ज्ञेयताभेदादपि ज्ञानस्य भेदः, तदुक्तं-"एवं च सव्वविसयं जत्तिवि य चरममिह तह वि सिद्धो तु । णेयविसेसो
तेसिं धम्मंतरजुत्तसिद्धीओ ॥ १ ॥" वृत्तिः-"एवं च सति परिस्थूरान्निमित्तभेदाद्भेदे सति यद्यपि चरममिह केवलज्ञानं सर्वविषयं तथापि
ज्ञेयविशेषस्तेषामाभिनिबोधिकादिज्ञानभेदानां सिद्ध एव, तुरेवकारार्थः, कुत इत्याह-धम्मंतरजुत्तसिद्धीओ' धर्मान्तरयुक्तस्य वस्तुनः सिद्धेः
प्रतीतेः, तथा हि-वर्त्तमानकालभावि स्पष्टरूपं च वस्त्वाभिनिबोधिकेन परिच्छिद्यते, अस्पष्टरूपं त्रिकालावलम्बि च श्रुतज्ञानेनेत्यादिरूपो

ज्ञेयविशेषः सुप्रसिद्ध एव, एषोऽपि भेदस्य साधको द्रष्टव्यः" इति । ननु या मतिज्ञानादिज्ञेयता सा केवलज्ञानस्य भवति न वा ? आद्ये भिन्नज्ञेयतानुपपत्तिः, द्वितीये तदग्रहणेन भगवतो जिनेशस्यासर्वज्ञत्वापत्तिरिति चेत् ?, तन्न युक्तम्, मतिज्ञानादिज्ञेयत्वेन तस्या अग्रहणेऽपि केवलज्ञानेन तद्ग्रहणात् केवलज्ञानस्य मत्यादिज्ञानमात्रनिरूपिताया ज्ञेयताया अभावेऽपि नासर्वज्ञत्वापत्तिः, नहि वक्तुं शक्यते अल्पज्ञानत्वमात्राभाववति भगवति असर्वज्ञत्वमिति, अन्यथा कपर्दिकामात्रधनाभाववति महर्द्धिके निर्धनिकत्वमपि वक्तव्यं स्यादिति । यदुक्तं–'प्रतिपत्तिभेदात् मत्यादिज्ञानभेद' इत्यादि, तदपि नो बाधामाधातु नालम्, यतस्ते प्रतिपत्तिप्रकारा देशकालादिभेदेनानन्त्यमपि प्रतिपद्यमाना परिस्थूलनिमित्तभेदेन व्यवस्थापिता नाभिनिवोधिकादीन् जातिभेदानतिक्रामन्ति, ततः कथमेकस्मिन् अनेकभेदभावप्रसङ्गः ?, तदुक्तम्–"ण य पडिवत्तिविसेसा एगंम्मि अणेगभेदभावे वि । जं ते तहा विसिट्ठा ण जातिभेदे विलंघंति ॥ १ ॥" यदप्यवादीत्–'आवार्यापेक्षमावरकमत आवार्यभेदादेव तद्भेदो युक्त' इत्यादि, तदपि प्रलापमात्रम्, यतः परिस्थूरनिमित्तभेदेन व्यवस्थापितो ज्ञानस्य भेदस्ततस्तदपेक्षमावरकमपि तथा भिद्यमानं न नो बाधामुत्पादयति । ननु परिस्थूरनिमित्तभेदात् व्यवस्थापिता मत्यादिज्ञानप्रकारा आत्मभूता अनात्मभूता वा ?, आत्मभूताश्चेत् ?, क्षीणावरणेऽपि भगवति तत्प्रसङ्गः, स्वस्वरूपत्वात् केवलज्ञानवत्, तथा च सति प्रागुक्तनीत्याऽसर्वज्ञत्वापत्तिर्भगवति दुर्निवारा स्यात्, अनात्मभूताश्चेत्, न ते पारमार्थिकास्ततः कथमावार्यापेक्षो वास्तव आवरकभेदः ? तदपि न मनोरञ्जकम्, सम्यग्वस्तुतत्त्वापरिज्ञानात्, सकलघनपटलविनिर्मुक्तसहस्रभानोरिव समन्ततः समस्तवस्तुस्तोमप्रकाशनैकस्वभावो जीवस्तस्य च तथाभूतः स्वभावः केवलज्ञानमिति व्यपदिश्यते, स च यद्यपि सर्व-

[redacted]

घातिकेवलज्ञानावरणावृत्तस्तथापि तस्यानन्ततमो भागो नित्योद्घाटित एव तिष्ठति, तदुक्तं नन्दीसूत्रे—"अक्खरस्स अणंतमो भागो निच्चुग्घाडिओ, जइ पुण आवरिज्जा तेणं जीवो अजीवत्तणं पाविज्जा" इति । अक्षरस्य श्रुतसंलुलितकेवलस्येति भाष्यकृत्, अक्षरस्य श्रुतस्य, श्रुतज्ञानं च मतिज्ञानाविनाभावि ततो मतिज्ञानस्यापि अनन्ततमो भागो नित्योद्घाटितः सदैव सर्वदैवानावृत्तः, यदि पुनः सोऽप्यनन्ततमो भाग आव्रियते तेन तर्हि जीवोऽजीवत्वं प्राप्नुयादिति तदर्थः । ततः केवलज्ञानावरणावृत्तस्य जीवस्य घनपटलाच्छादितस्य रवेः कटकुड्याद्यावरणविवरप्रवेशेनेव यो मन्दप्रकाशः सोऽपान्तरालावस्थितमतिज्ञानाद्यावरणक्षयोपशमभेदसम्पादितं नानात्वं भजते, यथा मतिज्ञानावरणक्षयोपशमजनितः स मन्दप्रकाशो मतिज्ञानम्, श्रुतज्ञानावरणक्षयोपशमजनितः श्रुतज्ञानमित्यादि, तत आत्मनः स्वभावभूता मत्यादयो ज्ञानभेदाः प्रवचनोपदर्शितपरिस्थूरनिमित्तभेदात् पञ्चसंख्याका भवन्ति, ततस्तदपेक्षं तदावरकमपि पञ्चधोपवर्ण्यमानं न विरुध्यते । न चैवमात्मस्वभावभूतत्वे तु क्षीणावरणे भगवति तत्प्रसङ्ग इति वाच्यम्, यत एते मतिज्ञानावरणादिक्षयोपशमरूपोपाधिसम्पादितसत्ताकास्तथारूपक्षयोपशमाभावे कथं भवितुमर्हन्ति, यथा कटकुड्याद्यावरणविवरभेदरूपोपाधिसम्पादिता घनपटलावृत्तस्य रवेः मन्दप्रकाशभेदा नहि सकलकटकुड्याद्यावरणापगमे सति भवन्तीति । ननु जीवस्वभावत्वे कथं क्षीणावरणस्य तदभाव इति चेत्? यथा जन्मादयो जीवस्यात्मभूता अपि कर्मोपाधिसम्पादितसत्ताकाः कर्माभावे न भवन्ति, एवं मतिज्ञानादय आत्मभूता अपि मतिज्ञानाद्यावरणक्षयोपशमसापेक्षत्वेन तदभावे केवलिनो न भवन्ति, ततो नासर्वज्ञत्वापत्तिरिति, तदुक्तं—"जमिह छउमत्थधम्मा जम्माईया न होंति सिद्धाणं। इय केवलीणमाभिणिबोहाभावम्मि को दोसो ॥१॥" इति, यद्वा केवलज्ञानव्यावृत्तज्ञानत्वव्याप्य-

जातिविशेषावच्छिन्ने केवलज्ञानावरणस्यैव हेतुत्वेन क्षीणमतिज्ञानाद्यावरणे तद्धेतु केवलज्ञानावरणस्यापि क्षयात् न मत्यादिज्ञानसंभवः, अत एव मत्यादिज्ञानस्य विभावगुणत्वमपि, यद्वा क्षीणावरणस्य मतिज्ञानादीनामात्मस्वभावत्वेन तद्भावेऽपि न दोष इति मतान्तरेण प्रागुक्तमेव। यदप्युक्तं 'केवलज्ञानावरणस्य क्षयः किं प्रतिसमयं स्यात् चरमसमये वा?' इत्यादि, तत्रोभयपक्षेऽपि न दोष इति वयं ब्रूमः, तथा हि—केवलज्ञानावरणस्य प्रतिसमयं क्षये सत्यपि न केवलज्ञानस्य प्रादुर्भावः, यतः केवलज्ञानस्येत्थम्भूत एव स्वभावः, यदुत निःशेषतः स्वावरककर्मपरिक्षये सत्येव प्रादुर्भावः, तथा च सति कुतो देशतः क्षये तद्भावः? तथा प्रतिसमयं कतिपयांशविच्युतावपि प्रतिसमयमेव तावत्प्रमाणं तदावरकमपरकर्मांशबन्धसम्भवतस्तत्त्वतः चरमसमये एव केवलज्ञानावरणपरिक्षयः न चैकेनैव समयेन कथमेतावत्प्रमाणं दलिकसङ्घातं क्षपितुं शक्यत इति वाच्यम्, ध्यानबलेन तस्यापि शक्यत्वात्, न च ध्यानविशेषस्य किञ्चिदप्यसाध्यमस्ति, यथा प्रभूतकालोपचितं सुनिबिडतृणसंघातं क्षणमात्रेण दावानलो दहति, एवं ध्यानानलोऽपि कर्मेन्धनजातं क्षणमात्रेण दहति, तदुक्तम्—"चरमावरणस्स खए, पतिसमयम्मि वि ण तस्स भावो त्ति। तस्साहव्वाउ च्चिय, तव्वन्धातो य पतिसमयं ॥ १ ॥ ता चरमए च्चिय खओ, ज्झाणविसेसाउ तीरए काउं। चिरसंचियं पि हु तणं खणेण दावानलो दहति ॥ २ ॥" इति।

ननु मत्यादिज्ञानानामित्थं क्रमोपन्यासे किञ्चित् प्रयोजनमस्ति उत यथा कथञ्चिदेष प्रवृत्तः? प्रयोजनमस्तीति ब्रूमः, तथाहि—स्वामिकालकारणविषयपरोक्षत्वसाधर्म्यादादौ मतिश्रुते उपन्यस्येते। तत्र य एव मतिज्ञानस्य स्वामी स एव श्रुतज्ञानस्यापि, तदुक्तं—"जत्थ आभिणिबोहियनाणं तत्थ सुयनाणं, जत्थ सुअनाणं तत्थाभिणिबोहियनाणं" इति स्वामिसाधर्म्यम्। यावानेव

मतिज्ञानस्य स्थितिकालः तावानेव श्रुतज्ञानस्यापि, तत्रैकजीवमाश्रित्यानवरतं सातिरेकषट्षष्टिसागरोपमाणि, नानाजीवाना-श्रित्य तु सर्वोऽपि कालः, तदुक्तम्—"दो वारे विजयादिसु गयस्स तिन्नच्चुए अहव ताइं। अइरेगं नरभवियं नाणाजीवाण सव्वद्धा ॥ १ ॥" इति कालसाधर्म्यम्। द्वयोरपि मतिश्रुतयोरिन्द्रियनोइन्द्रियनिमित्तत्वेन तुल्यत्वात् कारणसाधर्म्यम्। यथा मतिज्ञानं सर्वद्रव्यादिविषयं तथा श्रुतज्ञानमपि सर्वद्रव्यादिविषयमिति विषयसाधर्म्यम्। तथोभयोरपि मतिश्रुतयोरिन्द्रियानिन्द्रियनि-मित्तत्वेन परोक्षत्वसाधर्म्यम्। नन्वनयोः साधर्म्येणैकत्रोपन्यासोऽस्तु कथं पुनरादौ नावध्यादीनामिति चेत्? उच्यते, अवध्या-दीनि मतिश्रुतज्ञानसद्भावं विना न प्रादुर्भवन्ति, मतिश्रुते च कालत्रयेऽपि दृश्येते इति तयोरेवादावुपन्यासः कृतः, तथा चोक्तम्—"जं सामिकालकारणविसयपरोक्खत्तणेहिं तुल्लाइं। तब्भावे सेसाणि य तेणाईए मइसुयाइं॥ १ ॥" इति। ननु कथं प्रागमतिरेव न श्रुतमिति चेत्? श्रुतस्य मतिपूर्वकत्वात्, न ह्यवग्रहादिरूपे मतिज्ञानेऽप्रवृत्ते सति क्वापि श्रुतज्ञानस्य प्रवृत्तिरालोक्यत इति, यद्वेन्द्रियानिन्द्रियनिमित्तेनोपगीयमानं सर्वं मतिज्ञानमेव, केवलं परोपदेशादागमवचनाच्च भवन् कश्चिद् विशिष्टो मतिभेद एव श्रुतज्ञानं नान्यत्, ततो मूलभूताया मतेरादावुपन्यासः कृतः तद्भेदरूपं श्रुतज्ञानं तु तदनन्तरमिति, तदुक्तं—"मइपुव्वं जेण सुयं तेणाईए मई विसिट्ठो वा। मइभेओ चेव सुयं तो मइसमणंतरं भणियं ॥१॥" इति, नन्द्यध्ययनचूर्णावप्युक्तम्—"मइपुव्वं सुयमुत्तं न मई सुयपुव्विया विसेसो यं। पुव्वं पालणपूरणभावाओ जं मई तस्स ॥ १ ॥" इति। ततः कालविपर्ययस्वामि-त्वलाभसाधर्म्यादवधिज्ञानस्योपन्यासः, तथाहि—यावानेव कालः मतिश्रुतज्ञानयोः प्रागुक्त एकजीवापेक्षया नानाजीवापेक्षया वा तावानेवावधिज्ञानस्यापीति कालसाधर्म्यम्। यथा च मिथ्यात्वोदये सति मतिश्रुते विपर्ययभावं प्रतिपद्येते तथाऽवधिर-

पीति विपर्ययसाधर्म्यम् । यश्च मतिश्रुतयोः स्वामी स एवावधिज्ञानस्यापीति स्वामित्वसाधर्म्यम् । लाभोऽप्यमीषां त्रयाणां यदा केचिद्देवादयो विभङ्गज्ञानिनः सम्यक्त्वमासादयन्ति तदा युगपद्भवतीति लाभसाधर्म्यम् । ततः छद्मस्थविषयभावप्रत्यक्षत्वसाधर्म्यात् मनःपर्यवज्ञानोपादानम् । तथाहि—यथावधिज्ञानं छद्मस्थस्यैव भवति तथा मनःपर्यायज्ञानमपि छद्मस्थस्यैव भवतीति छद्मस्थसाधर्म्यम् । यथाऽवधिज्ञानं रूपिद्रव्यविषयं तथा मनःपर्यायज्ञानमपि, तस्य मनोवर्गणाद्रव्यावलम्बनादिति विषयसाधर्म्यम् । यथाऽवधिज्ञानं क्षायोपशमिकं तथा मनःपर्यायज्ञानमपीति भावसाधर्म्यम् । यथा चावधिज्ञानं प्रत्यक्षं तथा मनःपर्यायज्ञानमपीति प्रत्यक्षसाधर्म्यम् । मनःपर्यायज्ञानानन्तरमुत्तमत्वस्वामित्वसाधर्म्यादवसानलाभाच्च केवलमुपन्यस्तम्, तथाहि—यथा मत्यादीनि चत्वारि ज्ञानानि देशतः परिच्छेदकानि केवलज्ञानं तु कालत्रयवर्त्तिनिःशेषद्रव्यपर्यायपरिच्छेदकमिति सर्वोत्तमम्, तत्स्वरूपत्वादेव चान्ते सर्वशिरःशेखरकत्वेन तदुपन्यस्तम् । यथा मनःपर्यायज्ञानमप्रमत्तयतिरासादयति तथा केवलज्ञानमपीति स्वामित्वसाधर्म्यम् । तथा मत्यादीनि सर्वाण्यपि ज्ञानानि य आसादयितुं योग्यः सोऽवश्यमन्ते केवलं प्राप्नोति ततः सर्वान्ते केवलमुपन्यस्तमिति । तदुक्तं निबिडजडिमसंभारतरणिश्रीजिनभद्रक्षमाश्रमणमिश्रैर्विशेषावश्यके—"कालविवज्जयसामित्तलाभसाहम्मओऽवही तत्तो । माणसमित्तो छउमत्थविसयभावादिसामण्णा ॥ १ ॥ अन्ते केवलमुत्तमजइसामित्तावसाणलाभाओ" इति । तथा मनःपर्यायज्ञानं यथा न विपर्ययं प्राप्नोति तथा केवलज्ञानमपीति विपर्ययाभावसाधर्म्यादपि मनःपर्यायानन्तरं केवलज्ञानमुक्तमिति ।

अथ साधर्म्यान्तर्गतं प्रत्यक्षत्वं परोक्षत्वं चोच्यते—तत्र 'अशुङ् व्याप्तौ' अश्नुते ज्ञानात्मना सर्वानर्थान् व्याप्नोतीत्यक्षः,

अथवा 'अश् भोजने' अश्नाति समस्तत्रिभुवनान्तर्वर्त्तिपदार्थान् यथायोगं पालयति भुङ्क्ते वेति उभयत्राप्युणादिनिपातनादक्षो जीवः, तमक्षं जीवं प्रति साक्षात् गतमिन्द्रियनिरपेक्षं वर्त्तते यज्ज्ञानं तत्प्रत्यक्षम् । न चात्राव्ययीभावसमासो विधेयः, अव्ययीभावस्य नपुंसकलिङ्गत्वेन प्रत्यक्षशब्दस्य त्रिलिङ्गतानुपपत्तेः, दृश्यते चेयं प्रत्यक्षा बुद्धिः, प्रत्यक्षो बोधः; प्रत्यक्षं ज्ञानमिति, तस्मात्तत्पुरुष एव वरीयान् । तच्चावधिमनःपर्यायकेवलज्ञानभेदात् त्रिविधम्, तस्यैव साक्षादर्थपरिच्छेदकत्वेन जीवं प्रति साक्षात् वर्त्तमानत्वात् । तथा अक्षस्यात्मनः पराणि द्रव्येन्द्रियाणि द्रव्यमनश्च, पुद्गलमयत्वेन पृथग्भूतानीत्यर्थः, तेभ्यो यदात्मनो ज्ञानमुदयते तत्परोक्षम्, यद्वा परैः-इन्द्रियादिभिः सह उक्षः-सम्बन्धो विषयविषयिभावलक्षणो यस्मिन् ज्ञाने, न तु साक्षादात्मना सह, धूमादग्निज्ञानमिव तत्परोक्षम्, उभयत्रापीन्द्रियमनोनिमित्तमतिश्रुतलक्षणं ज्ञानं वाच्यम् । ननु इन्द्रियमनोनिमित्तेभ्य उपजायमानं मतिश्रुतलक्षणं ज्ञानं कथं परोक्षमिति चेत् ? इत्थम्, पराश्रयत्वात्, तथाहि-जीवात् पुद्गलमयत्वेन पृथग्भूतानि द्रव्येन्द्रियमनांसि तस्मात् तदाश्रयेणोत्पद्यमानं ज्ञानं न साक्षादात्मनो भवति, किन्तु परम्परया इतीन्द्रियमनोनिमित्तं ज्ञानं धूमादग्निज्ञानमिव परोक्षम्, तदुक्तमावश्यकभाष्ये-"एत्थं च मइसुयाइं परोक्खमियरं च पच्चक्खं ॥ जीवो अक्खो अत्थवावणभोयणगुणण्णिओ जेणं । तं पइ वट्टइ नाणं जं पच्चक्खं तयं तिविहं ॥ १ ॥ अक्खस्स पोग्गलमया जं दव्विंदियमणा परा होंति । तेहिं तो जं नाणं परोक्खमिह तमणुमाणं व ॥२॥" इति । वैशेषिकास्तु 'अक्षाणि-इन्द्रियाणि तेषां या साक्षात् घटाद्यर्थोपलब्धिर्घटादिविज्ञानं तत्प्रत्यक्षम्, अन्यत्परोक्षमिति' तन्न युक्तम्, अचेतनत्वेन तेषां घटादिवत् ज्ञानानुयोगित्वासम्भवात् । न चाचेतनत्वमसिद्धमिति वाच्यम्, पुद्गलमयत्वस्पर्शादिमत्त्वा-

दिना तत्सिद्धेः । ननु चक्षूरूपं गृह्णदुपलभ्यते, कर्णौ शब्दम्, नासिका गन्धमित्यादि साक्षादिन्द्रियाणामुपलम्भकत्वप्रतीतेः, भविष्यति तेषां ज्ञानानुयोगित्वमिति चेत्? न, यतस्तत्रोपलब्धाऽऽत्मैव, नेन्द्रियाणि, इन्द्रियविगमेऽपि तदुपलब्धार्थानुस्मरणात्, गृहगवाक्षोपरमेऽपि तदुपलब्धार्थानुस्मारकदेवदत्तादिवत्, यदि पुनरिन्द्रियाण्युपलम्भकानि स्युस्तदा तद्विगमे कस्यानुस्मरणं स्यात्? नह्यन्येनोपलब्धार्थेऽन्यस्य स्मरणं युक्तम्, अतिप्रसङ्गात्, अस्ति च स्मरणम्, तस्मादिन्द्रियाणामचेतनत्वेन तेषां घटादिवत् ज्ञानानुयोगित्वं न भवतीति सिद्धम् । साक्षादिन्द्रियाणामुपलम्भकत्वप्रतीतिस्तु भ्रमरूपैव, तदुक्तं भाष्ये—"केसिंचि इंदिआइं अक्खाइं तदुवलद्धि पच्चक्खं । तन्नो ताइं जमचेअणाइं जाणंति न घडोव्व ॥१॥ उवलद्धा तत्थाया तव्विगमे तदुवलद्धसरणाओ । गेहगवक्खोवरमे वि तदुवलद्धाणुसरिया वा ॥२॥" इति, अत्र वाशब्द उपमार्थः । ननु न ब्रूमः स्वतन्त्राणीन्द्रियाण्युपलब्धिमन्ति किन्तु इन्द्रियमनोद्वारेणोपजायमानं ज्ञानं यत् तत्प्रत्यक्षम्, "आत्मा मनसा युज्यते, मन इन्द्रियेण, इन्द्रियं चार्थेन" इति वचनात्, न चात्मा साक्षान्नोपलब्धेन्द्रियव्यापारव्यवहितत्वेनेति वाच्यम्, उपलब्धिप्रत्यक्षाणां प्रति तेषां करणत्वेन तैर्व्यवधानाभावात्, न च व्यपदेष्टुं शक्यते 'हस्तेन भुञ्जानो हस्तक्रियाव्यवधानात् साक्षात् न भोक्ते'ति चेत्? तदयुक्तम्, सम्यग्वस्तुतत्त्वापरिज्ञानात्, इह हि यदाऽऽत्मा चक्षुरादिना वस्तु जानाति तदावश्यं चक्षुरादेः साद्गुण्यमपेक्षते, तथाहि—यदा सद्गुणं चक्षुस्तदा परिस्फुटं यथावस्थितं च बाह्यमर्थं जानाति, यदा तु तिमिराऽऽशुभ्रमणनौयानपित्तादिसंक्षोभदेशदवीयस्ताद्यापादितविभ्रमं तदा विपरीतं संशयितं वा, ततोऽवश्यमर्थोपलब्धौ पराधीन आत्मा । नन्वनभ्यस्तदशायामात्मेन्द्रियसाद्गुण्यमपेक्षते, अभ्यस्तदशायां त्वभ्यासप्रकर्षसामर्थ्यादिन्द्रियसाद्गुण्यमनपेक्ष्यैव साक्षादवबुध्यते, ततस्तस्ये-

न्द्रियाश्रितं ज्ञानं कथं प्रत्यक्षं न भवतीति चेत्? न, तद्दशायामप्यवश्यमिन्द्रियसाद्गुण्यापेक्षणात्, केवलमभ्यासप्रकर्षवशात् शीघ्रमेवेन्द्रियसाद्गुण्यमवधारयति, शीघ्रमेव च पूर्वावधृतं निश्चिनोति, ततः कालसौक्ष्म्यात्तन्नोपलभ्यते। यत्तूक्तं–"न च व्यपदेष्टुं शक्यते हस्तेन भुञ्जानो हस्तक्रियाव्यवधानात् साक्षान्न भोक्तेति" तदपि न सम्यक्, दृष्टान्तदार्ष्टान्तिकार्थवैषम्यात्, यतो यो भुजिक्रियानुभवभागी स एव भोक्ता उच्यते, भुजिक्रियानुभवश्चात्मनो हस्तेन न व्यवधीयते किन्तु साक्षात् भवति; हस्तस्त्विन्द्रियमिव परिच्छेदक्रियायां न व्याप्रियते किन्तु कवलप्रक्षेप एवेति व्यवधानाभावात् साक्षादात्मा भोक्ता व्यवह्रियते, अर्थोपलब्धिस्तु नयनादीन्द्रियसाद्गुण्यावगमानुसारेणोपजायमानत्वेन व्यवधानात् न साक्षादात्मोपलम्भक इति। अथ–"से किं तं पच्चक्खे? २ दुविहे पण्णत्ते, तं जहा–इंदिअपच्चक्खे णोइंदिअपच्चक्खे अ। से किं तं इंदिअपच्चक्खे? २ पंचविहे पण्णत्ते, तं जहा–सोइंदिअपच्चक्खे, चक्खुरिंदिअपच्चक्खे, घाणिंदिअपच्चक्खे, जिब्भिंदिअपच्चक्खे, फासिंदिअपच्चक्खे, से तं इंदिअपच्चक्खे। से किं तं णोइंदिअपच्चक्खे? २ तिविहे पण्णत्ते, तं जहा–ओहिणाणपच्चक्खे मणपज्जवनाणपच्चक्खे केवलणाणपच्चक्खे, से तं णोइंदियपच्चक्खे, से तं पच्चक्खे", एवं–"पच्चक्खं दुविहं पन्नत्तं तं जहा–इंदियपच्चक्खं नोइंदियपच्चक्खं च" इति अनुयोगद्वारनन्दीसूत्राभ्यां विरोध इति चेत्? न, यतो लोकेऽस्य प्रत्यक्षत्वेन रूढत्वात् व्यवहारतस्तथा व्यपदेशः कृतः सूत्रकृद्भिः, न तु परमार्थतः, तथाहि–यदिन्द्रियाश्रितमपरव्यवधानरहितं ज्ञानमुपजायते तल्लोके प्रत्यक्षमिति व्यवहृतम्, अपरधूमादिलिङ्गनिरपेक्षतया साक्षादिन्द्रियमधिकृत्य प्रवर्त्तनात्, यत्पुनरिन्द्रियव्यापारेऽप्यपरं धूमादिकमपेक्ष्याग्न्यादिविषयं ज्ञानमुदयते तल्लोके परोक्षम्; तत्र साक्षादिन्द्रियव्यापारासम्भवात्, यत्पुनरात्मन इन्द्रियमप्यनपेक्ष्य साक्षादुपजायते तत्परमार्थतः प्रत्यक्षम्, तच्चा-

वध्यादित्रिप्रकारं प्रागुक्तमेव, तथा चोक्तमावश्यकभाष्ये—"एगंतेण परोक्खं लिंगियमोहाइयं च पच्चक्खं । इंदियमणोभवं जं
तं संववहारपच्चक्खं ॥ १ ॥" इति । तत्त्वार्थवृत्तौ तु प्रश्नं कृत्वा एवं समाहितम्—"ननु चेन्द्रियोपष्टम्भेनोपजायमानस्य ज्ञानस्य
प्रत्यक्षत्वं लोके प्रथितं तदपाकरणप्रवृत्तस्य लोकविरोधः, तथा इदं रूपं प्रत्यक्षमिति योऽयं प्रत्ययो नायं परोक्षे दृष्टः, नहि धूमादग्निमवग-
च्छतोऽयमग्निरिति सम्प्रत्ययो भवति ततश्च स्वप्रतीतेरपि विरोध इति, उच्यते, इदं रूपं प्रत्यक्षमिति न तत्र मुख्यया वृत्त्या रूपं प्रत्यक्षं,
ज्ञानमेव तु प्रत्यक्षं, तेन प्रत्यक्षेण ज्ञानेनावच्छिन्नोऽर्थः प्रत्यक्ष इत्युच्यते, तस्य च युक्ता प्रत्यक्षता । किञ्च न सर्वथेन्द्रियनिमित्तस्य ज्ञानस्य
प्रत्यक्षता, निषेधात्, यतः सर्वथा तं विषयं न परिच्छेत्तुमलं, चक्षूरूपं गृह्णात्याराद्भागवर्त्तिनः न परमध्यभागावस्थितम्, तथा श्रोत्रादि चा-
च्यम्, अवध्यादित्रयं पुनः सर्वात्मना गच्छत्यतस्तस्यैव युक्ता प्रत्यक्षता । किञ्च न सर्वथेन्द्रियनिमित्तस्य ज्ञानस्य प्रत्यक्षव्यपदेशो निषिध्यते
यतोऽयं निश्चयमङ्गीकृत्य भाष्यकृता प्रत्यक्षव्यपदेशो निषिध्यते व्यवहारात्त्विष्यत एव" इति । ननु साक्षादिन्द्रियनिमित्तादुत्पद्यमानं
ज्ञानं परमार्थतः प्रत्यक्षमस्तु, यत्तु लैङ्गिकं धूमादिलिङ्गादग्न्यादिविषयकं ज्ञानं तत् परोक्षस्वरूपे मतिश्रुते इष्यताम्, इत्याग-
मस्य प्रदेशद्वयोक्तमपि समर्थितं भवतीति चेत् ? न, लैङ्गिकज्ञानस्येन्द्रियनिमित्तत्वाभावात्, यत इन्द्रियं वर्त्तमानकालमा-
त्रभाव्येव वस्तु गृह्णाति लिङ्गात्तु त्रिकालविषयोऽप्यर्थोऽनुमीयते, तस्माल्लैङ्गिकं ज्ञानं मनोनिमित्तमेव भवति, नेन्द्रियनिमित्तं,
मतिश्रुते तूभयनिमित्ते, ततः कथं केवलमनोविषयस्य मतिश्रुतरूपता स्यात्, अपि चेन्द्रियजज्ञानस्य मतिश्रुताभ्यां पार्थक्ये
षष्ठज्ञानप्रसङ्गः स्यात्, तस्मादिन्द्रियजज्ञानस्य मतिश्रुतयोरेवान्तर्भावः, तथा च सति मतिश्रुतयोः परोक्षत्वे तस्यापि पार-
मार्थिकं परोक्षत्वं सिद्धमेव । तथा चानुमानं—यदिन्द्रियमनोनिमित्तं ज्ञानं तत्परोक्षम्, संशयविपर्ययानध्यवसायानां तत्र स-

म्भवात्, इन्द्रियमनोनिमित्तासिद्धानेकान्तिकविरुद्धानुमानाभासवत्। एवं यदिन्द्रियमनोनिमित्तं ज्ञानं तत् परोक्षम्, तत्र निश्चयसम्भवात्, यथानुमानम्, निश्चयोऽत्र संकेतस्मरणादिपूर्वको वाच्यः, तेन नावध्यादिषु व्यभिचारः। ननु मनोनिमित्तज्ञानस्य कथं परोक्षता, 'नोइन्दियपच्चक्खं' इत्यत्र नोशब्दस्य देशवाचकत्वेन नोइन्द्रियनिमित्तं प्रत्यक्षं नोइन्द्रियप्रत्यक्षमिति व्युत्पत्त्या मनोनिमित्तज्ञानस्य प्रत्यक्षतैव स्यात् न परोक्षतेति चेत्? तदयुक्तम्, प्रवचनाभिप्रायापरिज्ञानात्, तत्र नोशब्दः सर्वनिषेधवचनः, तथा चेन्द्रियाभाव एव नोइन्द्रियमुच्यते, तथा च सति नोइन्द्रियेण इन्द्रियाभावेन प्रत्यक्षं नोइन्द्रियप्रत्यक्षमिति समासः, इन्द्रियाभावेऽपि यदात्मनः प्रत्यक्षं तन्नोइन्द्रियप्रत्यक्षमित्यर्थः। अवध्यादीनि मनोनिमित्तानि न भवन्ति, अन्यथा मनःपर्याप्त्याऽपर्याप्तस्य मनुष्यादेरवधिज्ञानं न स्यात्, मनसोऽभावात्, आगमे च—"चुएमित्तिजाणइ" इत्यादिनाऽभ्युपगतम्, किञ्च मनोद्रव्याभावेन सिद्धानामपि प्रत्यक्षज्ञानाभावः प्रसज्ज्येत। अपि च मनोनिमित्तज्ञानं मनोद्रव्यद्वारेणैवोपजायते, ततश्च परनिमित्तत्वात् अनुमानवत् परोक्षमेव, तत्कथं प्रत्यक्षं स्यात्। किञ्च मनोनिमित्तस्य ज्ञानस्य परमार्थतः प्रत्यक्षत्वे मतिश्रुतयोः कथमन्तर्भावो भवेत्? अपि तु न भवेत्, तथा च मतिज्ञानमष्टाविंशतिभेदभिन्नं न स्यात्, मनोज्ञानसम्बन्ध्यवग्रहादिभेदानां पार्थक्ये च षष्ठज्ञानप्रसङ्गः, तस्मादिन्द्रियमनोभवं ज्ञानं परनिमित्तत्वेन परोक्षम्, मतिश्रुतयोरन्तर्भावाच्च परमार्थतः परोक्षम्, व्यवहारतस्तु प्रत्यक्षमिति सिद्धम्। तदेवं ज्ञानपञ्चके यत्प्रत्यक्षं यच्च परोक्षं तदुक्तम्। ननु मतिश्रुतयोर्भेदहेतूनामनुक्तत्वेन स्वाम्यादिभिश्च तुल्यत्वेनैकतैव प्राप्ता इति चेत्? न, लक्षणभेदात् हेतुफलभावात् स्वरूपतः भेदभेदादिन्द्रियविभागात् वल्कशुम्बभेदात् अक्षरानक्षरभेदात् मूकेतरभेदाच्च तयोरैक्यताया अभावात्। तथाहि—मन्यते

योग्यार्थोऽनयेति मतिः, श्रवणं श्रुतं शृणोतीति वा श्रुतमित्यादिव्युत्पत्तिकरणप्रस्तावे प्राग्लक्षणमुक्तमेव। ननु प्राक् श्रुतज्ञानलक्षणकुक्षौ 'अन्तर्जल्पाकारम्' इत्यनेन शब्दोल्लेखसहितं ज्ञानं श्रुतज्ञानं, शेषं मतिज्ञानमिति ध्वनितम्, तथा च सतीहादिमतिज्ञानेऽतिव्याप्तिः, शब्दोल्लेखसहितत्वात्तस्य, ईहादीनां श्रुतज्ञानत्वे त्ववग्रहज्ञानमेव मतिज्ञानं जातं, तथा च सति मतिज्ञानलक्षणस्येहादावव्याप्तिः, अपि चाक्षरादिश्रुतज्ञानभेदेष्ववग्रहादीनां सद्भावेन सर्वस्यापि मतिज्ञानत्वप्रसङ्गः, मतिज्ञानभेदानामीहादीनां साभिलापत्वेन श्रुतज्ञानत्वप्राप्तेरुभयलक्षणसंकीर्णतादोषश्चेति चेत्? अत्र प्रतिविधीयते, ईहादीनामन्तर्जल्पाकारत्वेऽपि श्रुतानुसारित्वाभावेन न श्रुतरूपता ततो नातिव्याप्तिः, श्रुतानुसारिण एव साभिलापज्ञानस्य श्रुतरूपत्वात्। यदवग्रहादीनामागमे श्रुतनिमित्तत्वमुक्तं तत् पूर्वं श्रुतपरिकर्मितमतेरेवैते समुपजायन्त इत्याशयेन न पुनर्व्यवहारकाले श्रुतनिश्रितत्वमस्त्येतेषाम्, तदुक्तं महाभाष्ये—"पुव्वं सुयपरिकम्मियमइस्स जं संपयं सुयाईयं तं सुयनिस्सियं" इति। 'संकेतकालाद्याकर्णितशब्दानुसरणमन्तरेणेहादिषु शब्दाभिलापो न सङ्गच्छते, अतः कथं न तेषां श्रुतानुसारित्वमि'त्यपि न युक्तम्, सङ्केतकालाद्याकर्णितशब्दपरिकर्मितमतीनां व्यवहारकाले शब्दानुसरणमन्तरेणापि प्रवृत्तिदर्शनात्, नहि व्यवहारकाले पूर्वगृहीतसङ्केता अधीतग्रन्थाश्चास्य शब्दस्यायं वाच्यार्थः मया पूर्वं श्रुतोऽमुकग्रन्थे मयैतदधीतं वेत्यनुस्मरन्तो दृश्यन्ते, किन्त्वभ्यासपाटवात् तदनुस्मरणमन्तरेणापि सदैव विकल्पभाषणप्रवृत्तेः, यत्र तु श्रुतानुसारित्वं तत्र श्रुतरूपता भवत्येवेतीहादीनां श्रुतानुसारित्वाभावेन मतिज्ञानत्वात् मतिज्ञानलक्षणस्य नाव्याप्तिः। 'अक्षरादिश्रुतज्ञानभेदेष्ववग्रहादीनाम्' इत्यादिनोभयलक्षणसंकीर्णताऽपि या उक्ता सापि न समीचीनताकोटिमवतरति, यतः श्रुतस्य मतिपूर्वकत्वेना-

क्षरादिश्रुतभेदेषु येऽवग्रहादयः समुपजायन्ते ते चाश्रुतानुसारित्वेन मतिज्ञानतया व्यपदिश्यन्ते, यस्तु तेषु श्रुतानुसारी ज्ञानविशेषः स श्रुतज्ञानत्वेन, तस्मादक्षरादिश्रुतभेदानां सामस्त्येन मतिज्ञानत्वाभावात्, ईहादिषु मतिभेदेषु श्रुतानुसारित्वाभावेन श्रुतज्ञानत्वासंभवाच्च नोक्तदोषः। तस्मादवग्रहापेक्षया मतिज्ञानमनभिलापमीहाद्यपेक्षया साभिलापं श्रुताननुसारी च संकेतकालप्रवृत्तस्य शब्दस्य ग्रन्थानुसारिश्रुतस्य च व्यवहारकालेऽननुसरणात्, श्रुतज्ञानं तु साभिलापमेव श्रुतानुसार्येव च, व्यवहारकाले संकेतकालप्रवृत्तस्य शब्दस्य ग्रन्थानुसारिश्रुतस्य चानुस्मरणात्। एकेन्द्रियाणां तु सुप्तयतिरिव सूक्ष्मं श्रुतज्ञानावरणक्षयोपशमरूपं केवलिदृग्गम्यं श्रुतज्ञानं द्रष्टव्यम्। ननु भाषाश्रवणलब्ध्युपेतत्वेनोत्थितसुप्तसाधोः परप्रतिपादनपरोदीरितशब्दश्रवणादिलक्षणं भावश्रुतं दृश्यते, तद्दर्शनाच्च सुप्तावस्थायामपि लब्धिरूपेण श्रुतमस्तीत्यनुमीयते, एकेन्द्रियाणां तूभयलब्ध्यभावात् कथमस्तीति प्रतीयत इति चेत्? नैष दोषः, मलयगिरिपादाभिप्रायेण स्फुटं करिष्यामः, तथा च ते नन्दीवृत्तावेवमाहुः—"अभिमुखं योग्यदेशे व्यवस्थितं नियतमर्थमिन्द्रियमनोद्वारेण बुध्यते—परिच्छिनत्ति आत्मा येन परिणामविशेषेण स परिणामविशेषो ज्ञानापरपर्याय आभिनिबोधिकम्। तथा शृणोति वाच्यवाचकपुरस्सरं श्रवणविषयेण शब्देन सह संस्पृष्टमर्थं परिच्छिनत्त्यात्मा येन परिणामविशेषेण स परिणामविशेषः श्रुतम्। ननु यद्येवंलक्षणं श्रुतं तर्हि य एव श्रोत्रेन्द्रियलब्धिमान् भाषालब्धिमान् वा तस्यैव श्रुतमुपपद्यते न शेषस्यैकेन्द्रियस्य, तथाहि—यः श्रोत्रेन्द्रियलब्धिमान् भवति स विवक्षितं शब्दं श्रुत्वा तेन शब्देन वाच्यमर्थं प्रतिपत्तुमीष्टे न शेषः, शेषस्य तथारूपशक्त्यभावात्, योऽपि च भाषालब्धिमान् भवति सोऽपि द्वीन्द्रियादिः प्रायः स्वचेतसि किमपि विकल्प्य तदभिधानानुमानतः शब्दमुद्गिरति नान्यथा, ततः तस्यापि श्रुतं संभाव्यते, यस्त्वे-

केन्द्रियः स न तावत् श्रोत्रेन्द्रियलब्धिमान् नापि भाषालब्धिमान् ततः कथं तस्य श्रुतसंभवः ? अथ च प्रवचने तस्यापि श्रुतमुपवर्ण्यते, तत्कथं प्राक्तनं श्रुतलक्षणं समीचीनमिति । नैष दोषो यत इह तावदेकेन्द्रियाणामाहारादिसंज्ञा विद्यते, तथा सूत्रेऽनेकशोऽभिधानात्, संज्ञा चाभिलाष उच्यते, यत उक्तमावश्यकटीकायाम्—“आहारसंज्ञा—आहाराभिलाषः क्षुद्वेदनीयप्रभवः खल्वात्मपरिणामविशेषः” इति, अभिलाषश्च ममैवंरूपं वस्तु पुष्टिकारि तद्यदीदमवाप्यते ततः समीचीनं भवतीत्येवंरूपः शब्दार्थोल्लेखानुविद्धः स्वपुष्टिनिमित्तीभूतप्रतिनियत-वस्तुप्राप्त्यध्यवसायः स च श्रुतमेव, तस्य शब्दार्थपर्यालोचनात्मकत्वात् । शब्दार्थपर्यालोचनात्मकत्वं च ममैवंरूपं पुष्टिकारि तत् यदीद-मवाप्यत इत्येवमादीनां शब्दानामन्तर्जल्पाकाराणामपि विवक्षितार्थवाचकतया प्रवर्तमानत्वात्, श्रुतस्य चैवंलक्षणत्वात्, उक्तं च—“इंदिय-मणोनिमित्तं जं विन्नाणं सुयाणुसारेणं । नियअत्थो त्ति समत्थं तं भावसुयं मईसेसं ॥ १ ॥” ‘सुयाणुसारेणं’ इति शब्दार्थपर्यालोचना-नुसारेण, शब्दार्थपर्यालोचनं च नाम वाच्यवाचकभावपुरस्सरीकारेण शब्दसंस्पृष्टस्यार्थस्य प्रतिपत्तिः, केवलमेकेन्द्रियाणामव्यक्तमेव । किञ्च नाप्यनिर्वचनीयं तथारूपक्षयोपशमभावतो वाच्यवाचकभावपुरस्सरीकारेण शब्दस्य स्पृष्टार्थग्रहणमवसेयमन्यथाऽऽहारादिसंज्ञानुप-पत्तेः । यदप्युच्यते—यद्येवंलक्षणं श्रुतं तर्हि य एव श्रोत्रेन्द्रियलब्धिमान् भाषालब्धिमान् वा तस्यैव श्रुतमुपपद्यते न शेषस्यैकेन्द्रियस्येति, तदप्यसमीक्षितार्थाभिधानं सम्यक् प्रवचनार्थापरिज्ञानात् । तथाहि—बकुलादीनां स्पर्शनेन्द्रियातिरिक्तशेषेन्द्रियलब्धिविकलत्वेऽपि तेषां किमपि सूक्ष्मं भावेन्द्रियपञ्चकविज्ञानमभ्युपगम्यते, ‘पंचिन्दिओ वि बउलो’ इत्यादिभाष्यकारवचनप्रामाण्यात्, तथा भाषाश्रोत्रेन्द्रियलब्धि-विकलत्वेऽपि तेषां किमपि सूक्ष्मं श्रुतं भविष्यति, अन्यथाऽऽहारादिसंज्ञानुपपत्तेः, आह च भाष्यकृत्—“जह सुहुमं भाविंदियनाणं दव्विं-दियावरोहे वि । तह दव्वसुयाभावे भावसुयं पत्थिवाईणं ॥ १ ॥” ततः प्राक्तनमेव श्रुतलक्षणं समीचीनम्, नान्यदिति” । **भाष्यवृत्तौ**

मलधारिश्रीमद्धेमचन्द्रसूरिपादास्तु शब्दोल्लेखसहितं विशिष्टमेव भावश्रुतमाश्रित्य तल्लक्षणमुक्तवन्तः, यत्त्वेकेन्द्रियाणामौघिकमविशिष्टभावश्रुतमात्रं तदावरणक्षयोपशमरूपं तच्छ्रुतानुसारित्वमन्तरेणापि यदि भवति तथापि न कश्चिद् व्यभिचारः। न चैकेन्द्रियाणां ज्ञानपञ्चकसद्भावोऽपि नोद्यः, अवध्यादिज्ञानावरणानां क्षयोपशमाभावात्, तथाहि—केवलज्ञानावरणस्य तावत् क्षय एव भवति, न क्षयोपशमः, यस्त्वावधिज्ञानमनःपर्यवज्ञाने भवतः, तस्य तु तदावरणयोः क्षयोपशमो भवति, न शेषाणाम्। श्रुतज्ञानावरणक्षयोपशमोऽपि मास्तु इति चेत्? न, एकेन्द्रियाणां तत्कार्यदर्शनादागमेऽभिहितत्वाच्च। ततश्च मतिश्रुतज्ञानावरणयोः क्षयोपशमसद्भावादेकेन्द्रियाणां मतिश्रुते एव भवतः, न शेषज्ञानानि, तदुक्तं—"एवं सव्वपसंगो न तदावरणाणमक्खओवसमा। मइसुयनाणावरणक्खओवसमओ मइसुयाइं ॥ १ ॥" इति तत्त्वार्थाभिप्रायेण त्वेकेन्द्रियाणां श्रुताभावः प्रतीयते, तथा चाहुः उक्तमेतत्—"साम्प्रतकालविषयं मतिज्ञानं, श्रुतज्ञानं तु त्रिकालविषयं विशुद्धतरं च, किञ्चान्यत् मतिज्ञानमिन्द्रियानिन्द्रियनिमित्तमात्मनो ज्ञस्वाभाव्यात् पारिणामिकं च, श्रुतज्ञानं तु तत्पूर्वकमाप्तोपदेशाद् भवतीति" वृत्तिः—'उक्तमेतदिति भेदप्रयोजनं, पुरस्तात् तदेवोद्घाटयति—वर्त्तमानकालविषयं वर्त्तमानार्थमवलम्बते मतिज्ञानं, श्रुतज्ञानं पुनस्त्रिकालविषयं त्रैकालिकमर्थमालम्बते, विशुद्धतरं च व्यवहितविप्रकृष्टानेकसूक्ष्माद्यर्थग्राहित्वाद्विशुद्धतरमित्युच्यते। किञ्चान्यदिति, तथाऽयमपरस्तयोर्विशेषो, मतिज्ञानमिन्द्रियाणि—स्पर्शादीनि अनिन्द्रियं—मनः ओघज्ञानं च निमित्तमुररीकृत्य प्रवर्त्तते, आत्मनो जीवस्य ज्ञस्वाभाव्यादिति, जानातीति ज्ञः ज्ञत्वमेव स्वाभाव्यं ज्ञस्वाभाव्यमात्मरूपता तस्मात् ज्ञस्वाभाव्यादिति। पारिणामिकमिति, सर्वकालवर्त्ति, न कदाचित् संसारे पर्यटत एतद् भ्रष्टम्, यतो निगोदजीवानामपि अक्षरस्यानन्तभागो नित्योद्घाट इत्यागमोऽतः पारिणामिकम्। श्रुतज्ञानं पुनर्नैवं सर्वदा जीवस्य भवति, यतस्तत्पूर्वकम्, मतिज्ञाने

सति भवति नासतीत्यर्थः, तत्पूर्वकत्वेऽपि च सत्युपदेशमपेक्षते, यत आप्तोपदेशाद् भवतीति, आप्ता रागादिवर्जिता अर्हदादयस्तेभ्य उपदेशो वचनं, तद्वचनमपेक्ष्य ग्रन्थानुसारिश्रुतज्ञानमुदेतीत्यर्थः, तस्मादेकं नित्यमपरं चानित्यमिति स्थापितम्" इति । **न्यायाचार्यास्तु**—"मतिज्ञानत्वं श्रुताननुसार्यनतिशयितज्ञानत्वं अवग्रहादिक्रमवदुपयोगजन्यज्ञानत्वं वा, अवध्यादिकमतिशयितमेव, श्रुतं तु श्रुतानुसार्येवेति न तयोरतिव्याप्तिः, श्रुतानुसारित्वं च धारणात्मकपदपदार्थसंबन्धप्रतिसन्धानजन्यज्ञानत्वम्, तेन न सविकल्पकज्ञानसामग्रीमात्रप्रयोज्यपदविषयताशालिनीहापायधारणात्मके मतिज्ञानेऽव्याप्तिरपि । ईहादिमतिज्ञानभेदस्य श्रुतज्ञानस्य च साक्षरत्वाविशेषेऽप्ययं घट इत्यपायोत्तरमयं घटनामको वेति संशयादर्शनात्, तत्तन्नाम्नोऽप्यपायेन ग्रहणात्, तद्धारणोपयोगे इदं पदमस्य वाचकं अयमर्थ एतत्पदस्य वाच्य इति पदपदार्थसंबन्धग्रहस्यापि ध्रौव्येण, तज्जनितश्रुतज्ञानस्यैव श्रुतानुसारित्वव्यवस्थितेः । अत एव धारणात्वेन श्रुतहेतुत्वात् "मइपुव्वं सुअं" इत्यनेन श्रुतत्वावच्छेदेन मतिपूर्वकत्वविधिः, "न मई सुअपुव्विया" इत्यनेन च मतित्वसामानाधिकरण्येन श्रुतपूर्वकत्वनिषेधोऽभिहितः संगच्छते । कथं तर्हि श्रुतनिश्रिताश्रुतनिश्रितभेदेन मतिज्ञानद्वैविध्याभिधानमिति चेदुच्यते—स्वसमानाकारश्रुतज्ञानाहितवासनाप्रबोधसमानकालीनत्वे सति श्रुतोपयोगाभावकालीनं श्रुतनिश्रितमवग्रहादिचतुर्भेदं, उक्तवासनाप्रबोधो धारणादार्ढ्यायोपयुज्यते, श्रुतोपयोगाभावश्च मतिज्ञानसामग्रीसम्पादनाय, उक्तवासनाप्रबोधकाले श्रुतज्ञानोपयोगबलात् श्रुतज्ञानस्यैवापत्तेः, मतिज्ञानसामग्र्याः श्रुतज्ञानोत्पत्तिप्रतिबन्धकत्वेऽपि शाब्देच्छास्थानीयस्य तस्योत्तेजकत्वात् । मतिज्ञानजन्यस्मरणस्य मतिज्ञानत्ववत् श्रुतज्ञानजन्यस्मरणमपि च श्रुतज्ञानमध्य एव परिगणनीयम् । उक्तवासनाप्रबोधासमानकालीनं च मतिज्ञानमौत्पत्तिक्यादिचतुर्भेदमश्रुतनिश्रितमित्यभिप्रायेण द्विविधभागे दोषाभावः" इत्येवं प्रतिपादयन्ति । इत्युक्तो मतिश्रुतयोर्लक्षणभेदात् भेदः ॥

साम्प्रतं कार्यकारणभावात् मतिश्रुतयोर्भेदः प्रतिपाद्यते, तथाहि–मतिज्ञानेन श्रुतज्ञानं प्राप्यते, नहि मतिज्ञानमन्तरेण श्रुतज्ञानं प्राप्यते जन्तुभिः, तथाऽदर्शनात् । यस्योत्कर्षादुत्कर्षः अपकर्षात्त्वपकर्षस्तत्तस्य कारणं, यथा मृत्पिण्डोत्कर्षात् घटस्योत्कर्षः मृत्पिण्डापकर्षात्त्वपकर्षो घटस्य, एवं मतिज्ञानोत्कर्षात् श्रुतज्ञानोत्कर्षः मतिज्ञानापकर्षात् श्रुतज्ञानापकर्षः इति मतिज्ञानपूर्वकत्वेन श्रुतज्ञानं तस्य कार्यम् । अनुप्रेक्षादिकाले मतिज्ञानेन श्रुतज्ञानं पूर्यते, मत्यैव श्रुतज्ञानमन्यस्मै दीयतेऽन्यतश्च गृह्यते, न मतिज्ञानमन्तरेण किमपि भवति । सर्वत्र तत्पूर्वकता चास्योपयोगापेक्षया, न तु लब्ध्यपेक्षया, तस्याः सर्वकालभावित्वात् । तथा पालकत्वेनापि मतिज्ञानं श्रुतस्य कारणं, तथाहि–बहुषु ग्रन्थेषु पठितेष्वपि यद्विषयमीहादिस्मरणं वाऽधिकतरं प्रवर्त्तते स ग्रन्थः स्फुटतरः प्रतिभाति न शेषः, एतच्च प्रतिप्राणि स्वसंवेदनप्रमाणसिद्धम् । तस्मान्मतिज्ञानं श्रुतज्ञानस्य कारणमिति । ननु हेतुफलभावात् मतिश्रुतयोर्भेदप्रतिपादनेन यत् श्रुतस्य मतिपूर्वकत्वमुक्तं तदेव न घटते, तथाहि–मतिश्रुते द्विविधे, सम्यग्दृष्टिसत्के मिथ्यादृष्टिसत्के च, एते च समकालमेव भवतस्तत्क्षयोपशमलाभस्य युगपदेवागमे प्रतिपादनात् । केवलं मिथ्यादृष्टेरज्ञानस्वरूपे सम्यग्दृष्टेर्ज्ञानस्वरूपे । ततः श्रुतस्य मतिपूर्वकत्वं युगपदुत्पन्नयोः सव्येतरगोविषाणयोरिव न घटते । ननु च सम्यग्दृष्टेः प्रथमसमये यदा ज्ञानमुत्पन्नं तदैव श्रुतज्ञानं यदि न स्वीक्रियते तर्हि श्रुताज्ञानं स्यात्, यावत् श्रुतज्ञानानुत्पत्तिस्तावत्तदज्ञानस्यानिवृत्तेः, तथा च सति सम्यग्दृष्टेर्ज्ञानमज्ञानं च द्वयं प्राप्तं तच्च न सम्भवति, ज्ञानस्य सम्यग्दृष्टिसम्भवित्वात्, अज्ञानस्य च मिथ्यादृष्टिसंभवित्वादिति चेत्? अत्रोच्यते–द्विविधे मतिश्रुते, तदावरणक्षयोपशमलब्धित उपयोगतश्च, लब्धित एव मतिश्रुते समकालं भवतः,

प्रवर्त्तते। तत उपयोगत
यस्त्वनयोरुपयोगः स युगपत् न भवत्येव तथास्वाभाव्यात्, किन्तु केवलज्ञानदर्शनयोरिव क्रमेणैव प्रवर्त्तते। तत उपयोगत
एव मतिपूर्वकत्वं श्रुतस्योक्तं न लङ्घितः। श्रुतोपयोगो हि विशिष्टमन्तर्जल्पाकारं श्रुतानुसारि श्रुतज्ञानमभिधीयते, तच्चा-
वग्रहेहाद्यन्तरेण न भवति, अवग्रहादयश्च मतिरेव, ततः सिद्धं श्रुतस्य मतिपूर्वकत्वम्। ननु शब्दं श्रुत्वा या मतिरुत्पद्यते
सा कथं श्रुतपूर्विका न भवति शब्दस्य श्रुतकारणत्वेन प्रागुक्तत्वादिति चेत्? सत्यम्, नास्माभिर्द्रव्यश्रुतपूर्वकत्वं मतेः
प्रतिषिध्यते किन्तु कार्यरूपेण भावश्रुतपूर्वकत्वं, तेन क्रमेण भवन्त्या मतेर्न निषेधः कृतो भवति, अन्यथाऽऽमरणावधिश्रुत-
ज्ञानोपयोगप्रसङ्गात्। एतदुक्तं भवति—यथा सुवर्णसामान्येन स्वविशेषरूपाः कङ्कणकुण्डलादयो जन्यन्ते अतस्ते तत्कार्य-
तया व्यपदिश्यन्ते सुवर्णं त्वतज्जन्यत्वात् कार्यव्यपदेशं न लभते, कारणान्तरेभ्यः तत्सिद्धेः, कङ्कणादिविशेषोपरमे तु सुव-
र्णावस्थानं न निवार्यते, एवं सामान्यभूतया मत्या स्वविशेषरूपश्रुतोपयोगो जन्यते अतस्तत्कार्यं स उच्यते, मतिस्त्वतज्ज-
न्यत्वात् न तत्कार्यत्वेन व्यपदिश्यते, तस्याः कारणान्तरेण सदा सिद्धत्वात्, स्वविशेषभूतश्रुतोपयोगोपरमे तु क्रमायातं
मत्यवस्थानं न निवार्यते, आमरणान्तं केवलश्रुतोपयोगप्रसङ्गादिति। ननु शब्दरूपं द्रव्यश्रुतं मतिपूर्वकं भवतु न भावश्रुतं
मतिपूर्वकं, यतः सर्वोऽपि वक्ताऽविवक्षितं शब्दं न भाषते, यच्च विवक्षाज्ञानं तन्मतिज्ञानमिति चेत्? न, भवन्मते सर्वथा
भावश्रुताभावप्रसङ्गात्, तथाहि—विवक्षोपयोगज्ञानं सर्वमपि वक्तृगतं मतिज्ञानत्वेन भवद्भिः स्वीकृतं, अन्यथा शब्दस्य
मतिपूर्वकत्वाभावात्, श्रोतुरपि शब्दं श्रुत्वा प्रथमं यदवग्रहादिज्ञानमुत्पन्नं तन्मतिरेव ऊर्ध्वमपि च तस्य भावश्रुतं न
भवति, अस्मत्पक्षप्रवेशात्। नन्वनुप्रेक्षादावशृण्वतो वाचमन्तर्जल्पाकारं विपरिवर्त्तते तद्भावश्रुतं भविष्यतीति चेत्? ननु

तदपि मतिपूर्वकं न वा ? नाद्यः, असत्कक्षाप्रवेशात्, नापि द्वितीयः, शब्दविवक्षाज्ञानवत् सविकल्पकत्वेन मतिरेव, शब्दविवक्षाज्ञानेऽपि शब्दविकल्पोऽस्ति तमन्तरेण शब्दाभिधानासंभवात्, न चासौ भावश्रुतत्वेनेष्टस्तस्मात् मतेरनन्तरं सर्वत्र शब्दमात्रस्योत्थानम्, न भावश्रुतस्य, असत्पक्षप्रवेशात्, एवं विकल्पज्ञानान्यपि शब्दविवक्षाज्ञानवत् मतित्वेनोक्तान्येवेति सर्वत्र भावश्रुताभावः प्रसज्यते, तथा च सति मतिश्रुतज्ञानयोर्भेदविचारणापि भवन्मते निरर्थिका स्यादिति भावश्रुतस्यैव मतिपूर्वकत्वं युक्तियुक्तम्। तदेवं प्रतिपादितो हेतुफलभावात् मतिश्रुतयोर्भेदः ॥

यथा कार्यकारणभावतो मतिश्रुतज्ञानयोर्भेदः प्रतिपादितस्तथा स्वरूपतोऽपि तयोः प्रत्येकं सम्यग्दृष्टिमिथ्यादृष्टिपरिग्रहात् भेदस्तथाहि—स्वामिविशेषपरिग्रहमन्तरेण विवक्ष्यमाणा मतिर्मतिज्ञानं मत्यज्ञानं चोच्यते, उभयत्रापि मतिशब्दस्य प्रवृत्तेः। सम्यग्दृष्टिना परिगृहीता मतिर्मतिज्ञानमुच्यते, तस्य यथावस्थितार्थग्राहकत्वात्। मिथ्यादृष्टिना परिगृहीता मतिर्मत्यज्ञानमुच्यते तस्यैकान्तावलम्बितया यथावस्थितार्थग्रहणाभावात्। एवं श्रुतमपि स्वामिनाऽविशेषितं श्रुतज्ञानं श्रुताज्ञानं चोच्यते, उभयत्रापि श्रुतशब्दस्य प्रवृत्तेः। सम्यग्दृष्टिना परिगृहितं सम्यक् श्रुतं मिथ्यादृष्टिना परिगृहीतं मिथ्याश्रुतम्, तदुक्तं नन्दिसूत्रे—"अविसेसिया मई मइनाणं मइअन्नाणं च, विसेसिआ सम्मद्दिट्ठिस्स मई मइनाणं, मिच्छदिट्ठिस्स मई मइअन्नाणं, अविसेसिअं सुयं सुयनाणं च सुयअन्नाणं च, विसेसिअं सुयं सम्मद्दिट्ठिस्स सुयं सुअनाणं, मिच्छद्दिट्ठिस्स सुअं सुयअन्नाणं" (सू. २५) इति। ननु सम्यग्दृष्टेरिव मिथ्यादृष्टेरपि मतिश्रुते तदावरणक्षयोपशमसमुद्भूते सम्यग्दृष्टेरिव च मिथ्यादृष्टेरपि मतिश्रुते पृथुबुध्नोदराद्याकारं घटादिकं वस्तुनिकुरम्बं संविदाते तत्कथं मिथ्यादृष्टेरज्ञाने इति चेत्? उच्यते, सदसद्विवेकाभावात्,

तथाहि—मिथ्यादृष्टिः सर्वमप्येकान्तपुरस्सरं प्रतिपद्यते न भगवदुक्तस्याद्वादनीत्या, ततो यदा घट एवायमिति ब्रवीति तदा स घटपर्यायव्यतिरेकेण शेषान् सत्त्वप्रमेयत्वज्ञेयत्ववाच्यत्वादीन् सतोऽपि धर्मानपलपति, अन्यथा घट एवायमित्येकान्तेनावधारणानुपपत्तेः, असतीमपि पररूपतां च तत्र प्रतिपद्यते घटः सन्नेवेति ब्रुवाणः, पररूपेण नास्तित्वस्यानभ्युपगमात्। ततो विद्यमानान् धर्मान् अविद्यमानतया अविद्यमानान् विद्यमानत्वेनाभ्युपगमादिति सदसद्विशेषपरिज्ञानाभावान्मिथ्यादृष्टेः मतिश्रुतेऽज्ञाने। मिथ्यादृष्टेः मतिश्रुते पशुवधमैथुनादीनामपि धर्म्मसाधकत्वेन परिच्छेदके ततो दीर्घतरसंसारपथप्रवर्तके इति भवहेतुकत्वादज्ञाने। तथा तेऽज्ञाने यथाकथञ्चिदुपलम्भादुन्मत्तविकल्पवत्, यथोन्मत्तविकल्पा वस्त्वनपेक्ष्यैव प्रवर्त्तन्ते, यद्यपि च ते क्वचिद्यथावस्थितवस्तुसंवादिनः तथापि सम्यग्यथावस्थितवस्तुतत्त्वपर्यालोचनमन्तरेण प्रवर्त्तमानत्वात् परमार्थतोऽपारमार्थिकाः, तथा मिथ्यादृशां यथावस्थितवस्तुतत्त्वपर्यालोचनमन्तरेण मतिश्रुते प्रवर्तेते, ततो यद्यपि च ते क्वचिद्रसोऽयं स्पर्शोऽयमित्यादाववधारणाध्यवसायाभावे संवादिनी, तथापि न ते स्याद्वादमुद्रापरिभावनातस्तथाप्रवृत्ते किन्तु यथाकथञ्चिदतस्तेऽज्ञाने। तथा तेऽज्ञाने ज्ञानफलाभावात्, ज्ञानस्य फलं हेयस्य हानमुपादेयस्योपादानम्, न च संसारात् परं किञ्चिद्धेयमस्ति, न च मोक्षात् परमुपादेयमस्ति, ततो भवमोक्षावेकान्तेन हेयोपादेयौ, तयोः हानोपादाने सर्वविरतौ भवतः, ततः साऽवश्यं कर्त्तव्या तत्त्वविद्भिः, सैव च ज्ञानस्य फलम्, तदुक्तं वाचकवर्यैः श्रीमद्भिरुमास्वातिभिः—"ज्ञानस्य फलं विरति"रिति, सा च मिथ्यादृष्टेर्न भवति, ज्ञानफलाभावादज्ञाने। तदुक्तं भाष्ये—"सयसयविसेसणाओ भवहेउ जहिच्छिओवलंभाओ। नाणफलाभावाओ मिच्छद्दिट्ठिस्स अन्नाणं ॥ १ ॥" इति। ननु सम्यग्दृष्टेः को विशेषो येन तत्सम्बन्धि सर्वमपि

ज्ञानमुच्यते इति चेत्? श्रूयताम्, सम्यग्दृष्टिः सर्वं वस्तु स्वपरपर्यायैः सर्वमयं जानातीति। ननु तर्हि सर्वेऽपि सम्यग्दृष्टयः सर्वज्ञा भवेयुरिति चेत्? न, यतो यः साक्षात् सर्वमयं वस्तु जानाति स सर्वज्ञः, सम्यग्दृष्टिस्तु तद्वचनश्रद्धानद्वारेण जानातीति न दोषः। "य एकं जानाति स सर्वं जानाति यः सर्वं जानाति स एकमि"ति परमगुरुप्रणीतागमस्य प्रमाणत्वेन सर्वदैव चेतस्यभ्युपगमात् सम्यग्दृष्टिः सर्वदैव ज्ञानीति भण्यते, तदुक्तं भाष्ये—"एगं जाणं सव्वं जाणइ सव्वं च जाणमेगंति। इय सव्वमयं सव्वं सम्मद्दिट्ठिस्स जं वत्थु॥ २॥" व्याख्या—"इह परमाण्वादिकमेकैकं वस्तु स्वपरपर्यायैः समस्तत्रिभुवनगतवस्तुमयम्; तथाहि—परमाणौ तावदेकगुणकालत्वाद्योऽनन्ता वर्णगन्धरसादिकाः स्वपर्याया भवन्ति, अपरं च असौ विवक्षितः परमाणुरन्येभ्यः परमाणुद्व्यणुकत्र्यणुकादिसमस्तवस्तुभ्यः क्षेत्रकालादिभिर्व्यावृत्त इत्यतस्तद्व्यावृत्तिलक्षणा अनन्ताः परपर्याया भवन्ति। एवं च सति येभ्योऽन्यवस्तुभ्योऽसौ परमाणुर्व्यावृत्तस्तेषां सर्वेषामपि तत्र परमाणौ प्रत्येकमभावो वर्तते इति सामर्थ्यात् सिद्धम्, अन्यथा तस्य तेभ्यो व्यावृत्त्यसिद्धेः, अभावश्चाभाववतो धर्मः, यत्र धर्मः तत्र धर्मिणा कथञ्चिद् भवितव्यमेव, अन्यथा तस्य तद्धर्मत्वायोगात्। ततश्च सर्वाण्यप्यन्यवस्तूनि तत्र परमाणौ स्वाभाववृत्तिद्वारेण वर्तन्त इति पर्यवसितम्, ततश्च परमाणुः सर्ववस्तुमयः सिद्धः। एवं द्व्यणुकादिष्वपि भावनीयम्, तेषामपि प्रत्येकं परेभ्यो व्यावृत्तत्वात्। ततश्च सर्वमपि वस्तु सर्वमयमितिस्थितम्। इह च य एकं विवक्षितं वस्तु जानाति स शेषाण्यपि सर्ववस्तूनि जानाति, समस्तवस्तुपरिज्ञानानान्तरीयकत्वात् एकवस्तुपरिज्ञानस्य, येभ्योऽपि हि शेषवस्तुभ्यो व्यावृत्तं तद् विवक्षितं वस्तु तानि सर्वाण्यपि ज्ञातव्यानि, तत्परिज्ञानाभावे तेभ्यो व्यावृत्तत्वस्यावगन्तुमशक्यत्वादिति। यश्च सर्ववस्तूनि जानाति स विवक्षितमप्येकं किमपि वस्तु जानाति, तत्परिज्ञानाविनाभावात् समस्तवस्तुज्ञानस्य, तानि हि सर्ववस्तूनि विवक्षितैकवस्तुनो व्यावृत्ता-

न्यवबोद्धव्यानि, न च तदपरिज्ञाने तद्व्यावृत्तत्वमेव बोद्धुं शक्यत इति । नन्वेवंविधपरिज्ञानं तर्हि केवलिन एव भवति, नान्यस्य, तस्य सूक्ष्माऽतीतव्यवहितामूर्त्तादिसमस्तवस्तुग्रहणासमर्थत्वादिति चेत् ?, सत्यम्, साक्षादित्थं केवल्येव जानाति तद्वचनश्रद्धानद्वारेण पुनर्भावतोऽन्योऽपि सम्यग्दृष्टिः सर्वमेकैकं वस्तु सर्वमयं जानाति, आगमे हि केवलिनैतत्प्रणीतं, तद्यथा–"जे एगं जाणइ से सव्वं जाणइ, जे सव्वं जाणइ से एगं जाणइ"त्ति, सम्यग्दृष्टेश्च सर्वस्याऽप्ययमागमः प्रमाणमेव, अन्यथा सम्यग्दृष्टित्वायोगात् । ततश्च यद्यपि सर्वः सम्यग्दृष्टिरित्थं सर्वं सर्वमयं वस्तु न जानाति तथापि यथोक्तागमश्रद्धाद्वारेण भावतो जानात्येवेति, अतः सर्वदैवायं ज्ञानी भण्यते, केवलिदृष्टयथावस्थितवस्तुस्वरूपस्य प्रमाणताभ्युपगमद्वारेण सर्वदैव तेन ज्ञायमानत्वादिति गाथाभावार्थः । अक्षरार्थस्तूच्यते–एकं वस्तु जानन् सर्वं वस्तु जानाति, सर्वं च वस्तु जानन्नेकं जानातीति 'एवंभूतमागमं सम्यग्दृष्टिस्तावत् सर्वदैव प्रमाणतयाऽभ्युपगच्छति' इति शेषः, इत्यतः परमाण्वादिकं यत् किमपि वस्त्वस्ति तत्सर्वमप्युक्तन्यायेन स्वपरपर्यायैः सर्वमयं सम्यग्दृष्टिज्ञानगोचरम् । अतः सर्वदैवायं ज्ञानी भण्यते, जाग्रतः स्वपतस्तिष्ठतश्चलतश्चास्य परमगुरुप्रणीतयथोक्तवस्तुस्वरूपाभ्युपगमस्य चेतसि सर्वदैवाविचलत्वादिति गाथार्थः ॥ १ ॥" इति ।

उक्तो हेतुफलभावान्मतिश्रुतयोर्भेदः ।

अथ भेदभेदाद्भेद उच्यते–मतिज्ञानमष्टाविंशतिभेदं श्रुतज्ञानं चतुर्दशभेदमिति भेदभेदान्मतिश्रुतयोर्भेदः ।

अथेन्द्रियविभागान्मतिश्रुतयोर्भेदः पूर्वान्तर्गतगाथातः प्रतिपाद्यते–"सोइंदिओवलद्धी होइ सुयं सेसयं तु मइनाणं । मोत्तूण दव्वसुयं अक्खरलंभो य सेसेसु ॥ १ ॥" व्याख्या–"इन्द्रो जीवस्तस्येदमिन्द्रियम्, श्रूयतेऽनेनेति श्रोत्रम्, तच्च तदिन्द्रियं चेति श्रोत्रेन्द्रियम्, उपलम्भनमुपलब्धिर्ज्ञानम्, श्रोत्रेन्द्रियेणोपलब्धिः श्रोत्रेन्द्रियोपलब्धिरिति तृतीयासमासः, श्रोत्रेन्द्रियस्य वोपलब्धिः श्रोत्रेन्द्रियो-

पलब्धिरिति षष्ठीसमासः, श्रोत्रेन्द्रियद्वारकं ज्ञानमित्यर्थः । श्रोत्रेन्द्रियेणोपलब्धिर्यस्येति बहुव्रीहिणाऽन्यपदार्थे शब्दोऽप्यधिक्रियते, ततश्चाद्यसमासद्वये श्रोत्रेन्द्रियद्वारकमभिलापप्लावितोपलब्धिलक्षणं भावश्रुतमुक्तं द्रष्टव्यम्, बहुव्रीहिणा तु तस्यां भावश्रुतोपलब्धावनुपयुक्तस्य वदतो द्रव्यश्रुतम्, तदुपयुक्तस्य तु वदत उभयश्रुतमभिहितं वेदितव्यम् । इह च व्यवच्छेदफलत्वात् सर्वं वाक्यं सावधारणं भवति, इष्टश्चावधारणविधिः प्रवर्तते, ततः "चैत्रो धनुर्धर एव" इत्यादिष्विवेहायोगव्यवच्छेदेनावधारणं द्रष्टव्यम्, तद्यथा—श्रुतं श्रोत्रेन्द्रियोपलब्धिरेव, न तु श्रोत्रेन्द्रियोपलब्धिः श्रुतमेवेति, श्रोत्रेन्द्रियोपलब्धिस्तु श्रुतं मतिर्वा भवति, यथा धनुर्धरश्चैत्रोऽन्यो वेति, श्रोत्रेन्द्रियोपलब्धेरवग्रहेहादिरूपाया मतित्वात्, श्रुतानुसारिण्यास्तु श्रुतत्वादिति । यदि पुनः श्रोत्रेन्द्रियोपलब्धिः श्रुतमेवेत्यवधार्यते तदा तदुपलब्धेर्मतित्वं सर्वथैव न स्यात्, इष्यते च कस्याश्चित् तदपीति भावः । यदि श्रोत्रेन्द्रियोपलब्धिः श्रुतम् तर्हि शेषं किं भवतु ? इत्याह—'सेसयं लित्यादि' श्रोत्रेन्द्रियोपलब्धिं विहाय शेषकं यच्चक्षुरादीन्द्रियचतुष्टयोपलब्धिरूपं तन्मतिज्ञानं 'भवति' इति वर्तते । तुशब्दः समुच्चये, स चैवं समुच्चिनोति न केवलं शेषेन्द्रियोपलब्धिर्मतिज्ञानं—किन्तु श्रोत्रेन्द्रियोपलब्धिश्च काचिदवग्रहेहादिमात्ररूपा मतिज्ञानं भवति, तथा च सत्यनन्तरमवधारणव्याख्यानमुपपन्नं भवति । 'सेसयं तु मइनाणं' इति सामान्येनैवोक्ते शेषस्य सर्वस्याऽप्युत्सर्गेण मतित्वे प्राप्ते सत्यपवादमाह—'मोत्तूण दव्वसुयं'ति पुस्तकादिलिखितं यद्द्रव्यश्रुतं तद् मुक्त्वा परित्यज्यैव शेषं मतिज्ञानं द्रष्टव्यम् । पुस्तकादिन्यस्तं हि भावश्रुतकारणत्वात् शब्दवत् द्रव्यश्रुतमेव इति कथं मतिज्ञानं स्यात्? इति भावः । न केवलं श्रोत्रेन्द्रियोपलब्धिः श्रुतम् किन्तु यश्च शेषेषु चतुर्षु चक्षुरादीन्द्रियेषु श्रुतानुसारिसाभिलापविज्ञानरूपोऽक्षरलाभः सोऽपि श्रुतम्, न त्वक्षरलाभमात्रम्, तस्येहापायाद्यात्मके मतिज्ञानेऽपि सद्भावादिति। आह—यदि चक्षुरादीन्द्रियाक्षरलाभोऽपि श्रुतं तर्हि यदाद्यगाथावयवे 'श्रोत्रेन्द्रियोपलब्धिरेव श्रुतम्, इत्यवधारणं कृतम् तत्रोप-

शेपेन्द्रियोपलब्धेरपीदानीं श्रुतत्वेन समर्थितत्वात्, नैतदेवम्, शेपेन्द्रियाक्षरलाभस्यापि श्रोत्रेन्द्रियोपलब्धिरूपत्वात्, स हि श्रुता-
पद्यते, शेपेन्द्रियोपलब्धेरपीदानीं श्रुतत्वेन समर्थितत्वात्, नैतदेवम्, शेपेन्द्रियाक्षरलाभस्यापि श्रोत्रेन्द्रियोपलब्धिरूपत्वात्, स हि श्रुता-
नुसारिसाभिलापज्ञानरूपोऽत्राधिक्रियते, श्रोत्रेन्द्रियोपलब्धिरपि चैवंभूतैव श्रुतमुक्ता, ततश्च साभिलापविज्ञानं शेपेन्द्रियद्वारेणाऽप्युत्पन्नं योग्य-
तया श्रोत्रेन्द्रियोपलब्धिरेव मन्तव्यम्, अभिलापस्य सर्वस्यापि श्रोत्रेन्द्रियग्रहणयोग्यत्वादिति । अत्राह– ननु 'सोइंदिओवलद्धी होइ सुयं'
तथा 'अक्खरलंभो य सेसेसु' इत्युभयवचनाच्छ्रुतज्ञानस्य सर्वेन्द्रियनिमित्तता सिद्धा, तथा 'सेसयं तु मइनाणं' इति वचनात् तुशब्दस्य समुच्च-
यार्थ मतिज्ञानस्यापि सर्वेन्द्रियकारणता प्रतिष्ठिता, भवद्भिस्त्विन्द्रियविभागाद् मतिश्रुतयोर्भेदः प्रतिपादयितुमारब्धः, स चैवं न सिध्यति,
द्वयोरपि सर्वेन्द्रियनिमित्ततायास्तुल्यत्वप्रतिपादनादिति, अत्रोच्यते–साधूक्तं भवता, किन्तु यद्यपि शेपेन्द्रियद्वारायातत्वात् तदक्षरलाभः
शेपेन्द्रियोपलब्धिरुच्यते तथाऽप्यभिलापात्मकत्वादसौ श्रोत्रेन्द्रियग्रहणयोग्य एव, (तस्यापि श्रोत्रेन्द्रियोपलब्धिकल्पत्वादिति वहव इति
ज्ञानविन्दौ) ततश्च तत्वतः श्रोत्रेन्द्रियोपलब्धिरेवायम् । तथा च सति परमार्थतः सर्वं श्रोत्रविषयमेव श्रुतज्ञानम्, मतिज्ञानं तु तद्विषयं
शेपेन्द्रियविषयं च सिद्धं भवति, अत इत्थमिन्द्रियविभागाद् मतिश्रुतयोर्भेदो न विहन्यत इत्यलं विस्तरेण, इति पूर्वगतगाथासंक्षेपार्थ"
इति **मल्लधारिश्रीमद्धेमचन्द्रसूरिकृता वृत्तिः ।** "श्रोत्रेन्द्रियोपलब्धिपदेन श्रोत्रेन्द्रियजन्यव्यञ्जनाक्षरज्ञानाहिता शाब्दी बुद्धिः,
द्रव्यश्रुतपदेन च चक्षुरादीन्द्रियजन्यसंज्ञाक्षरज्ञानाहिता सा, अक्षरलाभपदेन च तद्व्यतिरिक्तश्रुतज्ञानावरणकर्मक्षयोपशमजनिता बुद्धिः
गृह्यते इति । सर्वसाधारणो धारणापायज्ञानवृत्तिः शब्दसंसृष्टार्थाकारविशेष एवानुगतलक्षणं, त्रिविधाक्षरगताभिधानप्रस्तावेऽपि संज्ञाव्यञ्ज-
कयोः द्रव्यश्रुतत्वेन लब्धिपदस्य चोपयोगार्थत्वेन व्याख्यानात्, तत्र चानुगतमुक्तमेव लक्षणमिति । इह गोवृषन्यायेन द्विविधोपलब्धिरू-
पभावश्रुतग्रहणमिति त्वस्माकमाभाती"ति **न्यायाचार्याः । उक्त इन्द्रियविभागान्मतिश्रुतयोर्भेदः ।**

अथ वल्कशुम्बोदाहरणान्मतिश्रुतयोर्भेदो निरूप्यते, तथाहि–मतिज्ञानं श्रुतज्ञानस्य कारणं यत आगमे भावश्रुतस्य मतिपूर्वकत्वमुक्तम् । तेन कारणेन मतिः वल्कसमा भावश्रुतं तु कार्यत्वेन शुम्बसदृशम् । मत्या चिन्तयित्वा वाच्यवाचकभावेन परोपदेशश्रुतग्रन्थयोजनां वस्तुनि करोति तस्मात् मतिश्रुतयोः वल्कशुम्बयोरिव कार्यकारणभावात् भेदः ।

अथाक्षरानक्षरभेदान्मतिश्रुतयोर्भेदः प्रतिपाद्यते, व्यञ्जनाक्षरमाश्रित्य मतिज्ञानमनक्षरमेव श्रुतज्ञानं तु साक्षरम्, भावाक्षरमाश्रित्योभयमपि साक्षरमनक्षरं चेति । अत्र केचित् वदन्ति, मतिज्ञानमनक्षरमेव, श्रुतज्ञानं साक्षरमनक्षरं चेति, तन्न युक्तम्, यतो यदि मतिरनक्षरैव स्यात् तर्हि दूरवर्त्तिनि स्थाण्वादावीहादयो न प्रवर्तेरन्, ईहादीनां साक्षरत्वात् । नन्वागमे श्रुतनिश्रितत्वेन मतिज्ञानस्य भणनात् स्थाणुपुरुषादौ श्रुतस्य व्यापारः न मतेरिति चेत्? यदि स्थाणुपुरुषादिपर्यायविवेकोऽक्षरात्मकत्वात् श्रुतव्यापार इष्यते तर्हीहापायादीनां सर्वेषां मतिभेदानामक्षरात्मकत्वेन श्रुतत्वं प्राप्तमित्यतोऽक्षराभिलापरहितमवग्रहं मुक्त्वा शेषस्येहादिभेदभिन्नस्य सर्वस्यापि मतिज्ञानस्याभावप्रसङ्गः स्यात् । ननु स्थाणुपुरुषादिपर्यायविवेकः श्रुतज्ञानात् कुर्वतोऽपि प्रमातुः मतिज्ञानाभावभीत्या न श्रुतमभ्युपगम्यते किन्तु मतिज्ञानमिति चेत्? न, श्रुतज्ञानाभावप्रसङ्गात्, यतः चरणकरणादिप्रतिपादकः सर्वोऽपि ग्रन्थो मतिज्ञानमेव स्यात्, अक्षरात्मकत्वात्, स्थाणुपुरुषादिपर्यायविवेकवत् । नन्वेकतराभावप्रसङ्गेन स्थाणुपुरुषादिपर्यायविवेककाले मतिश्रुतरूपज्ञानद्वयस्य स्वीकारे का क्षतिरिति चेत्? युगपदुपयोगद्वयापत्तिः । यद्येकतरमभ्युपगम्यते तर्हि–"सावकाशानवकाशयोरनवकाशविधिर्बलवान्" इति न्यायादेकतरं प्रतिपद्यमानस्य तवान्यत्रानवकाशात् मतिज्ञानमेवैकं प्रतिपत्तुं युज्यते, न तु श्रुतं; तस्यान्यत्र श्रुतानुसारिण्याचारादिज्ञानविशेषे साव-

काशत्वात्, एवं च सति स्थाणुपुरुषादिपर्यायविवेको मतिज्ञानादेव, न तु श्रुतज्ञानात्, स चाक्षराभिलापसमनुगत एवेति न मतिज्ञानमनक्षरमिति। नन्वक्षरमनुसरतः प्रमातुः ज्ञानं श्रुतनिश्रितं स्यात् इति चेत्? तर्हि मतिचतुष्कमपि श्रुतनिश्रितं भवेत्, ईहादिरूपत्वेनाक्षरप्रभवत्वात्तस्य, आगमे चौत्पातिक्यादिबुद्धिचतुष्कमश्रुतनिश्रितमुक्तमित्यतो योऽक्षरोपलम्भः स सर्वोऽपि श्रुतनिश्रयेति श्रुतनिश्रितस्यार्थो न कर्त्तव्यः, किन्तु, श्रुतं द्विविधं–परोपदेश आगमग्रन्थश्च, व्यवहारकालात् पूर्वं यथोक्तेन श्रुतेन परिकर्म्मिताऽऽहितसंस्कारा मतिः यस्य स श्रुतपरिकर्म्मितमतिः साध्वादिः, तस्य साम्प्रतं व्यवहारकाले यत् श्रुतनिरपेक्षं ज्ञानमुत्पद्यते तच्छ्रुतनिश्रितमवग्रहादिरूपं वक्तव्यमिति, अश्रुतनिश्रितं पुनर्बुद्धिचतुष्कं श्रुतसंस्काराभावात्। ननु–"भवनित्थरणसमत्था तिवग्गासुत्तत्थगहियपेयाला। उभओ लोगफलवई विणयसमुत्था हवइ बुद्धी॥ १॥" इति नन्दिवचनात् मतिचतुष्के वैनयिकीमतिः श्रुतनिश्रिता स्यादिति चेत्? सत्यम्, किन्तु सकृच्छ्रुतनिश्रितत्वे सत्यपि बाहुल्यमङ्गीकृत्याश्रुतनिश्रितं तदुच्यत इत्यदोषः। ननु तर्हि अक्षरानक्षरभेदात् मतिश्रुतयोः भेदः कथं संगमनीय इति चेत्? उच्यते, अक्षरं द्विविधं द्रव्याक्षरं भावाक्षरं च, द्रव्याक्षरं पुस्तकादिन्यस्ताकारादिकं ताल्वादिकारणजन्यः शब्दो वा, एतच्च व्यञ्ज्यतेऽनेनार्थः इति व्यञ्जनाक्षरमित्यप्युच्यते। भावाक्षरं त्वन्तःस्फुरदकारादिवर्णविज्ञानरूपम्। भावाक्षरमाश्रित्य मतिज्ञानमनक्षरं साक्षरं च। अवग्रहरूपं मतिज्ञानमपेक्ष्यानक्षरमीहादिरूपं मतिज्ञानमपेक्ष्य साक्षरम्। व्यञ्जनाक्षरमपेक्ष्य मतिज्ञानमनक्षरमेव, नहि मतिज्ञाने पुस्तकादिन्यस्ताकारादिकं शब्दो वा द्रव्याक्षरं समस्ति, तस्य द्रव्यश्रुतत्वेन रूढत्वात् द्रव्यमतित्वेनाप्रसिद्धत्वाच्चेति। श्रुतं तूभयमप्यक्षरानक्षरभेदात् द्विप्रकारं, तत्राप्यनक्षरं द्रव्यश्रुतमुच्छ्वसितादिकं, तदुक्तम् "ऊससियं नीससियं

निच्छूढं खासियं च छीयं च । निस्सिंधियमणुसारं अणक्खरं छेलियाईअं ॥ १ ॥" इति । पुस्तकादिन्यस्ताकारादिरूपं शब्दरूपं वा साक्षरं द्रव्यश्रुतम् । भावश्रुतमपि श्रुतानुसार्यकारादिवर्णविज्ञानात्मकत्वात् साक्षरम्, तदेव भावश्रुतं पुस्तकादिन्यस्ताकाराद्यक्षराभावात् शब्दाभावाच्चानक्षरम्, पुस्तकादिन्यस्ताक्षरस्य शब्दस्य वा द्रव्यश्रुतान्तःपातित्वेन भावश्रुतेऽसत्त्वात् । तदेवं मतिज्ञानस्य भावश्रुतस्य चाक्षरानक्षरकृतो नास्ति कश्चिद्विशेषः । द्रव्यश्रुतमाश्रित्य तु श्रुतज्ञानं साक्षरं मतिज्ञानं न तथेत्युक्तो मतिश्रुतयोरक्षरानक्षरकृतो भेदः ।

तथा मतिज्ञानं मूकं, परप्रत्यायनहेतुद्रव्याक्षराभावात्, श्रुतज्ञानं मुखरं, स्वपरप्रत्यायकत्वात्, तत्र द्रव्याक्षरसद्भावेन परप्रत्यायकत्वं लभ्यते । ननु स्वरूपतो मतिश्रुतज्ञाने ज्ञानात्मकत्वेन न परप्रतिबोधके, विज्ञानस्य मूकत्वेन परप्रतिबोधकत्वाभावात्, अवध्यादिवदिति चेत्? न, मतिज्ञानस्य तथा भावेऽपि शब्दस्य पुस्तकोपन्यस्ताक्षरस्य च श्रुतज्ञानकारणत्वेन द्रव्यश्रुतस्य परप्रतिबोधकत्वात् । ननु तर्हि मतिज्ञानजनकाः करादिचेष्टाविशेषा अपि परं प्रतिबोधयन्ति, तथाहि—करवक्त्रसंयोगे कृते सति परस्य भुजिक्रियाविषया मतिरुत्पद्यते, कर्त्ताऽपि 'भोक्तुमिच्छत्यसौ' इत्यादि प्रतिपत्ता जानात्वित्यभिप्रायवानेव भाषणशक्त्यभावेन करादिचेष्टां करोतीति मतिहेतवोऽपि परप्रतिबोधका भवन्त्येवेति चेत्? न, श्रुतज्ञानस्य मतिपूर्वकत्वेन द्रव्यश्रुतं यद्यप्यानन्तर्येणावग्रहेहादीन् जनयति तथाप्यक्षरात्मकत्वात् मुख्यतया श्रुतज्ञानस्यैवासाधारणं कारणं भवति, श्रुतज्ञानस्यासाधारणं कारणमुपचारतः श्रुतज्ञान एवान्तर्भवतीति श्रुतज्ञानं परप्रतिबोधकं, करादिचेष्टा विशेषास्तु न मतिज्ञानस्यैवासाधारणकारणानि भवन्ति किन्तु 'भोक्तुमिच्छत्यसौ' इत्यादि श्रुतानुसारिविक-

त्पात्मकस्य श्रुतज्ञानस्यापि कारणानि भवन्ति । यद्वा भवन्तु करादिचेष्टाविशेषा मतिज्ञानस्य कारणानि परप्रतिबोधकाश्च,
तथापि द्रव्यमतित्वेनागमेऽरूढत्वात् ते कारणे कार्योपचारतो मतिरूपतया न व्यवह्रियन्ते । द्रव्यश्रुतस्यचागमे रूढत्वेन
तत्र कारणे कार्योपचारः क्रियमाणो न विरुध्यते । यद्वा करादिचेष्टाविशेषाणां मतिज्ञानस्य कारणत्वेऽपि मोक्षं प्रति क्षायिकं
रत्नत्रिकमेवासाधारणं कारणं, तत्कारणं च द्रव्यश्रुतं भवति, करादिचेष्टाविशेषेषु च यथोक्तो विशिष्टः परप्रतिबोधः प्रायः
न संभवति । यद्वा करादिचेष्टाविशेषाः श्रुतज्ञानरूपा भवन्ति, न मतिज्ञानरूपाः, यतः करवक्त्रसंयोगादिलक्षणा करादि-
चेष्टा शब्दार्थस्वरूपा एव, यतः शब्दो वक्तृसमुदीरितवचनरूपः, तस्यार्थः शब्दार्थः—श्रोतृगतज्ञाने प्रतिभासमानतदभि-
धेयरूपोऽस्ति । इदमुक्तं भवति—यद्यपि करादिचेष्टाऽनन्तर्येणावग्रहादिकं जनयति तथापि शब्दार्थरूपत्वेन सा श्रुतज्ञान-
मेवेत्यर्थः, यस्मात् तया विहितया तत्र शब्दार्थप्रत्ययो भवति, तच्च श्रुतज्ञानं भवति न मतिज्ञानमिति कारणद्वारेणापि न
मतिज्ञानं परप्रतिबोधकं, श्रुतज्ञानं तूक्तनीत्या परप्रतिबोधकं भवति, तदुक्तं भाष्ये—"सा वा सद्दत्थो च्चिय तया वा जं तम्मि
पच्चओ होइ। कत्ता वि हु तदभावे तदभिप्पाओ कुणइ चिट्ठं ॥ १ ॥" इत्युक्तो मतिश्रुतयोः भेदो मूकेतरभेदात् । अमूनेव भेदहेतून्
भाष्यकृत् संगृहीतवान्—"लक्खणभेया हेऊफलभावओ भेयइन्दियविभागा । वागक्खरमूएयरभेया भेओ मइसुयाणं ॥ १ ॥" इति ।

मतिज्ञानं द्विविधम्, श्रुतनिश्रितमश्रुतनिश्रितं च । तत्र श्रुतं सङ्केतकालभावी परोपदेशः श्रुतग्रन्थश्च, पूर्वं तेन परि-
कर्म्मितमतेः व्यवहारकाले तदनपेक्षमेव यदुत्पद्यते तच्छ्रुतनिश्रितम् । स्वसमानाकारश्रुतज्ञानाहितवासनाप्रबोधसमान-
कालीनत्वे सति श्रुतोपयोगाभावकालीनं श्रुतनिश्रितमिति निष्कर्षः । श्रुतापरिकर्मितमतेः सहजं यदुत्पद्यते तदश्रुतनि-

श्रितम् । स्वसमानाकारश्रुतज्ञानाहितवासनाप्रबोधासमानकालीनत्वमश्रुतनिश्रितमित्यर्थः । अवग्रहेहापायधारणाभेदात् श्रुतनिश्रितं मतिज्ञानं चतुष्प्रकारम् । तत्राप्यवग्रहो द्विप्रकारः व्यञ्जनावग्रहार्थावग्रहभेदात् । तत्र व्यञ्जनेन शब्दादि-परिणतद्रव्यनिकुरम्बेन व्यञ्जनस्य श्रोत्रेन्द्रियादेरवग्रहः सम्बन्ध एकस्य व्यञ्जनशब्दस्य लोपात् व्यञ्जनावग्रहः । स च वक्ष्य-माणाभ्यां प्रतिबोधमल्लकदृष्टान्ताभ्यां सूत्रोक्ताभ्यामसंख्येयसमयभावी । तस्यामव्यवस्थायामव्यक्ता ज्ञानमात्रा प्रथमसम-येंऽशेनाभवतश्चरमसमये भवनान्यथानुपपत्त्या भाष्यकृता प्रतिपादिता, युक्तञ्चैतत्, निश्चयतोऽविकलकारणस्यैव कार्यो-त्पत्तिव्याप्यत्वात्, ज्ञानेऽविकलं कारणमुपयोगेन्द्रियमेव, तच्च व्यञ्जनावग्रहकाले लब्धसत्ताकं कथं न स्वकार्यं जनयेदि-त्ययमुपयोगेन्द्रियस्य कारणांशः । ननु चक्षुर्मनोव्यतिरिक्तेभ्य इन्द्रियेभ्यो व्यञ्जनावग्रह इति चाक्षुषज्ञाने मानसज्ञाने च कः कारणांशः? अर्थावग्रहश्चेत् सर्वत्र स एवास्त्विति चेत्? न, अर्थावग्रहात् प्राग्लब्धीन्द्रियस्य ग्रहणोन्मुखपरिणाम एवोपयोगेन्द्रियस्य कारणांश इत्यभ्युपगमात् । न च सर्वत्रैकमेव कारणमाश्रयणीयमिति वाच्यम्, इन्द्रियाणां प्राप्यकारि-त्वाप्राप्यकारित्वव्यवस्थाप्रयुक्तस्य ह्रस्वदीर्घकारणांशभेदस्यागमयुक्त्युपपन्नत्वेन प्रतिबन्दिपर्यनुयोगानवकाशात् । अस्य च स्वरूपमेवं तत्त्वार्थवृत्तौ—"यदोपकरणेन्द्रियस्य स्पर्शनादेः पुद्गलैः स्पर्शनाद्याकारपरिणतैः सम्बन्ध उपजातो भवति न च किमप्ये-तदिति गृह्णाति किन्त्वव्यक्तज्ञानोऽसौ सुप्तमत्तादिसूक्ष्मावबोधसहितपुरुषवदिति तदा तैः पुद्गलैः स्पर्शाद्युपकरणेन्द्रियसंश्लिष्टैः या च यावती च विज्ञानशक्तिराविरस्ति सा एवंविधा विज्ञानशक्तिः अवग्रहाख्या । तस्य स्पर्शनाद्युपकरणेन्द्रियसंश्लिष्टस्पर्शाद्याकारपरिणतपुद्गलराशेः व्यञ्जनाख्यस्य ग्राहिका अवग्रह इति भण्यते । तेनैतदुक्तं भवति—स्पर्शनाद्युपकरणेन्द्रियसंश्लिष्टाः स्पर्शनाद्याकारपरिणताः पुद्गलाः व्यञ्जनम्

भण्यन्ते, विशिष्टार्थावग्रहकारित्वात्, तस्य व्यञ्जनस्य परिच्छेदकोऽव्यक्तोऽवग्रहो भण्यते, अपरोऽपि तस्मान्मनाग्निश्चिततरः किमप्येतदित्येवंविधः सामान्यपरिच्छेदोऽवग्रहो भण्यते । ततः परमीहादयः प्रवर्त्तन्ते" इति । **रत्नाकरावतारिकायां** चावग्रहलक्षणमेवमुक्तम्—''विषयविषयिसन्निपातानन्तरसमुद्भूतसत्तामात्रगोचरदर्शनाज्जातमाद्यमवान्तरसामान्याकारविशिष्टवस्तुग्रहणमवग्रह इति । विषयः सामान्यविशेषात्मकोऽर्थः, विषयी चक्षुरादिः, तयोः समीचीनो भ्रान्त्याद्यजनकत्वेनानुकूलो निपातः योग्यदेशाद्यवस्थानम्, तस्मादनन्तरं समुद्भूतमुत्पन्नं यत्सत्तामात्रगोचरं निःशेषविशेषवैमुख्येन सन्मात्रविषयं दर्शनं निराकारो बोधः तस्माज्जातमाद्यं सत्त्वसामान्यादवान्तरैः सामान्याकारैः मनुष्यत्वादिभिः जातिविशेषैः विशिष्टस्य वस्तुनो यद्ग्रहणं ज्ञानं तदवग्रह इति नाम्ना अभिधीयते" इति । "अत्र च प्राच्यमते दर्शनस्यावकाशं न पश्यामः, द्वितीयमते च व्यञ्जनावग्रहावकाशं न पश्यामः, तदत्र तत्त्वं बहुश्रुतेभ्योऽवसेयम् । वक्ष्यमाणो वा महाभाष्याभिमतो व्यञ्जनावग्रहादीनां दर्शनस्य वा भेदोऽनुकरणीयः" इति **लोकप्रकाशे** । सामान्यमात्रग्रहोऽर्थावग्रहः, यतो मया दृष्टं किञ्चित् न तु परिभावितमिति व्यवहारः । तत ईहा प्रवर्तते, सा च सद्भूतासद्भूतविशेषोपादानत्यागाभिमुखबहुविचारात्मिका पर्यन्ते तत्तत्प्रकारेण धर्म्मिणि साध्यत्वाख्यविषयतया फलवती भवति । नन्वीहासंशयोः कः प्रतिविशेषः? ईहाऽपि किमयं शाङ्खः? किं वा शार्ङ्गो वा? इत्येवंरूपतया प्रवर्तते, संशयोऽपि चैवमेवेति चेत्? उच्यते, इह यज्ज्ञानं शाङ्खशार्ङ्गाद्यनेकविशेषधर्म्मानालम्बते, न चासद्भूतमेकमपि विशेषधर्ममपासितुं शक्नोति, किन्तु सर्वात्मना शयानमिव वर्त्तते, कुण्ठीभूतमवतिष्ठते, तदसद्भूतविशेषापर्युदासपरिकुण्ठितं संशयज्ञानं, यत् पुनः सद्भूतार्थविशेषविषये हेतूपपत्तिव्यापारतया सद्भूतार्थविशेषोपादानाभिमुखमसद्भूतविशेषत्यागाभिमुखं तज्ज्ञानमीहा, तदुक्तं **महाभाष्ये**—''जमणेगत्थालम्बणमपज्जुदासपरि

कुंचियं ठित्तं । सेय इव सव्वप्पणओ तं संसयरूवमन्नाणं ॥ १ ॥ तं चिय सयत्थहेऊववत्तिवावारतप्परममोहं । भूयाभूयविसेसायाणच्चायाभिमुहमीहा ॥२॥" इति। इह यदि वस्तु सुबोधं विशिष्टमतिज्ञानावरणक्षयोपशमश्च तदैकान्तर्मुहूर्त्तिकेहया तद्वस्तु नियमात् निश्चिनोति, यदि पुनः वस्तु दुर्बोधं न च तथाविधमतिज्ञानावरणक्षयोपशमः तदेहोपयोगादच्युतः पुनरप्यन्तर्मुहूर्त्तिकामीहां करोति, एवमीहोपयोगाविच्छेदेन प्रभूतान्यन्तर्मुहूर्त्तानि यावदीहते । एताववग्रहेहाख्यौ व्यापारांशौ भवतः । तत ईहाऽनन्तरं जानाति–"अमुक एषोऽर्थ" इदं च ज्ञानमपायरूपम् । अत्र च मत्यादिजनितक्षयोपशमवशेन यावानीहितो धर्म्मस्तावान् प्रकारीभवति, तेनैकत्रैव "देवदत्तोऽयं" "पाचकोऽयं" इत्यादिप्रत्ययभेदोपपत्तिः । "अयं घटः" इत्यपायोत्तरमपि यदा किमयं घटः सौवर्णः मार्त्तो वेत्यादिविशेषजिज्ञासा प्रवर्तते तदा पाश्चात्यापायस्योत्तरविशेषावगमापेक्षया सामान्यावलम्बनत्वात् व्यावहारिकावग्रहत्वम्, ततः सौवर्ण एवायमित्यादिरपायः, तत्राप्युत्तरोत्तरविशेषजिज्ञासायां पाश्चात्यस्य पाश्चात्यस्य व्यावहारिकत्वं द्रष्टव्यम्, जिज्ञासानिवृत्तौ त्वन्त्यविशेषज्ञानमपाय एवोच्यते, नावग्रहः उपचारकारणाभावात् । अयं फलांशः । अन्त्यविशेषावगमरूपापायोत्तरमविच्युतिरूपा धारणा प्रवर्तते । अयं परिपाकांशः । वासनास्मृती तु सर्वत्र विशेषावगमे द्रष्टव्ये, तदुक्तं महाभाष्ये–"सामन्नमेत्तग्गहणं णेच्छइओ समयमोग्गाहो पढमो । तत्तोणंतरमीहियवत्थुविसेसस्स जोऽवाओ ॥ १ ॥ सो पुण ईहावायावेक्खओ वग्गाहो त्ति उवयरिओ । एस विसेसावेक्खं सामन्नं गेह्णए जेणं ॥ २ ॥ तत्तोणंतरमीहा तत्तोऽवाओ अ तव्विसेसस्स । इह सामन्नविसेसावेक्खा जावंतिमो भेओ ॥ ३ ॥ सव्वत्थेहावाया णिच्छयओ मोत्तुमाइसामन्नं । संववहारत्थं पुण सव्वत्थावग्गहोऽवाओ ॥ ४ ॥ तरतमजोगाभावेऽवाउच्चिय धारणा तदंतंमि । सव्वत्थ वासणा पुण भणिया कालंतरे वि सई ॥ ५ ॥"

न चापायावस्थानादविच्युतेः पार्थक्ये मानाभावः, विशेषजिज्ञासानिवृत्त्यवच्छिन्नस्वरूपस्य कथञ्चिद्भिन्नत्वात्, अवगृह्णामि ईहे अवैमि स्थिरीकरोमीतिप्रत्यया एव प्रतिप्राण्यनुभवसिद्धा अवग्रहादिभेदे प्रमाणम्, स्मृतिजनकतावच्छेदकत्वेन वाऽविच्युतेः धर्मत्वं कल्प्यत इत्युक्तमवग्रहादीनां स्वरूपम् ।

अथ भेदाः पर्यायाश्च प्रतिपाद्यन्ते, व्यञ्जनावग्रहश्चतुष्प्रकारो भवति, तद्यथा–स्पर्शनेन्द्रियव्यञ्जनावग्रहो रसनेन्द्रियव्यञ्जनावग्रहो घ्राणेन्द्रियव्यञ्जनावग्रहः श्रोत्रेन्द्रियव्यञ्जनावग्रहश्च, तदुक्तं नन्दिसूत्रे–"से किं तं वंजणुग्गहे ? वंजणुग्गहे चउव्विहे पण्णत्ते, तंजहा–सोइंदिअवंजणुग्गहे घाणिंदियवंजणुग्गहे जिब्भिंदियवंजणुग्गहे फासिंदिअवंजणुग्गहे, से तं वंजणुग्गहे" इति । ननु सत्सु पञ्चेन्द्रियेषु षष्ठे च मनसि कथं चतुष्प्रकारको व्यञ्जनावग्रह उक्त इति चेत्, उच्यते, उपकरणेन्द्रियस्य शब्दादीनां च परस्परं सम्बन्धो व्यञ्जनमुच्यते तच्च श्रोत्रादीनां चतुर्णामेव भवति, न नयनमनसोः अप्राप्यकारित्वात्तयोः । अप्राप्यकारित्वं च प्रागेव निर्णीतमिन्द्रियमार्गणायाम् । अर्थावग्रहः षड्विधो भवति, तद्यथा श्रोत्रेन्द्रियार्थावग्रहो नयनेन्द्रियार्थावग्रहो घ्राणेन्द्रियार्थावग्रहो रसनेन्द्रियार्थावग्रहः स्पर्शनेन्द्रियार्थावग्रहो नोइन्द्रियार्थावग्रहश्च । तत्र श्रोत्रेन्द्रियेण व्यञ्जनावग्रहोत्तरकालमेकसामयिकमनिर्देश्यं सामान्यरूपार्थावग्रहणं श्रोत्रेन्द्रियार्थावग्रहणम् । एवं घ्राणरसनस्पर्शनेन्द्रियेष्वपि बोध्यम् । नयनमनसोस्तु व्यञ्जनावग्रहाभावेन प्रथममेव स्वरूपद्रव्यगुणक्रियाविकल्पनातीतमनिर्देश्यं सामान्यमात्ररूपार्थावग्रहणमर्थावग्रहः । तत्र नोइन्द्रियार्थावग्रहे नोइन्द्रियं मनः तच्च द्विविधम्, द्रव्यभावभेदात् । तत्र मनःपर्याप्ति-नामकर्मोदयतः
गा. १८ यन्मनोवर्गणादलिकमादाय मनस्त्वेन परिणमितं तद्द्रव्यमनः, तदुक्तं नन्दिचूर्णौ–"मणपज्जत्तिनामकम्मोदयओ तज्जोगे मणोदव्वे

घेत्तुण मणत्तणे परिणामिया दव्वा दव्वमणो भण्णइ" इति। तथा द्रव्यमनोऽवष्टम्भेन जीवस्य यो मननपरिणामः स भावमनः, तदुक्तं नन्दिचूर्णौ—"जीवो पुण मणणपरिणामकिरियापन्नो भावमनो, किं भणियं होइ, मणो दव्वालंबणो जीवस्स मणणवावारो भावमणो भण्णइ" इति। अत्र भावमनसा प्रयोजनं, नोइन्द्रियेण भावमनसाऽर्थावग्रहो द्रव्येन्द्रियव्यापारनिरपेक्षो घटाद्यर्थस्वरूपपरिभावनाभिमुखः प्रथमसमय एकसामयिको रूपाद्यर्थाकारादिविशेषचिन्ताविकलोऽनिर्देश्यसामान्यमात्रचिन्तात्मको बोधो नोइन्द्रियार्थावग्रह उत्पद्यते। द्रव्यमनसोऽन्तरेण भावमनसोऽनुपपत्तेः भावमनसो ग्रहणेन द्रव्यमनसोऽपि ग्रहणं कृतमेवेति, तदुक्तं नन्दिसूत्रे—"से किं तं अत्थुग्गाहे ? अत्थुग्गाहे छव्विहे पण्णत्ते, तंजहा—सोइंदिअअत्थुग्गाहे चक्खिंदिअअत्थुग्गाहे घाणिंदिअअत्थुग्गाहे जिब्भिंदिअअत्थुग्गाहे फासिंदिअअत्थुग्गाहे नोइंदिअअत्थुग्गाहे" इति। अर्थावग्रहस्यैकार्थिकानि पञ्च नामानि भवन्ति तद्यथा—अवग्रहणता उपधारणता श्रवणता अवलम्बनता मेधेति, तदुक्तं नन्दिसूत्रे—"तस्स णं इमे एगट्ठिआ नाणाघोसा नाणावंजणा पंच नामधिज्जा भवंति, तंजहा—ओगेण्हणया उपधारणया सवणया अवलंबणया मेहा" इति। सामान्यचिन्तायां त्वमूनि एकार्थिकानि, विशेषचिन्तायां तु भिन्नार्थकानि, तथाहि—अवगृह्यतेऽनेनेति अवग्रहणं तस्य भावोऽवग्रहणता-व्यञ्जनावग्रहप्रथमसमयप्रविष्टशब्दादिपुद्गलादानपरिणामः। तथा धार्यतेऽनेनेति धारणमुप सामीप्येन धारणमुपधारणं तस्य भावः उपधारणता, व्यञ्जनावग्रहेऽपि द्वितीयादिसमयेषु प्रतिसमयमपूर्वापूर्वशब्दादिपुद्गलादानपुरस्सरं प्राक्तनप्राक्तनसमयगृहीतशब्दादिपुद्गलधारणपरिणामः। तथा श्रूयतेऽनेनेति श्रवणं तस्य भावः श्रवणता एकसामयिकः सामान्यार्थावग्रहरूपो बोधपरिणामः। तथाऽवलम्ब्यतेऽनेनेति अवलम्बनम्, तद्भावोऽवलम्बनता, विशेषसामान्यार्थावग्रहः प्रथमोऽयमौपचारिकार्थावग्रहोऽवसीयते, शेषस्य सर्वस्यापि

मेधायां वक्ष्यमाणत्वात्। तथा मेधायति आशु गृह्णातीति क्विप्प्रत्यये मेधा, प्रथमौपचारिकार्थावग्रहं विहाय शेषः सर्वोऽप्यौपचारिकार्थावग्रहः, तदुक्तं नन्दिवृत्तौ—"प्रथमं विशेषसामान्यार्थावग्रहमतिरिच्योत्तरः सर्वोऽपि विशेषसामान्यार्थावग्रह" इति। ईहाऽपि षड्विधा, तद्यथा—श्रोत्रेन्द्रियेहा नयनेन्द्रियेहा घ्राणेन्द्रियेहा रसनेन्द्रियेहा स्पर्शनेन्द्रियेहा नोइन्द्रियेहा च। तत्र श्रोत्रेन्द्रियार्थावग्रहमधिकृत्य प्रवृत्ता ईहा श्रोत्रेन्द्रियेहा, एवं शेषेन्द्रियेष्वपि भावनीयम्। इमानि चैकार्थकानि भवन्ति, तद्यथा—आभोगनता मार्गणता गवेषणता चिन्ता विमर्शश्चेति, तथा च नन्दिसूत्रम्—"से किं तं ईहा? २ छव्विहा पण्णत्ता, तंजहा सोइंदिअईहा चक्खिदिअईहा घाणिंदिअईहा जिब्भिदिअईहा फासिंदिअईहा नोइंदिअईहा, तीसे णं इमे एगट्ठिआ नाणाघोसा नाणावंजणा पंच नामधिज्जा भवंति—तं जहा आभोगणया मग्गणया गवेसणया चिंता विमंसा" इति। विशेषचिन्तायां भिन्नार्थकत्वं नन्दिवृत्तितोऽवसेयम्। एवमपायधारणयोरपि पर्यायनाम्नां भिन्नार्थकत्वं तत एव वाच्यम्। अपायः षड्विधः—श्रोत्रेन्द्रियापायो नयनेन्द्रियापायो घ्राणेन्द्रियापायो रसनेन्द्रियापायः स्पर्शनेन्द्रियापायो नोइन्द्रियापायश्च। अत्र श्रोत्रेन्द्रियेणापायः श्रोत्रेन्द्रियापायः, श्रोत्रेन्द्रियनिमित्तमर्थावग्रहमधिकृत्य यः प्रवृत्तोऽपायः स श्रोत्रेन्द्रियापायः, एवं शेषा अप्यपायाः परिभावनीयाः। अपायस्यैकार्थिकानि चामूनि—आवर्त्तनता प्रत्यावर्त्तनता अपायो बुद्धिः विज्ञानमिति तदुक्तं, नन्दिसूत्रे—"से किं तं अवाए? अवाए छव्विहे पण्णत्ते, तंजहा सोइंदिअअवाए चक्खिदिअअवाए घाणिंदिअअवाए जिब्भिदिअअवाए फासिंदिअअवाए नोइंदिअअवाए, तस्स णं इमे एगट्ठिआ नाणाघोसा नाणावंजणा पंच नामधिज्जा भवन्ति, तंजहा आउट्टणया पच्चाउट्टणया अवाए बुद्धी विण्णाणे" इति। एवं धारणाऽपि षड्विधाऽपायवद्वाच्या। अस्याः पञ्चैकार्थिकानि भवन्ति, तद्यथा—धारणा साधा-

रणा स्थापना प्रतिष्ठा कोष्ट इति, तथा च नन्दिसूत्रम्–"से किं तं धारणा ? धारणा छव्विहा पण्णत्ता, तंजहा–सोइंदिअधारणा चक्खिदिअधारणा घाणिंदिअधारणा जिब्भिदिअधारणा फासिंदिअधारणा नोइंदिअधारणा । तीसे णं इमे एगट्ठिआ नाणाघोसा नाणावंजणा पंच नामधिज्जा भवन्ति, तंजहा धारणा साधारणा ठवणा पइट्ठा कोट्ठे" इति। अवग्रहादीनामयमेव भवनक्रमः, तथाहि–नानवगृहीतमीह्यते, न चानीहितमवगम्यते, न चानवगतं धार्यत इति । अथावग्रहादीनां कालमानमुच्यते, तत्र व्यञ्जनावग्रहस्य कालो जघन्यत आवलिकाया असंख्येयभाग उत्कृष्टतः संख्येयावलिका आनपानपृथक्त्वकालमानाः । अर्थावग्रहस्य समयः, औपचारिकार्थावग्रहेहापायानामविच्युतिस्मृत्योश्चान्तर्मुहूर्त्तः । वासनायाः संख्येयोऽसंख्येयो वा कालः, तत्र संख्येयवर्षायुषां संख्येयः, असंख्येयवर्षायुषामसंख्येयः, तदुक्तं नन्दिसूत्रे–"उग्गहे इक्कसमइए अंतोमुहुत्तिआ ईहा अंतोमुहुत्तिए अवाए धारणा संखेज्जं वा कालं असंखेज्जं वा कालं" इति। अथ प्रागुक्तौ प्रतिबोधकमल्लकदृष्टान्तौ नन्दितो लिख्येते–"एवं अट्ठावीसइविहस्स आभिणिबोहिअनाणस्स वंजणुग्गहस्स परूवणं करिस्सामि पडिवोहगदिट्ठंतेण मल्लगदिट्ठंतेण य । से किं तं पडिबोहगदिट्ठंते णं ? पडिवोहगदिट्ठंते णं से जहा नामए केइ पुरिसे कंचि पुरिसं सुत्तं पडिबोहिज्जा अमुगामुगत्ति, तत्थ चोअगे पन्नवगं एवं वयासी–किं एगसमयपविट्ठा पुग्गला गहणमागच्छंति दुसमयपविट्ठा पुग्गला गहणमागच्छंति जाव दससमयपविट्ठा पुग्गला गहणमागच्छंति संखिज्जसमयपविट्ठा पुग्गला गहणमागच्छंति असंखिज्जसमयपविट्ठा पुग्गला गहणमागच्छंति ? एवं वदंतं चोअगं पण्णवए एवं वयासी–नो एगसमयपविट्ठा पुग्गला गहणमागच्छंति नो दुसमयपविट्ठा पुग्गला गहणमागच्छंति जाव नो दससमयपविट्ठा पुग्गला गहणमागच्छंति नो संखिज्जसमयपविट्ठा पुग्गला गहणमागच्छंति असंखिज्जसमयपविट्ठा पुग्गला गहणमागच्छंति, से तं पडिबोहगदिट्ठंते णं। से किं तं मल्ल-

गदिट्ठंते णं ? मल्लगदिट्ठंते णं से जहानामए केइ पुरिसे आवागसीसाओ मल्लगं गहाय तत्थेगं उदगबिंदुं पक्खेविज्जा, से नट्ठे, अण्णेऽवि पक्खित्ते, सेऽवि नट्ठे, एवं पक्खिप्पमाणेसु पक्खिप्पमाणेसु होही से उदगबिंदू जे णं तं मल्लगं रावेहिइ त्ति, होही से उदगबिंदू जे णं तंसि मल्लगंसि ठाहिति, होही से उदगबिंदू जे णं तं मल्लगं भरिहिति, होही से उदगबिंदू जे णं तं मल्लगं पवाहेहिति, एवामेव पक्खिप्पमाणेहिं पक्खिप्पमाणेहिं अणंतेहिं पुग्गलेहिं जाहे तं वजणं पूरिअं होइ ताहे हुंति करेइ, नो चेव णं जाणइ केवि एस सद्दाइ ? तओ ईहं पविसइ, तओ जाणइ अमुगे एस सद्दाइ, तओ अवायं पविसइ, तओ से उवगयं हवइ, तओ णं धारणं पविसइ, तओ णं धारेइ संखिज्जं वा कालं असंखिज्जं वा कालं । से जहा नामए केइ पुरिसे अव्वत्तं सद्दं सुणिज्जा तेणं सद्दोत्ति उग्गहिए, नो चेव णं जाणइ के वेस सद्दाइ, तओ ईहं पविसइ, तओ जाणइ—अमुगे एस सद्दे, तओ णं अवायं पविसइ, तओ से उवगयं हवइ, तओ धारणं पविसइ, तओ णं धारेइ संखेज्जं वा कालं असंखेज्जं वा कालं । से जहा नामए केई पुरिसे अव्वत्तं रूवं पासिज्जा, तेणं रूवत्ति उग्गहिए नो चेव णं जाणइ के वेस रूवत्ति, तओ ईहं पविसइ, तओ जाणइ—अमुगे एस रूवेत्ति, तओ अवायं पविसइ, तओ से उवगयं हवइ, तओ धारणं पविसइ, तओ णं धारेइ संखेज्जं वा कालं असंखिज्जं वा कालं । से जहा नामए केई पुरिसे अव्वत्तं गंधं अग्घाइज्जा, तेणं गंधत्ति उग्गहिए, नो चेव णं जाणइ के वेस गंधेत्ति, तओ ईहं पविसइ, तओ जाणइ अमुगे एस गंधे, तओ अवायं पविसइ, तओ से उवगयं हवइ, तओ धारणं पविसइ, तओ णं धारेइ संखेज्जं वा कालं असंखेज्जं वा कालं । से जहा नामए केई पुरिसे अव्वत्तं रसं आसाइज्जा, तेणं रसोत्ति उग्गहिए, नो चेव णं जाणइ के वेस रसेत्ति, तओ ईहं पविसइ, तओ जाणइ—अमुगे एस रसे, तओ अवायं पविसइ, तओ से उवगयं हवइ, तओ धारणं पविसइ, तओ णं धारेइ संखिज्जं वा कालं असंखिज्जं वा कालं । से जहा नामए केई पुरिसे अव्वत्तं फासं पडिसंवेइज्जा, तेणं फासेत्ति

उग्गहिए, नो चेव णं जाणइ के वेस फासओत्ति, तओ ईहं पविसइ, तओ जाणइ–अमुगे एस फासे, तओ अवायं पविसइ, तओ से उवगयं हवइ, तओ धारणं पविसइ, तओ णं धारेइ संखेज्जं वा कालं असंखेज्जं वा कालं। से जहा नामए केई पुरिसे अव्वत्तं सुमिणं पासिज्जा, तेणं सुमिणोत्ति उग्गहिए, नो चेव णं जाणइ के वेस सुमिणेत्ति, तओ ईहं पविसइ, तओ जाणइ–अमुगे एस सुमिणे, तओ अवायं पविसइ, तओ से उवगयं हवइ, तओ धारणं पविसइ, तओ धारेइ संखेज्जं वा कालं असंखेज्जं वा कालं। से तं मल्लगदिट्ठंते णं। ( सू. ३६ ) इति। तदेवं मल्लकदृष्टान्तेन व्यञ्जनावग्रहप्ररूपणां कुर्वता सूत्रकारेण प्रसङ्गतोऽष्टाविंशतिसंख्या अपि मतिज्ञानस्य भेदाः सप्रपञ्चमुक्ताः। तथा बहुबहुविधक्षिप्रानिश्रित(अमिश्रित)निश्चितध्रुवैः सप्रतिपक्षैः द्वादशभिरष्टाविंशतौ गुणितायां षट्त्रिंशदधिकानि त्रीणि शतानि भेदानां भवन्ति। शब्दमधिकृत्य च बह्वादयो भाव्यन्ते–इह श्रवणयोग्यदेशस्थे तूर्यसमुदाये युगपद्वाद्यमाने कोऽपि श्रोता तस्य तूर्यसङ्घातस्य सम्बन्धिनं पटहढक्काशङ्खभेरीभाणकादिनानाशब्दसमूहमाकर्णितं सन्तं क्षयोपशमविशेषादवग्रहादिना नानाशब्दसमूहं भिन्नजातीयत्वेन जानाति, इदमुक्तं भवति, एतावन्तो भेरिशब्दाः एतावन्तो भाणकशब्दाः एतावन्तस्तु शङ्खपटहादिशब्दा इत्यादिविशेषं जानातीति बह्ववग्रहः। अन्यस्तु नानातूर्यशब्दोऽयमित्येव जानाति तथाविधक्षयोपशमाभावेनेत्यबह्ववग्रहः। अन्यस्तु क्षयोपशमपाटवेनैकैकं शङ्खभेर्यादिशब्दं स्निग्धत्वमधुरत्वबालतरुणवृद्धपुरुषवाद्यत्वादिबहुविधधर्म्मोपेतं जानातीति बहुविधावग्रहः। अन्यस्तु भिन्नजातीयं नानाशब्दसमूहं स्निग्धमधुरादिस्वल्पधर्मोपेतमेव जानातीत्यबहुविधावग्रहः। यदा त्वचिरेण जानाति तदा स क्षिप्रावग्रहः। यदा तु चिरेण जानाति तदाऽक्षिप्रावग्रहः। तमेव शब्दसमूहं लिङ्गपरिग्रहमन्तरेण यदा स्वरूपतो जानाति तदाऽनिश्रितावग्रहः। लिङ्गप-

रिग्रहेण त्ववगच्छतो निश्रितावग्रहः । यद्वा परधर्मैर्विमिश्रितं यद्ग्रहणं तन्मिश्रितावग्रहः । यत् पुनः परधर्म्मैरमिश्रितस्य ग्रहणं तदमिश्रितावग्रहः । तथा निश्चितमवगच्छतो निश्चितावग्रहः । सन्दिग्धमवगच्छतः सन्दिग्धावग्रहः । सदैव बह्वादिरूपेणावगच्छतो ध्रुवावग्रहः । कदाचिदेव पुनः बह्वादिरूपेणावगच्छतोऽध्रुवावग्रहः, तदुक्तं भाष्ये—"नाणासद्दसमूहं बहुविहं सुणेइ भिन्नजातीयं । बहुविहमणेगभूयं एक्केकं निद्धमहुराइ ॥ १ ॥ खिप्पमचिरेण तं चिय सरूवओ जमनिस्सियमलिंगं । निच्छियमसंसयं जं धुवमचंतं न उ कयाइ ॥ २ ॥ एत्तो चिय पडिवक्खं साहेज्जा निस्सिए विसेसोऽयं । परधम्मेहिं विमिस्सं मिस्सियमविमिस्सियं इयरं ॥ ३ ॥" इत्युक्तं श्रुतनिश्रितं मतिज्ञानम् ।

अथाश्रुतनिश्रितमुच्यते—सर्वथा शास्त्रस्पर्शरहितस्य तथाविधक्षयोपशमेन स्वयमेव यथावस्थितवस्तुसंस्पर्शिमतिज्ञानमुपजायते, तदश्रुतनिश्रितमौत्पत्तिक्यादिबुद्धिचतुष्कम् । ननु श्रुतनिश्रितानिश्रितयोः कः प्रतिविशेषः? उभयत्राप्यवग्रहादीनां भावादिति चेत्? सत्यमुभयत्राप्यवग्रहादयः सन्ति, केवलमश्रुतनिश्रिते शास्त्रानुसारमन्तरेण ते भवन्तीति भेदेनोपन्यस्तम् । तत्रोत्पत्तिरेव कारणं न शास्त्राभ्यासपरिकर्मशीलनादिकं यस्याः सा औत्पत्तिकी । ननु न काऽपि बुद्धिः क्षयोपशममन्तरेणोत्पद्यते, तत्कथमुच्यते उत्पत्तिरेव कारणमिति चेत्? उच्यते, सर्वबुद्धिसाधारणः क्षयोपशमो न बुद्धिभेदस्य कारणम् । बुद्ध्यन्तरात् भेदप्रतिपत्त्यर्थं व्यपदेशान्तरं कर्त्तुमारब्धं, न च तत्र विनयादिकं व्यपदेशान्तरनिमित्तप्रतिपत्तिनिबन्धनं विद्यते, केवलमेवमेव तथोत्पत्तिरिति सा एव साक्षान्निर्दिष्टा । गुरुशुश्रूषालक्षणो विनयः प्रयोजनमस्या इति वैनयिकी । अनाचार्यकं कर्म आचार्यकं शिल्पं, यद्वा कादाचित्कं शिल्पं सर्वकालिकं कर्म, कर्मणो जाता कर्मजा । परि—

समन्तात् नमनं परिणामः, सुदीर्घकालपूर्वापरपर्यालोचनजन्य आत्मनो धर्मविशेषः, स प्रयोजनमस्याः सा पारिणामिकी। बुध्यतेऽनेनेति बुद्धिः, सा चतुर्विधा एव, पञ्चमी नोपलभ्यते, यतः तीर्थकरगणधरैः चतुर्विधैव बुद्धिरुक्ता; अश्रुतनिश्रितस्य सर्वस्यापि मतिज्ञानस्य बुद्धिचतुष्टयेऽन्तर्भावादिति, तदुक्तं नन्दिसूत्रे—"उप्पत्तिआ १ वेणइआ २ कम्मिया ३ परिणामिआ ४। बुद्धी चउव्विहा वुत्ता पंचमा नोवलब्भइ ॥ १ ॥" इति। तत्रौत्पत्तिक्या नन्दिसूत्रतः लक्षणमुच्यते "पुव्वं अदिट्ठमस्सुअमवेइयं तक्खणविसुद्धगहिअत्था। अव्वाहयफलजोगा बुद्धी उप्पत्तिइनामा ॥ ११ ॥ व्याख्या—"पूर्वमिति बुद्ध्युत्पादात् प्राक्, स्वयमदृष्टः अन्यतश्चाश्रुतः अवेदितो मनसाऽप्यनालोचितः तस्मिन्नेव क्षणे विशुद्धो यथावस्थितः गृहीतोऽवधारितः अर्थः—अभिप्रेतपदार्थो यया सा तथा इहैकान्तिकमिहपरलोकाऽविरुद्धं फलान्तराऽबाधितं चाव्याहतमुच्यते, फलं प्रयोजनम्, अव्याहतं च, योगोऽस्या अस्तीति योगिनी अव्याहतफलेन योगिनी अव्याहतफलयोगिनी, अन्ये पठन्ति, अव्याहतफलयोगा, अव्याहतफलेन योगोऽस्याः साऽव्याहतफलयोगा बुद्धिः औत्पत्तिकीनामेति गाथार्थः। अस्यामुपरि रोहकदृष्टान्तं तच्च नन्दिवृत्तितो लिख्यते—"उज्जयिनी नाम पुरी, तस्याः समीपवर्ती कश्चिन्नटानामेको ग्रामः, तत्र च ग्रामे भरतो नाम नटः, तस्य भार्या परासुरभूत्, तनयश्चास्य रोहकाभिधोऽद्याप्यल्पवयाः, ततः सत्वरमेव स्वस्य स्वतनयस्य च शुश्रूषाकरणायान्या समानिन्ये वधूः, सा च रोहकस्य सम्यग् न वर्त्तते, ततो रोहकेण सा प्रत्यपादि—मातर्न मे त्वं सम्यग् वर्त्तसे ततो ज्ञास्यसीति, ततः सा सेर्ष्यमाह रे रोहक ? किं करिष्यसि ? रोहकोऽप्याह—तत्करिष्यामि येन त्वं मम पादयोरागत्य लगिष्यसीति, ततः सा तमवज्ञाय तूष्णीमतिष्ठत्, रोहकोऽपि तत्कालादारभ्य गाढसञ्जाताभिनिवेशोऽन्यदा निशि सहसा पितरमेवमभाणीत्—भो भो पितः ! एप पलायमानो गोहो याति, तत एवं बालकवचः श्रुत्वा पितुराशङ्का

समुदपादि—नूनं विनष्टा मे महिलेति, तत एवमाशङ्कावशात्तस्यामनुरागः शिथिलीबभूव, ततो न तां सम्यक् संभाषते, नापि विशेषवत्तस्यै पुष्पताम्बूलादिकं प्रयच्छति, दूरतः पुनरपास्तं शयनादि, ततः सा चिन्तयामास—नूनमिदं बालकविचेष्टितम्, अन्यथा कथमकाण्ड एवैष दोषाभावे पराङ्मुखो जातः? ततो बालकमेवमवादीत्—वत्स रोहक? किमिदं त्वया चेष्टितं? तव पिता मे सम्प्रति दूरं पराङ्मुखीभूतः, रोहक आह—किमिति तर्हि न सम्यग् वर्त्तसे? तयोक्तम् भो अत ऊर्ध्वं सम्यग् वर्त्तिष्ये, ततो बालक आह—भव्यं तर्हि मा खेदं कार्षीः तथा करिष्ये यथा मे पिता तथैव त्वयि वर्त्तते इति। ततः सा तत्कालादारभ्य सम्यग् वर्तितुं प्रवृत्ता, रोहकोऽप्यन्यदा निशि निशाकरप्रकाशितायां प्राक्तनकाशङ्कापनोदाय बालभावं प्रकटयन् निजच्छायामङ्गुल्यग्रेण दर्शयन् पितरमेवमाह—भो पितः एष गोहो याति गोहो यातीति, तत एवमुक्ते स पिता परपुरुषप्रवेशाभिमानतो निष्प्रत्याकारं कृपाणमुद्दीर्य प्राधावत्, रे कथय कुत्र यातीति? ततः स रोहको बालको बालक्रीडां प्रकटयन्नङ्गुल्यग्रेण निजच्छायां दर्शयति—पितः एष गोहो यातीति, ततः स पिता व्रीडित्वा प्रत्यावृत्य चिन्तयति स्म च स्वचेतसि—प्राक्तनोऽपि पुरुषो नूनमेवंविध एवासीदिति धिग्मया बालकवचनादलीकं संभाव्य विप्रियमेतावन्तं कालं कृतमस्यां भार्यायामिति पश्चात्तापाद्गाढतरमस्यामनुरक्तो बभूव, सोऽपि रोहको मया विप्रियं कृतमास्तेऽ(मस्य)स्या इति कदाचिदेषा मां विषादिना मारयिष्यतीति विचिन्त्य सदैव पित्रा सह भुङ्क्ते न कदाचिदपि केवलः, अन्यदा पित्रा सहोज्जयिनीं पुरीमगमत्, दृष्टा च तेन त्रिदशपुरीवोज्जयिनी, सविस्मयचेतसा च सकलाऽपि यथावत्परिभाविता, ततः पित्रैव सह नगर्या निर्यातुमारेभे, पिता च किमपि मे विस्मृतमिति रोहकं सिप्रानदीतटेऽवस्थाप्य तदानयनाय भूयोऽपि नगरीं प्राविशत्, रोहकोऽपि च तत्र सिप्राभिधसिन्धुसैकते बालचापल्यवशात् सप्राकारां परिपूर्णामपि पुरीं सिकताभिरालिखत्, इतश्च राजा अश्ववाहनिकायामश्वं वाहयन् कथंचिदेकाकीभूतस्तेन पथा समागन्तुं प्रावर्त्तत, तं च स्वलिखितनगरीमध्येन समागच्छन्तं

रोहकोऽवादीत्—भो राजपुत्र ? माऽनेन पथा समागमः, तेनोक्तं—किमिति ? रोहक आह—किं त्वं राजकुलमिदं न पश्यसि ? स राजा कौतुकवशात् सकलामपि नगरीं सदालिखितामवैक्षत, अपृच्छच्च तं बालकं—रे अन्यदा त्वया नगरी दृष्टाऽऽसीन्न वा ? रोहक आह—नैव कदाचित्, केवलमहमद्यैव स्वग्रामादिहागतः, ततश्चिन्तयामास राजा—अहो बालकस्य प्रज्ञातिशय इति, ततः पृष्टो रोहको—वत्स ? किं ते नाम क्व वा ग्राम इति ? तेनोक्तं—रोहक इति मे नाम, प्रत्यासन्ने च पुरोग्रामे वसामीति, अत्रान्तरे समागतो रोहकस्य पिता, चलितौ च स्वग्रामं प्रति द्वावपि, राजा च स्वस्थानमगमत्, चिन्तयति स्म च—ममैकोनानि मन्त्रिणां पञ्चशतानि विद्यन्ते, तद्यदि सकलमन्त्रिमण्डलमूर्धाभिषिक्तो महाप्रज्ञाऽतिशायी परमो मन्त्री सम्पद्यते ततो मे राज्यं सुखेनैधते, बुद्धिबलोपेतो हि राजा प्रायः शेषबलैरल्पबलोऽपि न पराजयस्थानं भवति, परांश्च राज्ञो लीलया विजयते, एवं च चिन्तयित्वा कतिपयदिनानन्तरं रोहकबुद्धिपरीक्षानिमित्तं सामान्यतो ग्रामप्रधानपुरुषानुद्दिश्यैवमादिष्टवान्—यथा युष्मद्ग्रामस्य बहिरतीव महती शिला वर्त्तते तामनुत्पाद्य राजयोग्यमण्डपाच्छादनं कुरुत, तत एवमादिष्टे सकलोऽपि ग्रामो राजादेशं कर्तुमशक्यं परिभावयन्नाकुलीभूतमानसो बहिः सभायामेकत्र मिलितवान्, पृच्छति स्म परस्परं—किमिदानीं कर्त्तव्यं ? दुष्टो राजादेशोऽस्माकमापतितो, राजादेशाकरणे च महाननर्थोपनिपातः, एवं च चिन्तया व्याकुलीभूतानां तेषां मध्यन्दिनमागतं, रोहकश्च पितरमन्तरेण न भुङ्क्ते, पिता च ग्राममेलापके मिलितो वर्त्तते, ततः स क्षुधापीडितः पितुः समीपे समागत्य रोदितुं प्रावर्त्तत—पीडितोऽहमतीव क्षुधा, ततः समागच्छ गृहे भोजनायेति, भरतः प्राह—वत्स ? सुखितोऽसि त्वं न किमपि ग्रामकष्टं जानासि, स प्राह—पितः ? किं किं तदिति ? ततो भरतो राजादेशं सविस्तरमचीकथत्, ततो निजबुद्धिप्रागल्भ्यवशात् झटिति कार्यस्य साध्यतां परिभाव्य तेनोक्तं—माऽऽकुलीभवत यूयं, खनत शिलायाः, राज्ञोचितमण्डपनिष्पादनायाधस्तात् स्तम्भांश्च यथास्थानं निवेशयत, भित्तीश्चोपलेपनादिना प्रकारेणातीव रमणीयाः प्रगुणीकुरुत, तत एवमुक्ते

सर्वैरपि ग्रामप्रधानपुरुषैर्भव्यमिति प्रतिपन्नं, गतः सर्वोऽपि ग्रामलोकः स्वस्वगृहे भोजनाय, भुक्त्वा च समागतः शिलाप्रदेशे, प्रारब्धं तत्र कर्म, कतिपयदिनैश्च निष्पादितः परिपूर्णो मण्डपः, कृता च शिला तस्याच्छादनं, निवेदितं च राज्ञे राजनियुक्तैः पुरुषैः—देव ? निष्पादितो ग्रामेण देवादेशः, राजा प्राह—कथमिति ? ततस्ते सर्वमपि मण्डपनिष्पादनप्रकारं कथयामासुः, राजा पप्रच्छ—कस्येयं बुद्धिः ? तेऽवादिषुः—देव ? भरतपुत्रस्य रोहकस्य, एषा रोहकस्यौत्पत्तिकी बुद्धिः, एवं सर्वेष्वपि संविधानकेषु योजनीयं । ततो भूयोऽपि राजा रोहकबुद्धिपरीक्षार्थं मेण्ढकमेकं प्रेषितवान् , एष यावत्पलप्रमाणः सम्प्रति वर्त्तते पक्षातिक्रमेऽपि तावत्पलप्रमाण एव समर्पणीयो, न न्यूनो नाप्यधिक इति, तत एवं राजादेशे समागते सति सर्वोऽपि ग्रामो व्याकुलीभूतचेता बहिः सभायामेकत्र मिलितवान्, सगौरवमाकारितो रोहकः, आभाषितश्च ग्रामप्रधानैः पुरुषैः—वत्स ? प्राचीनमपि दुष्टराजादेशसिन्धुः त्वयैव निजबुद्धिसेतुबन्धेन समुत्तारितः सर्वोऽपि ग्रामः ततः सम्प्रत्यपि प्रगुणीकुरु निजबुद्धिसेतुबन्धं येनास्यापि दुष्टराजादेशसिन्धोः पारमधिगच्छाम इति, तत उवाच रोहको—वृकं प्रत्यासन्नं धृत्वा मेण्ढकमेनं यवसदानेन पुष्टीकुरुत, यवसं हि भक्षयन्नेष न दुर्बलो भविष्यति, वृकं च दृष्ट्वा न बलवृद्धिमाप्स्यतीति, ततस्ते तथैव कृतवन्तः, पक्षातिक्रमे च तं राज्ञः समर्प्पयामासुः, तोलने च स तावत्पलप्रमाण एव जातः । ततो भूयोऽपि कतिपयदिनानन्तरं राज्ञा कुर्कुटः प्रेषितः, एष द्वितीयं कुर्कुटं विना योधितव्य इति, एवं सम्प्राप्ते राजादेशे मिलितः सर्वोऽपि ग्रामो बहिःसभायाम् , आकारितो रोहकः, कथितश्च तस्य राजादेशः, ततो रोहकेणादर्शको महाप्रमाण आनायितो निमृष्टश्च भूत्वा सम्यक् , ततो धृतः पुरो राजकुर्कुटस्य, ततः स राजकुर्कुटः प्रतिबिम्बमात्मीयमादर्शे दृष्ट्वा मत्प्रतिपक्षोऽयमपरः कुर्कुट इति मत्वा साहङ्कारं योद्धुं प्रवृत्तो, जडचेतसो हि प्रायस्तिर्यञ्चो भवन्ति, एवं चापरकुर्कुटमन्तरेण योधिते राजकुर्कुटे विस्मितः सर्वोऽपि ग्रामलोकः सम्पादितो राजादेशः, निवेदितं च राज्ञो निजपुरुषैः । ततो भूयोऽपि कतिपयदिवसातिक्रमे राजा निजादेशं प्रेषि-

तवान्–युष्मद्ग्रामस्य सर्वतः समीपे अतीव रमणीया वालुका विद्यन्ते, ततः स्थूला वालुकामयाः कतिपये दवरकाः कृत्वा शीघ्रं प्रेषणीया इति, एवं राजादेशे समागते मिलितः सर्वोऽपि वहिःसभायां ग्रामः पृष्टश्च रोहकः, ततो रोहकेण प्रत्युत्तरमदायि–नटा वयं, ततो वृत्तमेव-वयं कर्त्तुं जानीमो न दवरकादि, राजादेशश्चावश्यं कर्त्तव्यः, ततो बृहद्राजकुलमिति चिरन्तना अपि कतिचिद्वालुकामया दवरका भविष्यन्तीति तन्मध्यादेकः कश्चित् प्रतिच्छन्दभूतः प्रेषणीयो येन तदनुसारेण वयमपि वालुकामयान् दवरकान् कुर्म इति, ततो निवेदितमेतद्राज्ञे नियुक्तपुरुषैः, राजा च निरुत्तरीकृतस्तूष्णीमास्ते । ततः पुनरपि कतिचिद्दिनानन्तरं जीर्णहस्ती रोगग्रस्तो मुमूर्षुर्ग्रामे राज्ञा प्रेषितो, यथाऽयं हस्ती मृत इति न निवेदनीयः अथ च प्रतिदिवसमस्य वार्त्ता कथनीया, अकथने महान् ग्रामस्य दण्डः, एवं च राजादेशे समागते तथैव मिलितः सर्वोऽपि वहिःसभायां ग्रामः, पृष्टश्च रोहकः, ततो रोहकेणोक्तं–दीयतामस्मै यवसः, पश्चाद् यद्भविष्यति तत्करिष्यामि, ततो रोहकादेशेन दत्तो यवसस्तस्मै, रात्रौ च स हस्ती पञ्चत्वमुपागमत्, ततो रोहकवचनतो ग्रामेण गत्वा राज्ञो निवेदितं–देव ? अद्य हस्ती न निषीदति नोत्तिष्ठति न कवलं गृह्णाति नापि नीहारं करोति नाप्युच्छ्वासनिःश्वासौ विदधाति, किं वहुना ? देव ! कामपि सचेतनचेष्टां न करोति, ततो राज्ञा भणितं–किं रे मृतो हस्ती ? ततो ग्राम आह–देव ! देवपादा एवं ब्रुवते न वयमिति, तत एवमुक्ते राजा मौनमाधाय स्थितः, आगतो ग्रामलोकः स्वग्रामे । ततो भूयोऽपि कतिपयदिनातिक्रमे राजा समादिष्टवान्–अस्ति यौष्माकीणे ग्रामे सुस्वादुजलसम्पूर्णः कूपः, स इह सत्वरं प्रेपितव्यः, तत एवमादिष्टो ग्रामो रोहकं पृष्टवान्, रोहकश्चोवाच–एष ग्रामेयकः कूपो, ग्रामेयकश्च स्वभावाद्भीरुर्भवति न च सजातीयमन्तरेण विश्वासमुपगच्छति, ततो नागरिकः कश्चिदेकः कूपः प्रेष्यतां येन तत्रैष विश्वस्य तेन सह समागच्छतीति, एवं निरुत्तरीकृत्य मुत्कलिता राजनियुक्ताः पुरुषाः, तैश्च राज्ञो निवेदितं, राजा स्वचेतसि रोहकस्य बुद्ध्यतिशयं परिभाव्य मौनमवलम्ब्य स्थितः । ततो

भूयोऽपि कतिपयवासरातिक्रमेऽभिहितवान्—वनखण्डो ग्रामस्य पूर्वस्यां दिशि वर्त्तमानः पश्चिमायां दिशि कर्त्तव्य इति, अस्मिन्नपि राजादेशे समागते ग्रामो रोहकबुद्धिमुपजीव्य वनखण्डस्य पूर्वस्यां दिशि व्यवतिष्ठत, ततो जातो ग्रामस्य पश्चिमायां दिशि वनखण्डः, निवेदितं राज्ञो राजनियुक्तैः पुरुषैः। ततः पुनरपि कालान्तरे राजा आदिष्टवान्—वह्निसम्पर्कमन्तरेण पायसं पक्तव्यमिति, तत्रापि सर्वो ग्राम एकत्र मिलित्वा रोहकमपृच्छत्, रोहकश्चोक्तवान्—तन्दुलानतीव जलेन भिन्नान् कृत्वा दिनकरकरनिकरसन्तप्तकरीषपलालादीनामूष्मणि तन्दुलपयोभृता स्थाली निवेश्यतां येन परमान्नं सम्पद्यते, तथैव कृतं, जातं परमान्नं, निवेदितं राज्ञो, विस्मितं तस्य चेतः। ततो राज्ञा रोहकस्य बुद्ध्यति-शयमवगम्य तदाकरणाय समादिष्टं—येन बालकेन ममादेशाः सर्वेऽपि प्रायः स्वबुद्धिवशात् सम्पादिताः तेन चावश्यमागन्तव्यं, परं न शुक्लपक्षे नापि कृष्णपक्षे न रात्रौ न दिवा न छायायां नाप्यातपेन नाकाशेन नापि पादाभ्याम् न पथा नाप्युत्पथेन न स्नातेन नास्नातेन, तत एवमादिष्टे स रोहकः कण्ठस्नानं कृत्वा गन्त्रीचक्रस्य मध्यभूमिभागेन ऊरणमारूढो धृतचालनीरूपातपत्रः सन्ध्यासमयेऽमावास्याप्रति-पत्सङ्गमे नरेन्द्रपार्श्वमगमत्, स च 'रिक्तहस्तो न पश्येच्च राजानं देवतां गुरु' मिति लोकश्रुतिं परिभाव्य पृथिवीपिण्डमेकमादाय गतः, प्रणतो राजा, मुक्तश्च तत्पुरतः पृथिवीपिण्डः, ततः स पृष्टो राज्ञा रोहकः—रे रोहक! किमेतत्? रोहकोऽवादीत्—देव! देवपादाः पृथिवी-पतयस्ततो मया पृथिवी समानीता, श्रुत्वा चेदं प्रथमदर्शने मङ्गलवचस्तुतोष राजा, मुत्कलितः शेषो ग्रामलोकः, रोहकः पुनरात्मपार्श्वे शायितः, गते च यामिन्याः प्रथमयामे रोहकः शब्दितो राज्ञा—रे जागर्षि किंवा स्वपिषि? स प्राह—देव! जागर्मि, रे तर्हि किं चिन्तयसि? स प्राह—देव! अश्वत्थपत्राणां किं दण्डो महान् उत शिखेति? तत एवमुक्ते राजा संशयमापन्नो वदति—साधु चिन्तितं, कोऽत्र निर्णयः? ततो राजा तमेव पृष्टवान्—रे! कथय कोऽत्र निर्णय इति? तेनोक्तं—देव! यावदद्यापि शिखाग्रभागो न शोषमुपयाति तावद्द्वे अपि समे। ततो राज्ञा

रा. प्रा. १९

पार्श्ववर्ती लोकः पृष्टः, तेन च सर्वेणाप्यविगानतः प्रतिपन्नम् । ततः भूयोऽपि रोहकः सुप्तवान्, पुनरपि द्वितीये यामेऽपगते राज्ञा शब्दितः पृष्टश्च–किं रे जागर्षि किंवा स्वपिषि ? स प्राह–देव ! जागर्मि, रे किं चिन्तयसि ? देव ! छागिकाया उदरे कथं भ्रम्युत्तीर्णा इव वर्तुल-गुलिका जायन्ते ? तत एवमुक्ते राजा संशयापन्नस्तमेव पृष्टवाम्–कथय रे रोहक ? कथमिति ? स प्राह–देव ? संवर्त्तकाभिधवातविशेषात् । ततः पुनरपि रोहकः सुष्वाप, तृतीये च रजन्या यामेऽपगते भूयोऽपि राज्ञा शब्दितः–किं रे जागर्षि किंवा स्वपिषि ? सोऽवादीत्–देव, जागर्मि, किं रे चिन्तयसि ? देव ! पाडहिलाजीवस्य यावन्मात्रं शरीरं तावन्मात्रं पुच्छमुत न्यूनाधिकमिति ? तत एवमुक्ते राजा निर्णयं कर्त्तुमशक्तस्त-मेवापृच्छत्–कोऽत्र निर्णयः ? सोऽवादीद्–देव ! सममिति । ततो रोहकः सुप्तः प्राभातिके च मङ्गलपटहनिस्वने सर्वत्र प्रसरमधिरोहति राजा प्रबोधमुपजगाम, शब्दितवांश्च रोहकं, स च निद्राभरमुपारूढो न प्रतिवाचं दत्तवान्, ततो राजा लीलाकम्बिकाग्रेण मनाक् तं स्पृष्टवान्, ततः सोऽपगतनिद्रो जातः, पृष्टश्च किं रे स्वपिषि ? स प्राह–देव ! जागर्मि, किं रे तर्हि कुर्वंस्तिष्ठसि ? देव ! चिन्तयन्, किं चिन्तयसि ? देव ! एतच्चिन्तयामि कतिभिर्जातो देव इति, तत एवमुक्ते राजा सव्रीडं मनाक् तूष्णीमतिष्ठत्, ततः क्षणानन्तरं पृष्टवान्–कथय रे कतिभिरहं जात इति ? स प्राह–देव ! पञ्चभिः, राजा भूयोऽपि पृष्टवान्–केन केनेति ? रोहक आह–देव ! एकेन तावद्वैश्रवणेन, वैश्रवणस्येव भवतो दानशक्तिदर्शनात्, द्वितीयेन चाण्डालेन, वैरिसमूहं प्रति चाण्डालस्येव कोपदर्शनात्, तृतीयेन रजकेन, यतो रजक इव वस्त्रं परं निष्पीड्य तस्य सर्वस्वमुपहरन् दृश्यते, चतुर्थेन वृश्चिकेन, यन्मामपि बालकं निद्राभरसुप्तं लीलाकम्बिकाग्रेण वृश्चिक इव निर्दयं तुदसि, पञ्चमेन निजपित्रा, येन यथावस्थितं न्यायं सम्यक् परिपालयसि, एवमुक्ते राजा तूष्णीमास्थाय प्राभातिकं कृत्यमकार्षीत्, जननीं च नमस्कृत्यै-कान्ते पृष्टवान्–कथय मातः ! कतिभिरहं जात इति ? सा प्राह–वत्स ! किमेतत् प्रष्टव्यं ? निजपित्रा त्वं जातः, ततो राजा रोहकोक्तं

कथितवान्, भवति च–मातः ! स रोहकः प्रायोऽलीकबुद्धिर्न भवति ततः कथय सम्यक् तत्त्वमिति, तत एवमतिनिर्बन्धे कृते सति सा कथयामास–यदा त्वद्गर्भाधानमासीत् तदाऽहं बहिरुद्याने वैश्रवणपूजनाय गतवती, वैश्रवणं च यक्षमतिशायिरूपं दृष्ट्वा हस्तसंस्पर्शेन सञ्जातमन्मथोन्मादा भोगाय तं स्पृहितवती, अपान्तराले च समागच्छन्ती चण्डालयुवानमेकमतिरूपमपश्यम्, ततस्तमपि भोगाय स्पृहयामि स्म, ततोऽर्वाकने भागे समागच्छन्ती तथैव च रजकं दृष्ट्वाऽभिलषितवती, ततो गृहमागता सती तथाविधोत्सववशाद्वृश्चिकं कणिक्कामयं भक्षणाय हस्ते न्यस्तवती, ततस्तत्संस्पर्शतो जातकामोद्रेका तमपि भोगायाशंसितवती, तत एवं यदि स्पृहामात्रेण तेऽपि पितरः सम्भवन्ति तन्न जाने, परमार्थतः पुनरेक एव ते पिता सकलजगत्प्रसिद्ध इति, तत एवमुक्ते राजा जननीं प्रणम्य रोहकबुद्धिविस्मितचेताः स्वावासप्रासादमगमत्, रोहकं च सर्वेषां मन्त्रिणां मूर्द्धाभिषिक्तं मन्त्रिणमकार्षीत् ॥ १ ॥" इति । एवमन्यान्यपि दृष्टान्तानि स्वयं नन्दिवृत्तितोऽवलोकनीयानि, उक्तमौत्पत्तिक्या लक्षणम् ।

अथ वैनयिकीं लक्षयामः–"भरनित्थरणसमत्था तिवग्गसुत्तत्थगहिअपेआला। उभओलोगफलवई विणयसमुत्था हवइ बुद्धी ॥ १ ॥" व्याख्या–इहातिगुरुकार्यं दुर्निर्वहत्वात् भर इव भरस्तन्निस्तरणे समर्थाः, त्रयो वर्गास्त्रिवर्गा लोकरूढ्या धर्मार्थकामास्तदर्जनोपायप्रतिपादकं यत् सूत्रं यश्च तदर्थस्तौ त्रिवर्गसूत्रार्थौ तयोः गृहीतं पेयालं प्रमाणं सारो वा यया सा तथाविधा, उभयलोकफलवती विनयसमुत्था बुद्धिर्भवतीति । ननु 'तिवग्गसुत्तत्थगहिअपेयाला' इति वचनात् तत्रापि किञ्चित् श्रुतोपकारादेव जायते तत्कथमश्रुतनिश्रितमिति ? सत्यमेतत्, बाहुल्यापेक्षया, श्रुताननुसरणं त्वश्रुतनिश्रितमिति प्रागुक्तम्, वैनयिक्या बुद्धेस्तु सकृच्छ्रुतनिश्रितत्वान्न दोषः । यद्वा वैनयिकीं बुद्धिं विहाय बुद्धित्रिकस्याश्रुतनि-

श्रितत्वं वाच्यम्, यतः पूर्वमशिक्षितशास्त्रार्थस्याश्रुतनिश्रितत्वं तच्च नास्ति वैनयिक्यां बुद्धौ, बुद्धिचतुष्टयान्तर्भावस्तु विमर्शप्राधान्यादिति । तदुक्तमाराध्यपादैः—"वैनयिकीं विहाय अश्रुतनिश्रितं प्रतिपत्तव्यम्, यत्तु वैनयिक्या अश्रुतनिश्रितेषु नन्द्यध्ययने निर्युक्तौ वा पाठः स बुद्धिसाम्यादिति" मलयगिरिपादा आवश्यकवृत्तौ । "अवग्रहादीनां श्रुतनिश्रिताभिधानाद् औत्पत्तिक्यादिचतुष्टयेपि च अवग्रहादिसद्भावात् यथायोगमश्रुतनिश्रितमवसेयम्, न तु सर्वमेवेति, अयमत्र भावार्थः, श्रुतकृतोपकारनिरपेक्षं यदौत्पत्तिक्यादि तदश्रुतनिश्रितं प्रातिभमिति हृदयम्, ('प्रज्ञा नवनवोल्लेखशालिनी प्रतिभा मता' सैव प्रातिभं, नत्वत्र श्रुतकेवलातिरिक्तं सामर्थ्ययोगजन्यं प्रातिभम्) वैनयिकं विहायेत्यर्थः, बुद्धिसाम्याच्च तस्या निर्युक्तौ उपन्यासोऽविरुद्ध" इति हरिभद्रसूरिपादा आवश्यकवृत्तौ । अत्र छात्रज्ञातम्, तथाहि—"कश्चित्पुरे कोऽपि सिद्धपुत्रकः, तस्य द्वौ शिष्यौ निमित्तशास्त्रमधीतवन्तौ, एको बहुमानपुरस्सरं गुरोर्विनयपरायणो यत्किमपि गुरुरुपदिशति तत्सर्वं तथेतिप्रतिपद्य स्वचेतसि निरन्तरं विमृशति विमृशतश्च यत्र कापि सन्देह उपजायते तत्र भूयोऽपि विनयेन गुरुपादमूलमागत्य पृच्छति, एवं निरन्तरं विमर्शपूर्वं शास्त्रार्थं तस्य चिन्तयतः प्रज्ञा प्रकर्षमुपजगाम, द्वितीयस्त्वेतद्गुणविकलः, तौ चान्यदा गुरुनिदेशात् कञ्चिदत्यासन्ने ग्रामे गन्तुं प्रवृत्तौ, पथि च कानिचित् महान्ति पदानि तावददर्शतां, तत्र विमृश्यकारिणा पृष्टं—भो कस्यामूनि पदानि ? तेनोक्तं—किमत्र प्रष्टव्यं हस्तिनोऽमूनि पदानि ? ततो विमृश्यकारी प्राह—मैवं भाषिष्ठाः, हस्तिन्या अमूनि पदानि, सा च हस्तिनी वामेन चक्षुषा काणा, तां चाधिरूढा गच्छति काचिद्राज्ञी, सा च सभर्तृका गुर्वी च प्रजनेकल्पा, अद्य श्वो वा प्रसविष्यति, पुत्रश्च तस्या भविष्यति, तत एवमुक्ते सोऽविमृश्यकारी ब्रूते—कथमेतदवसीयते ? विमृश्यकारी प्राह—ज्ञानं प्रत्ययसारमित्यग्रे प्रत्ययतो व्यक्तं भविष्यति, ततः प्राप्तौ तौ विवक्षितं ग्रामं, दृष्टा चावासिता तस्य ग्रामस्य बहिः

प्रदेशे महासरस्तटे राज्ञी, परिभाविता च हस्तिनी वामेन चक्षुषा काणा, अत्रान्तरे च काचिद्दासचेडी महत्तमं प्रत्याह—वर्द्धाप्यसे राज्ञः
पुत्रलाभेनेति, ततः शब्दितो विमृश्यकारिणा द्वितीयः—परिभावय दासचेडीवचनमिति, तेनोक्तं—परिभावितं मया सर्वं, नान्यथा तव
मानमिति, ततस्तौ हस्तपादान् प्रक्षाल्य तस्मिन् महासरस्तटे न्यग्रोधतरोरधो विश्रामाय स्थितौ, दृष्टौ च कयाचिच्छिरोन्यस्तजलभृतघटि-
कया वृद्धस्त्रिया, परिभाविता च तयोराकृतिः, ततश्चिन्तयामास—नूनमेतौ विद्वांसौ, ततः पृच्छामि देशान्तरगतनिजपुत्रागमनमिति, पृष्टं
तया, प्रश्नसमकालमेव च शिरसो निपत्य भूमौ घटः शतखण्डशो भग्नः, ततो झटित्येवाविमृश्यकारिणा प्रोचे—गतस्ते पुत्रो घट इव व्याप-
त्तिमिति, विमृश्यकारी ब्रूते स—मा वयस्यैवं वादीः, पुत्रोऽस्या गृहे समागतो वर्त्तते, याहि मातर्वृद्धे स्त्रि! स्वपुत्रमुखमवलोकय, तत
एवमुक्ता सा प्रत्युज्जीवितेवाशीर्वादशतानि विमृश्यकारिणः प्रयुञ्जाना स्वगृहं जगाम, दृष्टश्चोद्धूलितजङ्घः स्वपुत्रो गृहमागतः, ततः प्रणता
स्वपुत्रेण, सा चाशीर्वादं निजपुत्राय प्रायुङ्क्त, कथयामास च नैमित्तिकवृत्तान्तं, ततः पुत्रमापृच्छ्य वस्त्रयुगलं रूपकांश्च कतिपयानादाय
विमृश्यकारिणः समर्पयामास, अविमृश्यकारी च खेदमावहन् स्वचेतसि अचिन्तयत्—नूनमहं गुरुणा न सम्यक् परिपाठितः कथमन्य-
थाऽहं न जानामि एष जानातीति, गुरुप्रयोजनं कृत्वा समागतौ द्वौ गुरोः पार्श्वे, तत्र विमृश्यकारी दर्शनमात्र एव शिरो नमयित्वा
कृताञ्जलिपुटः सबहुमानमानन्दाश्रुप्लावितलोचनो गुरोः पादावन्तरा शिरः प्रक्षिप्य प्रणिपपात, द्वितीयोऽपि च शैलस्तम्भ इव मनागप्यनत-
मितगात्रयष्टिर्मात्सर्यवह्निसम्पर्कतो धूमायमानोऽवतिष्ठते, ततो गुरुस्तं प्रत्याह—रे किमिति पादयोर्न पतसि? स प्राह—य एव सम्यक् पा-
ठितः स एव पतिष्यति, नाहमिति, गुरुराह—कथं त्वं न सम्यक् पाठितः? ततः स प्राचीनं वृत्तान्तं सकलमचीकथत्, यावदेतस्य ज्ञानं
सर्वं सत्यं न ममेति, ततो गुरुणा विमृश्यकारी पृष्टः—कथय वत्स! कथं त्वयेदं ज्ञातमिति? ततः स प्राह—मया युष्मत्पादादेशेन विमर्शः

कर्तुमारूधो—यथैतानि हस्तिरूपस्य पदानि सुप्रतीतान्येव, विशेषचिन्तायां तु किं हस्तिन उत हस्तिन्याः ? तत्र कायिकीं दृष्ट्वा हस्तिन्या इति निश्चितं, दक्षिणेन च पार्श्वे वृत्तिसमारूढवल्लीवितान आलूनविशीर्ण्णो हस्तिनीकृतो दृष्टो न वामपार्श्वे ततो निश्चिक्ये—नूनं वामेन चक्षुषा काणेति, तथा नान्य एवंविधपरिकरोपेतो हस्तिन्यामधिरूढो गन्तुमर्हति ततोऽवश्यं राजकीयं किमपि मानुषं यातीति निश्चितं, तच्च मानुषं क्वचित्प्रदेशे हस्तिन्या उत्तीर्य शरीरचिन्तां कृतवत्, कायिकीं दृष्ट्वा राज्ञीति निश्चितं, वृक्षावलग्नरक्तवस्त्रदशालेशदर्शनात् सभर्तृका, भूमौ हस्तं निवेश्योत्थानाकारदर्शनाद्गुर्वी, दक्षिणचरणनिस्सहमोचननिवेशदर्शनात्प्रजनेकल्पेति । वृद्धस्त्रियाः प्रश्नानन्तरं घटनिपाते चैवं विमर्शः कृतो यथैष घटो यत उत्पन्नस्तत्रैव मिलितस्तथा पुत्रोऽपीति । तत एवमुक्ते गुरुणा स विमृश्यकारी चक्षुषा सानन्दमीक्षितः प्रशंसितश्च, द्वितीयं प्रत्युवाच—तव दोषो यन्न विमर्शं करोषि, न मम, वयं हि शास्त्रार्थमात्रोपदेशेऽधिकृता विमर्शे तु यूयमिति विमृश्यकारिणो वैनयिकी बुद्धिः ॥ १ ॥" इत्युक्ता वैनयिकी बुद्धिः ।

कर्म्मजाया बुद्धेः लक्षणमुच्यते—"उवयोगदिट्ठसारा कम्मपसंगपरिघोलनविसाला । साहुकारफलवई कम्मसमुत्था हवइ बुद्धी ॥ १ ॥" वृत्तिः—"उपयोजनमुपयोगो विवक्षितकर्मणि मनसोऽभिनिवेशः, सारः तस्यैव विवक्षितपरमार्थः, उपयोगेन दृष्टः सारो यया सा उपयोगदृष्टसारा, अभिनिवेशोपलब्धकर्म्मपरमार्था इत्यर्थः । तथा कर्म्मणि प्रसङ्गः—अभ्यासः परिघोलन—विचारस्ताभ्यां विशाला—विस्तारमुपगता कर्म्मप्रसङ्गपरिघोलनविशाला, तथा साधु कृतं—सुष्ठु कृतमिति विद्वद्भिः प्रशंसा साधुकारः तेन युक्तं फलं साधुकारफलं तद्वती साधुकारपुरस्सरं वेतनादिलाभरूपं फलमित्यर्थः सा तथा कर्म्मसमुत्था बुद्धिर्भवति" इति । अत्र **कर्षकोदाहरणम्**, तथाहि—"कोऽपि तस्करो रात्रौ वणिजो गृहे पद्माकारं खातं खातवान्, ततः प्रातरलक्षितस्तस्मिन्नेव गृहे समागत्य जनेभ्यः प्रशंसा-

माकर्ण्णयति, तत्रैकः कर्षकोऽब्रवीत्—किं नाम शिक्षितस्य दुष्करत्वं ? यद्येन सदैवाभ्यस्तं कर्म स तत्प्रकर्षप्राप्तं करोति, नात्र विस्मयः, ततः स तस्कर एतद्वाक्यममर्षवैश्वानरसन्धुक्षणसममाकर्ण्य जज्वाल कोपेन, ततः पृष्टवान् कमपि पुरुषं—कोऽयं कस्य वा सत्क इति। ज्ञात्वा च तमन्यदा क्षुरिकामाकृष्य गतः क्षेत्रे तस्य पार्श्वे, रे! मारयामि त्वां सम्प्रति, तेनोक्तं—किमिति ? सोऽब्रवीत्—त्वया तदानीं न मम खातं प्रशंसितमिति कृत्वा, सोऽब्रवीत्—सत्यमेतत्, यो यस्मिन् कर्मणि सदैवाभ्यासपरः स तद्विषये प्रकर्षवान् भवति, तत्राहमेव दृष्टान्तः तथाहि अमून् मुद्गान् हस्तगतान् यदि भणसि तर्हि सर्वानप्यधोमुखान् पातयामि यद्वा ऊर्द्ध्वमुखान् अथवा पार्श्वस्थितानिति, ततः सोऽधिकतरं विस्मितचेताः प्राह—पातय सर्वानप्यधोमुखानिति, विस्तारितो भूमौ पटः पातिताः सर्वेऽप्यधोमुखा मुद्गाः, जातो महान् विस्मयश्चौरस्य, प्रशंसितं भूयो भूयस्तस्य कौशलमहो विज्ञानमहो विज्ञानमिति, वदति चौरो—यदि नाधोमुखाः पातिता अभविष्यन् ततो नियमात् त्वामहममारयिष्यमिति, कर्षकस्य चौरस्य च कर्म्मजा बुद्धिः" **इत्युक्ता कर्म्मजा बुद्धिः।**

**अथ पारिणामिकं लक्षयामः**—"अनुमानहेउदिट्ठंतसाहिआ वयविवागपरिणामा। हिअनिस्सेअसफलवई बुद्धी परिणामिआ नाम ॥१॥" **व्याख्या**—"अनुमानहेतुदृष्टान्तैः साध्यमर्थं साधयतीति अनुमानहेतुदृष्टान्तसाधिका, लिङ्गाल्लिङ्गिनि ज्ञानमनुमानम्, अन्यथानुपपत्त्येकलक्षणो हेतुः, साध्यस्योपमाभूतो दृष्टान्तः। वयः कालकृतावस्थाविशेषः तद्विपाके परिणामः पुष्टता यस्याः सा वयोविपाकपरिणामा पारिणामिकी बुद्धिः भवति, अस्याः फलमाह—हिअनिस्सेअसफलवइत्ति हितम्—अभ्युदयो निःश्रेयसं मोक्षस्ताभ्यां फलवती द्वे अपि तस्याः फले" इत्यर्थः। **अत्राभयकुमारदृष्टान्तस्तथाहि**—"कदाचिदूचेऽवन्तीशो मध्येसभममर्षणः। योऽर्पयत्यभयं बध्वा मम संपत्स्यते स किम् ॥१॥ पताकं हस्तमुत्क्षिप्य काप्येका गणिका ततः। व्यजिज्ञपदवन्तीशमलमसीह कर्मणि ॥ २ ॥ तामादिदेशावन्तीशो यद्येवमनुतिष्ठ तत्।

करोम्यर्थादिसाहाय्यं ब्रूहि किं तव संप्रति ॥ ३ ॥ सा च दध्यौ यदभयो नोपायैर्गृह्यतेऽपरैः । धर्मछद्म तदादाय साधयामि समीहि-
तम् ॥ ४ ॥ अयाचत ततश्च द्वे द्वितीयवयसौ स्त्रियौ । ते तदैवार्पयद्राजा ददौ द्रव्यं च पुष्कलम् ॥ ५ ॥ कृतादराः प्रतिदिनमुपास्योपास्य
संयतीः । बभूवुरुत्कटप्रज्ञास्तास्तिस्रोऽपि बहुश्रुताः ॥ ६ ॥ तास्तिस्रोऽपि ततो जग्मुः श्रेणिकालंकृतं पुरम् । जगत्रयीं वंचयितुं मायाया
इव मूर्तयः ॥ ७ ॥ बाह्योद्याने कृतावासा सा पणस्त्रीमतल्लिका । पत्तनान्तर्ययौ चैत्यपरिपाटीचिकीर्षया ॥ ८ ॥ सा विभूत्यातिशायिन्या
चैत्ये नृपतिकारिते । प्रविवेश समं ताभ्यां कृत्वा नैषेधिकीत्रयम् ॥ ९ ॥ मालवकैशिकीमुख्यग्रामरागजुषा गिरा । देवं वन्दितुमारेभे
सपर्यां विरचय्य सा ॥ १० ॥ तत्राभयकुमरोऽपि ययौ देवं विवन्दिषुः । अग्रे चात्मतृतीयां तां वन्दमानामुदैक्षत ॥ ११ ॥ देवदर्शन-
विघ्नोऽस्या मा भूत्प्रविशता मया । द्वार्येवेत्यभयस्तस्थौ मंडपान्तर्निवेशने ॥ १२ ॥ प्रणिधानस्तुतिं कृत्वा सा मुक्ताशुक्तिमुद्रया । यावदुत्त-
स्थुषी तावदभयोऽभ्याजगाम ताम् ॥ १३ ॥ तादृशीं भावनां तस्यास्तं वेषं प्रशमं च तम् । अभयो वर्णयामास सानन्दं च जगाद ताम्
॥ १४ ॥ दिष्ट्या भद्रेऽधुना त्वादृक् साधर्मिकसमागमः । साधर्मिकात्परो बन्धुर्न संसारे विवेकिनाम् ॥ १५ ॥ का त्वं किमागमः
का वा वासभूमिरिमे च के । यकाभ्यां स्वातिराधाभ्यामिन्दुलेखेव शोभसे ॥ १६ ॥ व्याजहाराथ सा व्याजश्राविकावन्तिवासिनः ।
महेभ्यवणिजः पाणिगृहीती विधवा त्वहम् ॥ १७ ॥ इमे च मम पुत्रस्य कलत्रे कालधर्मतः । विच्छाय्यभूतां विधवे भग्नवृक्षलते इव
॥ १८ ॥ व्रतार्थं पृच्छतः सैते उभे अपि तदैव माम् । विपन्नपतिकानां हि सतीनां शरणं व्रतम् ॥ १९ ॥ मयाप्युक्ते ग्रहीष्यामि
निर्विण्णाहमपि व्रतम् । गार्हस्थ्यस्य फलं किंतु गृह्यतां तीर्थयात्रया ॥ २० ॥ व्रते हि भावतः पूजा युज्यते द्रव्यतो न तु । इत्यहं
तीर्थयात्रार्थमेताभ्यां सह निर्गता ॥ २१ ॥ अथेत्थमभयोऽवोचदतिथीभवताद्य नः । आतिथेयं सतीर्थ्यानां तीर्थादप्यतिपावनम् ॥ २२ ॥

प्रत्युवाचाभयं सापि युक्तमाह भवान् परम् । कृततीर्थोपवासाहं भवाम्यद्यातिथिः कथम् ॥ २३ ॥ अथ तन्निष्ठया हृष्टोऽभयस्तामवदत् पुनः । अवश्यं मम तत्प्रातरागन्तव्यं निकेतनम् ॥ २४ ॥ साप्यूचे यत्क्षणेनापि जन्मिनो जन्मपूर्यते । अहं प्रातरिदं कर्तासीति जल्पेत्कथं सुधीः ॥ २५ ॥ अस्त्विदानीमियं भूयः श्वो निमंत्र्येति चिन्तयन् । तां विसृज्याभयश्चैत्यं वन्दित्वा स्वगृहं ययौ ॥ २६ ॥ तां निमंत्र्याभयः प्रातर्गृहचैत्यान्यवन्दयत् । भोजयामास च प्राज्यवस्त्रदानादि च व्यधात् ॥ २७ ॥ निमंत्रितस्तयान्येद्युर्मैत्रीभूयाभयोऽप्यगात् । साधर्मिकोपरोधेन किं न कुर्वंति तादृशाः ॥ २८ ॥ तया च विविधैर्भोज्यैरभयोऽकारि भोजनम् । चन्द्रहासं सुरामिश्रपानकानि च पायितः ॥२९॥ भुक्तोत्थितश्च सुष्वाप तत्कालं श्रेणिकात्मजः । आदिमा मद्यपानस्य निद्रा सहचरी खलु ॥ ३० ॥ तं रथेन स्थाने स्थाने स्थापितैश्चापरै रथैः । अवन्तीं प्रापयामास दुर्लंक्ष्य छद्मसद्मसा ॥ ३१ ॥ ततोऽभयान्वेषणाय श्रेणिकेन नियोजिताः । स्थाने स्थाने मार्गयंतस्तत्रोपेयुर्गवेषकाः ॥ ३२ ॥ किमिहाभय आयात इत्युक्त्वा तैरुवाच सा । इहाभयः समायातः परं यातस्तदैव हि ॥ ३३ ॥ वचनप्रत्ययात्तस्या अन्यत्रेयुर्गवेषकाः । स्थाने स्थाने स्थापिताश्वैः साप्यवन्तीं समाययौ ॥ ३४ ॥ सा प्रचंडाभयं चंडप्रद्योतायार्पयत्ततः । अभयानयनोपायस्वरूपं च व्यजिज्ञपत् ॥ ३५ ॥ तां प्रद्योतोऽप्युवाचैवं न साधु विहितं त्वया । यदमुं धर्मविश्रब्धं त्वं धर्मछद्मनानयः ॥ ३६ ॥ कथासप्ततिसंशंसी मार्जार्येव शुकोऽनया । नीतिज्ञोपि गृहीतोऽसि जगादेत्यभयं च सः ॥ ३७ ॥ अभयोऽप्यब्रवीदेवं त्वमेव मतिमानसि । यस्यैवंविधया बुद्ध्या राजधर्मः प्रवर्धते ॥ ३८ ॥ लक्षितः कुपितश्चाथ चंडप्रद्योतभूपतिः । राजहंसमिवाक्षैप्सीदभयं काष्ठपञ्जरे ॥३९॥ अग्निभीरुरथो देवी शिवानलगिरिः करी । लोहजंघो लेखवाहो राज्ये रत्नानि तस्य तु ॥ ४० ॥ लोहजंघं नृपः प्रैषीद्भृगुकच्छे मुहुर्मुहुः । तद्गतागतसंक्लिष्टास्तत्रत्या इत्यसूत्रयन् ॥ ४१ ॥ आयात्ययं दिनेनापि पंचविंशतियोजनाम् । असकृद्व्याहरत्यस्मान् हन्मः संप्रत्यमुं ततः ॥ ४२ ॥ ते विमृश्येत्य-

वाज्ञया । कन्यां वासवदत्तां ते गान्धर्वं शिक्षयिष्यति ॥६३॥ साधु साध्विति राज्ञानुमतो मंत्र्यपि तं तथा । अकारयद्गजं सत्यगजादप्यधिकं गुणैः ॥ ६४ ॥ दत्तघातकरोत्क्षेपबृंहितप्रसरादिभिः । तं कुञ्जरं वनचरा विदाञ्चक्रुरकृत्रिमम् ॥ ६५ ॥ वनेचरास्तं करिणमाख्यन्नुदयनाय ते । तद्बन्धार्थं वने तस्मिन् ययावुदयनोऽपि हि ॥६६॥ दूरे मुक्त्वा परीवारं परिक्रामञ्छनैः शनैः । शकुनान्वेषक इव वनान्तः प्रविवेश सः ॥६७॥ मायाकरटिनस्तस्य समीपमुपसृत्य च । जगावुदयनस्तारमधरीकृतकिंनरः ॥६८॥ जगावुदयनो गीतं सुधास्वादु यथा यथा । तथा तथान्तःपुरुषाः स्तिमितांगं गजं व्यधुः ॥६९॥ कौशाम्बीशोऽपि तं नागं मन्वानो गीतमोहितम् । शनैः शनैरभ्यसर्पत्तिमिरे संचरन्निव ॥७०॥ मूढोऽयं मम गीतेनेत्युपसृत्य स पार्थिवः । उत्प्लुत्येभं तमारोहद्विहंग इव पादपम् ॥७१॥ प्रद्योतायुक्तसुभटा निःसृत्य द्विरदोदरात् । पातयित्वा गजस्कंधाद्वत्सराजमबन्धयन् ॥ ७२ ॥ एकाकी च निरस्त्रश्च विश्वस्तश्च शतैर्भटैः । नाकार्षीत् पौरुषं रुद्धः कुक्कुरैरिव सूकरः ॥७३॥ ऊचे च चंडप्रद्योतो वत्सराजं भटार्पितम् । मत्पुत्रीं शिक्षयैकाक्षीं तां गान्धर्वकलां निजाम् ॥७४॥ मत्कन्याध्यापनेन त्वं सुखं तिष्ठ मदोकसि । अन्यथा तव बद्धस्य मदधीनं हि जीवितम् ॥७५॥ दध्यावुदयनोऽप्येवं कन्यामध्यापयन्नहम् । कालं क्षिपामि जीवन् हि नरो भद्राणि पश्यति ॥ ७६ ॥ इति चेतसि निश्चित्य तत्प्रद्योतस्य शासनम् । अनुमेने वत्सराजः स पुमान् यो हि कालवित् ॥७७॥ ऊचे च चंडप्रद्योतः काणा हि दुहिता मम । मा जातु तां निरीक्षेथाः सा हि लज्जिष्यतेऽन्यथा ॥७८॥ इत्युक्त्वान्तःपुरे गत्वा तनयामप्युवाच सः । गान्धर्वगुरुरायातो न वीक्ष्यः कुष्ठ्ययं यतः ॥७९॥ वत्सराजोऽपि गान्धर्वं तां तथैवाध्यजीगपत् । प्रद्योतवंचितौ तौ तु मिथो ददृशतुर्न तु ॥८०॥ पश्याम्यमुमिति ध्यायन्त्यन्यदावन्तिनाथसूः । मनःशून्यान्यथापाठीन्मनोऽधीनं हि चेष्टितम् ॥ ८१ ॥ वत्सराजस्तदावन्तिराजपुत्रीमतर्जयत् । विनाशयसि किं शास्त्रं काणे दुःशिक्षितासि किम् ॥ ८२ ॥ सा तिरस्कारकुपिता वत्सराजमदोऽवदत् । किं काणामभिधत्से मां कुष्ठिनं स्वं न

पश्यसि ॥८३॥ दध्यौ चैवं वत्सराजः कुष्ठभाग् यादृगस्म्यहम् । काणापि तादृगेवैषा पश्यामि तदिमां खलु ॥८४॥ इत्यपासारयत् कांडपटं स धिषणापटुः । ददर्श मेघनिर्मुक्तामिन्दुलेखामिवाथ ताम् ॥८५॥ तं च वासवदत्तापि सद्यः स्फारितलोचना । सर्वांगसुभगं साक्षादिवाद्राक्षीन्मनोभुवम् ॥ ८६ ॥ दृष्ट्वा वासवदत्ता तं वत्सराजोऽपि तां तदा । परस्परानुरागर्द्धिसूचकं चक्रतुः स्मितम् ॥ ८७ ॥ प्रद्योतपुत्री प्रोवाच धिग्धिक् पित्रास्मि वंचिता । कुहूतमिस्रेन्दुमिव यापश्यं त्वां न सुन्दर ॥८८॥ कलाचार्यकलाः सम्यग्मयि संक्रमितास्त्वया । तास्तवैवोपयोगिन्यः सन्तु भर्ता त्वमेधि मे ॥ ८९ ॥ वत्सराजोऽवदद्भद्रे त्वत्पित्रैवास्मि वंचितः । काणेत्यन्तरितां कृत्वा त्वां पश्यन्नस्मि वारितः ॥९०॥ कान्ते तदावयोर्योगो भवत्वत्रैव तस्थुषोः । समये त्वां हरिष्यामि वैनतेयः सुधामिव ॥९१॥ स्वयंदूत्येन वैदग्धीबन्धुरं जल्पतोरिति । मनोयोगस्पर्द्धयेव वपुर्योगोऽप्यभूत्तयोः ॥९२॥ दासी वासवदत्ताया धात्री विश्रंभभाजनम् । एका काञ्चनमालैव विवेद चरितं तयोः ॥९३॥ एकयैवोपास्यमानौ दास्या काञ्चनमालया । केनाप्यज्ञातदाम्पत्यौ तौ कालमतिनिन्यतुः ॥९४॥ अन्यदालानमुन्मूल्य पातयित्वा निषादिनौ । स्वैरमनलगिरिर्भ्राम्यन् क्षोभयामास नागरान् ॥९५॥ असाववशगो हस्ती वशं नेयः कथं न्विति । राज्ञा पृष्टोऽभयोऽशंसद्गायतूदयनो नृपः ॥९६॥ गीतमनलगिरेरग्रे कुर्वित्युक्तोऽथ भूभुजा । जगावुदयनस्तत्र समं वासवदत्तया ॥ ९७ ॥ तद्गीताकर्णनाक्षिप्तो बद्धोऽनलगिरिः करी । पुनर्ददौ वरं राजा न्यासीचक्रेऽभयस्तथा ॥ ९८ ॥ अन्यदोद्यापनिकयोद्यानं प्रत्यचलन्नृपः । सान्तःपुरपरीवारः पौरैः सह महर्द्धिभिः ॥९९॥ तदा च वत्सराजस्य मोक्षोपायं विचिन्तयन् । मार्गे परिभ्रमन्नासीन्मंत्री योगन्धरायणः ॥१००॥ स्वबुद्धिविभवोष्माणं हृदन्तर्धर्तुमक्षमः । स पपाठ यन्मनसि प्रायस्तद्धि वचस्यपि ॥१०१॥ यदि तां चैव तां चैव तां चैवायतलोचनाम् । न हरामि नृपस्यार्थे नाहं योगन्धरायणः ॥१०२॥ गच्छंश्च चंडप्रद्योतस्तस्य वाचं ससौष्ठवाम् । आकर्ण्य तं निरैक्षिष्ट दुष्कटाक्षेण चक्षुषा ॥१०३॥ योगंधरायणोऽप्याशु परेषामिंगितादिभिः । भावज्ञोऽ-

अवन्तिपतिर्गृह्यलमपाकर्तुं स आत्मनः । प्रत्युत्पन्नधियां धुर्य इदमौपयिकं न्यधात् ॥ १०५ ॥
वन्ति नृपतिं विवेद कुपितं तदा ॥ १०४ ॥ अवन्तिपतिर्गृह्यलमपाकर्तुं स आत्मनः । प्रत्युत्पन्नधियां धुर्य इदमौपयिकं न्यधात् ॥ १०५ ॥ पिशाचकी कश्चिदसाविति ज्ञात्वा
मुक्तः संव्यानमूर्ध्वस्थः प्रेतातिविकृताकृतिः । मूत्रयन् व्यञ्जयामास भूताविष्टत्वमात्मनः ॥ १०६ ॥ ततश्च चण्डप्रद्योतो गत्वोद्यानेऽनवद्यवाक् । गान्धर्वगोष्ठीमारेभे स्मर-
नृपोऽपि हि । सद्यः कोपं निजग्राह निपादीव मतङ्गजम् ॥ १०७ ॥ ततश्च चण्डप्रद्योतो गत्वोद्यानेऽनवद्यवाक् । आह्वद्वासवदत्तां च वत्सराजं च कौतुकी ॥ १०९ ॥ ऊचे प्रद्योत-
द्विपमहौपधम् ॥ १०८ ॥ गान्धर्वकौशलं द्रष्टुं नवं प्रद्योतभूपतिः । आह्वद्वासवदत्तां च वत्सराजं च कौतुकी ॥ १०९ ॥ ऊचे प्रद्योत-
तनयां वत्सराजः शुभानने । आरुह्येमां वेगवतीं गन्तुं कालोऽयमावयोः ॥ ११० ॥ सद्यो जितमरुद्वेगां ततो वेगवतीमिमाम् । आना-
ययदवन्तीशदुहितोदयनाज्ञया ॥ १११ ॥ कक्षायां वध्यमानायां सा ररास च हस्तिनी । श्रुत्वा तद्रसितं चैवमन्धमौहूर्तिकोऽवदत्
॥ ११२ ॥ कक्षायां वध्यमानायां यथा रसति हस्तिनी । योजनानां शतं गत्वा प्राणत्यागं करिष्यति ॥ ११३ ॥ वसन्तको हस्तिपकोऽ-
वन्नादुदयनाज्ञया । चतस्रो मूत्रघटिकाः करिण्याः पार्श्वयोर्द्वयोः ॥ ११४ ॥ वत्सराजो घोषवतीपाणिः प्रद्योतनन्दना । काञ्चनमाला
वसन्तश्चारोहंस्तामथ द्विपीम् ॥ ११५ ॥ योगंधरायणोप्येत्य नुनोद करसंज्ञया । याहि याहीत्युदयनं सोऽपि गच्छन्नदोऽवदत् ॥ ११६ ॥
वासवदत्ता काञ्चनमाला चैव वसन्तकः । वेगवती घोषवती वत्सराजश्च यान्त्यमी ॥ ११७ ॥ प्रेरयन् वारणवधूं वत्सराजोऽपि रंहसा ।
आत्मानं ज्ञापयन्नेवं नालुम्पत्क्षत्रियव्रतम् ॥ ११८ ॥ प्रद्योतोऽपि गतं ज्ञात्वोदयनं पञ्चभिः सह । करौ जघर्षाक्षद्यूते पाशकान् पात-
यन्निव ॥ ११९ ॥ अवन्तीशोऽनलगिरिं सन्नाह्यासह्यविक्रमः । निपादिभिर्महायोधैराश्रितं पृष्ठतोऽमुचत् ॥ १२० ॥ पञ्चविंशतियोज-
न्यामतीतायां स कुञ्जरः । अदवीयानुदयनेनादृश्यत भयङ्करः ॥ १२१ ॥ ततो मूत्रघटीमेकां स्फोटयित्वा महीतले । तथैव प्रेरयामासो-
दयनस्तां करेणुकाम् ॥ १२२ ॥ गजोऽपि तद्घटीमूत्रं जिघ्रन् क्षणमिवास्थितः । कष्टेन प्रेर्यमाणस्तु प्रससार पुनस्तथा ॥ १२३ ॥

मार्गे मूत्रघटीरन्या अपि तावति तावति । स्फोटं स्फोटं नलगिरेर्वत्सराजोऽरुणद्गतिम् ॥ १२४ ॥ योजनानां शतं गत्वा कौशाम्बीं प्रविवेश सः । परिश्रान्ता तदा सा च व्यपद्यत करेणुका ॥१२५॥ यावच्च मूत्रमाजिघ्रन् प्रससार न वारणः । कौशाम्बीपतिसेनापि तावद्योद्धुमढौकत ॥ १२६ ॥ निषादिनोऽनलगिरिं वालयित्वा ततश्च ते । पथा यथागतेनैव पुनरुज्जयिनीं ययुः ॥ १२७ ॥ कठकोपक्रमं कुर्वन् प्रद्योतः कुलमन्त्रिभिः । भक्तैः कोपकृतान्तोऽपि युक्तिपूर्वमवार्यत ॥ १२८ ॥ वराय यस्मै कस्मैचिद्देयावश्यं हि कन्यका । तद्वत्सराजादधिकं कं जामातरमाप्स्यसि ॥ १२९ ॥ भेजे वासवदत्ता तं स्वयमेव स्वयंवरा । स्वामिंस्त्वद्दुहितुः पुण्यैरुचितः सोऽभवद्वरः ॥ १३० ॥ तदलं कटकारंभेणानुमन्यस्व तं वरम् । यतो वासवदत्तायाः स कौमारहरोऽभवत् ॥ १३१ ॥ इति तैर्बोधितो राजा वत्सराजाय संमदात् । प्रैषीज्जामातृभावार्हं वस्तुजातं विधेयवित् ॥ १३२ ॥ अभूदवन्त्यामन्येद्युर्निर्विच्छेदं प्रदीपनम् । पृष्टश्च तत्प्रतीकारं प्रद्योतेनाभयोऽवदत् ॥ १३३ ॥ विषस्येव विषं वह्नेर्वह्निरेव तदौषधम् । तदन्यः क्रियतां वह्निर्यथा शाम्येत्प्रदीपनम् ॥ १३४ ॥ तत्तथा विदधे राज्ञा शाम्यत्तच्च प्रदीपनम् । तृतीयं च वरं सोऽदान्न्यासीचक्रेऽभयश्च तम् ॥ १३५ ॥ अशिवं महदन्येद्युरुज्जयिन्यां समुत्थितम् । तत्प्रशान्त्यै नरेन्द्रेण पृष्ट इत्यभयोऽब्रवीत् ॥ १३६ ॥ आगच्छंस्त्वन्तरास्थानं देव्यः सर्वा विभूषिताः । युष्माञ्जयति या दृष्ट्या कथनीया तु सा मम ॥ १३७ ॥ तथैव विदधे राज्ञा राज्ञोऽन्या विजिता दृशा । देव्या तु शिवया राजा कथितं चाभयाय तत् ॥ १३८ ॥ अभाषताभयोऽप्येवं महाराज्ञी शिवा स्वयम् । करोतु कूरबलिना भूतानामर्चनं निशि ॥ १३९ ॥ यद्यद्भूतं शिवारूपेणोत्तिष्ठत्यथ वास्यते । तस्य तस्य मुखे देव्या क्षेप्यः कूरबलिः स्वयम् ॥ १४० ॥ विदधे शिवया तच्चाशिवशान्तिर्बभूव च । तुर्यं चादाद्वरं राजा ययाचे चाभयोऽप्यदः ॥ १४१॥ स्थितोऽनलगिरौ मेंढीभूते त्वयि शिवांकगः । अहं विशाम्यग्निभीरुरथदारुकृतां चिताम् ॥ १४२ ॥ ततो विषण्णः प्रद्योतो वरं

दातुमशकुवन् । विससर्जाञ्जलिं कृत्वा कुमारं मगधेशितुः ॥ १४३ ॥ आशुश्रावाभयोऽप्येवं त्वयानीतश्छलादहम् । दिवा रटन्तं पूर्मध्ये त्वां तु नेष्याम्यसावहम् ॥ १४४ ॥ ततोऽभयकुमारोऽगात् क्रमाद्राजगृहे पुरे । कथमप्यवतस्थे च कंचित्कालं महामतिः ॥ १४५ ॥ गृहीत्वा गणिकापुत्र्यौ रूपवत्यावथाभयः । वणिग्वेषोऽगादवन्त्यां राजमार्गेऽग्रहीद्गृहम् ॥ १४६ ॥ प्रद्योतेनेक्षिते ते च दारिके पथि गच्छता । ताभ्यां च सविलासाभ्यां प्रद्योतोऽपि निरीक्षितः ॥ १४७ ॥ प्रद्योतेन गृहे गत्वा प्रेषिता रागिणा ततः । दूत्यनुनयवती ताभ्यां क्रुद्धाभ्यामपहस्तिता ॥ १४८ ॥ द्वितीयस्मिन्नपि दिनेऽर्थयमाना नृपाय सा । ताभ्यां शनैः सरोपाभ्यामवामन्यत दूतिका ॥ १४९ ॥ तृतीयेऽप्यहन्यनिर्वेदादेत्य ते याचिते तया । अवोचतां सदाचारो भ्राता नावेप रक्षति ॥ १५० ॥ ततो बहिर्गतेऽमुष्मिन् सप्तमेऽह्नि समागते । इहायातु नृपश्छन्नस्ततः संगो भविष्यति ॥ १५१ ॥ अथाभयेन प्रद्योतसदृगेकः पुमान्निजः । उन्मत्तो विदधे तस्य प्रद्योत इति नाम च ॥ १५२ ॥ ईदृशोऽयं मम भ्राता भ्राम्यतीतस्ततस्ततः । रक्षितव्यो मया हा किं करोमीत्यवदज्जने ॥ १५३ ॥ वैद्यसद्मप्रणयनछद्मना प्रत्यहं बहिः । रटन्तं मञ्चकारूढं निनायार्तमिवाभयः ॥ १५४ ॥ नीयमानश्च तेनोच्चैः स उन्मत्तश्चतुष्पथे । प्रद्योतोऽहं ध्रियेऽनेनेत्युदश्रुवदनोऽरटत् ॥ १५५ ॥ सप्तमेऽह्नि नृपोऽप्यागात्तत्र प्रच्छन्नमेककः । कामान्धः सिन्धुर इव बद्धश्चाभयपूरुषैः ॥ १५६ ॥ नीयतेऽसौ वैद्यवेश्मेत्यभयेनाभिभाषिणा । पर्यंकेन समं जह्रे पुरांतः स रटन् दिवा ॥ १५७ ॥ क्रोशे क्रोशे पुरो मुक्तैरथैरथ सुवाजिभिः । पुरे राजगृहेऽनैषीत् प्रद्योतमभयोऽभयः ॥ १५८ ॥ ततो निनाय प्रद्योतं श्रेणिकस्य पुरोऽभयः । दधाव खड्गमाकृष्य तं प्रति श्रेणिको नृपः ॥ १५९ ॥ अथाभयकुमारेण बोधितो मगधेश्वरः । संमान्य वस्त्राभरणैः प्रद्योतं व्यसृजन्मुदा ॥ १६० ॥" इति, उक्ता परिणामिकी बुद्धिः । तदुक्तौ चोक्तमश्रुतनिश्रितं मतिज्ञानम् । यद्वा मन्दमन्दतरमन्दतमस्पष्टस्पष्टतरस्पष्टतमाद्यालोकभेदेन विषयस्याल्पत्वमह-

त्वसन्निकर्षादिभेदतः क्षयोपशमभेदेन च भिद्यमानमिति ज्ञानमनन्तभेदमपि भवति । अथ मतिज्ञानस्य द्रव्यादिभेदेन चतुष्प्रकारत्वमुच्यते–द्रव्यादेशतो मतिज्ञानी सर्वाणि द्रव्याणि जानाति, अत्रादेशः प्रकारः, स च द्विविधः, सामान्यरूपः विशेषरूपश्च, अत्र सामान्यरूपोऽवगन्तव्यः, द्रव्यजातिरूपेण सामान्येन धर्म्मास्तिकायादीनि सर्वाणि जानातीत्यर्थः । किञ्चिद्विशेषतोऽपि धर्मास्तिकायः धर्म्मास्तिकायदेशः धर्म्मास्तिकायप्रदेशो लोकप्रमाणो गत्युपष्टम्भहेतुरमूर्तः इत्यादिकं जानाति, परं सर्वात्मना धर्म्मास्तिकायादीन् न पश्यति, योग्यदेशस्थितान् घटादीन् तु पश्यत्यपि। अथवा आदेशः सूत्रादेशः, तेन सर्वाणि द्रव्याणि जानाति, न तु साक्षात् सर्वाणि पश्यति । ननु सूत्रादेशेन यज्ज्ञानमुपजायते तत्सर्वं श्रुतज्ञानं शब्दार्थपरिज्ञानरूपत्वात्, मतिज्ञानं चाभिधीयमानं वर्तते तत्कथं न विरोध इति चेत्? न, श्रुतपरिकर्म्मितमतेः श्रुतोपलब्धार्थे तु येऽवग्रहादयः प्रादुष्षन्ति तेषां मतिज्ञानरूपत्वात् न श्रुतज्ञानं, श्रुतानुसारनिरपेक्षत्वात् । तदुक्तं भाष्ये–"आदेसोत्ति व सुत्तं सुओवलद्धेसु तस्स मइनाणं । पसरइ तब्भावणया विणावि सुत्ताणुसारेणं ॥ १ ॥" एवं क्षेत्रादिष्वपि वोध्यम् । क्षेत्रादेशतो मतिज्ञानी सर्वं क्षेत्रं लोकालोकरूपं जानाति, न सर्वथा पश्यति, कालादेशेन मतिज्ञानी सर्वकालमतीतानागतवर्तमानरूपं वा जानाति, न पश्यति, भावादेशेन मतिज्ञानी औदयिकादीन् सर्वान् भावान् जानाति, न पश्यति, तथा च भाष्यकृत्–"आएसोत्ति पगारो ओघाएसेण सव्वदव्वाइं । धम्मत्थिकाइआइं जाणइ न उ सव्वभावेणं ॥ १ ॥ लोगालोगं कालं सव्वद्धमहव तिविहं वा । पंचोदइयाईए भावे जं नेयमेवइयं ॥ २ ॥" इति । द्रव्यादिभेदचतुष्कसंग्राहकं सूत्रम्–"तं समासओ चउविहं पण्णत्तं तंजहा–दव्वओ खित्तओ कालओ भावओ, तत्थ दव्वओणं आभिणिवोहिअनाणी आएसेणं सव्वाइं दव्वाइं जाणइ न पासइ, खेत्तओणं आभिणि-

बोहिअनाणी आएसेणं सव्वं खेत्तं जाणइ न पासइ, कालओणं आभिणिबोहिअनाणी आएसेणं सव्वकालं जाणइ न पासइ, भावओणं आभिणिबोहिअनाणी आएसेणं सव्वे भावे जाणइ न पासइ" इति । ईहा अपोहः विमर्शः मार्गणा गवेषणा संज्ञा स्मृतिः प्रज्ञा आभिनिबोधिकं बुद्धिरिति मतिज्ञानस्याभिधानानीत्युक्तं मतिज्ञानम् ॥

अथ श्रुतज्ञानं तत्त्वभेदविपर्ययैरुच्यते–तत्र लक्षणं प्रागुक्तमेव, भेदास्तु चतुर्दश भवन्ति, तद्यथा–अक्षरश्रुतमनक्षरश्रुतं सञ्ज्ञिश्रुतमसञ्ज्ञिश्रुतं सम्यक्श्रुतं मिथ्याश्रुतं सादिश्रुतमनादिश्रुतं सपर्यवसितश्रुतमपर्यवसितश्रुतं गमिकश्रुतमगमिकश्रुतमङ्गप्रविष्टश्रुतमनङ्गप्रविष्टश्रुतमिति । नन्वक्षरानक्षरश्रुतभेदद्वये शेषभेदा अन्तर्भवन्ति तत्किमर्थं तेषां भेदेनोपन्यासः कृत इति चेत्? अव्युत्पन्नमतीनां शिष्याणां विशेषज्ञानसम्पादनाय पृथगुपन्यासः कृत इति । तत्राक्षरश्रुतं सञ्ज्ञाव्यञ्जनोपलब्ध्यक्षरभेदात्त्रिविधं भवति । न क्षरति न चलतीत्यक्षरं ज्ञानं तद्धि जीवस्वाभाव्यादनुपयोगेऽपि तत्त्वतो न प्रच्यवते । यद्यपि सर्वं ज्ञानमक्षरं प्राप्नोति तथापीह श्रुतज्ञानप्रस्तावादक्षरात्मकं श्रुतज्ञानमेव द्रष्टव्यम्, न शेषम् । इत्थंभूतं भावाक्षरकारणमकारादिवर्णजातमप्युपचारादक्षरमुच्यते । अक्षरं च तच्छ्रुतं चाक्षरश्रुतं लब्धिरूपं भावश्रुतं द्रष्टव्यम् । अकारादिवर्णजातं तु द्रव्यश्रुतं तच्च संज्ञाक्षरं व्यञ्जनाक्षररूपं द्रष्टव्यम् । तत्र सञ्ज्ञाक्षरमक्षरस्य नानाविधाकृतिः, पट्टिकादौ संस्थापितस्याक्षरस्य संस्थानाकृतिः संज्ञाक्षरमुच्यते । सा च ब्राह्म्यादिलिपिभेदेनानेकधा भवति । नागरीलिपिमधिकृत्य किञ्चिन्निदर्श्यते–मध्ये स्फाटितचुल्लीसन्निवेशसदृशो रेखासन्निवेशो णकारो वक्रीभूतसारमेयलाङ्गूलसन्निवेशसदृशो ढकार इत्यादि । संज्ञायतेऽनयेति सञ्ज्ञा तन्निबन्धनमक्षरं सञ्ज्ञाक्षरम् । व्यज्यतेऽनेनार्थः प्रदीपेनेव घट इति व्यञ्जनं भाष्यमा-

णमकारादिवर्णजातं तस्य विवक्षितार्थाभिव्यञ्जकत्वात् । व्यञ्जनं च तदक्षरं च व्यञ्जनाक्षरमिति । लब्धिरुपयोगः श्रुतज्ञानप्रस्तावात् शब्दार्थपर्यालोचनानुसारी ग्राह्यो लब्धिरूपमक्षरं लब्ध्यक्षरं भावश्रुतमक्षरलब्धिकस्य भवति, अक्षरस्योच्चारणेऽवगमे वा लब्धिर्यस्य सोऽक्षरलब्धिकस्तस्य शब्दादिग्रहणानन्तरमिन्द्रियमनोनिमित्तं शब्दार्थपर्यालोचनानुसारि शङ्खोऽयमित्याद्यक्षरानुविद्धं ज्ञानमुपजायत इत्यर्थः । नन्वेकेन्द्रियादेरारभ्यासंज्ञिपर्यवसानानामकारादिवर्णानामुच्चारणे परोपदेशश्रवणाभावेनाऽवगमे वा लब्ध्यसंभवेन कथं लब्धिरूपं श्रुतज्ञानं भवति, न च वक्तव्यं तेषां भावश्रुतं नास्तीति, आगमे स्वीकृतत्वात्, तदुक्तं—"दव्वसुयाभावंमिवि भावसुयं पत्थिवाईणं" इति । भावश्रुतं तु शब्दार्थपर्यालोचनानुसारिविज्ञानं शब्दार्थपर्यालोचनं चाक्षरमन्तरेण न भवतीति चेत्? सत्यमेतत्, परं तेषां परोपदेशश्रवणाभावेऽपि तथाविधक्षयोपशमभावतस्तेषां कश्चिदव्यक्तोऽक्षरलाभो भवति यद्वशादक्षरानुषक्तं श्रुतज्ञानमुपजायते, तथाहि—आहाराद्यभिलाष एकेन्द्रियादीनामपि समुपजायते, अभिलाषश्च प्रार्थना सा च यदीदमहं प्राप्नोमि तदा भव्यं भवतीत्याद्यक्षरानुविद्धैव, ततस्तेषामपि काचिदव्यक्ताक्षरलब्धिरवश्यं प्रतिपत्तव्या, ततस्तेषामपि लब्ध्यक्षरं संभवतीति न कश्चिद्दोषः । लब्ध्यक्षरं षोढा भवति, तद्यथा—श्रोत्रेन्द्रियलब्ध्यक्षरं चक्षुरिन्द्रियलब्ध्यक्षरं घ्राणेन्द्रियलब्ध्यक्षरं रसनेन्द्रियलब्ध्यक्षरं स्पर्शनेन्द्रियलब्ध्यक्षरं नोइन्द्रियलब्ध्यक्षरमिति । शब्दार्थपर्यालोचनानुसारिविज्ञानं तच्छ्रोत्रेन्द्रियलब्ध्यक्षरं श्रोत्रेन्द्रियनिमित्तत्वात् । यत्पुनश्चक्षुषा आम्रफलाद्युपलभ्याम्रफलमित्याद्यक्षरानुविद्धं शब्दार्थपर्यालोचनात्मकं विज्ञानं तच्चक्षुरिन्द्रियलब्ध्यक्षरमेवं शेषेन्द्रियलब्ध्यक्षरमपि भावनीयमुक्तमक्षरश्रुतम् ।

अनक्षरश्रुतमनेकविधमुच्छ्वसितनिःश्वसितनिष्ठ्यूतकासितक्षुतपूत्कृतसीत्कारादिकमपि ध्वनिमात्रत्वेन भावश्रुतस्य कार-

गत्वात् कार्यत्वाच्च द्रव्यश्रुतं भवति । तथाहि–यदाऽभिसन्धिपूर्वकं विशेषतरमुच्छ्वासादिकं कोऽपि पुमान् कस्यचिद-
र्थस्य ज्ञप्तये प्रयुङ्क्ते तदा तत्प्रयोक्तुर्भावश्रुतस्य फलं श्रोतुश्च कारणं भवति, तत उच्छ्वसितादीनामपि द्रव्यश्रुतत्वेन व्यपदेशः
क्रियते । ननु तर्हि शिरोधूननकरचलनादिचेष्टाया अपि द्रव्यश्रुतत्वप्रसङ्गो यतो बुद्धिपूर्विका क्रियमाणा सा तत्कर्त्तुर्भाव-
श्रुतस्य फलं द्रष्टुश्च कारणमिति चेत्? सत्यं, किन्तु सान्वर्थाश्रयणात् न दोषः, तथाहि–श्रूयते तच्छ्रुतमित्युच्यते, न च
चेष्टा श्रूयते, ततो न द्रव्यश्रुतत्वप्रसङ्गः, उच्छ्वसितादिकं तु श्रूयते, अनक्षरात्मकं च तदित्युक्तमनक्षरश्रुतम् ।

सञ्ज्ञानं सञ्ज्ञा, साऽस्यास्तीति सञ्ज्ञी । सा च त्रिविधा भवति। तद्यथा–दीर्घकालिकी हेतुवादोपदेशिकी दृष्टिवादोपदेशि-
कीति । ननु यदि संज्ञासम्बन्धात् सञ्ज्ञिन उच्यन्ते तदा सर्वेऽपि संज्ञिनः स्युः यत एकेन्द्रियादीनां दशविधा सञ्ज्ञा प्रज्ञा-
पनायामुक्ता, तत्सूत्रम्–"एगिंदियाणं भंते कइविहा सण्णा पन्नत्ता? गोयमा! दसविहा, तं जहा–आहारसण्णा भयसण्णा मेहुणसण्णा परिग्गहसण्णा कोहसण्णा माणसण्णा मायासण्णा लोहसण्णा ओहसण्णा लोगसण्णा" इति, एवं द्वीन्द्रियादीनामपि वाच्यम्, ततः
केऽसञ्ज्ञिनः स्युरिति चेत्? सत्यम्, परन्तु न तया सञ्ज्ञया सञ्ज्ञित्वं वक्तुं युज्यते, स्तोकमात्रत्वात् मोहजन्यत्वाच्च, नहि कार्षा-
पणमात्रास्तित्वेन लोकेऽपि धनवानुच्यते, नाप्यविशिष्टेन रूपेण रूपमात्रेण वा 'रूपवान्' इत्यभिधीयते, किन्तु बहुद्रव्येण
धनवान् प्रशस्तरूपेण रूपवाँश्च व्यपदिश्यते, एवमत्रापि महत्या ज्ञानावरणकर्मक्षयोपशमजन्यमनोज्ञानरूपया विशिष्टस-
ञ्ज्ञया संज्ञित्वं व्यपदिश्यते । यया सुदीर्घमप्यतीतमर्थं स्मरति भविष्यद्वस्तु च चिन्तयति कथं नु नाम कर्त्तव्यमिति सा दीर्घ-
कालिकी । दीर्घोऽतीतानागतवस्तुविषयः कालो यस्यां सेति विग्रहः । एषा च सञ्ज्ञा यस्यास्त्यसौ दीर्घकालिकसंज्ञया सञ्ज्ञी ।

स च मनोज्ञानावरणकर्मक्षयोपशमात् मनोलब्धिसम्पन्नो मनोयोग्याननन्तान् स्कन्धान् मनोवर्गणाभ्यो गृहीत्वा मनस्त्वेन परिणमय्य मननीयं वस्तु मन्यते । एष च प्रायः सर्वमप्यर्थं स्फुटरूपमुपलभते, तथाहि–यथा चक्षुष्मान् प्रदीपादिप्रकाशेन स्फुटमर्थमुपलभते तथैषोऽपि पूर्वापरानुसन्धानेन यथावस्थितमर्थमुपलभते । यत्तु नन्दीसूत्रे ईहाऽपोहो मार्गणा गवेषणा चिन्ता विमर्शो विद्यते यस्य प्राणिनः स दीर्घकालिक्युपदेशेन सञ्ज्ञीत्युक्तं तदपि मनोलब्धिसम्पन्नस्यैव भवति, नान्यस्य । तत्रेहा–सदर्थपर्यालोचनम्, अपोहः–निश्चयः, मार्गणा–अन्वयधर्मान्वेषणरूपा, गवेषणा–व्यतिरेकधर्मस्वरूपपर्यालोचनम्, चिन्ता–कथमिदं भूतं कथं चेदं सम्प्रति कर्त्तव्यं कथं चैतद्भविष्यतीति पर्यालोचनम्, विमर्शः–इदमित्थमेव घटते इत्थं वा तद्भूतमित्थमेव वा तद्भावीति यथावस्थितवस्तुस्वरूपनिर्णय इति ।

तथा हेतुः कारणं निमित्तमित्यनर्थान्तरं वदनं वादः तद्विषय उपदेशः प्ररूपणं हेतुवादोपदेशः तेन सञ्ज्ञी, अयमाशयः–यो बुद्धिपूर्वकं स्वदेहपरिपालनार्थमिष्टेष्वाहारादिषु वस्तुषु प्रवर्त्तते, अनिष्टेभ्यश्च निवर्त्तते स हेतूपदेशेन सञ्ज्ञी द्वीन्द्रियादिरपि वेदितव्यः, तथाहि–इष्टानिष्टविषयप्रवृत्तिनिवृत्तिसञ्चिन्तनं न मनोव्यापारमन्तरेण सम्भवति, मनसा पर्यालोचनं सञ्ज्ञा, सा च द्वीन्द्रियादेरपि विद्यते, तस्यापि प्रतिनियतेष्टानिष्टविषयप्रवृत्तिनिवृत्तिदर्शनात् । नवरमस्य चिन्तनं प्रायो वर्तमानकालविषयं न भूतभविष्यद्विषयमिति । एवं द्वीन्द्रियादिः दीर्घकालिक्युपदेशेन सञ्ज्ञी न भवति, किन्तु हेतुवादोपदेशेन । यस्य पुनर्नास्त्यभिसन्धारणपूर्विका करणशक्तिः स जीवो हेतुवादोपदेशेनाप्यसञ्ज्ञी लभ्यते, स चैकेन्द्रियो वेदितव्यः ।

दृष्टिवादोपदेशेन सम्यग्दृष्टिः क्षायोपशमिके ज्ञाने वर्तमानः सञ्ज्ञी भवति, विशिष्टसंज्ञाया युक्तत्वात् । मिथ्यादृष्टिस्त्व-

संज्ञी विपर्यस्तत्वेन वस्तुतः संज्ञारहितत्वात्। नन्वविशुद्धत्वात् प्रथमं हेतुवादसंज्ञा ततो विशुद्धत्वात् कालिकसंज्ञा ततोऽपि विशुद्धतरत्वात् दृष्टिवादसंज्ञेत्येवं विशुद्धं क्रमं मुक्त्वा कथमादौ दीर्घकालिकी संज्ञोपन्यस्तेति चेत्? सत्यम्, परं सर्वत्र सूत्रे यत्र क्वचित् संज्ञी असंज्ञी वा परिगृह्यते तत्र सर्वत्रापि प्रायः कालिक्युपदेशेन गृह्यते न हेतूपदेशेन नापि दृष्टिवादोपदेशेन, तत एतत्सम्प्रत्ययार्थमादौ दीर्घकालिकी संज्ञोपन्यस्तेति। तदेवं संज्ञिनस्त्रिविधत्वात् श्रुतमपि तदुपाधिभेदात्त्रिविधं भवति। तस्य श्रुतं सञ्ज्ञिश्रुतम्।

यस्य पुनर्नास्ति ईहापोहो मार्गणा गवेपणा चिन्ता विमर्शः सोऽसञ्ज्ञी वक्तव्यः। स च समूर्च्छिमपञ्चेन्द्रियविकलेन्द्रियादिर्विज्ञेयः। स हि स्वल्पस्वल्पतरमनोलब्धिसम्पन्नत्वादस्फुटमस्फुटतरमेवार्थं जानाति। तथाहि–सञ्ज्ञिपञ्चेन्द्रियतः समूर्च्छिमपञ्चेन्द्रियोऽस्फुटमर्थं जानाति, ततोऽस्फुटं चतुरिन्द्रियस्ततोऽप्यस्फुटतरं त्रीन्द्रियस्ततोऽप्यस्फुटतमं द्वीन्द्रियस्ततोऽप्यस्फुटतममेकेन्द्रियस्तस्य प्रायो मनोद्रव्यासम्भवात्। केवलमव्यक्तमेव किञ्चिदतीवाल्पतरं मनोद्रव्यं द्रष्टव्यं येनाहारादिसञ्ज्ञा अव्यक्तरूपाः प्रादुष्पन्ति। एवमसंज्ञिनः श्रुतमसंज्ञिश्रुतमिति। तथा च नन्दिसूत्रम्–"से किं तं सण्णिसुअं? २ तिविहं पण्णत्तं तं जहा कालिओवएसेणं हेऊवएसेणं दिट्ठिवाओवएसेणं। से किं तं कालिओवएसेणं? कालिओवएसेणं जस्स णं अत्थि ईहा अवोहो मग्गणा गवसेणा चिन्ता वीमंसा से णं सण्णीति लब्भइ जस्स णं नत्थि ईहा अवोहो मग्गणा गवेसणा चिन्ता वीमंसा से णं असन्नीति लब्भइ, से तं कालिओवएसेणं। से किं तं हेऊवएसेणं? जस्स णं अत्थि अभिसंधारणपुव्विआ करणसत्ती से णं सण्णीत्ति लब्भइ, जस्स णं नत्थि अभिसंधारणपूव्विआ करणसत्ती से णं असण्णीत्ति लब्भइ, से तं हेऊवएसेणं। से किं तं दिट्ठिवाओवएसेणं?

दिट्ठिवाओवएसेणं सण्णिसुअस्स खओवसमेणं सण्णी लब्भइ, असण्णिसुअस्सखओवसमेणं असण्णी लब्भइ, से तं दिट्ठिवाओवएसेणं से तं सण्णिसुअं, से तं असण्णिसुअं" इति ।

अर्हद्भिर्भगवद्भिरुत्पन्नज्ञानदर्शनधरैस्त्रैलोक्यनिरीक्षितमहितपूजितैरतीतप्रत्युत्पन्नानागतज्ञैः सर्वज्ञैः सर्वदर्शिभिः यत्प्रणीतमाचाराङ्गादिद्वादशाङ्गं गणिपिटकं तत् सम्यक् श्रुतमावश्यकाद्यनङ्गप्रविष्टमपि तत्त्वतोऽर्हत्प्रणीतत्वात् परमार्थतो द्वादशाङ्गातिरिक्तार्थाभावाच्च तद्ग्रहणेन गृहीतमेव द्रष्टव्यम् । एतच्च स्वामित्वसम्बन्धाविवक्षया स्वरूपेण सम्यक् श्रुतम् । स्वामित्वसम्बन्धापेक्षया तु सम्यग्दृष्टिपरिगृहीतमाचाराङ्गादिकं भारतरामायणादिकं वा सम्यक् श्रुतं मिथ्या श्रुतं वा सम्यक् श्रुतं भवति, यथावस्थितार्थतया सम्यक् परिणमनात् । तत्रापि चतुर्दशपूर्वधरेभ्यः समारभ्य यावत् सम्पूर्णदशपूर्वधरास्तावन्नियमेन सम्यग्दृष्टयो भवन्ति, न मिथ्यादृष्टयो यतस्ते तथास्वाभाव्यात् सातिशयं श्रुतज्ञानं न लभन्ते, तथाहि—यथा अभव्यो ग्रन्थिदेशमुपागतोऽपि तथास्वाभाव्यात् न ग्रन्थिभेदं विधत्ते एवं मिथ्यादृष्टिरपि श्रुतमवगाहमानः उत्कृष्टतोऽपि तावदवगाहते यावत्किञ्चिन्न्यूनानि दश पूर्वाणि, परिपूर्णानि तानि नावगाढुं शक्नोति, तथास्वाभाव्यादिति । तदुक्तं महाभाष्ये—"चोद्दसदसयअभिन्ने नियमा सम्मत्तं सेसए भयणा" इति । मिथ्यादृष्टेस्तु सम्यक् श्रुतमपि मिथ्या श्रुतं भवति विपरीतार्थतया तस्य परिणमनादिति । मिथ्यादृष्टिभिः स्वबुद्धिकल्पनाशिल्पिकल्पितं भारतरामायणादिकं स्वरूपतो मिथ्याश्रुतं यथावस्थितवस्त्वभिधानविकलत्वात् । स्वामित्वसम्बन्धविवक्षायां तु आचाराङ्गादिकं मिथ्यादृष्टिपरिगृहीतं मिथ्याश्रुतं भवति, विपरीताभिनिवेशवृद्धिहेतुत्वात् । यद्वा कस्यचिन्मिथ्यादृष्टेर्वेदादिकं मिथ्याश्रुतमपि सम्यक्श्रुतं भवति, सम्यक्त्वहेतुत्वात् । केनापि तत्र पूर्वा-

परविरोधमुद्भाव्य नोदितः सन् स्वपक्षं विमुच्य सम्यग्दर्शनं प्रतिपद्यते, यदुक्तं **नन्दिसूत्रे**–"अहवा मिच्छदिट्ठिस्सवि एयाइं चेव स-म्मसुअं, कम्हा ? सम्महेउत्तणओ, जम्हा ते मिच्छदिट्ठिआ तेहिं चेव समएहिं चोइआ समाणा केइ सपक्खदिट्ठीओ चयंति" **वृत्तिः**–"सम्य-क्त्वहेतुत्वात्, सम्यक्त्वहेतुत्वमेव भावयति–यस्मात्ते मिथ्यादृष्टयस्तैरेव समयैः सिद्धान्तैः वेदादिभिः पूर्वापरविरोधेन यथा रागादिपरीतः पुरु-षस्तावन्नातीन्द्रियमर्थमवबुध्यते रागादिपरीतत्वादस्मादृग्वद् , वेदेषु चातीन्द्रियाः प्रायोऽर्था व्यावर्ण्यन्ते, अतीन्द्रियार्थदर्शी च वीतरागः सर्वज्ञो नाभ्युपगम्यते ततः कथं वेदार्थप्रतीतिरित्येवमादिलक्षणेन नोदिताः सन्तः केचन विवेकिनः सत्या ( त्यक्या ) दय इव स्वपक्षदृष्टयः स्वदर्शनानि त्यजन्ति भगवच्छासनं प्रतिपद्यन्ते इत्यर्थः। तत एवं सम्यक्त्वहेतुत्वाद्वेदादीन्यपि शास्त्राणि केषाञ्चिन्मिथ्यादृष्टीनामपि सम्यक्श्रुतम्" इति ।

अथ सप्रतिपक्षमनाद्यपर्यवसितं श्रुतमुच्यते–तत्र द्रव्यार्थिकनयापेक्षया श्रुतज्ञानमनाद्यपर्यवसितं श्रुतज्ञाननिष्ठाधेयतानिरूपि-तजीवनिष्ठाधारतायाः सार्वदिकत्वात् । पर्यायनयापेक्षया तु तदाधारतायाः कादाचित्कत्वेन सादिसपर्यवसितं श्रुतज्ञानं भवति ।

यद्वा द्रव्यक्षेत्रकालभावभेदाच्चतुर्विधं श्रुतज्ञानं भवति । तत्रैकं पुरुषमाश्रित्य सम्यक्श्रुतं सादिसपर्यवसितं भवति, कथ-मिति चेत् ? सम्यक्त्वप्राप्तितः प्रथमपाठतो वा सादि; पुनर्मिथ्यात्वप्राप्तौ सम्यक्त्वसद्भावेऽपि वा प्रमादभावतो महाग्लान-त्वभावेन वा विस्मृतिमुपागते सति सपर्यवसितं, यद्वा कश्चिच्चतुर्दशपूर्ववेदी मुनिः पञ्चत्वं प्राप्य देवत्वं प्राप्तस्तत्र च पूर्वाधीतं सर्वं श्रुतं न स्मरति, तदेकदेशे तु भजना, तदुक्तं **महाभाष्ये**–"चोद्दसपुव्वी मणुओ देवत्ते तं न संभरइ सव्वं । देसम्मि होइ भयणा सट्ठाणभावे विभयणाउ ॥ १ ॥" अत्र "देशे पुनरेकाङ्गलक्षणे" इति **कल्पचूर्णिः**, **कोट्याचार्यव्याख्यानं** तु–"देशे सूत्रार्थे सूत्र-मात्रादौ च" इति, "इदं च पूर्वगतसूत्रापेक्षं संभाव्यते, अन्यथा कल्पेन सह विरोधापत्तेः, भजना विकल्पना भवति, यथोक्तं देशं स्मरति

न स्मरत्यपीत्यर्थः" इति हेमचन्द्रसूरिपादाः विशेषावश्यकवृत्तौ । यस्य सर्वथा न स्मरति तदपेक्षया सपर्यवसितमिति । यद्वा केवलज्ञानोत्पत्तौ कस्यचिदिह भवेऽपि सपर्यवसितं श्रुतं भवति, 'नट्ठम्मि उ छाउमत्थिए नाणे' इति वचनात्। कालत्रयवर्तिनो बहुपुरुषान् प्रतीत्य त्वनाद्यपर्यवसितं श्रुतं भवति, कालवत् सन्तानभावेन प्रवृत्तत्वात्। तथा क्षेत्रमाश्रित्य पञ्चसु भरतेषु पञ्चस्वैरवतेष्ववसर्प्पिण्यां तृतीयारकपर्यवसाने उत्सर्प्पिण्यां दुष्षमसुषमाख्यतृतीयारकप्रारम्भे तीर्थकरधर्मसङ्घानां प्रथमतयोत्पत्तेः सादि, एकान्तदुष्षमादौ तदभावात् सपर्यवसितम्, तथा महाविदेहान् प्रतीत्यानाद्यपर्यवसितं तत्र प्रवाहापेक्षया तीर्थकरादीनामव्यवच्छेदात् । तथा कालतोऽवसर्प्पिण्यां तृतीयचतुर्थपञ्चमारकेषूत्सर्प्पिण्यां तृतीयचतुर्थारकयोः सम्यक्श्रुतं भवति, न शेषारकेषु ततः सादिसपर्यवसितं भवति । नोत्सर्प्पिणीमवसर्प्पिणीमाश्रित्यानाद्यपर्यवसितं श्रुतज्ञानं भवति, महाविदेहेषु श्रुतस्य सदैवावस्थितत्वात्। भावतः पुनर्विचार्यमाणे प्रज्ञापकं गुरुं श्रुतप्रज्ञापनीयांश्चार्थानासाद्येदं सादिसपर्यवसितम् । ननु प्रज्ञापकं प्रज्ञापनीयांश्चार्थानाश्रित्य कथं सादिसपर्यवसितं श्रुतं भवतीति चेत् ? उच्यते—आन्तरः श्रुतपरिणामो ध्वनिः स्थानविशेषाः प्रयत्नाः एते च धर्मा गुरौ व्याख्यानादि कुर्वति सति भवन्ति, ते चानित्यत्वात् सादिसपर्यवसिताः, ततश्चैतानाश्रित्य वक्तुरनन्यत्वात् श्रुतज्ञानमपि सादिसपर्यवसितं भवति । तथा गतिस्थितिभेदसङ्घातशब्दवर्णादीनां श्रुतग्राह्यधर्माणामनित्यत्वेन ग्राह्यनिबन्धनं च ग्राहकमतः सादिसपर्यवसितं श्रुतं भवति । क्षायोपशमिकभावमाश्रित्यानाद्यपर्यवसितं प्रवाहरूपेण तस्य सदैव भावादिति । यद्वा श्रुतस्य चतुर्भङ्गिका तद्यथा—सादिसपर्यवसितं साद्यपर्यवसितमनादिसपर्यवसितमनाद्यपर्यवसितमिति । तत्र भव्यस्य सम्यक्श्रुतं सादिसपर्यवसितं सम्यक्त्वप्राप्तौ प्रथमतया

भावात् भूयो मिथ्यात्वप्राप्तौ केवलज्ञानोत्पत्तौ वा विनाशात् । द्वितीयो भङ्गः शून्यो नहि सम्यक्श्रुतं मिथ्याश्रुतं वा सादी- भूत्वाऽपर्यवसितं सम्भवति, मिथ्यात्वप्राप्तौ केवलज्ञानप्राप्तौ वाऽवश्यं सम्यक्श्रुतस्य विनाशात् । मिथ्याश्रुतस्यापि च सा- देरवश्यं कालान्तरे सम्यक्त्वप्राप्तावभावादिति । तृतीयभङ्गकस्तु मिथ्याश्रुतापेक्षया वेदितव्यः, तथाहि—अनादिमिथ्यादृष्टे- र्भव्यस्य मिथ्याश्रुतमनादि सम्यक्त्वप्राप्तौ च तदपयातीति सपर्यवसितम् । चतुर्थभङ्गस्त्वभव्यस्य मिथ्याश्रुतमनाद्यपर्यवसितं तस्य सदैव सम्यक्त्वगुणविहीनत्वात् । इयं चतुर्भङ्गी मतिज्ञानस्यापि द्रष्टव्या, मतिश्रुतयोरन्योऽन्यानुगतत्वात् । केवलमिह श्रुतप्रस्तावात्तद्विषया दर्शिता । तदेवं सप्रतिपक्षं सादिसपर्यवसितं श्रुतमुक्तम् ।

अथ सप्रतिपक्षं गमिकश्रुतमुच्यते—इहादिमध्यावसानेषु कश्चिद्विशेषतो भूयो भूयस्तस्यैव सूत्रस्योच्चारणं गमः, तत्रादौ— "सूयं मे आउसंतेणं भगवया एवमक्खायं इह खलु" इत्यादि, एवं मध्यावसानयोरपि यथासंभवं द्रष्टव्यम्, तदुक्तं नन्दि- चूर्णौ—"आई मज्झे अवसाणे वा किंचि विसेसजुत्तं दुगाइ सयग्गसो तमेव पढिज्जमाणं गमियं भणइ" इति । यद्वा गमाः भङ्गकाः गणि- तविशेषास्तद्बहुलं गमिकम्, अथवा गमाः सदृशपाठास्ते च कारणवशेन यत्र बहवो भवन्ति तद्गमिकं एवंविधं च प्रायः दृष्टि- वादे भवति, तदुक्तं—"गमियं दिट्ठिवाओ" इति । यच्च प्रायः गाथाश्लोकवेष्टकाद्यसदृशपाठात्मकं तदगमिकं । तच्च प्रायः आचाराङ्गादिकालिकश्रुतमित्युक्तं सप्रतिपक्षं गमिकश्रुतम् ।

अथ सप्रतिपक्षमङ्गप्रविष्टमुच्यते—इह पुरुषस्य द्वादशाङ्गानि भवन्ति, तद्यथा—द्वौ पादौ द्वे जङ्घे द्वे ऊरुणी द्वे गात्रार्धे द्वौ बाहू ग्रीवा शिरश्च, एवं श्रुतरूपस्यापि पुरुषस्याचारादीनि द्वादशाङ्गानि क्रमेण ज्ञातव्यानि, तदुक्तं—"पायदुगं जंघोरू-

गायद्गदुगं तु दोयबाहूया । गीवासिरं च पुरुसो बारस अङ्गो सुयविसिट्ठो" ॥१॥ इति । श्रुतपुरुषस्याङ्गेषु प्रविष्टमङ्गप्रविष्टमङ्गभावेन व्यवस्थितमित्यर्थः, यत्पुनरेतस्यैव द्वादशाङ्गस्य व्यतिरेकेण व्यवस्थितमनङ्गप्रविष्टम् । यद्वा गणधरदेवकृतं तदङ्गप्रविष्टं मूलभूतमित्यर्थः । गणधरदेवा हि आचाराङ्गादिमूलभूतं श्रुतमुपरचयन्ति, सर्वोत्कृष्टश्रुतलब्धिसम्पन्नत्वात् न शेषाः । ततस्तत्कृतं सूत्रं मूलभूतमङ्गप्रविष्टमुच्यते । अङ्गैकदेशमुपजीव्य श्रुतस्थविरैः विरचितं सूत्रमनङ्गप्रविष्टं यद्वा यत् सर्वदैव नियतमाचाराङ्गादिकं श्रुतं तदङ्गप्रविष्टं, सर्वदैव नियतत्वं च सर्वेषु क्षेत्रेषु सर्वदार्थ क्रमं चाधिकृत्यैवमेव व्यवस्थितमिति, तद्भिन्नं श्रुतमनङ्गप्रविष्टमिति । यद्वा वारत्रयं गणधरपृष्टस्य तीर्थकरस्य सम्बन्धि यत् प्रतिवचनमुत्पादव्ययध्रौव्यात्मकं पदत्रयं तन्निष्पन्नं श्रुतमङ्गप्रविष्टम्, यदप्रश्नपूर्वकमर्थप्रतिपादनं तन्निष्पन्नं श्रुतं मुत्कलमनङ्गप्रविष्टमिति । तदुक्तं—गणहरकयमङ्गकयं जं कयं थेरेहिं बाहिरं तं तु । निययं वङ्गपविट्ठं अणुयं बाहिरं भणियं ॥१॥" महाभाष्येऽपि—"गणहरथेरकयं वा आएसा मुक्कवागरणओ वा । धुवचलविसेसओ वा अंगाणंगेसु नाणत्तं ॥१॥" इत्युक्तं सप्रतिपक्षमङ्गप्रविष्टम् । उक्ताः श्रुतज्ञानस्य भेदा इति ।

अथ विषयतः तन्निरूप्यते—तत्र द्रव्यतः श्रुतज्ञानी सर्वाणि द्रव्याणि जानाति पश्यति, क्षेत्रतः सर्वं क्षेत्रं जानाति पश्यति कालतः सर्वकालं जानाति पश्यति, भावतः सर्वान् भावान् जानाति पश्यति, तथाच **नन्दिसूत्रम्**—"से समासओ चउव्विहे पण्णत्ते तं जहा दव्वओ खित्तओ कालओ भावओ, तत्थ दव्वओ णं सुअनाणी उवउत्ते सव्वदव्वाइं जाणइ पासइ, कालओ णं सुअनाणी उवउत्ते सव्वं कालं जाणइ पासइ, भावओ णं सुअनाणी उवउत्ते सव्वे भावे जाणइ पासइ" । अत्र **मलयगिरीया वृत्तिः**—"से समासओ इत्यादि तद् द्वादशाङ्गं समासतश्चतुर्विधं प्रज्ञप्तं तद्यथा—द्रव्यतः क्षेत्रतः कालतो भावतश्च, तत्र द्रव्यतो'ण'मिति वाक्या-

लङ्कारे, श्रुतज्ञानी उपयुक्तः सर्वद्रव्याणि जानाति पश्यति, तत्राह–ननु पश्यतीति कथं ? न हि श्रुतज्ञानी श्रुतज्ञानज्ञेयानि सकलानि
वस्तूनि पश्यति, नैष दोषः, उपमाया अत्र विवक्षितत्वात्, पश्यतीव पश्यति, तथाहि–मेर्वादीन् पदार्थानदृष्टानप्याचार्यः शिष्येभ्य आलि-
ख्य दर्शयति ततस्तेषां श्रोतृणामेवं बुद्धिरुपजायते भगवानेष गणी साक्षात्पश्यन्निव व्याचष्टे इति, एवं क्षेत्रादिष्वपि भावनीयं, ततो न
कश्चिद्दोषः, अन्ये तु न पश्यन्तीति पठन्ति, तत्र चोद्यस्यानवकाश एव, श्रुतज्ञानी चेहाभिन्नदशपूर्वधरादिश्रुतकेवली परिगृह्यते, तस्यैव निय-
मतः श्रुतज्ञानबलेन सर्वद्रव्यादिपरिज्ञानसम्भवात्, तदारतस्तु ये श्रुतज्ञानिनस्ते सर्वद्रव्यादिपरिज्ञाने भजनीयाः, केचित्सर्वद्रव्याणि जानन्ति
केचिन्नेति भावः, इत्थम्भूता च भजना मतिवैचित्र्याद्वेदितव्या, आह च **चूर्णिकृत्**–''आरओ पुण जे सुयनाणी ते सव्वदव्वनाणपासमा-
णासु भइया, सा य भयणा मइविसेसओ जाणियव्वत्ति" इति। **नन्दीचूर्णौ**–''अदिट्ठाणावि मेरुमादियाण पासणयाए आयरिया लिहइ णो
वाऽदिट्ठं लेक्खइ, पण्णवणाए य भणिता सुयणाणपासणत्ति ण विरोहो" इति। **हारिभद्रीयवृत्तौ** च–''अत्राह–ननु पश्यतीति कथं ?
सकलगोचरदर्शनायोगाद्, अत्रोच्यते–प्रज्ञापनायां श्रुतज्ञानपश्यत्तायाः प्रतिपादितत्वादनुत्तरविमानादीनां चालेख्यकरणात्, सर्वथा चादृष्ट-
स्यालेख्यकरणानुपपत्तेः, एवं क्षेत्रादिष्वपि भावनीयमिति । अन्ये तु न पश्यतीत्यभिदधति" । **महाभाष्ये** तु–''उवउत्तो सुयनाणी सव्वं
दव्वाइं जाणइ जहत्थं पासइ य केइ सो पुण तमचक्खुदंसणेणंति ॥१॥ तेसिमचक्खुदंसणसामण्णओ कहं न मइनाणी । पासइ पासइ य
कहं सुयनाणी किं कओ भेओ ? ॥२॥ मइभेयमचक्खुदंसणं च वज्जित्तु पासणा भणिया । पण्णवणाए उ फुडा तेण सुए पासणा जुत्ता"
॥३॥ वृत्तिः–''उपयुक्तो दत्तोपयोगः श्रुतज्ञानी सर्वं द्रव्यादि यथार्थं यथावद् यथा सर्वज्ञेनोक्तं तथा जानाति द्रव्यतः पञ्चास्तिकाय-
द्रव्याणि, क्षेत्रं लोकालोकाकारं, कालमतीतादिरूपं, भावानौदयिकादीन्, जानाति स्पष्टावभासिना श्रुतज्ञानेनाऽवबुध्यते, न तु सामान्यग्राहिणा

दर्शनेन पश्यति, तस्य तदसम्भवात्, यथाहि मनःपर्यायज्ञानं स्वभावेनैव स्पष्टार्थग्राहकमिति न तत्र दर्शनम्, एवं श्रुतज्ञानेऽपि, तदपि ह्यर्थ-विकल्पनावस्थायामन्तर्जल्पाकारत्वाद् विशेषमेव गृह्णाति न सामान्यमितिभावः । तथा च **नन्दिसूत्रम्**--"तं समासओ चउव्विहं पण्णत्तं तं जहा--दव्वओ खेत्तओ कालओ भावओ । दव्वओ णं सुयनाणी उवउत्तो सव्वदव्वाइं जाणइ न पासइ, एवं सव्वखेत्तं सव्वकालं सव्वभावे जाणइ न पासइ" इति । अन्ये तु नञः पाठं न मन्यन्ते । ततश्च "जाणइ पासइ" इति पठन्ति । अतः श्रुतज्ञान्यपि दर्शनेन पश्यति इति ते मन्यन्ते, यच्चासौ दर्शनेन पश्यति तदचक्षुर्दर्शनेनेति मन्यन्ते । इदमत्र हृदयम्--यस्य श्रुतज्ञानं तस्य मतिज्ञानमवश्यमेव भवति । मति-ज्ञानस्य श्रुतज्ञानस्य च चक्षुरचक्षुर्दर्शनभेदात् द्विभेदं दर्शनमुक्तम् । तत्र किल चक्षुर्दर्शनेन मतिज्ञानं पश्यति, अचक्षुर्दर्शनेन पुनः श्रुतमिति ॥१॥ एतत् तेषां मतमसमीक्षिताभिधानत्वाद् यदृच्छावादमात्रमिति दर्शयन्नाह--एतेषां नञः पाठमनभ्युपगच्छतां मतिज्ञानश्रुतज्ञानयोरि-न्द्रियमनोनिमित्ततासाम्यादचक्षुर्दर्शने समानेऽपि कथं हन्त ! तेनाचक्षुर्दर्शनेन मतिज्ञानी न पश्यति ? कथं वा तेन श्रुतज्ञानी पश्यति ? यदि हि श्रुतज्ञानी तेन पश्यति तर्हि मतिज्ञान्यपि पश्यतु, अथासौ न पश्यति तर्हीतरोऽपि मा पश्यतु । ननु किंकृतोऽयं भेदो यदचक्षु-र्दर्शने समानेऽपि तेनैकं ज्ञानं पश्यति, अपरं तु न पश्यति ? स्वेच्छाभाषितत्वमात्रं विहाय नापरमत्र कारणं पश्याम इति भावः । तस्मात् "जाणइ न पासइ" इति स्थितमिति ॥२॥ अथवा प्रज्ञापनोक्तां पश्यत्तामाश्रित्य श्रुतज्ञानेऽपि पश्यत्तोक्ता, ततश्च "जाणइ पासइ" इत्यपि पाठो युक्त इति दर्शयन्नाह--मतेर्भेदो मतिभेदो मतिज्ञानमत्यज्ञानलक्षणस्तं तथाऽचक्षुर्दर्शनं च वर्जयित्वा येन कारणेन प्रज्ञापनायां त्रिंशत्तम-पदे पश्यत्ता स्फुटा व्यक्ता भणिता तेन श्रुते श्रुतज्ञानेऽपि पश्यत्ता युक्ता, "जाणइ पासइ" इति पाठो युक्त इत्यर्थः । तथा च **प्रज्ञापनात्रिंशत्तमपदसूत्रम्**--"कइविहा णं भन्ते ! पासणया पण्णत्ता ! गोयमा ! दुविहा तं जहा--सागारपासणया य अणागारपासणया य सागारपास-

णया णं भन्ते ! कइविहा पण्णत्ता ? गोयमा । छव्विहा पण्णत्ता, तं जहा सुयनाणसागारपासणया ओहिमणपज्जवकेवलनाणसागारपासणया सुयअन्नाणविभंगनाणसागारपासणया य । अणागारपासणया णं भन्ते ! कइविहा पण्णत्ता ? गोयमा ! तिविहा पण्णत्ता, तंजहा चक्खुदंसणओहिदंसणकेवलदंसणअणागारपासणया" इति । अथ 'पासणया' इति कः शब्दार्थः ? उच्यते—पश्यतो भावः पश्यत्तोपयोगइत्यर्थः, यथोपयोगशब्देन साकारानाकारभेदभिन्न उपयोगोऽभिधीयते तथा पश्यत्ताशब्देनापीत्यर्थः । आह—यद्येवं, पर्यायशब्दावेतौ तत् किमित्युपयोगात् पश्यत्ता पृथगधीता ? सत्यम्, किन्तु साकारोपयोगोऽष्टधा प्रोक्तः, साकारपश्यत्ता तु षोढा, मतिज्ञानमत्यज्ञानयोस्तदभणनात्, अनाकारोपयोगोऽपि चतुर्धा प्रोक्तः, अनाकारपश्यत्ता पुनस्त्रिधा, अचक्षुर्दर्शनस्य तदनभिधानात् । पश्यत्ताशब्दो हि 'दृशिर् प्रेक्षणे' अस्य धातोर्निष्पद्यते, प्रकृष्टं चेक्षणं त्रिकालविषये शीघ्रमेवार्थपरिच्छेदनपटिष्ठेऽवबोधे भवति । मतिज्ञानमत्यज्ञाने च प्रायः साम्प्रतकालविषये एव इति न तयोः पश्यत्ता । शीघ्रं चार्थपरिच्छेदः यथा चक्षुषः न तथा शेषाणां श्रोत्रघ्राणादीन्द्रियाणां, चक्षुरूपोपयोगापेक्षया तदुपयोगस्येन्द्रियपदे दीर्घदीर्घतरत्वेनाभिधानात् । मनसस्तु शीघ्रार्थपरिच्छेदेऽप्यनाकारपश्यत्ता न विवक्षिता उपयोगमात्रस्यैव तत्र विवक्षणादतोऽचक्षुर्दर्शनेऽपि न पश्यत्ता । तदेवं श्रुतावधिमनःपर्यायकेवलज्ञानश्रुताज्ञानविभङ्गज्ञानभेदात् षोढा साकारपश्यत्ता अष्टधा तु साकारोपयोगः, चक्षुरवधिकेवलदर्शनभेदात् तु त्रिधानाकारपश्यत्ता चतुर्धात्वनाकारोपयोगः इत्युपयोगपश्यत्तयोः भेदः । तदेवं मतिभेदौ अचक्षुर्दर्शनं च वर्जयित्वा श्रुतज्ञानादिषु प्रज्ञापनायां पश्यत्ता प्रोक्ता तामाश्रित्य सूत्रे उक्ता पश्यत्तेति स्थितम् । केषुचित्तु पुस्तकेषु 'तेण सुए पासणाऽजुत्ता' इत्येवमकारप्रश्लेषो दृश्यते, तत्राऽयमर्थः—पूर्वगाथायां 'पासइ य केइ सो पुण तमचक्खुदंसणेणं' इति वचनादचक्षुर्दर्शनमाश्रित्य श्रुतज्ञाने या पश्यत्ता प्रोक्ता सा इत्यतोऽप्ययुक्ता । कुतः ? इत्याह—येन प्रज्ञापनायां मतिभेदौ अचक्षुर्दर्शनं च वर्जयित्वैव पश्यत्ता प्रोक्ता । अतोऽचक्षुर्दर्शनमाश्रित्याऽयुक्तैव श्रुतज्ञाने

पश्यत्ता । ततो "जाणइ न पासइ" इति पाठ इति स्थितम् । इयं च गाथा पूर्वटीकाकारैर्गृहीता, 'कण्ठ्या' इतिच निर्दिष्टा, न तु व्याख्याता, अस्माभिस्तु यथावबोधं किञ्चिद् विवृता, सुधिया त्वन्यथाऽप्यविरोधतो व्याख्येयेति" । इत्युक्तं तत्त्वभेदविषयैः श्रुतज्ञानम् ॥

अथावधिज्ञानमुच्यते–तत्र क्षेत्रकालौ विषयभूतावाश्रित्यासंख्येयभेदं द्रव्यभावौ विषयभूतावाश्रित्य चानन्तभेदमवधिज्ञानं भवति, तच्च वाचः क्रमवर्तित्वेनायुषः परिमितत्वात् सर्वज्ञैरपि वक्तुमशक्यं, किं पुनरस्मादृशानामतो भवप्रत्ययक्षयोपशमभेदात् द्विविधमुच्यते–तत्र भवो नारकादिजन्म स पक्षिणां गगनगमनलब्धिरिवोत्पत्तौ कारणं यस्य तद्भवप्रत्ययं नारकदेवानाम् । क्षयश्चोपशमश्च क्षयोपशमस्तेन निवृत्तं क्षायोपशमिकं तच्च तपःप्रभृतिगुणपरिणामाविर्भूतक्षयोपशमविशेषात् नरतिरश्चां भवति । नन्ववधिज्ञानं क्षायोपशमिके भावे उक्तं नारकादिभवस्त्वौदयिके भावे इति कथं न विरोध इति चेत् अत्रोच्यते नारकदेवानामप्यवधिज्ञानं क्षयोपशमप्रत्ययमेव केवलं स च नारकदेवभवेऽवश्यमेव भवति । न च कर्म्मणां क्षयोपशमादयो भवनिमित्ता न भवन्तीति वक्तव्यम्, महाभाष्ये तथा प्रतिपादनात् । तद्ग्रन्थः–"ओही खओवसमिए भावे भणिओ भवो तहोदइए । तो किह भवपच्चइओ वोत्तुं जुत्तोऽवही दोण्हं ॥१॥ सो वि हु खओवसमओ किं तु स एव खओवसमलाभो । तम्मि सइ हो अवस्सं भण्णइ भवपच्चओ तो सो ॥२॥ उदयखयखओवसमोवसमा जं च कम्मुणो भणिया । दव्वं खित्तं कालं भवं च भावं च संपप्प ॥३॥" इति । ननु किं निमित्तमवधिज्ञानं क्षायोपशमिकमित्युच्यत इति चेत् ? अत्रोच्यते–उदयावलिकाप्रविष्टानां कर्म्मणां क्षये सत्यनुदयप्राप्तानां तु विपाकोदयविष्कम्भणलक्षणेनोपशमेनावधिज्ञानं जायत इति क्षयोपशमहेतुकमुच्यते । क्षयोपशमश्च देशघातिस्पर्द्धकानामुदये सति भवति, न सर्वघातिरसस्पर्द्धकानाम् । ननु कानि रसस्पर्द्धकानि देशघातीनि

कानि च सर्वघातीनि भवन्तीति चेत्? उच्यते–इह कर्म्मणां प्रत्येकमनन्तानन्तानि रसस्पर्द्धकानि भवन्ति। तत्र सर्वघातिनीनां देशघातिनीनां वा प्रकृतीनां यानि चतुःस्थानिकानि त्रिस्थानिकानि वा नियमतः सर्वघातीनि रसस्पर्द्धकानि भवन्ति। द्विस्थानिकरसस्पर्द्धकानि तु सर्वघातिनीनां सर्वघातीन्येव, देशघातिनीनां तु कानिचित् सर्वघातीनि कानिचित् देशघातीनीति मिश्राणि भवन्ति। एकस्थानिकरसस्पर्द्धकानि तु देशघातिनीनामेव भवन्ति, तानि च देशघातीन्येव। अवधिज्ञानावरणस्य यदा सर्वघातिरसस्पर्द्धकानि विपाकोदयमागतानि भवन्ति तदा तदावरणस्य केवलौदयिकभावत्वेनावधिज्ञानं न प्रादुर्भवति। यदा चावधिज्ञानावरणस्य सर्वघातिरसस्पर्द्धकेषु विशुद्धाध्यवसायतो देशघातिरूपतया परिणमनेन निहतेषु देशघातिरसस्पर्द्धकेषु चातिस्निग्धेष्वल्परसीकृतेषु तदन्तर्गतकतिपयरसस्पर्द्धकभागस्योदयावलिकाप्रविष्टस्य क्षये सति शेषस्य च विपाकोदयविष्कम्भणलक्षणे उपशमे सति जीवस्यावधिज्ञानं प्रादुर्भवति। तदाचावधिज्ञानावरणस्य कतिपयदेशघातिरसस्पर्द्धकक्षयोपशमात् कतिपयदेशघातिरसस्पर्द्धकानां चोदयात् क्षयोपशमानुविद्ध औदायिको भावः प्रवर्त्तते। एवमवधिदर्शनावरणचक्षुर्दर्शनावरणमनःपर्यवज्ञानावरणानामपि क्षयोपशमभावो बोध्यः। तदुक्तं—"निहिएसु सव्वघाईरसेसु फड्डेसु देसघाइणं। जीवस्स गुणा जायंति ओहिमणचक्खुमाइया" ॥ १ ॥ "निहिएसु'त्ति देशघातिरसस्पर्द्धकतया व्यवस्थापितेषु शेषं सुगमम्" तथा मतिश्रुतावरणाचक्षुर्दर्शनावरणान्तरायप्रकृतीनां तु सदैव देशघातिनामेव रसस्पर्द्धकानामुदयो न सर्वघातिनां रसस्पर्द्धकानां, तासां सदैवोदयानुविद्धक्षयोपशमभावः प्रवर्त्तते, न केवलं औदयिकः। मोहनीयस्य सर्वघातिनीनां प्रकृतीनां विपाकोदये क्षायोपशमिको भावो न भवति, तासां सर्वासां रसस्पर्द्धकानां सर्वघातित्वात्, प्रदेशोदये

तु न विरुद्ध्यते । ननु सर्वघातिरसस्पर्द्धकप्रदेशा अपि सर्वस्य घात्यगुणघातनस्वभावा इति तत्प्रदेशोदयेऽपि कथं क्षायोपशमिकभावसंभव इति चेत्? न, सर्वघातिरसस्पर्द्धकप्रदेशानामध्यवसायविशेषेण मनाग्मन्दानुभावीकृतविरलवेद्यमानदेशघातिरसस्पर्द्धकान्तःप्रवेशितानां यथास्थितस्ववलप्रकटनासमर्थत्वात् । तथा मोहनीयदेशघातिनीनां प्रकृतीनां प्रदेशोदये विपाकोदये वा क्षायोपशमिको भावो न विरुद्ध्यते, देशघातित्वात् । नवरं ता अध्रुवोदया इति तद्विपाकोदयाभावे क्षायोपशमिकभावे विजृम्भमाणे प्रदेशवत्योऽपि न मनागपि देशघातिन्यः । विपाकोदये तु प्रवर्त्तमाने क्षायोपशमिकभावसंभवे मनाग्मालिन्यमात्रकारित्वात् देशघातिन्यो भवन्तीति कृतं प्रसङ्गेन । तच्चावधिज्ञानं संक्षेपेण षड्विधं प्रज्ञप्तं, तद्यथा—आनुगामिकमनानुगामिकं वर्द्धमानं हीयमानं प्रतिपाति अप्रतिपातीति । तत्र गच्छन्तं पुरुषं लोचनवत् आ—समन्तादनुगच्छतीत्येवंशीलमानुगामिकं यद्वा अनुगमः प्रयोजनं यस्य तदानुगामिकमिति । तथा नानुगामिकमनानुगामिकं यत् शृङ्खलाप्रतिवद्धप्रदीपवत् न गच्छन्तमनुगच्छति तदवधिज्ञानमनानुगामिकमिति । तथा वर्द्धत इति वर्द्धमानं वहु वहुतरेन्धनप्रक्षेपादिभिर्वर्द्धमानदहनज्वालाकलापवत् पूर्वावस्थातो यथायोगं प्रशस्तप्रशस्ततराध्यवसायभावतोऽभिवर्द्धमानमवधिज्ञानं वर्द्धमानकमेतच्चासकृद्विशिष्टगुणविशुद्धिसापेक्षत्वात् । तथा हीयते तथाविधसामग्र्यभावतो हानिमुपगच्छतीति हीयमानं तदेव हीयमानकं पूर्वावस्थातो यदधो ऱ्हासमुपगच्छति तदुक्तं—"हीयमानं पुव्वावत्थाओ अहोऽहो हस्समाणं" इति । तथा प्रतिपतनशीलं प्रतिपाति यदुत्पन्नं सत् क्षयोपशमानुरूपं कियत्कालं स्थित्वा प्रदीप इव सामस्त्येन विध्वंसमुपयाति तत्प्रतिपाति । हीयमानप्रतिपातिनो भेदस्तु प्रतीत एव । तथा न प्रतिपाति अप्रतिपाति यदुत्पन्नं केवल-

ज्ञानादर्वाक् ध्वंसं नोपयाति । वर्धमानादीनां भेदानामानुगामिकानानुगामिकभेदान्तर्भावेऽपि विशेषावगमाय तेषां पृथगु-पादानम् । तत्रानुगामिकमवधिज्ञानं द्विविधं प्रज्ञप्तं, तद्यथा—अन्तगतं मध्यगतं च । अन्ते पर्यन्ते गतं व्यवस्थितमात्म-प्रदेशानां पर्यन्ते स्थितमन्तगतं, इयमत्र भावना—इहावधिरुत्पद्यमानः कोऽपि स्पर्द्धकरूपतयोत्पद्यते, स्पर्द्धकं चात्रावधि-ज्ञानप्रभाया गवाक्षजालादिद्वारविनिर्गतप्रदीपप्रभाया इव प्रतिनियतो विच्छेदविशेषः, तथा चोक्तं श्रीमज्जिनभद्रगणिक्ष-माश्रमणमिश्रैः स्वोपज्ञभाष्यवृत्तौ—"स्पर्द्धकमवधिविच्छेदविशेषः" इति । तानि चैकस्य जीवस्य संख्येयान्यसंख्येयानि वा भवन्ति, तदुक्तं—"फड्डा य असंखेज्जा संखेज्जा अवि एगजीवस्स" इति । तानि चोत्पद्यमानानि कानिचित् पर्यन्तवर्त्तिष्वात्म-प्रदेशेषूत्पद्यन्ते, तत्रापि कानिचित् पुरतः कानिचित्पृष्ठतः कानिचिदधोभागे कानिचिदुपरितनभागे तथा कानिचिन्मध्यम-वर्तिष्वात्मप्रदेशेषु, तत्र यदा अन्तवर्त्तिष्वात्मप्रदेशेष्ववधिज्ञानमुपजायते तदा आत्मनो अन्ते पर्यन्ते स्थितमिति कृत्वा अन्तगतमित्युच्यते, तैरेव पर्यन्तवर्त्तिभिरात्मप्रदेशैः साक्षादवधिरूपेण ज्ञानेन ज्ञानभवनात् न शेषैरिति । यद्वौदारिकशरीर-स्यान्ते गतं स्थितमन्तगतं कयाचिदेव दिशोपलम्भात्, इदमपि स्पर्द्धकरूपमवधिज्ञानं, अथवा सर्वेषामप्यात्मप्रदेशानां क्षयो-पशमभावेऽपि औदारिकशरीरान्ते नैकया दिशा यद्वशादुपलभ्यते तदप्यन्तगतम् । ननु सर्वेषामात्मप्रदेशानां क्षयोपश-मसद्भावे कथं सर्वतो न पश्यतीति चेत्? उच्यते—एकदिशैव संभवात्, विचित्रो हि क्षयोपशमः ततः सर्वेषामप्यात्मप्रदे-शानामित्थम्भूत एव स्वसामग्रीवशात् क्षयोपशमः संवृत्तो यदौदारिकशरीरमपेक्ष्य कयाचित् विवक्षितयैकया दिशा पश्य-तीति, तदुक्तं नन्दीचूर्णौ—"ओरालियसरीरंते ठितं गयंति एगट्ठं तं चायप्पएसफड्डगा वहि एगदिसोवलम्भाओ य अंतगयमोहिनाणं

भन्नइ अहवा सव्वायप्पएसेसु विसुद्धेसु वि ओरालियसरीरगंतेण एगदिसि पासणा गयंति अन्तगयं भन्नइ" इति । यद्वा एकदिग्भाविनावधिज्ञानेन द्योतितं क्षेत्रं तत्रावधिज्ञानवतो वर्त्तमानत्वात् अन्ते एकदिग्रूपस्यावधिज्ञानविषयस्य पर्यन्ते व्यवस्थितमन्तगतमिति । तथा मध्यगतं नाम मध्ये मध्यवर्तिष्वात्मप्रदेशेषु गतं व्यवस्थितं मध्यगतमिदमपि स्पर्द्धकरूपमवधिज्ञानं सर्वदिगुपलम्भकारणं मध्यवर्त्तिनामात्मप्रदेशानामवसेयम् । अथवा सर्वेषामात्मप्रदेशानां क्षयोपशमसम्भवेऽप्यौदारिकशरीरमध्यगतेनोपलब्धिस्तन्मध्ये गतं मध्यगतं, तदुक्तं नन्दिचूर्णौ–"ओरालियसरीरमज्झे फड्डगविसुद्धीओ सव्वायप्पएसविसुद्धीओ वा सव्वदिसोवलम्भत्तणओ मज्झगउत्ति भन्नइ" इति । अथवावधिज्ञानेन यदुद्योतितं क्षेत्रं सर्वासु दिक्षु तस्य मध्ये मध्यभागे गतं स्थितं मध्यगतं अवधिज्ञानिनः तदुद्योतितक्षेत्रमध्यवर्तित्वात् । तथा च नन्दीचूर्णिः–"अहवा उवलद्धिखेत्तस्स अवहिपुरिसो मज्झगउत्ति अतो वा मज्झगओ ओही भन्नइ" इति । अन्तगतं त्रिविधं प्रज्ञप्तं, तद्यथा–पुरतोऽन्तगतं मार्गतोऽन्तगतं पार्श्वतोऽन्तगतमिति । तत्र पुरतः अवधिज्ञानितमः स्वव्यपेक्षया अग्रभागेऽन्तगतं पुरतोऽन्तगतं, मार्गतः–पृष्ठतोऽन्तगतं, पार्श्वतोऽन्तगतं पार्श्वतः–द्वयोः पार्श्वयोरेकतरपार्श्वतोऽन्तगतं पार्श्वतोऽन्तगतम् । अथ किं तत्पुरतोऽन्तगतमवधिज्ञानमिति चेत्? अत्रोच्यते, यथा कश्चित् प्रदीपं वाऽलातं वा मणिं वा ज्योतिर्वाऽग्रतो हस्ते दण्डादौ वा कृत्वा स्वगत्यनुसारतो गच्छन् पुरत एव पश्यति, न पार्श्वतः न वा पृष्ठतः एवं येनावधिज्ञानेन तथाविधक्षयोपशमभावतः पुरत एव पश्यति नान्यत्र, तत्पुरतोऽन्तगतमुच्यते । एवं मार्गतोऽन्तगतं पार्श्वतोऽन्तगतं च भावनीयम् । तथा मध्यगतं यथा कश्चन प्रदीपं वा ज्योतिर्वा मस्तके धृत्वा गच्छन् सर्वतः पश्यति तथा येनावधिज्ञानेन सर्वासु दिक्षु पश्यति तन्मध्यगतमिति । तथा च नन्दीसूत्रम्–से किं तं आणुगामिअं ओहिनाणं?

आणुगामिअं ओहिनाणं दुविहं पण्णत्तं, तंजहा—अन्तगयं मज्झगयं च। से किं तं अंतगयं? अंतगयं तिविहं पन्नत्तं, तंजहा—पुरओ अंत-
गयं मग्गओ अन्तगयं पासओ अन्तगयं, से किं तं पुरओ अंतगयं? पुरओ अंतगयं—से जहानामए के इ पुरिसे उक्कं वा चडुलिअं वा
अलायं वा मणिं वा पईवं वा जोइं वा पुरओ काउं पणुल्लेमाणे २ गच्छेज्जा, से तं पुरओ अंतगयं, से किं तं मग्गओ अन्तगयं? मग्गओ
अन्तगयं—से जहानामए केइ पुरिसे उक्कं वा चडुलिअं वा अलायं वा मणिं वा पईवं वा जोइं वा मग्गओ काउं अणुकड्ढेमाणे २ गच्छिज्जा, से तं
मग्गओ अंतगयं, से किं तं पासओ अंतगयं? पासओ अंतगयं—से जहानामए केइ पुरिसे उक्कं वा चडुलियं वा अलायं वा मणिं वा पईवं
वा जोइं वा पासओ काउं परिकड्ढेमाणे २ गच्छिज्जा, से तं पासओ अंतगयं, से तं अंतगयं। से किं तं मज्झगयं? मज्झगयं से जहानामए केइ पुरिसे
उक्कं वा चडुलियं वा अलातं वा मणिं वा पईवं वा जोइं वा मत्थए काउं समुवहमाणे २ गच्छिज्जा, से तं मज्झगयं" इति। 'उक्कं'ति उल्कां
दीपिकां, 'चटुलीं' पर्यन्तज्वलिततृणपूलिकां, 'अलातमु'ल्मुकं अग्रभागे ज्वलत्काष्ठम् 'ज्योतिः' शरावाद्याधारो ज्वलन्नग्निरिति।
नन्वन्तगतस्य मध्यगतस्य च कः प्रतिविशेषः इति चेत्? पुरतोऽन्तगतं पुरतः एव संख्येयानि असंख्येयानि वा योजनानि जा-
नाति पश्यति च, एवं मार्गतोऽन्तगतं पृष्ठतः एव, पार्श्वतोऽन्तगतं पार्श्वतः एव संख्येयान्यसंख्येयानि वा योजनानि जानाति
पश्यति, तथा मध्यगतं सर्वतः संख्येयान्यसंख्येयानि वा योजनानि जानाति पश्यति चेति। देवनारकाणां मध्यगतमाभववर्ति
चावधिज्ञानं भवति। तीर्थकरस्य मध्यगतमाकेवलज्ञानं केवलज्ञानोत्पत्तौ तद्विच्छेदात्, तिरश्चामन्तगतं मनुजानां यथा क्षयो-
पशममुभयं भवति, तदुक्तं **प्रज्ञापनायां**—"नेरइयाणं भंते! किं देसोही सव्वोही? गोयमा! नो देसोही सव्वोही एवं जाव थणियकुमा-
राणं। पंचेन्दियतिरिक्खजोणियाणं पुच्छा? गोयमा! देसोही न सव्वोही। मणुस्साणं पुच्छा? गोयमा! देसोहीवि सव्वोहीवि। वाणमंतर-

जोइसियवेमाणियाणं जहा नेरइयाणं" इति। ननु संख्येयान्यसंख्येयानि वा योजनानि पश्यन्तीत्युक्तं तत्र के जीवाः कति योजनानि पश्यन्तीति चेत्? उच्यते—तत्र तिर्यग्मनुजा अनियतपरिमाणावधयः, तथाहि—केचिदङ्गुलासंख्येयभागं केचिदङ्गुलं केचिद्वितस्तिं केचित्संख्येययोजनानि केचिदसंख्येययोजनानि, मनुजास्तु केचन परिपूर्णलोकमपि, केचनालोकेऽपि लोकमात्राण्यसंख्येयानि खण्डानि पश्यन्ति, अतो न तिर्यग्मनुजाः प्रतिनियतावधयः। देवनारकास्तु प्रतिनियतावधिपरिमाणास्ततस्तेषां प्रतिनियतं क्षेत्रपरिमाणमुच्यते—तत्र रत्नप्रभायां जघन्यतोऽर्धचतुर्थानि गव्युतानि उत्कृष्टतः योजनपरिमितं क्षेत्रं नारकाः पश्यन्ति। ततः प्रभृति प्रतिनरकमर्धयोजनं २ हीयमानं २ यावत्तमस्तमप्रभायां जघन्यतोऽर्धगव्युतमुत्कृष्टतो गव्यूतपरिमितं क्षेत्रं नारकाः पश्यन्ति। असुरकुमाराः जघन्यतः पञ्चविंशतिर्योजनानि उत्कृष्टतोऽसंख्येयान् द्वीपसमुद्रान् जानन्ति पश्यन्ति च। शेषाः नागकुमारादयः स्तनितकुमारपर्यन्ताः सर्वेऽपि भुवनपतयः व्यन्तराश्च जघन्यतः पञ्चविंशतिः योजनानि उत्कृष्टतः संख्येयान् द्वीपसमुद्रान् जानन्ति पश्यन्ति, तदुक्तं प्रज्ञापनायां—"रयणप्पमापुढविनेरइया णं भंते! केवइयं खेत्तं ओहिणा जाणंति पासंति? गोयमा! जहन्नेणं अद्धुट्ठाइं गाउयाइं जाणंति पासंति उक्कोसेण चत्तारि गाउयाइं जाणंति पासंति, सक्करप्पभापुढविनेरइयाणं पुच्छा, गोयमा! जहन्नेणं तिन्नि गाउयाइं उक्कोसेणं अद्धुट्ठाइं गाउयाइं जाणंति पासंति, वालुयप्पभापुढविनेरइयाणं पुच्छा गोयमा! जहन्नेणं अड्ढाइज्जाइं गाउआइं उक्कोसेणं तिन्नि गाउआइं जाणंति पासंति, पंकप्पभापुढविनेरइयाणं पुच्छा गोयमा! जहन्नेणं दोन्नि गाउइयाइं उक्कोसेणं अड्ढाइज्जाइं गाउयाइं जाणंति पासंति, धूमप्पभापुढविनेरइयाणं पुच्छा गोयमा! जहन्नेणं अज्झगाउयं उक्कोसेणं गाउयं जाणन्ति पासंति, अह सत्तमपुढविनेरइयाणं भंत्ते! पुच्छा, गोयमा! जहन्नेणं अद्धगाउयं उक्कोसेणं गाउयं जाणंति पासंति। असुरकुमाराणं भंते! ओहिण केवइयं

खित्तं जाणंति पासंति ? गोयमा ! जहन्नेण पणवीसं जोयणाइं उक्कोसेणं असंखेज्जदीवसमुद्दे ओहिणा जाणंति पासंति, नागकुमारेण पुच्छा,
गोयमा ! जहन्नेणं पणवीस जोयणाइं उक्कोसेणं संखेज्जदीवसमुद्दे जाणंति पासंति, एवं जाव थणियकुमारा, वाणमंतरा जहा नागकुमारा" इति ।
येषां भुवनपतीनां व्यन्तराणां चायुः दशवर्षसहस्रप्रमाणं विद्यते त एव जघन्यतः पञ्चविंशतिः योजनानि पश्यन्ति, न
शेषाः, तदुक्तं दुष्षमारदर्शरजनिजिनप्रवचनप्रदीपैः श्रीमज्जिनभद्रगणिक्षमाश्रमणमिश्रैः भाष्ये–"पणवीसजोयणाइं
दसवाससहस्सिया ठिई जेसि"मिति । ज्योतिष्का देवाः जघन्यत उत्कृष्टतश्च संख्येयान् द्वीपसमुद्रान् जानन्ति पश्यन्ति । केव-
लमुत्कृष्टतोऽधिकतरान् । तदुक्तं प्रज्ञापनायां–"जोइसिया णं भंते ! केवइयं खित्तं ओहिणा जाणंति पासंति ? गोयमा ! जहन्नेणवि
संखेज्जे दीवसमुद्दे उक्कोसेणवि संखेज्जे दीवसमुद्दे" इति । सौधर्मकल्पवासिनो देवाः जघन्यतोऽङ्गुलासंख्येयभागमुत्कृष्टतो रत्नप्रभायाः
पृथिव्याः सर्वान्तिममधस्तनभागं तिर्यक्षु असंख्येयान् द्वीपसमुद्रान् ऊर्ध्वं तु स्वकल्पविमानस्तूपध्वजादिकमवधिज्ञानेन जानन्ति
पश्यन्ति च एवमीशानदेवा अपि । ननु सर्वजघन्यतोऽङ्गुलासंख्येयभागपरिमितं क्षेत्रमवधिना तिर्यङ्मनुजा एव पश्यन्ति न
देवाः, तदुक्तं भाष्यकृता स्वकृतभाष्यटीकायाम्–"उत्कृष्टो मनुष्येष्वेव नान्येषु, मनुष्यतिर्यग्योनिष्वेव जघन्यो नान्येषु, शेषाणां
मध्यम एव" इति, तत्कथं सौधर्मेशानवासिदेवानामत्रोक्त इति चेत् ? उच्यते–सौधर्मादिदेवानां पारभविकोऽप्युपपातकालेऽवधिः
सम्भवति, स च सर्वजघन्योऽपि कदाचिदवाप्यते, उपपातानन्तरं तु तद्भवजः, ततो न कश्चिद्दोषः । प्रवचनपारावारप्रोल्लसनैकजै-
वातृकैः श्रीमद्भिः जिनभद्रगणिक्षमाश्रमणैः न्यरूपि–"वेमाणियाणमंगुलभागमसंखं जहन्नो ओही । उववाए परभविओ तब्भवजो
होइ तो पच्छा ॥१॥" इति । एवं सनत्कुरादिदेवानामपि द्रष्टव्यम्, नवरमधो दर्शने विशेषः, ततः स एव प्रदर्श्यते–सनत्कुमार-

माहेन्द्रदेवाः शर्करप्रभाया अधस्तान् सर्वान्तिममधस्तनं भागं यावत्पश्यति, ब्रह्मलोकलान्तकदेवास्तृतीयपृथिव्याः, महाशुक्रसहस्रारकल्पदेवाश्चतुर्थपृथिव्याः, आनतप्राणतारणाच्युतदेवाः पञ्चमपृथिव्याः, अधस्तनमध्यमग्रैवेयकदेवाः षष्ठपृथिव्याः, उपरितनग्रैवेयकाः सप्तमपृथिव्याः, अनुत्तरोपपातिनः सम्पूर्णलोकनालिं पश्यन्ति । तदुक्तं प्रज्ञापनायाम्–"सोहम्मगदेवाणं भंते ! केवइयं खेत्तं ओहिणा जाणंति पासंति ? गोयमा ! जहन्नेणं अंगुलस्स असंखेज्जभागं उक्कोसेणं जाव इमीसे रयणप्पहाए पुढवीए हेट्ठिल्ले चरमंते तिरियं जाव असंखेज्जे दीवसमुद्दे उड्ढं जाव सगाइं विमाणाइं ओहिणा जाणंति पासंति, एवं ईसाणगदेवावि, सणंकुमारदेवा एवं चेव, नवरं अहे जाव दोच्चाए सक्करप्पभाए पुढविए हिट्ठिल्ले चरिमंते, एवं माहिंददेवावि, बंभलोगलंतगदेवा तच्चाए पुढवीए हिट्ठिल्ले चरिमंते, महासुक्कसहस्सारदेवा चउत्थीए पंकप्पभाए पुढवीए हेट्ठिल्ले चरिमंते, आणपाणयआरणअच्चुयदेवा अहे पंचमाए धूमप्पभाए पुढवीए हेट्ठिल्ले चरिमंते, हेट्ठिममज्झिमगेवेज्जगदेवा अहे जाव छट्ठीए तमाए पुढवीए हेट्ठिल्ले चरिमंते, उवरिमगेवेज्जगदेवाणं भंते ! केवइयं खेत्तं ओहिणा जाणंति पासंति ? गोयमा ! जहन्नेणं अंगुलस्स असंखेज्जइभागं उक्कोसेणं अहे सत्तमाए पुढवीए हेट्ठिल्ले चरिमंते तिरियं जाव असंखेज्ज दीवसमुद्दे उड्ढं जाव सगाइं विमाणाइं ओहिणा जाणंति पासंति, अणुत्तरोववाइयाणं देवा णं भंते ! केवइयं खेत्तं ओहिणा जाणंति पासंति ? गोयमा ! संभिन्नं लोगनालिं जाणंति पासंति" इति । तिर्यङ्मनुजानामवधेः संस्थानस्यानियतत्वेन येनाकारेण प्रथमोत्पन्नं तेनाकारेण केषाञ्चित् सर्वकालं भवति केषाञ्चित्तु अन्यथाकारेणापि भवत्यतस्तान् मुक्त्वा देवनारकाणां संस्थानस्य प्रतिनियतत्वेन तदुच्यते–तत्र नारकाणां तप्रकारः,तप्रो नाम काष्ठसमुदायविशेषो यो नदीप्रवाहेण प्लाव्यमानो दूरादानीयते स चायतत्र्यस्रो भवति तदाकारोऽवधिः नारकाणां, सर्वेषां भुवनपतीनां पल्लकसंस्थानसंस्थितः, पल्लको नाम लाट-

देशे प्रसिद्धो धान्याधारविशेषः स चोर्ध्वायतः उपरि च किञ्चित्संक्षिप्तः। व्यन्तराणां पटहसंस्थानसंस्थितः, पटहः—आतोद्यविशेषः स च किञ्चिदायतः उपर्यधश्च समप्रमाणः। ज्योतिष्कदेवानां झल्लरीसंस्थानसंस्थितः, झल्लरी—चर्मावनद्धविस्तीर्णवलयाकारा आतोद्यविशेषरूपा देशविशेषप्रसिद्धा। सौधर्म्मदेवादीनामच्युतदेवपर्यन्तानां मृदङ्गसंस्थानसंस्थितः मृदङ्गः वाद्यविशेषः स चाधस्ताद्विस्तीर्ण उपरि च तनुकः सुप्रतीतः। ग्रैवेयकदेवानां सशिखाग्रथितपुष्पभृतचङ्गेरीसंस्थानसंस्थितः। अनुत्तरोपपातिकदेवानां कन्याचोलकापरपर्यायजवनालकसंस्थानसंस्थितः। यथा स्वयंभूरमणसागरे मत्स्यानां वलयाकारतां मुक्त्वा सर्वेऽप्याकारा भवन्ति तद्वत्तिर्यग्मनुजानामवधिज्ञानस्य वलयाकारतापि न त्याज्या, तदुक्तं भाष्ये—"तप्पागारे पल्लगपडहगझल्लरिमुइंगपुप्फजवे। तिरिमणुएसु ओही नाणाविहसंठिओ भणिओ ॥ १ ॥ नाणागारो तिरियमणुएसु मच्छा सयंभूरमणे ब। तत्थ वलयं निसिद्धं तस्सिह पुण तंपि होज्जाहि ॥ २ ॥" इति। तथा भवनपतिव्यन्तराणामूर्ध्वं बहुः, नारकज्योतिष्काणां तिर्यग् बहुः, वैमानिकदेवानामधो बहुः, मनुजतिरश्चां चित्रं केषाञ्चिदधः बहुः केषाञ्चिदूर्ध्वं बहुः केषाञ्चित्तिर्यग् बहुरिति, तदुक्तं—"भवणवइवंतराणं उड्ढं बहुगो अहो य सेसाणं। नारकजोइसियाणं तिरियं ओरालिओ चित्तो ॥१॥"-औदारिकावधिः तिर्यग्मनुजसम्बन्धीत्युक्तमानुगामिकम्।

अथानानुगामिकमुच्यते—कश्चित्पुरुषोऽनेकज्वालाशतसंकुलमग्निं वा प्रदीपं वा कृत्वा तत्रैव परिभ्रमन् तमेव क्षेत्रं सर्वासु दिक्षु पश्यति नान्यत्र गतः एवं यस्मिन् देशे उत्पन्नमवधिज्ञानं तत्रैव देशे स्थितं सत् स्वावगाढक्षेत्रसम्बद्धान्यसम्बद्धानि वा संख्येयान्यसंख्येयानि योजनानि जानाति पश्यति च नान्यत्र तदनानुगामिकम्। अवधिः हि जायमानः कोऽपि स्वा-

वगाढक्षेत्रादारभ्य निरन्तरं प्रकाशयति कोऽपि पुनरपान्तरालेऽन्तरं कृत्वा परतः प्रकाशयति, अवधिज्ञानावरणक्षयोपशमस्य तत्क्षेत्रसापेक्षत्वात् । तदुक्तं नन्दीसूत्रे–"से किं तं अणाणुगामिअं ओहिनाणं अणाणुगामिअं ओहिनाणं से जहा नामए केइ पुरिसे एगं महंतं जोइठाणं काउं तस्सेव जोइट्ठाणंस्स परिपेरंतेहिं २ परिघोलेमाणे २ तमेव जोइट्ठाणं पासइ अनत्थगए न पासइ एवमेव अणाणुगामिअं ओहिनाणं जत्थेव समुप्पज्जइ तत्थेव संखेज्जाणि असंखेज्जाणि वा संबद्धाणि वा असंबद्धाणि वा जोयणाइं जाणइ पासइ अन्नत्थगए न पासइ से तं अणाणुगामिअं ओहिनाणं" इत्युक्तमनानुगामिकमवधिज्ञानम् ।

अथ वर्धमानमवधिज्ञानमुच्यते–तत्र वर्धत इति वर्धमानः बहुबहुतरेन्धनप्रक्षेपादभिवर्धमानज्वलनज्वालाकलाप इव पूर्वावस्थातो यथायोगं प्रशस्तप्रशस्ततराध्यवसायतो वर्धमानमवधिज्ञानं वर्धमानकम् । तस्य चावधिक्षेत्रं जघन्यमध्यमोत्कृष्टभेदात्त्रिविधं भवति । तत्र जघन्यं योजनसहस्रप्रमाणशरीरो मत्स्यः स्वबाह्यशरीरदेशे सूक्ष्मपनकत्वेनोत्पन्नः यः त्रिसमयाहारकः पनकः तस्य यच्छरीरं तत्प्रमाणं विज्ञेयमयमत्र सम्प्रदायः–यो मत्स्यः सहस्रयोजनायामः स्वदेहस्यैव बाह्यप्रदेशे उत्पद्यमानः प्रथमे समये सकलनिजशरीरसम्बद्धमात्मप्रदेशानामायामं संहृत्याङ्गुलासंख्येयभागबाहल्यं प्रतरं करोति, तमपि द्वितीयसमये संहृत्याङ्गुलासंख्येयभागबाहल्यविष्कम्भां मत्स्यदेहविष्कम्भायामामात्मप्रदेशानां सूचिं विरचयति, ततस्तृतीयसमये तामपि संहृत्याङ्गुलासंख्येयभागमात्र एव स्वशरीरबहिःप्रदेशे सूक्ष्मपरिणामपनकरूपतयोत्पद्यते, तस्योत्पातसमयादारभ्य तृतीये समये वर्तमानस्य यावत्प्रमाणं शरीरं भवति, तावत्परिणामं जघन्यमवधेः क्षेत्रमालम्बनवस्तुभाजनमवसेयम् । तदुक्तं वृद्धैः–"योजनसहस्रमानो मत्स्यो गत्वा स्वकायदेशे यः । उत्पद्यते हि सूक्ष्मः पनकत्वेनेह स ग्राह्यः ॥ १ ॥ संहृत्य चाद्यसमये

स आयामं करोति च प्रतरम् । संख्यातीताख्याङ्गुलविभागबाहल्यमानं तु ॥ २ ॥ स्वकतनुपृथक्त्वमात्रं दीर्घत्वेनापि जीवसामर्थ्यात् । तमपि द्वितीयसमये संहृत्य करोत्यसौ सूचिम् ॥ ३ ॥ संख्यातीताख्याङ्गुलविभागविष्कम्भमाननिर्दिष्टाम् । निजतनुपृथक्त्वदैर्घ्यां तृतीयसमये तु संहृत्य ॥ ४ ॥ उत्पद्यते च पनकः स्वदेहदेशे स सूक्ष्मपरिणामः । समयत्रयेण तस्यावगाहना यावती भवति ॥ ५ ॥ तावज्जघन्यमवधेरालम्बन-वस्तु भाजनं क्षेत्रम् । इदमित्थमेव मुनिगणसुसम्प्रदायात् समासेयम् ॥ ६ ॥" इति । ननु किमर्थमतिमहान् स्वशरीरबहिर्देशे उत्पद्यमानो मत्स्यो गृहीतः ? कथं वा तृतीये समये निजशरीरदेशोत्पत्तिमान् त्रिसमयाहारको वा गृहीतः ? कथं वा सूक्ष्मः पनको जघन्यावगाहमानो गृहीतः ? इति चेदत्रोच्यते—योजनसहस्रायामो हि महामत्स्यः प्रयत्नविशेषात् त्रिभिः समयैरात्मप्रदेशानां संहृत्यातिसूक्ष्मामवगाहनां करोति, अन्यत्र च गच्छन् तस्यात्मप्रदेशाः किञ्चिद्विस्तारं यान्तीत्यवगाहना स्थूलतरा स्यादतोऽतिमहान् स्वशरीरबहिर्देशे त्रिभिः समयैरुत्पद्यमानो मत्स्यो गृहीतः, प्रथमसमयाहारकोऽतिसूक्ष्मो भवति चतुर्थादिसमयाहारकस्तु स्थूलावगाहनो भवत्यतस्त्रिसमयाहारको गृहीतः । सर्वेषु शरीरेषु सूक्ष्मपनकस्य शरीरं श्लक्ष्णतरादपि श्लक्ष्णतरं भवतीत्यतः सुबहुविशेषणविशिष्टः सूक्ष्मपनको जघन्यदेहो गृहीत इति । तदुक्तं महाभाष्ये—"किं मच्छो अतिमहल्लो किं तिसमयओ व कीस वा सुहुमो । गहिओ कीस व पणओ किं व जहण्णावगाहणओ ? ॥ १ ॥ मच्छो महल्लकाओ संखित्तो जो य तीहिं समएहिं । सो किर पयत्तविसेसेण सण्हमोगाहणं कुणइ ॥ २ ॥ सण्हयरो सण्हयरो सुहुमो पणओ जहण्णदेहो य । सुबहुविसेसणविसिट्ठो सण्हयरो सव्वदेहेसु ॥ ३ ॥ पढमविईए अतिसण्हो जमइत्थूलो चउत्थयाईसु । तईयसमयम्मि जोग्गो गहिओ तो तिसमयाहारो ॥ ४ ॥" इति । अथावधेरुत्कृष्टं क्षेत्रमुच्यते—सर्वबह्वग्निजीवा सूचीभ्रमणेन निरन्तरं सर्वदिकं यावत् क्षेत्रं भृतवन्तः

एतावति क्षेत्रे यान्यवस्थितानि द्रव्याणि तत्परिच्छेदसामर्थ्ययुक्तः परमावधिः क्षेत्रमधिकृत्य निर्दिष्टो गणधरदेवादिभिः। अयं चात्र सम्प्रदायः—अजितस्वामिजिनकाले प्रायः सर्वबह्वग्निजीवाः प्राप्यन्ते, तदानीं तदारम्भकमनुष्यबाहुल्यसम्भवात्। तत्रैवोत्कृष्टपदवर्तिनः सूक्ष्मतैजसकायजीवा विवक्ष्यन्ते, इदमुक्तं भवति—अनन्तानन्तास्ववसर्पिणीषु मध्ये स एव कश्चिद् द्वितीयतीर्थकरकालो गृह्यते यत्र सूक्ष्माग्निजीवा उत्कृष्टपदवर्तिनः प्राप्यन्ते, महावृष्ट्यादिव्याघाताभावे द्वितीयजिनकाले च पञ्चदशसु कर्मभूमिष्वपि बादराग्निजीवाः सुबहवो भवन्ति, उभयमिलने च सर्वबहवश्चित्रभानुजीवा भवन्ति। तेषां स्वबुद्ध्या षोढावस्थानं परिकल्प्यते; एकैकाकाशप्रदेशे एकैकं जीवं न्यस्य सर्वतश्चतुरस्रघनपरिकल्पनं प्रथमप्रकारः। स एव घनः स्वावगाहनादिभिः जीवैः द्वितीयः प्रकारः, एवमेकैकाकाशप्रदेशे एकैकजीवस्थापनयाऽसंख्येयप्रदेशात्मकस्वावगाहस्थापनया च प्रतरोऽपि द्विप्रकारः, एवमेकैकाकाशप्रदेशे एकैकजीवस्थापनयाऽसंख्येयप्रदेशात्मकस्वावगाहस्थापनया च सूचिरपि द्विधा भवति। तत्राद्याः पञ्च प्रकारा न ग्राह्या दोषद्वयानुषङ्गात्, तथा हि—पञ्चविधयाऽप्यनया स्थापनया स्थापिता अग्निजीवाः षट्स्वपि दिक्ष्ववधिज्ञानिनोऽसत्कल्पनया भ्राम्यमाणाः स्तोकमेव क्षेत्रं स्पृशन्तीत्येको दोषः, एकैकाकाशप्रदेशे एकैकजीवस्थापनया चागमविरोधश्चेति द्वितीयदोषः, आगमेऽसंख्येयाकाशप्रदेशानन्तरेण जीवावगाहनानिषेधात्। नन्वसत्कल्पनया विवक्षणे को दोष इति चेत्? नैवम्, कल्पनापि सति सम्भवेऽविरोधिन्येव कर्त्तव्या न विरोधिनी। षष्ठः पक्षस्तु सूत्रादेशः, तत्र न प्रागुक्तदोषद्वयसंभवः प्रत्युतायं गुणः—एकैकजीवस्यासंख्येयाकाशप्रदेशावगाहे व्यवस्थापितत्वात् बहुतरं क्षेत्रं स्पृशति, अवगाहविरोधाभावश्चेति। ततोऽग्निजीवसूचिरवधिज्ञानिनः षट्स्वपि दिक्ष्वसत्कल्पनया भ्रामिता सती अलोके लोकप्रमाणा-

न्यसंख्येयखण्डानि स्पृशति, अत एतावदुत्कृष्टं क्षेत्रं परमावधिज्ञानिनो विषयः। इदं च सामर्थ्यमात्रमुपवर्ण्यते, एतावति क्षेत्रे यदि द्रष्टव्यं स्यात् तर्हि पश्येत्, न चालोके द्रष्टव्यं समस्ति; यतोऽवधिज्ञानं रूपिद्रव्यनिबन्धनं तीर्थकरगणधरैः भणितम्, तच्च रूपिद्रव्यं नास्त्यलोके। नन्वलोकेऽवधिज्ञानस्य सामर्थ्योपवर्णनेन किं फलं तत्र रूपिद्रव्याभावादिति चेत्? सत्यम्; परं यथा यथाऽलोके सामर्थ्यं वर्धते तथा तथा लोके सूक्ष्मातिसूक्ष्मतराणि द्रव्याणि पश्यति, यावत् परमावधिः परमाणुमपि पश्यति, तदुक्तं—"वड्ढंतो पुण वाहिं लोयत्थं चेव पासइ दव्वं। सुहुमयरं सुहुमयरं परमोही जाव परमाणुं ॥१॥" इति। तदेवमुक्तमवधिज्ञानविषयभूतं जघन्यमुत्कृष्टं च क्षेत्रम्। एतस्माच्चान्यत् सर्वं विमध्यममिति सामर्थ्यात् गम्यत एव, केवलं यद् यत्र विमध्यमे क्षेत्रविशेषे कालमानं भवति यावति च काले यद् विमध्यमं क्षेत्रं भवति, तदुच्यते—अवधिज्ञानी यदाङ्गुला-संख्येयभागमात्रं क्षेत्रं पश्यति तदा कालतोऽतीतानागतमावलिकासंख्येयभागमेव पश्यति, क्षेत्रकालदर्शनं चात्र मञ्चाः क्रोश-न्तीति न्यायेनोपचारेणोच्यते, अन्यथा हि क्षेत्रव्यवस्थितानि दर्शनयोग्यानि द्रव्याणि तत्पर्यायांश्च विवक्षितकालान्तर्व-र्तिनोऽवधिज्ञानी पश्यति न तु क्षेत्रकालौ; मूर्तद्रव्यालम्बनत्वादवधेरिति एवमुत्तरत्रापि द्रष्टव्यम्। अत्र क्षेत्राधिकारा-दङ्गुलं प्रमाणाङ्गुलं ग्राह्यमवधिज्ञानाधिकारादुच्छ्रयाङ्गुलमिति केचन। अङ्गुलसंख्येयभागं क्षेत्रं यदा पश्यति तदा कालतोऽ-प्यावलिकायाः संख्येयभागं पश्यति। क्षेत्रतोऽङ्गुलं पश्यन् कालतः किञ्चिदूनामावलिकां पश्यति, कालतः परिपूर्णामाव-लिकां पश्यन् क्षेत्रतोऽङ्गुलपृथक्त्वपरिमाणं क्षेत्रं पश्यति, पृथक्त्वं च समयपरिभाषया द्विप्रभृतिरानवभ्य इति सर्वत्र द्रष्ट-व्यम्। हस्तमात्रे क्षेत्रे ज्ञायमाने कालतोऽन्तर्मुहूर्त्तप्रमाणं कालं पश्यति तथा कालतः किञ्चिदूनं दिवसं पश्यन् क्षेत्रतो

गव्यूतं पश्यति, कालतो दिवसपृथक्त्वं पश्यन् क्षेत्रतो योजनप्रमाणं क्षेत्रं पश्यति कालतः किञ्चिन्न्यूनपक्षं पश्यन् क्षेत्रतः पञ्चविंशतियोजनानि पश्यति, क्षेत्रतो भरतवर्षं पश्यन् कालतः परिपूर्णं पक्षं पश्यति, क्षेत्रतो जम्बूद्वीपं पश्यन् कालतः साधिकं मासं पश्यति, क्षेत्रतो मनुष्यलोकं पश्यन् कालतः वर्षं पश्यति, रुचकाख्यबाह्यद्वीपं पश्यन् कालतो वर्षपृथक्त्वं पश्यति, वर्षसहस्रमिति अन्ये। तथा संख्येयकालं पश्यन् क्षेत्रतोऽपि संख्येयान् द्वीपसागरान् पश्यति। महानेकोऽपि महत्तरस्य एकदेशोऽपि, इदमुक्तं भवति—सहस्रवर्षात् परतः संख्येये कालेऽवधिना परिच्छिद्यमाने क्षेत्रमप्यत्र स्वप्रज्ञापकापेक्षया संख्येयद्वीपसागरपरिमाणं परिच्छेद्यं भवति ततो यदि नामात्रत्यस्यावधिरुत्पद्यते तर्हि जम्बूद्वीपादारभ्य संख्येयाः द्वीपसागरास्तस्य परिच्छेद्याः भवन्ति, यद्वा कस्यचित्तिरश्चः संख्येययोजनविस्तृते बाह्ये द्वीपे सागरे वा संख्येयकालविषयमवधिज्ञानं समुत्पन्नं स यथोक्तक्षेत्रपरिमाणं तमेवैकं द्वीपं समुद्रं वा पश्यति, यदि पुनरसंख्येययोजनविस्तृते स्वयम्भूरमणादिके द्वीपे सागरे वा संख्येयकालविषयकमवधिज्ञानं समुत्पन्नं तदानीं स यथोक्तपरिमाणं तस्य द्वीपस्य समुद्रस्य वा एकदेशं पश्यति, इहत्यमनुष्यबाह्यावधिरिव। तथा येषां कालतः असंख्येयकालपल्योपमादिविषयकमवधिज्ञानं समुत्पन्नं तदानीं ते संख्येयान् असंख्येयान् वा एकदेशं वा पश्यन्ति, अयमत्राशयः—यदा इह मनुजस्यासंख्येयकालविषयमवधिज्ञानमुत्पन्नं स असंख्येयान् द्वीपसागरान् पश्यति, यदा च बहिर्द्वीपे समुद्रे वा वर्त्तमानस्य कस्यचित्तिरश्चोऽसंख्येयकालविषयोऽवधिरुत्पद्यते तर्हि तस्य संख्येया द्वीपसमुद्राः, यद्वा यस्य मनुजस्यासंख्येयकालविषयो बाह्यद्वीपसमुद्रालम्बनो बाह्यावधिरुत्पद्यते तस्य संख्येया द्वीपसागराः, यदा पुनः स्वयम्भूरमणे द्वीपे समुद्रे वा कस्यचित्तिरश्चोऽवधिरसंख्येयकालविषयो जायते

तदानीं तस्य स्वयम्भूरमणस्य द्वीपस्य समुद्रस्य वा एकदेशविषयः, यद्वा स्वयम्भूरमणविषयमनुष्यबाह्यावधेः तदेकदेशो विषयः। क्षेत्रपरिमाणं पुनर्योजनापेक्षया सर्वत्रापि जम्बूद्वीपादारभ्यासंख्येयद्वीपसमुद्रपरिमाणमवसेयम्। तदेवं क्षेत्रवृद्धौ कालवृद्धिरनियता कालवृद्धौ तु क्षेत्रवृद्धिर्भवत्येवेति प्रतिपादितम्। साम्प्रतं द्रव्यक्षेत्रकालभावापेक्षया यद्वृद्धौ यस्य वृद्धि-र्भवति यस्य वा न भवति तदुच्यते-अवधिविषये काले वर्धमाने सति नियमेन क्षेत्रद्रव्यभावानां वृद्धिः, तथाहि-कालस्य समयेऽपि वर्धमाने क्षेत्रस्य प्रभूताः प्रदेशाः वर्धन्ते, कालात् क्षेत्रस्य सूक्ष्मत्वात्। क्षेत्रवृद्धौ च द्रव्याणामवश्यंभाविनी वृद्धिः प्रत्याकाशप्रदेशमनन्तस्कन्धावगाहनात्। द्रव्यवृद्धौ पर्यायवृद्धिर्भवत्येव, प्रतिद्रव्यं पर्यायबाहुल्यादिति। क्षेत्रवृद्धौ कालस्य वृद्धिर्भजनीया, तथाहि-स्वल्पे च क्षेत्रे वृद्धिं गते कालस्य वृद्धिर्न स्यात्, प्रभूते च क्षेत्रे वृद्धिं गते कालस्य वृद्धिः स्यात्, यदि क्षेत्रस्य प्रदेशादिवृद्धौ कालस्य समयादिवृद्धिः स्यात् तर्ह्यङ्गुलमात्रादिक्षेत्रवृद्धौ कालस्यासंख्येया उत्सर्पिण्यवसर्पिण्यो वर्धेरन्, प्रागुक्तविरोधात्, तदुक्तं-"अंगुलसेढीमित्ते ओसप्पिणीओ असंखेज्जा" इति, न चैवंभूता वृद्धिः स्यात्, तस्मात् क्षेत्र-वृद्धौ कालवृद्धिर्भजनीयैव। तथा क्षेत्रकालवृद्धौ द्रव्यपर्याययोर्वृद्धिः भजनीया, तथाहि-अवस्थितयोरपि क्षेत्रकालयोः तथा-विधशुभाध्यवसायतः क्षयोपशमवृद्धौ द्रव्यं वर्धत एव तद्वृद्धौ च पर्यायवृद्धिरवश्यंभाविन्येव, प्रतिद्रव्यं संख्येयानाम-संख्येयानामवधिना परिच्छेदसम्भवात्। पर्यायवृद्धौ तु द्रव्यवृद्धिः भजनीया, अवस्थितेऽपि द्रव्ये तथाविधक्षयोपशमवृद्धौ पर्याया वर्धन्त एवेति। अथ द्रव्यक्षेत्रकालभावानां मध्यात् किं सूक्ष्मं किं सूक्ष्मतरमिति स्पष्टतया नोक्तं तदुच्यते-सूक्ष्मो भवति कालः, ततः सूक्ष्मतरं क्षेत्रं, यतोऽङ्गुलमात्रं क्षेत्रमेकैकप्रदेशतया प्रतिसमयमपहीयमाणमसंख्येयाभिरुत्सर्पिण्यवसर्पिणी-

भिरपहृतं भवति; क्षेत्रतोऽपि द्रव्यं सूक्ष्मतरमेकैकस्मिन्नाकाशप्रदेशे परमाणुभ्यः प्रारभ्यानन्तानन्तप्रदेशस्कन्धानामनन्तानामवगाहनात्, द्रव्यतः पर्याया अनन्तगुणाः प्रतिद्रव्यमनन्तपर्यायाणां भावात्, अवधिज्ञानविषये तु द्रव्यतः पर्यायाः संख्येयगुणाः असंख्येयगुणा वा, तावतामेव तद्विषयत्वात् । तदुक्तं महाभाष्ये—"सहुमसंखेज्जगुणं कालाओ खेत्तमोहिविसयम्मि । अवरोप्परसंबद्धं समयप्पएसप्पमाणेणं ॥१॥ खेत्तपएसेहिंतो दव्वमणंतगुणियं पएसेहिं । दव्वेहिंतो भावो संखगुणो असंखगुणिओ वा ॥२॥" इत्युक्तं जघन्यादिभेदं वर्धमानावधिज्ञानविषयभूतं सूत्रम् ।

अथ कीदृशं द्रव्यमवधेः विषयो भवति तदुच्यते—जघन्येनावधिना तैजसभाषाप्रायोग्यवर्गणान्तरालवर्तिद्रव्यं, तदपि द्विविधं गुरुलघु अगुरुलघु च, तत्रापि, तैजसप्रत्यासन्नं गुरुलघु भाषाप्रत्यासन्नमगुरुलघु तद्गतांश्च पर्यायान् वर्णगन्धरसस्पर्शलक्षणान् चतुःसंख्यान् पश्यति, न शेषान् । यदि प्रतिपात्यवधिज्ञानं तदा तदावरणोदयादुक्तस्वरूपेण द्रव्येणोपलब्धेन सता प्रतिपततीति, तदुक्तं भाष्ये—"पट्ठवओ नामावहिनाणस्सारंभओ तयाईए । उभयाजोग्गं पेच्छइ तेयाभासंतरे दव्वं ॥१॥ गुरुलहु तेयासन्नं भासासन्नमगुरुं च पासेज्जा । आरंभे जं दिट्ठं दट्ठूणं पडइ तं चेव ॥२॥" इति । यस्तु वर्धमानोऽवधिः तैजसप्रत्यासन्नद्रव्यारब्धोऽधस्तादौदारिकादीनि गुरुलघूनि द्रव्याणि दृष्ट्वा कश्चित् पश्चात् विशुद्ध्यमानः क्रमेणैवागुरुलघूनि भाषावर्गणादिद्रव्याणि पश्यति, यस्तु न विशुद्धिमासादयति स तेष्वेव कियन्तं कालं स्थित्वा प्रतिपतति । यस्त्वगुरुलघूनि भाषासन्नानि द्रव्याणि पश्यति स ऊर्ध्वमेव क्रमेण भाषाद्रव्याणि पश्यति नाधस्तात्, कश्चित्पुनर्विशुद्ध्यमानः एव युगपदौदारिकादीनि गुरुलघूनि द्रव्याण्यपि पश्यति । तथा मनोवर्गणाद्रव्यं पश्यन् अवधिज्ञानी कालतः पल्योपमस्य संख्येयतमभागं क्षेत्रतो लोकस्य संख्येयतमभागं पश्यति । तथा

कर्मवर्गणाद्रव्यं पश्यन् क्षेत्रतो लोकस्य संख्येयान् भागान् कालतः पल्योपमस्य संख्येयतमान् भागान् पश्यति। तथा क्षेत्रतः समस्तलोकं पश्यन् कालतः स्तोकोनं पल्योपमं पश्यति। ननु द्रव्येण सहोपनिबन्धे प्रस्तुते किमर्थं द्रव्यरहितयोः क्षेत्रकालयोः निरूपणं क्रियत इति चेत्? सत्यम्, समस्तलोकस्तोकोनपल्योपमदर्शिनः सामर्थ्यात् कर्मद्रव्योपरि किमपि पश्यन्तीति ज्ञापनार्थम्। अत एतदुपर्यपि ध्रुववर्गणादिद्रव्यं पश्यतः क्षेत्रकालवृद्धिक्रमेण परमावधिः सम्भवोऽप्यनुमीयते, तदुक्तं भाष्ये–"लोगपलियाणभागं संखइमं मुणइ जो मणोदव्वे। संखेज्जे पुण भाए पासइ जो कम्मुणो जोग्गं ॥ १ ॥ सयलं लोयं पासइ पल्लोवमं सदेसूणं। सुद्धाण किमत्थाणे गहणमिह खेत्तकालाणं? ॥२॥ कम्मदव्वमइओ पेच्छइ दुगमित्तियं ति जं भणियं। उवरिं पि तओ कमसो साहिज्जतयणुमाणेणं ॥३॥" इति। तथा द्रव्यतः तैजसशरीरं पश्यन् क्षेत्रतोऽसंख्येयान् द्वीपसमुद्रान् कालतः भवपृथक्त्वं पल्योपमासंख्येयभागं पश्यति। एवं कार्म्मणशरीरतेजोवर्गणाभाषावर्गणाद्रव्येष्वपि बोद्धव्यं, केवलं द्वीपसमुद्रकालासंख्येयकं बृहत्तरं द्रष्टव्यम्, क्रमेण सूक्ष्मत्वात्। तथाहि–तैजसशरीरात् कार्मणशरीरं सूक्ष्मं ततोऽप्यात्मासंबद्धानि तेजोवर्गणाद्रव्याणि सूक्ष्माणि ततोऽप्यात्मासंबद्धानि भाषावर्गणाद्रव्याणीति। ननु पूर्वं कर्मवर्गणाद्रव्यदर्शिनः प्रत्येकं लोकपल्योपमयोः संख्येया भागाः विषयत्वेनोक्ताः, कार्मणशरीरदर्शिनः किमर्थं स्तोकौ क्षेत्रकालौ विषयत्वेनोक्ताविति चेत्? अत्रोच्यते–पूर्वं जीवासंबद्धानि कर्मवर्गणाद्रव्याणि गृहीतानि तानि सूक्ष्माणि, अत्र तु कार्म्मणशरीरं जीवसंबद्धं गृहीतं तच्च ततः स्थूलमिति, अतः कार्मणशरीरदर्शिनः स्तोकौ क्षेत्रकालौ विषयत्वेनोक्ताविति। तथा परमावधिः द्रव्यतः सर्वं रूपिद्रव्यं क्षेत्रतोऽलोकेऽपि लोकप्रमाणान्यसंख्येयानि खण्डानि कालतोऽसंख्येया उत्सर्पिण्यवसर्पिणीः भावतः प्रतिद्रव्यमसंख्येयान् पर्यायान् पश्यति,

न तु कदाचनाप्यनन्तान्, "नाणंते पेच्छइ कयाइ" इति भाष्यवचनात्। एतच्च केवलज्ञानसूर्यस्य ह्युदयपदवीमासादयतः प्रथमप्रभास्फोटकल्पं परमावधिज्ञानं ततोऽन्तर्मुहूर्तेनावश्यमेव केवलज्ञानभास्करोदय इति। उत्कृष्टोऽवधिः नराणामेव भवति न शेषाणाम्। तथैकस्मिन् विवक्षिते भवे समुत्पन्नेऽवधावतीतमनागतं च भवपृथक्त्वं यत्पश्यति तदपि कालतः पल्योपमासंख्येयभागप्रमाणं नाधिकं प्रागुक्तविरोधात्। यदि पुनरतीतभवपृथक्त्वमध्येऽनेकेषु भवेषूत्पन्नमवधिज्ञानं स्यात् तदानीं चावधिना एतस्मात् दृष्टात् भवपृथक्त्वात् बहुतरानतीतानागतान् भवान् दृष्टानपि भवपृथक्त्वादधिकान् साक्षादवधिना न पश्यति, स्मृतिज्ञानेन तु पूर्वदृष्टान् स्मरतीति। तदुक्तं भाष्ये—"तेयसरीरं पासं पासइ सो भवपुहुत्तमेगभवे। णेगेसुं बहुतरे सरिज्ज न उ पासए सव्वे ॥१॥" इति। अथाधारोपयोगलब्धिविषयमवधेरवस्थानमुच्यते—अनुत्तरदेवानां त्रयस्त्रिंशत्सागरोपमं यावदवधेरवस्थानं भवति, यतोऽनुत्तरसुराः यत्र क्षेत्रे जन्मसमयेऽवगाढास्तत्रैवाभवक्षयमवतिष्ठन्ते, तेषां देहशयनीयेषु द्रव्येष्वप्यवधेरेतावन्तं कालमवस्थानमवसेयम्। द्रव्यविषयमुपयोगमाश्रित्य तत्रान्यत्र वा क्षेत्रेऽन्तर्मुहूर्त्तमेवावस्थानं भवति न परतः सामर्थ्याभावात्। पर्याये सप्ताष्टौ वा समयानवस्थानं भवति न परतः, अन्ये तु पर्यायाः द्विविधाः सहभाविनः क्रमभाविनश्च, तत्र सहभाविनः शुक्लादयो गुणाः क्रमभाविनो नवपुराणादयः पर्यायाः, तत्र गुणेऽष्टौ पर्याये सप्त समयानवस्थानं भवति। स्थूलं हि द्रव्यं तेन तत्रान्तर्मुहूर्त्तमुपयोगस्थितिः ततः गुणाः सूक्ष्मास्तेन तत्राष्टौ समयान् तेभ्योऽपि पर्यायाः सूक्ष्मास्तेन तेषु सप्त समयान् यावदवस्थानं भवतीति भावः। लब्धिमाश्रित्यावधिज्ञानावरणक्षयोपशमः तत्रान्यत्र च क्षेत्रे द्रव्ये गुण-

१ द्रव्यतः तैजसशरीरं पश्यन् क्षेत्रतोऽसंख्येयान् द्वीपसमुद्रान् कालतः भवपृथक्त्वं पल्योपमासंख्येयभागं पश्यतीत्यनेन सह विरोधात्।

पर्यवोपयोगेषु च साधिकषट्षष्टिसागरोपममुत्कृष्टतः तिष्ठति। एतच्च कालप्रमाणं द्वौ वारौ विजयादिषु गतस्य नरजन्मना साधिकं भवति। जघन्यतः सर्वेषां जीवानां द्रव्यादिषु समयमात्रमवस्थानं भवति, तथाहि-नरतिरश्चां समयादूर्ध्वमवधेरनुपयोगात् प्रतिपाताद्वोपयोगलब्ध्योः समयमवस्थानं भवति। देवनारकाणां तु स्वभवचरमसमये सम्यक्त्वमासादयतामवधेः समयमवस्थानं भवति, द्वितीयसमये च प्रतिपातात्, तदुक्तं भाष्ये-"चरिमसमयंमि सम्मं पडिवज्जंतस्स जं चिय विभंगं। तं होइ ओहिनाणं गयस्स बीयम्मि तं पडइ ॥ १ ॥" इति। अनन्तभागवृद्धिरसंख्येयभागवृद्धिः संख्येयभागवृद्धिः संख्येयगुणवृद्धिरसंख्येयगुणवृद्धिरनन्तगुणवृद्धिरिति षड्धा वृद्धिः। अनन्तभागहानिरसंख्येयभागहानिः संख्येयभागहानिः संख्येयगुणहानिरसंख्येयगुणहानिरनन्तगुणहानिरिति षड्धा हानिः। तत्रावधिविषयकक्षेत्रकालयोरसंख्येयत्वेनानन्तभागवृद्धिरनन्तगुणवृद्धिर्वानन्तभागहानिरनन्तगुणहानिर्वा न संभवतीति चतुर्धा वृद्धिः हानिर्वा स्यात्। इदमत्र तात्पर्यम्-यावत् क्षेत्रं प्रथममवधिना दृष्टं ततः प्रतिसमयमसंख्यातभागवृद्धं कश्चित् पश्यति, कोऽपि संख्यातभागवृद्धम्, अन्यस्तु संख्यातगुणवृद्धम्, अपरस्त्वसंख्यातगुणवृद्धं क्षेत्रं पश्यति, एवं हीयमानमपि वाच्यम्। एवं क्षेत्रे वृद्धिर्हानिर्वा चतुर्धा भवति, एवं कालेऽपि वृद्धिः हानिर्वा चतुर्धा बोध्या। द्रव्यविषयकावधौ पुनरनन्तभागरूपाऽनन्तगुणरूपा वा वृद्धिः हानिर्वा भवति, तथाहि-अवधिज्ञानिना यावन्ति द्रव्याण्युपलब्धानि प्रथमं ततः परं तेभ्योऽनन्तभागाधिकानि कश्चित् पश्यति, अपरस्त्वनन्तगुणाधिकान्येव पश्यति, वस्तुस्वभावात्, न त्वसंख्येयभागाधिकादीनि वृद्धानि पश्यति, तथा पूर्वोपलब्धेभ्योऽनन्तभागहीनानि द्रव्याणि कश्चित् पश्यति, अन्यस्त्वनन्तगुणहीनान्येव पूर्वोपलब्धेभ्यो द्रव्येभ्यः द्रव्याणि पश्यति न त्वसंख्यातभागादिहीनानि पश्यति, तथा

[illegible]रिति । पर्यायेषु पुनः षड्विधापि वृद्धिर्हानिर्वा भवतीति, तदुक्तं भाष्ये—"वुड्ढी वा हाणी वाऽणंतासंखिज्जसंख-[illegible] । [illegible]गुणा चेति छब्भेया ॥ १ ॥ पइसमयमसंखिज्जभागहियं कोइ संखभागहियं । अन्नो संखेज्जगुणं खित्त-[illegible] ॥ २ ॥ पेच्छइ विवड्ढमाणं हायंतं वा तहेव कालं पि । नाणंतवुड्ढिहाणी पेच्छइ जं दो वि नाणंते ॥ ३ ॥ दव्व-[illegible]हियं अणंतगुणवुड्ढियं च पेच्छेज्जा । हायंतं व भावम्मि छव्विहा वुड्ढिहाणीओ ॥ ३ ॥" इति । एतेषां च द्रव्यक्षेत्रकालभावानां परस्परसंयोगे चिन्त्यमाने एकस्य वृद्धावेवापरस्य वृद्धिः, नत्वेकस्य हानावपरस्य वृद्धिः, तथा एकस्य हानावेवापरस्य हानिः न त्वेकस्य वृद्धावपरस्य हानिर्भवति, तथा एकस्य वृद्धौ हानौ वाऽपरस्यावस्थानं स्यादपि, तदुक्तं विशेषावश्यकवृत्तौ—"एकस्मिन् वर्धमानेऽपरस्यावस्थानं तु स्यादपि" इति । अन्यच्चैकस्य द्रव्यादेः भागेन वृद्धौ हानौ वाऽपरस्यापि प्रायेण भागेनैव वृद्धिः हानिर्वा भवति, न तु गुणकारेण । तथैकस्य द्रव्यादेः गुणकारेण वृद्धौ वा हानौ वा जायमानायामपरस्यापि गुणकारेण वृद्धिः हानिः वा प्रायेण भवति, क्षेत्रादेर्भागेन वृद्धावपि द्रव्यादेर्गुणकारेण वृद्धिसंभवात् प्रायेणोक्तमिति, तदुक्तं भाष्ये—"वुड्ढिए चिय वुड्ढी हाणी हाणीए न उ विवज्जासो । भागे भागो गुणणे गुणो य दव्वाइ संजोए ॥ १ ॥" इति । ननु यादृश्याधारस्य वृद्धिः हानिर्वा भवति तादृश्येवाधेयस्यापि वृद्धिः हानिः वा स्यात्, तथा च क्षेत्रस्यासंख्येयभागादिवृद्धौ सत्यां तदाधेयद्रव्याणामप्यसंख्येयभागादिरेव वृद्धिः स्यात्, न संख्येयभागादिका, तथा द्रव्यस्यानन्तभागवृद्धौ तदाधेयभूतानां पर्यायाणामप्यनन्तभागवृद्धिरेव, नासंख्येयभागादिका; एवं द्रव्यानन्तगुणवृद्धौ तदाधेयभूतानां पर्यायाणामनन्तगुणैव वृद्धिर्नासंख्येयगुणादिका, तत्कथमुच्यते क्षेत्रस्य चतुर्विधे वृद्धिहानी, द्रव्यस्य द्विविधे, पर्यायाणां षड्विधे इति चेत्? सत्यं, सामान्येन को

नामेवं न मन्यते ? अपि तु मन्यत एव, केवलमवधिज्ञानविषयत्वेन प्रतिषिध्यते, एतदुक्तं भवति–सामान्यतः समस्तलोकस्यासंख्येयतमादिके भागे समस्तपुद्गलास्तिकायस्याप्यसंख्येयतमादिक एव भागः स्वरूपेण वर्त्तते, समस्तपुद्गलास्तिकायस्यानन्ततमादिके भागे समस्ततत्पर्यायराशिरप्यनन्ततमादिभागे वर्त्तते, अतः क्षेत्रस्यासंख्येयादिभागवृद्धिहान्योः द्रव्यस्यापि तदनुवृत्त्या तथैव वृद्धिहानी स्याताम्, द्रव्यस्यानन्ततमादिवृद्धिहान्योस्तत्पर्यायाणामपि तदनुवृत्त्या तथैव वृद्धिहानी भवेताम्, परमत्रावधिज्ञानविषयभूतस्य क्षेत्रादेर्वृद्धिहानी चिन्तयितुमभिप्रेते न तु सामान्येन स्वरूपस्थस्य । एवं च विशेषिते ये वृद्धिहानी तेऽवधिज्ञानावरणक्षयोपशमनिबन्धनत्वात् विचित्रे। अत्र च प्रायेणाज्ञैव प्रमाणं किं स्वेच्छाप्रवृत्तशुष्कतर्कोपन्यासेन, तदुक्तं भाष्यकृता–"दव्वाइं सखेत्ताओऽणंतगुणा पज्जवा सदव्वाओ । निययाहाराहीणा तेसिं वुड्ढी य हाणी य ॥ १ ॥ न उ निययाहारवसा अवहिनिबंधो जओ परित्तो सो । चित्तो तहण्णहा वि य आणागब्भो य पाएण ॥ २ ॥" इति । हीयमानकमवधिज्ञानमप्रशस्ताध्यवसायेषु वर्त्तमानस्य सर्वतः हानिमेवावगच्छति, तदुक्तं नन्दिसूत्रे–"से किं तं हीयमाणयं ओहिनाणं ? हीयमाणयं ओहिनाणं अपसत्थेहिं अज्झवसाणठाणेहिं वट्टमाणस्स वट्टमाणचरित्तस्स संकिलिस्समाणस्स संकिलिमाणचरित्तस्स सव्वओ समंता ओही परिहायइ से त्तं हीयमाणं ओहिनाणं" इत्युक्तं सप्रतिपक्षं वर्धमानकमवधिज्ञानम् ।

प्रतिपात्यवधिज्ञानं तु जघन्येनाङ्गुलासंख्येयभागमङ्गुलसंख्येयभागं वा वालाग्रं वा वालाग्रपृथक्त्वं वा, लिक्षां लिक्षापृथक्त्वं वा, यूकां वा यूकापृथक्त्वं वा, यवं यवपृथक्त्वं वा, अङ्गुलं वाऽङ्गुलपृथक्त्वं वा, पादं वा पादपृथक्त्वं वा, वितस्तिं वा वितस्तिपृथक्त्वं वा करं करपृथक्त्वं वा, कुक्षिं कुक्षिपृथक्त्वं वा, धनुर्वा धनुष्पृथक्त्वं वा, गव्यूतं गव्यूतपृथक्त्वं वा, योजनं

योजनपृथक्त्वं वा, योजनशतं योजनशतपृथक्त्वं वा, योजनसहस्रं योजनसहस्रपृथक्त्वं वा, योजनलक्षं योजनलक्षपृथक्त्वं वा, उत्कृष्टेन लोकं वा दृष्ट्वा प्रदीपध्वंस इव प्रतिपततीति। येनावधिना योऽलोकस्य सम्बन्धिनमेकमप्याकाशप्रदेश-मास्तां बहूनामाकाशप्रदेशानां पश्येत् तस्याप्रतियात्यवधिज्ञानं भवति। तत आरभ्य आकेवलज्ञानं यावत् न प्रतिपतति, एतावति क्षयोपशमे सति आत्मा न पुनः कर्म्मशत्रुणा परिभूयते, किन्तु समासादितैतावदालोकजयोऽप्रतिनिवृत्तः शेषमपि कर्म्मशत्रुसंघातं विनिर्जित्य केवलराज्यश्रियं प्राप्नोति, तदुक्तं श्रीनन्दीसूत्रे—"से किं तं पडिवाइ ओहिनाणं? पडिवाइ ओहिनाणं जहन्नेणं अंगुलस्स असंखिज्जयभागं वा, संखिज्जभागं वा, वालग्गं वा, वालग्गपहुत्तं वा, लिक्खं लिक्खंपहुत्तं वा, जूअं वा जूअपुहुत्तं वा, जवं जवपुहुत्तं वा, अंगुलं वा अंगुलपुहुत्तं वा पायं वा पायपुहुत्तं वा, विहत्थिं वा विहत्थिपुहुत्तं वा, रयणिं वा रयणिपुहुत्तं वा, कुच्छिं कुच्छिपुहुत्तं वा, धणुं वा धणुपुहुत्तं वा, गाउअं वा गाउपुहुत्तं वा, जोयणं वा, जोयणपुहुत्तं वा, जोयणसयं वा, जोयणसयपुहुत्तं वा, जोयणसहस्सं वा, जोयणसहस्सपुहुत्तं वा, जोयणलक्खं वा जोयणलक्खपुहुत्तं वा, उक्कसेणं लोगं वा, पासित्ता णं पडिवइज्जा, से त्तं पडिवाइ ओहिनाणं। से किं तं अपडिवाइ ओहिनाणं? अपडिवाइ ओहिनाणं जेणं अलोगस्स एगमवि आगासपएसं जाणइ पासइ तेण परं अपडिवाइ ओहिनाणं से त्तं अपडिवाइ ओहिनाणं" इत्युक्तं प्रतिपात्यप्रतिपात्यवधिज्ञानमुक्ता अवधिज्ञानस्य षड् भेदाः।

अथ सामान्येन द्रव्यक्षेत्रकालभावैरवधिज्ञानं निरूप्यते—तत्र जघन्येनावधिज्ञानी अनन्तानि रूपिद्रव्याणि जानाति पश्यति, तानि च तैजसभाषाप्रायोग्यवर्गणापान्तरालवर्त्तीनि द्रव्याणि द्रष्टव्यानि। उत्कृष्टतः पुनः सर्वाणि रूपिद्रव्याणि जानाति पश्यति। तत्र ज्ञानं विशेषग्रहणात्मकं दर्शनं सामान्यपरिच्छेदात्मकं, तदुक्तं नन्दिचूर्णौ—"जाणइ त्ति णाणं तत्थ

"तं च दुविहं उपज्जइ तंजहा—उज्जुमई य विपुलमई य, तं समासओ चउविहं पन्नत्तं, तंजहा—दव्वओ खित्तओ कालओ भावओ, तत्थ दव्वओ णं उज्जुमई णं अणंते अणंतपएसिए स्कंधे जाणइ पासइ ते चेव विउलमई अब्भहियतराए विमलतराए विशुद्धतराए वितिमिरतराए जाणइ पासइ, खेत्तओ णं उज्जुमई अंगुलस्स असंखेज्जभागं उक्कोसेणं अहे जाव इमीसे रयणप्पभाए पुढवीए उवरिमहेट्ठिल्ले खुड्डगपयरे उड्ढं जाव जोइसस्स उवरिमतले तिरियं जाव अंतोमणुस्सखित्ते अड्ढाइज्जेसु दीवसमुद्देसु पन्नरससु कम्मभूमिसु तीसाए अकम्मभूमिसु छप्पन्नाए अंतरदीवगेसु सन्निपंचेन्दिआणं पज्जत्ताणं मणोगए भावे जाणइ पासइ तं चेव विपुलमई अड्ढाइज्जेहिमंगुलेहिं अब्भहिअतरं विउलतरं विशुद्धतरं वितिमिरतरागं खेत्तं जाणइ पासइ, कालओ णं उज्जुमई जहन्नेणं पलिओवमस्स असंखिज्जइभागं उक्कोसेणवि पलिओवमस्स असंखिज्जइभागं अतीतमणागयं वा कालं जाणइ पासइ, तं चेव विउलमई अब्भहियतरागं विउलतरागं विशुद्धतरागं वितिमिरतरागं जाणइ पासइ, भावओ णं उज्जुमई अणंते भावे जाणइ पासइ सव्वभावाणं अणंतभागं जाणइ पासइ, तं चेव विउलमई अब्भहियतरागं विउलतरागं विशुद्धतरागं वितिमिरतरागं जाणइ पासइ। मणपज्जवनाणं पुण जाण मणपरिचिंतिअत्थपागडणं। माणुसखित्तनिबद्धं गुणपच्चइअं चरित्तवओ॥" इत्युक्तं मनःपर्यायज्ञानम्॥

तथा प्राग्व्यावर्णितशब्दार्थं केवलज्ञानं सर्वद्रव्यक्षेत्रकालभावपरिच्छेदकमनन्तमप्रतिपात्येकविधम्। तच्च द्विविधं भवति, तद्यथा—भवस्थकेवलज्ञानं सिद्धकेवलज्ञानं च। भवन्ति कर्मवशवर्त्तिनः प्राणिनोऽस्मिन्निति भवो नारकादि जन्म, स चेह मनुष्यभव एव ग्राह्योऽन्यत्र केवलज्ञानस्यानुत्पत्तेः। भवे तिष्ठन्तीति भवस्थास्तेषां केवलज्ञानं भवस्थकेवलज्ञानम्। सितं—बद्धं ध्मातं—भस्मीकृतमष्टप्रकारं कर्म येन स सिद्धः पृषोदरादित्वात् रूपसिद्धिः सकलकर्मविनिर्मुक्तः मुक्तावस्थायामुपगतः इत्यर्थः, तस्य

केवलज्ञानं सिद्धकेवलज्ञानम् । भवस्थकेवलज्ञानं द्विविधम्, सयोगिभवस्थकेवलज्ञानमयोगिभवस्थकेवलज्ञानम् । सयोगिकेवलज्ञानमपि द्विविधम्, प्रथमसमयसयोगिभवस्थकेवलज्ञानम्, अप्रथमसमयसयोगिभवस्थकेवलज्ञानम् । अत्र प्रथमसमयः केवलज्ञानोत्पत्तिसमयः केवलज्ञानोत्पत्तिसमयादूर्ध्वं द्वितीयादिकः सर्वोऽप्यप्रथमसमयो यावत्सयोगिचरमसमयः, यद्वा चरमसमयसयोगिभवस्थकेवलज्ञानमचरमसमयसयोगिभवस्थकेवलज्ञानम् । अयोगिभवस्थकेवलज्ञानमपि द्विभेदम्, प्रथमसमयायोगिभवस्थकेवलज्ञानमप्रथमसमयायोगिभवस्थकेवलज्ञानम्, यद्वा चरमसमयायोगिभवस्थकेवलज्ञानमचरमसमयायोगिभवस्थकेवलज्ञानम् । सिद्धकेवलज्ञानमपि द्विविधम्, अनन्तरसिद्धकेवलज्ञानं परम्परसिद्धकेवलज्ञानम् । न विद्यते समयेनाप्यन्तरं व्यवधानं यस्य सोऽनन्तरः, स चासौ सिद्धश्चानन्तरसिद्धः सिद्धत्वभवनप्रथमसमये वर्त्तमानः तस्य केवलज्ञानमनन्तरसिद्धकेवलज्ञानम् । तथा विवक्षिते प्रथमसमये यः सिद्धः तस्य यो द्वितीयसमयसिद्धः स परः तस्यापि यस्तृतीयसमयसिद्धः स परः, एवमन्येऽपि वाच्याः । परे च परे च परम्परे, पृषोदरादित्वात् रूपनिष्पत्तिः, परम्परे च ते सिद्धाश्च परम्परसिद्धाः, विवक्षितसिद्धत्वप्रथमसमयात् प्राक् द्वितीयादिषु समयेष्वनन्ता अतीताद्धायां यावद्वर्त्तमाना इत्यर्थः ।

तेषां तावत् सत्पदद्रव्यप्रमाणक्षेत्रस्पर्शनकालान्तरभावाल्पबहुत्वद्वारैरनन्तरसिद्धानां परम्परसिद्धानां च ससन्निकर्षैः नवभिः द्वारैः क्षेत्रकालगतिवेदतीर्थलिङ्गचारित्रबुद्धज्ञानावगाहनोत्कृष्टान्तरानुसमयगणनाल्पबहुत्वरूपेषु पञ्चदशद्वारेषु किञ्चित् स्वरूपमुच्यते, तत्रापि प्रथमतोऽनन्तरसिद्धानामष्टभिः द्वारैः पञ्चदशस्वपि लेशतः स्वरूपं निगद्यते । तत्रादौ पञ्चदशस्वपि द्वारेषु सत्पदप्ररूपणोच्यते—क्षेत्रद्वारे त्रिविधेऽपि क्षेत्रलोके सिद्धाः प्राप्यन्ते । ऊर्ध्वलोके पाण्डकवनादावधोलोकेऽधोलौकिकेषु ग्रामेषु,

मध्यवर्त्तिवाह्यावधियुक्तेऽपि लोकरूढमवधिप्रकाशितक्षेत्रमध्यवर्त्तित्वमात्रं तु तत्रापि विद्यत इत्येतद्व्यवच्छेदार्थमुक्तम्। शेषाः भाज्याः केचनाभ्यन्तरावधयः केचन वाह्यावधयः केचन सर्वतः केचन देशतश्चापि पश्यन्ति, एवं केचन नियतावधयः केचनानियतावधयोऽपि भवन्तीत्युक्तं द्विविधमवधिज्ञानम्। मिथ्यादृष्टेस्तु मत्यज्ञानश्रुताज्ञानविभङ्गज्ञानरूपाणि त्रीण्यपि अज्ञानानि बोध्यानीति ॥

मनोमात्रसाक्षात्कारि मनःपर्यायज्ञानम्। न च तेन तादृशावधिज्ञानेऽतिव्याप्तिरिति वाच्यम्, मनःसाक्षात्कारिणोऽवधेः स्कन्धान्तरस्यापि साक्षात्कारित्वेन तादृशावधिज्ञानासिद्धेः। ननु मनःपर्यवज्ञानस्यापि मनोमात्रसाक्षात्कारित्वं नास्त्येव मनस्त्वपरिणतस्कन्धालोचितं वाह्यमप्यर्थं साक्षात्करणादिति चेत्? न, मनोद्रव्याणां तादृशाकारान्यथानुपपत्तिप्रसूतानुमानत एव ग्रहणाभ्युपगमात्, तदुक्तं भाष्ये—"जाणइ वज्झाणुमाणेणं" इति। तत्र मानसमचक्षुर्दर्शनमङ्गीक्रियते यत्पुरस्कारेण सूत्रे मनोद्रव्याणि जानाति पश्यति चैतद्व्यवह्रियते। यद्वैकरूपेऽपि ज्ञाने क्षयोपशमवैचित्र्येण सामान्यरूपमनोद्रव्याकारपरिच्छेदापेक्षया पश्यति विशिष्टतरमनोद्रव्याकारपरिच्छेदापेक्षया च जानातीत्येवं वा व्याचक्षते, आपेक्षिकसामान्यज्ञानस्यापि व्यावहारिकावग्रहन्यायेन व्यावहारिकदर्शनरूपत्वात्, निश्चयतस्तु सर्वमपि तज्ज्ञानमेव, मनःपर्यायदर्शनानुपदेशादिति द्रष्टव्यम्। तच्चर्द्धिप्राप्तानामप्रमत्तमुनीनामुत्पद्यमानमृजुमतिविपुलमतिभेदाद्द्विविधं भवति। मननं मतिः ऋज्वी सामान्यग्राहिणी मतिः ऋजुमतिः 'घटोऽनेन चिन्तित' इत्यादि सामान्याकाराध्यवसायनिबन्धनीभूता कतिपयपर्यायविशिष्टमनोद्रव्यपरिच्छित्तिः। विपुला—विशेषग्राहिणी मतिः विपुलमतिः 'घटोऽनेन चिन्तितः स च सौवर्णिकः

पाटलिपुत्रकोऽद्यतनो महान् अपवरकस्थः फलादिना पिहित' इत्याद्यध्यवसायहेतुभूता प्रभूतविशेषविशिष्टमनोद्रव्यपरिच्छित्तिः । तदुक्तं भाष्ये—"रिजु सामन्नं तम्मत्तगाहिणी रिजुमई मणोणाणं । पायं विसेसविमुहं घडमित्तं चिंतियं मुणइ ॥ १ ॥ विपुलं वत्थु-विसेसेण नाणं तग्गाहिणी मई विपुलता । चिंतियमणुसरइ घडं पसंगओ पज्जवसएहिं ॥२॥" इति । अस्यां च व्युत्पत्तौ स्वतन्त्रमेव ज्ञानमभिधेयं, यदि पुनस्तद्वानभिधेयो विवक्ष्यते तदैवं व्युत्पत्तिः—ऋज्वी सामान्यग्राहिणी मतिरस्य स ऋजुमतिः, तथा विपुला विशेषग्राहिणी मतिरस्य स विपुलमतिः । तद्द्विविधमपि समासतश्चतुर्विधं प्रज्ञप्तं तद्यथा—द्रव्यतः क्षेत्रतः कालतो भावतश्च । तत्र द्रव्यत ऋजुमतिरनन्तप्रादेशिकान् स्कन्धान् संज्ञिभिः मनस्त्वेन परिणतान् साक्षात्कारेण जानाति, मनस्त्वेन परिणतैः स्कन्धैरालोचितं बाह्यमर्थं तु न साक्षात्कारेणावगच्छति किन्त्वनुमानतः । अत एव मनोनिमित्ताचक्षुर्दर्शनेन पश्यति । विपुलमतिस्तु तानेव मनस्त्वेन परिणतान् प्रभूततरान् विशुद्धाँश्च जानाति पश्यति । क्षेत्रतः ऋजुमतिरधो यावदस्याः रत्नप्रभायाः पृथिव्याः उपरितनाधस्तनान् क्षुल्लकप्रतरान् ऊर्ध्वं ज्योतिश्चक्रस्योपरितनतलं यावत्तिर्यक्तु मनुष्यलोकं जानाति पश्यति, तद्गतसंज्ञिपञ्चेन्द्रियाणां मनोगतान् भावान् जानाति पश्यतीत्यर्थः । विपुलमतिस्तु तदेव क्षेत्रं सार्धद्व्यङ्गुलेनाधिकतरं विशुद्धतरं च जानाति पश्यति । कालतः ऋजुमतिः भूते भविष्यति च पल्योपमासंख्येयभागरूपे काले तेषां मनोद्रव्याणां व्यतीतान् पर्यायान् भविष्यतश्च पर्यायान् जानाति पश्यति, विपुलमतिस्तु प्रभूतान् विशुद्धतरान् जानाति पश्यति । भावतः सर्वपर्यायानन्ततमभागवर्त्तिनः मनस्त्वेन परिणतान् द्रव्यमनसः रूपादिपर्यायान् जानाति पश्यति, न तु भावमनसस्तस्य ज्ञानरूपत्वात्, विपुलमतिस्तु प्रभूतान् विशुद्धतरान् जानाति पश्यति । तदुक्तं नन्दिसूत्रे—

"तं च दुविहं उपज्जइ तंजहा—उज्जुमई य विपुलमई य, तं समासओ चउव्विहं पन्नत्तं, तंजहा—दव्वओ खित्तओ कालओ भावओ, तत्थ दव्वओ णं उज्जुमई णं अणंते अणंतपएसिए स्कंधे जाणइ पासइ ते चेव विउलमई अब्भहियतराए विमलतराए विसुद्धतराए वितिमिरतराए जाणइ पासइ, खेत्तओ णं उज्जुमई अंगुलस्स असंखेज्जभागं उक्कोसेणं अहे जाव इमीसे रयणप्पभाए पुढवीए उवरिमहेट्ठिल्ले खुड्डगपयरे उड्ढं जाव जोइसस्स उवरिमतले तिरियं जाव अंतोमणुस्सखित्ते अड्ढाइज्जेसु दीवसमुद्देसु पन्नरससु कम्मभूमिसु तीसाए अकम्मभूमिसु छप्पन्नाए अंतरदीवगेसु सन्निपंचेन्दिआणं पज्जत्ताणं मणोगए भावे जाणइ पासइ तं चेव विपुलमई अड्ढाइज्जेहिमंगुलेहिं अब्भहिअतरं विउलतरं विशुद्धतरं वितिमिरतरागं खेत्तं जाणइ पासइ, कालओ णं उज्जुमई जहन्नेणं पलिओवमस्स असंखिज्जइभागं उक्कोसेणवि पलिओवमस्स असंखिज्जइभागं अतीतमणागयं वा कालं जाणइ पासइ, तं चेव विउलमई अब्भहियतरागं विउलतरागं विशुद्धतरागं वितिमिरतरागं जाणइ पासइ, भावओ णं उज्जुमई अणंते भावे जाणइ पासइ सव्वभावाणं अणंतभागं जाणइ पासइ, तं चेव विउलमई अब्भहियतरागं विउलतरागं विशुद्धतरागं वितिमिरतरागं जाणइ पासइ । मणपज्जवनाणं पुण जाण मणपरिचिंतिअत्थपागडणं । माणुसखित्तनिबद्धं गुणपच्चइअं चरित्तवओ ॥" इत्युक्तं मनःपर्यायज्ञानम् ॥

तथा प्राग्व्यावर्णितशब्दार्थं केवलज्ञानं सर्वद्रव्यक्षेत्रकालभावपरिच्छेदकमनन्तमप्रतिपात्येकविधम् । तच्च द्विविधं भवति, तद्यथा—भवस्थकेवलज्ञानं सिद्धकेवलज्ञानं च । भवन्ति कर्मवशवर्त्तिनः प्राणिनोऽस्मिन्निति भवो नारकादि जन्म, स चेह मनुष्यभव एव ग्राह्योऽन्यत्रकेवलज्ञानस्यानुत्पत्तेः । भवे तिष्ठन्तीति भवस्थास्तेषां केवलज्ञानं भवस्थकेवलज्ञानम् । सितं—बद्धं ध्मातं—भस्मीकृतमष्टप्रकारं कर्म येन स सिद्धः पृषोदरादित्वात् रूपसिद्धिः सकलकर्मविनिर्मुक्तः मुक्तावस्थायामुपगतः इत्यर्थः, तस्य

केवलज्ञानं सिद्धकेवलज्ञानम् । भवस्थकेवलज्ञानं द्विविधम्, सयोगिभवस्थकेवलज्ञानमयोगिभवस्थकेवलज्ञानम् । सयोगिकेवलज्ञानमपि द्विविधम्, प्रथमसमयसयोगिभवस्थकेवलज्ञानम्, अप्रथमसमयसयोगिभवस्थकेवलज्ञानम् । अत्र प्रथमसमयः केवलज्ञानोत्पत्तिसमयः केवलज्ञानोत्पत्तिसमयादूर्ध्वं द्वितीयादिकः सर्वोऽप्यप्रथमसमयो यावत्सयोगिचरमसमयः, यद्वा चरमसमयसयोगिभवस्थकेवलज्ञानमचरमसमयसयोगिभवस्थकेवलज्ञानम् । अयोगिभवस्थकेवलज्ञानमपि द्विभेदम्, प्रथमसमयायोगिभवस्थकेवलज्ञानमप्रथमसमयायोगिभवस्थकेवलज्ञानम्, यद्वा चरमसमयायोगिभवस्थकेवलज्ञानमचरमसमयायोगिभवस्थकेवलज्ञानम् । सिद्धकेवलज्ञानमपि द्विविधम्, अनन्तरसिद्धकेवलज्ञानं परम्परसिद्धकेवलज्ञानम् । न विद्यते समयेनाप्यन्तरं व्यवधानं यस्य सोऽनन्तरः, स चासौ सिद्धश्चानन्तरसिद्धः सिद्धत्वभवनप्रथमसमये वर्त्तमानः तस्य केवलज्ञानमनन्तरसिद्धकेवलज्ञानम् । तथा विवक्षिते प्रथमसमये यः सिद्धः तस्य यो द्वितीयसमयसिद्धः स परः तस्यापि यस्तृतीयसमयसिद्धः स परः, एवमन्येऽपि वाच्याः । परे च परे च परम्परे, पृषोदरादित्वात् रूपनिष्पत्तिः, परम्परे च ते सिद्धाश्च परम्परसिद्धाः, विवक्षितसिद्धत्वप्रथमसमयात् प्राक् द्वितीयादिषु समयेष्वनन्ता अतीताद्धायां यावद्वर्त्तमाना इत्यर्थः ।

तेषां तावत् सत्पदद्रव्यप्रमाणक्षेत्रस्पर्शनकालान्तरभावाल्पबहुत्वद्वारैरनन्तरसिद्धानां परम्परसिद्धानां च ससन्निकर्षैः नवभिः द्वारैः क्षेत्रकालगतिवेदतीर्थलिङ्गचारित्रबुद्धज्ञानावगाहनोत्कृष्टान्तरानुसमयगणनाल्पबहुत्वरूपेषु पञ्चदशद्वारेषु किञ्चित् स्वरूपमुच्यते, तत्रापि प्रथमतोऽनन्तरसिद्धानामष्टभिः द्वारैः पञ्चदशेष्वपि लेशतः स्वरूपं निगद्यते । तत्रादौ पञ्चदशस्वपि द्वारेषु सत्पदप्ररूपणोच्यते–क्षेत्रद्वारे त्रिविधेऽपि क्षेत्रलोके सिद्धाः प्राप्यन्ते । ऊर्ध्वलोके पाण्डकवनादावधोलोकेऽधोलौकिकेषु ग्रामेषु,

प्पभापुढविनेरइएहिंतो उव्वट्टित्ता तित्थयरत्तं लभेज्जा, जस्स णं रयणप्पभापुढविनेरइयस्स तित्थयरनामगोत्ताइं कम्माइं नो बद्धाइं जाव- नो उइन्नाइं उवसंताइं भवन्ति से णं रयणप्पभापुढविनेरइए रयणप्पभापुढविनेरइएहिंतो उव्वट्टित्ता तित्थयरत्तं नो लभेज्जा, से एएणट्ठेणं गोयमा ! एवं वुचइ अत्थेगइए लभेज्जा अत्थेगइए नो लभेज्जा । एवं जाव वालुयप्पभापुढविनेरइएहिंतो तित्थयरत्तं लभेज्जा । पंकप्पभापुढ- विनेरइया णं भंते पंकप्पभापुढविनेरइएहिंतो अणंतरं उव्वट्टित्ता तित्थयरत्तं लभेज्जा ? गोयमा ! णो इणट्ठे समट्ठे अंतकिरियं पुण करेज्जा। धूमप्पभापुढविनेरइए णं पुच्छा, गोयमा ! नो इणट्ठे समट्ठे, विरइं पुण लभेज्जा, तमापुढविपुच्छा, गोयमा ! नो इणट्ठे समट्ठे, विरयावि- रइं लभेज्जा, अहे सत्तमाए पुच्छा, गोयमा ! नो इणट्ठे समट्ठे, संमत्तं पुण लभेज्जा । असुरकुमाराणं पुच्छा, गोयमा ! नो इणट्ठे समट्ठे अंतकिरियं पुण करेज्जा, एवं निरंतरं जाव आउक्काइया, तेउकाइए णं भंते ! तेउकाइएहिंतो अणंतरं उव्वट्टित्ता तित्थयरत्तं लभेज्जा ? गोयमा ! नो इणट्ठे समट्ठे, केवलिपन्नत्तं धम्मं लभेज्जा सवणयाए, एवं वाउकाइएवि, वणस्सइकाइए णं पुच्छा, गोयमा ! नो इणट्ठे समट्ठे, अंतकिरियं पुण करेज्जा । वेइंदितेइंदिचउरिंदियाणं पुच्छा, गोयमा ! नो इणट्ठे समट्ठे, मणपज्जवनाणं पुण उप्पाडेज्जा। पंचिंदियतिरिखजोणियमणुस्स- वाणमंतरजोइसिएसु पुच्छा, गोयमा ! नो इणट्ठे समट्ठे, अंतकिरियं पुण करेज्जा। सोहम्मगदेवे णं भंते ! अणंतरं चइत्ता तित्थरत्तं लभेज्जा ? गोयमा ! अत्थेगइए लभेज्जा अत्थेगइए नो लभेज्जा, एवं जहा रयणपुढविनेरइयस्स एवं जाव सव्वट्ठगदेवे" इत्युक्तं गतिद्वारे सत्पदप्ररूप- णाद्वारम् ॥ ३ ॥ वेदद्वारे प्रत्युत्पन्ननयमधिकृत्य व्यपगतवेदाः एव सिद्ध्यन्ति, तद्भवानुभूतपूर्ववेदमधिकृत्य तु त्रिष्वपि वेदेषु सिद्ध्यन्ति, तीर्थकरास्तु वर्षवरवर्जवेदद्विके सिद्ध्यन्ति। तत्रापि तेषां स्त्रीवेदे सिद्धभवनं चानन्तकालेनाश्चर्येऽन्तर्भवतीति ज्ञेयम्। उक्तं वेदद्वारे सत्पदप्ररूणाद्वारम् ॥ ४ ॥ तीर्थद्वारे तीर्थकरतीर्थे तीर्थकरीतीर्थे चातीर्थे च सिद्ध्यन्ति। तीर्थकरस्तु स्वतीर्थे एव

सिद्ध्यतीत्युक्तं तीर्थद्वारे सत्पदप्ररूपणाद्वारम् ॥ ५ ॥ लिङ्गद्वारे द्रव्यलिङ्गमपेक्ष्य स्वलिङ्गेऽन्यलिङ्गे गृहस्थलिङ्गे च सिद्ध्यन्ति,
संयमरूपं भावलिङ्गमपेक्ष्य तु स्वलिङ्ग एव सिद्ध्यन्ति, नान्यत्र, तदुक्तं–"लिंगेण अन्नलिंगे गिहत्थलिंगे तहेव य सलिंगे । सव्वेहिं
दव्वलिंगे भावेण सलिंगे संजओ ॥" इत्युक्तं लिङ्गद्वारे सत्पदप्ररूपणाद्वारम् ॥ ६ ॥ चारित्रद्वारे प्रत्युत्पन्ननयमपेक्ष्य यथाख्या-
तचारित्रे सिद्ध्यन्ति, तद्भवानुभूतपूर्वचरणापेक्षया तु केचित् सामायिकसूक्ष्मसम्परायथाख्यातचारित्रिणः केचित्तु
सामायिकच्छेदोपस्थापनीयसूक्ष्मसम्परायथाख्यातचारित्रिणः केचित् सामायिकपरिहारविशुद्धिकसूक्ष्मसम्परायथाख्या-
तचारित्रवन्तः केचित् सामायिकच्छेदोपस्थापनीयपरिहारविशुद्धिकसूक्ष्मसम्परायथाख्यातचारित्रवन्तश्च सिद्ध्यन्ति ।
तदुक्तं–चरणंमि अहक्खाए पच्चुप्पन्नेण सिज्झंति नएणं । पुव्वाणंतरचरणे तिचउक्कगपंचगमगेणं ॥ १ ॥" इति । तीर्थकृतः पुनः
सामायिकसूक्ष्मसम्परायथाख्यातचारित्रवन्त एव सिद्ध्यन्ति न शेषद्विके, इत्युक्तं चारित्रद्वारे सत्पदप्ररूपणाद्वारम्
॥७॥ बुद्धद्वारे प्रत्येकबुद्धाः स्वयम्बुद्धा बुद्धबोधिता बुद्धीबोधिताश्च सिद्ध्यन्तीत्युक्तं बुद्धद्वारे सत्पदप्ररूपणाद्वारम् ॥ ८ ॥
ज्ञानद्वारे प्रत्युत्पन्ननयमपेक्ष्य केवलज्ञान एव सिद्ध्यन्ति, तद्भवानुभूतपूर्वज्ञानमपेक्ष्य केचिन्मतिश्रुतज्ञानिनः केचिन्मति-
श्रुतावधिज्ञानिनः केचिन्मतिश्रुतमनःपर्यवज्ञानिनः केचिन्मतिश्रुतावधिमनःपर्यवज्ञानिनः सिद्ध्यन्तीत्युक्तं ज्ञानद्वारे
सत्पदप्ररूपणाद्वारम् ॥ ९ ॥ अवगाहनाद्वारे जघन्यमध्यमोत्कृष्टावगाहनायां सिद्ध्यन्ति, तत्र जघन्या द्विकरप्रमाणोत्कृष्टा
पञ्चविंशत्यधिकपञ्चशतधनुःप्रमाणा, तदुक्तं–"उग्गाहणा जहन्ना रयणिदुगं अह पुणो उ उक्कोसा । पंचेव धणुसयाइं धणुहपहु-
त्तेण अहियाइं ॥ १ ॥" अत्र पृथक्त्वशब्दो बहुत्ववाची, बहुत्वं चेह पञ्चविंशतिरूपं द्रष्टव्यमिति सिद्धप्राभृतवृत्तौ । सोत्कृष्टा-

तिर्यग्लोके मनुष्यक्षेत्रे। तत्रापि निर्व्याघातेन पञ्चदशस्वपि कर्मभूमिषु व्याघातेन समुद्रनदीवर्षधरपर्वतादावपि, तदुक्तं—"दीवसमुद्देह्वाइजएसु वाघायखेत्तओ सिद्धा। निवाघाएण पुणो पनरससुं कम्मभूमीसुं ॥१॥" इति। व्याघातोऽत्र संहरणमिति। तीर्थकृतस्तु पञ्चदशसु कर्मभूमिष्वेव सिद्ध्यन्ति, नान्यत्र, तेषां भगवतां संहरणाभावादित्युक्तं क्षेत्रद्वारे सत्पदप्ररूपणाद्वारम् ॥ १ ॥ कालद्वारेऽवसर्पिण्याः तृतीयचतुर्थारकयोरेव चरमशरीरिणो जन्म, निर्वाणं तु तृतीयचतुर्थयोः केषाञ्चित् पञ्चमारकेऽपि, उत्सर्पिण्यां द्वितीयतृतीयचतुर्थारकेषु जन्म, निर्वाणं तु नियमेन तृतीयचतुर्थयोरेवारकयोः नान्यत्र, तदुक्तं—"दोसुवि समासु जाता सिज्झंतोस्सप्पिणीए कालतिगे। तीसु य जाया उसप्पिणीए सिज्झंति कालदुगे ॥१॥" इति। चतुर्थारकप्रतिविभागे महाविदेहे सर्वदैव निर्वाणं भवति। व्याघातमपेक्ष्यावसर्पिण्युत्सर्पिण्योः षट्स्वप्यरकेषु सिद्ध्यन्ति। तीर्थकृतां तु कालद्विकेऽपि तृतीयचतुर्थयोरारकयोरेव जन्म सिद्धिगमनं च वेदितव्यम्, न शेषेषु, तथाहि—अवसर्पिण्यां प्रथमतीर्थपतेस्तृतीयारकपर्यन्ते जन्म एकोननवतिपक्षेषु शेषेषु च निर्वाणं जातम्। चरमतीर्थपतेस्तु चतुर्थारकपर्यन्ते जन्म एकोननवतिपक्षेषु शेषेषु निर्वाणमिति, तदुक्तं—"समणे भगवं महावीरे तीसं वासाइं अगारवासमज्झे वसित्ता साइरेगाइं दुवालस संवच्छराइं छउमत्थपरियागं पाउणित्ता बायालीसं वासाइं सामन्नपरियागं पाउणित्ता बावत्तरिं वासाणि सव्वाउयं पालइत्ता खीणे वेयणिज्जआउयनामगोए दूसमसुसमाए बहुविइक्कंताए तिहिं वासेहिं अद्धनवमेहि य मासेहिं सेसेहिं पावाए मज्झिमाए जाव सव्वदुःखप्पहीणे" इति। तथोत्सर्पिण्यां प्रथमजिनपतेस्तृतीयारकस्यैकोननवतिपक्षेषु गतेषु जन्म यतो भगवद्वर्द्धमानस्वामिसिद्धिगमनस्य भविष्यन्महापद्मतीर्थंकरोत्पादस्य चान्तरं चतुरशीतिवर्षसहस्राणि पञ्चमासाधिकानि च सप्तवर्षाणि भवति, तदुक्तं—"चुलसीइवाससहसा वासा सत्तेव पंच मासा य। वीरमहापउमाणं अंतरमेयं जिण-

दिट्टं ॥ १ ॥" इति। तथा चरमजिनपतिश्चतुर्थारकस्यैकोननवतिपक्षेषु व्यतिक्रान्तेषूत्पद्यते, एकोननवति पक्षाधिकचतुरशीति पूर्वलक्षातिक्रमे च सिद्ध्यति। ततोऽवसर्पिण्युत्सर्पिणिरूपे कालद्विकेऽपि तृतीयचतुर्थारकयोरेव तीर्थकृतां जन्म निर्वाणं च भवतीत्युक्तं कालद्वारे सत्पदप्ररूपणाद्वारम् ॥ २ ॥ गतिद्वारे प्रत्युत्पन्ननयमधिकृत्य मनुजगतावेव सिद्ध्यन्तः प्राप्यन्ते, न शेषासु गतिषु। अतिक्रान्तमनन्तरं भवमधिकृत्य चतसृभ्यो गतिभ्य आगतानां निर्वाणं भवति, विशेषचिन्तायां धूमप्रभादिनरकत्रिकेभ्यः तेजोवायुभ्यो विकलाक्षेभ्यश्चागतानां न भवति। परम्परागतानां तु तेभ्योऽपि निर्वाणं भवति। तदुक्तं प्रज्ञापनायां—"नेरइया णं भंते ? अणंतरागया अंतकिरियं करेंति, परंपरागया वि अंतकिरियं करेंति ? गोयमा ! अणंतरागयावि अंतकिरिअं करेंति परंपरगयावि अंतकिरियं करेंति, एवं रयणप्पभापुढविनेरइयावि जाव पंकप्पभापुढविनेरइया, धूमप्पभापुढविनेरइयाणं पुच्छा गोयमा ! नो अणंतरागया अंतकिरिअं करेंति, परंपरागया अन्तकिरियं करेंति, एवं जाव अहे सत्तमपुढविनेरइया। असुरकुमारा जाव थणियकुमारा पुढविआउवणस्सइकाइया अणंतरागयावि अंतकिरियं करेंति परंपरागया अंतकिरियं करेंति, तेउवाउबेइंदियचउरिंदिया नो अणंतरागया अंतकिरियं करेंति परंपरागया अंतकिरियं करेंति, सेसा अणंतरागयावि अंतकिरियं करेंति परंपरागयावि" इति। तीर्थकरास्तु रत्नप्रभादिभ्यो नरकेभ्यः वैमानिकदेवेभ्यश्चानन्तरमागताः सिद्ध्यन्ति, न शेषेभ्यः, तदुक्तमार्यश्यामपादैः—"रयणप्पभापुढविनेरइया णं भंते ! रयणप्पभापुढविनेरइएहिंतो अणंतरं उव्वट्टित्ता तित्थयरत्तं लभेज्जा ? गोयमा ! अत्थेगइए लभेज्जा अत्थेगइए नो लभेज्जा, से केणट्ठेणं भंते ! एवं वुच्चइ अत्थेगइए लभेज्जा अत्थेगइए नो लभेज्जा ? गोयमा ! जस्स रयणप्पभापुढविनेरइयस्स तित्थयरनामगोत्ताइं कम्माइं बद्धाइं पुट्ठाइं कडाइं निवद्धाइं अभिनिवट्टाइं अभिसमन्नागयाइं उइन्नाइं नो उवसंताइं भवन्ति से णं रयणप्पभापुढविनेरइए रयण-

प्पभापुढविनेरइएहिंतो उव्वट्टित्ता तित्थयरत्तं लभेज्जा, जस्स णं रयणप्पभापुढविनेरइयस्स तित्थयरनामगोत्ताइं कम्माइं नो बद्धाइं जाव-नो उइन्नाइं उवसंताइं भवन्ति से णं रयणप्पभापुढविनेरइए रयणप्पभापुढविनेरइएहिंतो उव्वट्टित्ता तित्थयरत्तं नो लभेज्जा, से एएणट्ठेणं गोयमा ! एवं वुच्चइ अत्थेगइए लभेज्जा अत्थेगइए नो लभेज्जा । एवं जाव वालुयप्पभापुढविनेरइएहिंतो तित्थयरत्तं लभेज्जा । पंकप्पभापुढविनेरइया णं भंते पंकप्पभापुढविनेरइएहिंतो अणंतरं उव्वट्टित्ता तित्थयरत्तं लभेज्जा ? गोयमा ! णो इणट्ठे समट्ठे अंतकिरियं पुण करेज्जा । धूमप्पभापुढविनेरइए णं पुच्छा, गोयमा ! नो इणट्ठे समट्ठे, विरइं पुण लभेज्जा, तमापुढविपुच्छा, गोयमा ! नो इणट्ठे समट्ठे, विरयाविरइं लभेज्जा, अहे सत्तमाए पुच्छा, गोयमा ! नो इणट्ठे समट्ठे, संमत्तं पुण लभेज्जा । असुरकुमाराणं पुच्छा, गोयमा ! नो इणट्ठे समट्ठे अंतकिरियं पुण करेज्जा, एवं निरंतरं जाव आउक्काइया, तेउकाइए णं भंते ! तेउकाइएहिंतो अणंतरं उव्वट्टित्ता तित्थयरत्तं लभेज्जा ? गोयमा ! नो इणट्ठे समट्ठे, केवलिपन्नत्तं धम्मं लभेज्जा सवणयाए, एवं वाउकाइएवि, वणस्सइकाइए णं पुच्छा, गोयमा ! नो इणट्ठे समट्ठे, अंतकिरियं पुण करेज्जा । बेइंदितेइंदिचउरिंदियाणं पुच्छा, गोयमा ! नो इणट्ठे समट्ठे, मणपज्जवनाणं पुण उप्पाडेज्जा । पंचिंदियतिरिखजोणियमणुस्सवाणमंतरजोइसिएसु पुच्छा, गोयमा ! नो इणट्ठे समट्ठे, अंतकिरियं पुण करेज्जा । सोहम्मगदेवे णं भंते ! अणंतरं चइत्ता तित्थरत्तं लभेज्जा ? गोयमा ! अत्थेगइए लभेज्जा अत्थेगइए नो लभेज्जा, एवं जहा रयणपुढविनेरइयस्स एवं जाव सव्वट्ठगदेवे" इत्युक्तं गतिद्वारे सत्पदप्ररूपणाद्वारम् ॥ ३ ॥ वेदद्वारे प्रत्युत्पन्ननयमधिकृत्य व्यपगतवेदाः एव सिद्ध्यन्ति, तद्भवानुभूतपूर्ववेदमधिकृत्य तु त्रिष्वपि वेदेषु सिद्ध्यन्ति, तीर्थकरास्तु वर्षवरवर्जवेदद्विके सिद्ध्यन्ति । तत्रापि तेषां स्त्रीवेदे सिद्धभवनं चानन्तकालेनाश्चर्येऽन्तर्भवतीति ज्ञेयम् । उक्तं वेदद्वारे सत्पदप्ररूणाद्वारम् ॥ ४ ॥ तीर्थद्वारे तीर्थकरतीर्थे तीर्थकरीतीर्थे चातीर्थे च सिद्ध्यन्ति । तीर्थकरस्तु स्वतीर्थे एव

सिद्ध्यन्ति, नान्यत्र, तदुक्तं—"लिंगेण अन्नलिंगे गिहत्थलिंगे तहेव य सलिंगे। सवेहिं
सिद्ध्यतीत्युक्तं तीर्थद्वारे सत्पदप्ररूपणाद्वारम् ॥ ५ ॥ लिङ्गद्वारे द्रव्यलिङ्गमपेक्ष्य स्वलिङ्गेऽन्यलिङ्गे गृहस्थलिङ्गे च सिद्ध्यन्ति,
संयमरूपं भावलिङ्गमपेक्ष्य तु स्वलिङ्ग एव सिद्ध्यन्ति, नान्यत्र, तदुक्तं—"लिंगेण अन्नलिंगे गिहत्थलिंगे तहेव य सलिंगे। सवेहिं
दव्वलिंगे भावेण सलिंगे संजओ ॥" इत्युक्तं लिङ्गद्वारे सत्पदप्ररूपणाद्वारम् ॥ ६ ॥ चारित्रद्वारे प्रत्युत्पन्ननयमपेक्ष्य यथाख्या-
तचारित्रे सिद्ध्यन्ति, तद्भवानुभूतपूर्वचरणापेक्षया तु केचित् सामायिकसूक्ष्मसम्परायथाख्यातचारित्रिणः केचित्तु
सामायिकच्छेदोपस्थापनीयसूक्ष्मसम्परायथाख्यातचारित्रिणः केचित् सामायिकपरिहारविशुद्धिकसूक्ष्मसम्परायथाख्या-
तचारित्रवन्तः केचित् सामायिकच्छेदोपस्थापनीयपरिहारविशुद्धिकसूक्ष्मसम्परायथाख्यातचारित्रवन्तश्च सिद्ध्यन्ति।
तदुक्तं—चरणंमि अहक्खाए पच्चुप्पन्नेण सिज्झंति नएणं। पुव्वाणंतरचरणे तिचउक्कगपंचगमगेणं ॥ १ ॥" इति। तीर्थकृतः पुनः
सामायिकसूक्ष्मसम्परायथाख्यातचारित्रवन्त एव सिद्ध्यन्ति न शेषद्विके, इत्युक्तं चारित्रद्वारे सत्पदप्ररूपणाद्वारम्
॥७॥ बुद्धद्वारे प्रत्येकबुद्धाः स्वयम्बुद्धा बुद्धबोधिता बुद्धीबोधिताश्च सिद्ध्यन्तीत्युक्तं बुद्धद्वारे सत्पदप्ररूपणाद्वारम् ॥ ८ ॥
ज्ञानद्वारे प्रत्युत्पन्ननयमपेक्ष्य केवलज्ञान एव सिद्ध्यन्ति, तद्भवानुभूतपूर्वज्ञानमपेक्ष्य केचिन्मतिश्रुतज्ञानिनः केचिन्मति-
श्रुतावधिज्ञानिनः केचिन्मतिश्रुतमनःपर्यवज्ञानिनः केचिन्मतिश्रुतावधिमनःपर्यवज्ञानिनः सिद्ध्यन्तीत्युक्तं ज्ञानद्वारे
सत्पदप्ररूपणाद्वारम् ॥ ९ ॥ अवगाहनाद्वारे जघन्यमध्यमोत्कृष्टावगाहनायां सिद्ध्यन्ति, तत्र जघन्या द्विकरप्रमाणोत्कृष्टा
पञ्चविंशत्यधिकपञ्चशतधनुःप्रमाणा, तदुक्तं—"उग्गाहणा जहन्ना रयणिदुगं अह पुणो उ उक्कोसा। पंचेव धणुसयाइं धणुहपहु-
त्तेण अहियाइं ॥ १ ॥" अत्र पृथक्त्वशब्दो बहुत्ववाची, बहुत्वं चेह पञ्चविंशतिरूपं द्रष्टव्यमिति सिद्धप्राभृतवृत्तौ। सोत्कृष्टा-

वगाहना मरुदेवीकालवर्त्तिनामवसेया, मरुदेव्यप्यादेशान्तरेण नाभिकुलकरतुल्या, तदुक्तं सिद्धप्राभृतवृत्तौ—"मरुदेवीवि आएसन्तरेण नाभितुल्ल"त्ति । शेषा तु मध्यमा । तीर्थपानां तु जघन्या सप्तहस्तप्रमाणावगाहना उत्कृष्टा पञ्चशतधनुःप्रमाणा शेषा मध्यमेत्युक्तमवगाहनाद्वारे सत्पदप्ररूपणाद्वारम् ॥ १० ॥ उत्कृष्टद्वारे सम्यक्त्वपरिभ्रष्टा उत्कर्षतः कियता कालेन सिद्ध्यन्ति ? उच्यते, देशोनापार्द्धपुद्गलपरावर्त्तसंसारातिक्रमे, अनुत्कर्षतस्तु केचित्संख्येयकालातिक्रमे केचिदसंख्येयकालातिक्रमे केचिदनन्तकालातिक्रमे सिद्ध्यन्तीत्युक्तमुत्कृष्टद्वारे सत्पदप्ररूपणाद्वारम् ॥११॥ अन्तरद्वारे जघन्यतः समयान्तरेणोत्कृष्टतः षण्मासान्तरेणावश्यमेव कश्चित् सिद्ध्यतीत्युक्तमन्तरद्वारे सत्पदप्ररूपणाद्वारम् ॥ १२ ॥ निरन्तरद्वारे जघन्यतो द्वौ समयावुत्कृष्टतोऽष्टौ समयान् यावन्निरन्तरं सिद्ध्यन्तः प्राप्यन्त इत्युक्ता निरन्तरद्वारे सत्पदप्ररूपणा ॥१३॥ गणनाद्वारे जघन्यत एकस्मिन् समय एकः सिद्ध्यति, उत्कृष्टत एकस्मिन् समयेऽष्टोत्तरशतं सिद्ध्यति । नन्वस्मिन् भरतक्षेत्रेऽस्यामवसर्प्पिण्यां भगवान् श्रीमान्नाभेयोऽष्टापदपर्वते श्रमणानां दशसहस्रेण निर्वाणं प्राप्त इति चेत् ? न, एकस्मिन् समये भगवता श्रीनाभेयजिनेन सहाष्टोत्तरशतस्यैव निर्वाणगमनात् शेषमुनीनां नक्षत्रसाम्येऽपि बहुसमयान्तरेषु निर्वाणं जातमिति, तदुक्तं सङ्घदासगणिना वसुदेवचरिते—"भगवं च उसहसामी जयगुरु पुव्वसयसहस्सं वाससहस्सूणयं विहरिऊणं केवली अट्ठावयपव्वए सह दसहिं समणसहस्सेहिं परिनिव्वाणमुवगते चोद्दसेणं भत्तेणं माघबहुले पक्खे तेरसीए अभीइणा नक्खत्तेणं एगूणपुत्तसएणं अट्ठहियनत्तुएहिं सह एगसमएणं निव्वुओ सेसाणं वि अणगाराणं दस सहस्साणि अट्ठसयऊणगाणि सिद्धाणि, तम्मिचेव रिक्खे समयंतरेसु बहुसु" इत्युक्ता गणनाद्वारे सत्पदप्ररूपणा ॥१४॥ अल्पबहुत्वद्वारे सर्वस्तोका द्वित्रादि-

सिद्धाः, ततः एकका: सिद्धाः संख्येयगुणास्तदुक्तं—"संखाए जहन्नेणं एक्को उक्कोसएण अट्ठसयं । सिद्धाणेगा थोवा एगगसिद्धा उ संखगुणा ॥१॥" इत्युक्ताऽल्पबहुत्वद्वारे सत्पदप्ररूपणा ॥१५॥ तदेवं पञ्चदशस्वपि द्वारेषु कृता सत्पदप्ररूपणा ॥

अथ द्रव्यप्रमाणमुच्यते—तत्र क्षेत्रद्वारे ऊर्ध्वलोके युगपदेकसमयेन चत्वारः सिद्ध्यन्ति, तिर्यग्लोकेऽष्टोत्तरशतं सिद्ध्यति, अधोलोके 'वीस अहे तहेवे'ति उत्तराध्ययने जीवाजीवविभक्त्यध्ययने, 'उड्ढोतिरियलोए चउबावीसट्ठसयमि'ति संग्रहण्याम्, वीसपहुत्तं अहोलोए' इति सिद्धप्राभृते च—अत्र "विंशतिपृथक्त्वं द्वे विंशतीति" तद्वृत्तौ। समुद्रजले द्वौ सामान्यजले चत्वारः सिद्ध्यन्ति, तदुक्तं—"चत्तारि उड्ढलोए जले चउक्कं दुवे समुद्दंमि। अट्ठसयं तिरिलोए वीसपुहुत्तं अहोलोए ॥१॥" संग्रहण्यां तु—"तिन्नि सेसजले" इति। नन्दनवने चत्वारः सिद्ध्यन्ति, 'नंदणे चत्तारी'ति वचनात्। द्वौ पण्डकवने सिद्ध्यतः। पञ्चदशस्वपि कर्मभूमिष्वष्टोत्तरशतं सिद्ध्यन्ति। अकर्मभूमिषु प्रत्येकं संहरणमपेक्ष्य दश २ सिद्ध्यन्ति, तदुक्तं—"संकमणाए दसगं दो चेव हवंति पंडगवनंमि। समएण य अट्ठसयं पण्णरससु कम्मभूमीसु ॥१॥" इति। एकतमस्मिन् विजये विंशतिस्तदुक्तं सिद्धप्राभृतवृत्तौ—"वीसा एगयरे विजये" इत्युक्तं क्षेत्रद्वारे द्रव्यप्रमाणम् ॥१॥ कालद्वारे अवसर्पिण्यामुत्सर्पिण्यां च प्रत्येकं तृतीये चतुर्थे चारके अष्टोत्तरशतमवसर्पिण्यां पञ्चमारके च विंशतिः कालद्विकेऽपि शेषारकेषु च संहरणतः दश दश सिद्ध्यन्ति। तदुक्तं सिद्धप्राभृते—"उस्सप्पिणीओसप्पिणी तइय चउत्थय समासु अट्ठसयं पंचमियाए वीसं दसगं दसगं च सेसेसु ॥ १ ॥" इति । सिद्धप्राभृतवृत्तावपि तथैव—"सेसेसुं अरएसु दस सिज्झंति दोसुवि उस्सप्पिणीओसप्पिणीसु संहरणतो" इत्युक्तं कालद्वारे द्रव्यप्रमाणम् ॥ २ ॥ गतिद्वारे देवगतेरागतानामष्टोत्तरशतं शेषगतिभ्य आगताः प्रत्येकं दश दश सिद्ध्यन्ति, तदुक्तं सिद्धप्राभृते—"सेसाण गई ण दस दसगं" इति। भगवदार्यश्याम-

पादास्तु नरकगतिभ्य आगता दश सिद्ध्यन्ति, तत्रापि प्रथमनरकत्रिकेभ्य आगता दश २ पङ्कप्रभानारकेभ्य आगताः पञ्च २ सिद्ध्यन्ति । तिर्यग्गतेरागताः सामान्येन दश सिद्ध्यन्ति । विशेषचिन्तायां तु भूमिकायिकेभ्योऽप्कायिकेभ्यश्च निर्गताश्चत्वारश्चत्वारो वनस्पतिकायिकेभ्यः षट् पञ्चाक्षतिर्यग्योनिपुरुषेभ्यो दश पञ्चाक्षतिर्यक्योनिस्त्रीभ्योऽपि दश सिद्ध्यन्ति । सामान्येन मनुष्यगतेरागताः विंशतिः, विशेषचिन्तायां मनुष्यपुरुषेभ्य आगता दश मनुजस्त्रीभ्य आगता विंशतिः, सामान्येन देवगतेरागतानामष्टोत्तरशतं सिद्ध्यति, विशेषचिन्तायां वैमानिकेभ्य आगतानामष्टोत्तरशतं वैमानिकदेवीभ्य आगता विंशतिः भुवनपतिदेवेभ्य आगता दश तद्देवीभ्य आगताः पञ्च व्यन्तरेभ्य आगता दश तद्देवीभ्य आगताः पञ्च ज्योतिष्कदेवेभ्य आगता दश तद्देवीभ्य आगता विंशतिः सर्वत्र जघन्येन एकः । तदुक्तं प्रज्ञापनायाम्—"अणंतरागयाणं भंते ! नेरइया एगसमयेणं केवइया अंतकिरिअं पकरेंति ? गोअमा ! जहन्नेणं एगो वा दो वा तिन्नि वा उक्कोसेणं दस, रयणप्पभापुढवीनेरयावि एवं चेव, जाव वालुप्पभापुढवीनेरइया, अणंतरागयाणं भंते ! पंकप्पभापुढवीनेरइया एगसमएणं केवतिया अंतकिरिअं पकरेंति ? गोअमा ! जहन्नेणं एक्को वा दो वा तिन्नि वा उक्कोसेणं चत्तारि, अणंतरागयाणं भंते ! असुरकुमारा एगसमये केवतिया अंत० पकरेंति ? गोअमा ! जह० एक्को वा दो वा तिन्नि वा उक्कोसेणं दस, अणंतरागयाणं भंते ! असुरकुमारीओ एगस० केव० अंत० पकरेंति ? गोयमा ! जह० एक्को वा दो वा तिन्नि वा उक्कोसेणं पंच, एवं जहा असुरकुमारा सदेवीया तहा जाव थणिय० । अणंतरागयाणं भंते ! पुढवि० एगसमयेणं केवइया अंतकिरिअं पकरेंति ? गोयमा ! जह० इक्को वा दो वा तिन्नि वा उक्कोसेणं चत्तारि, एवं आउक्काइयावि चत्तारि, वणस्सइकाइया छच्च, पंचेंदियतिरिक्खजोणिया दस, तिरिक्खजोणिणीओ दस, मणुस्सा दस, मणुस्सीओ वीस, वाणमंतरा दस, वाणमंत-

वीसं" (सूत्र २५७) इत्युक्तं गतिद्वारे द्रव्यप्रमा-
रीओ पंच, जोइसिया दस, जोइसिणीओ वीसं, वेमाणिआ अट्ठसयं, वेमाणिणीओ वीसं
णम् ॥३॥ वेदद्वारे पुरुषाणामष्टोत्तरशतं स्त्रीणां विंशतिः नपुंसकाः दश सिद्ध्यन्ति, तदुक्तं–"अट्ठसयं पुरिसाणं वीसं
इत्थीणं दस नपुंसाणं" इति। तथा पुरुषेभ्य उद्धृत्य केचित् पुरुषाः केचित् स्त्रियः केचित् नपुंसकाः जायन्ते। एवं स्त्रीभ्यो
नपुंसकेभ्यश्चोद्धृतानां भङ्गत्रयं २ सर्वे च नव भङ्गा भवन्ति। ये पुरुषेभ्य उद्धृताः पुरुषा एव जातास्तेषामष्टोत्तरशतं
सिद्ध्यति। शेषेष्वष्टसु भङ्गेषु दश दश सिद्ध्यन्ति, तदुक्तं सिद्धप्राभृते–"सेसा उ अट्ठ भंगा दसगं २ तु होइ एक्केक्कं" इत्युक्तं
वेदद्वारे द्रव्यप्रमाणम् ॥४॥ तीर्थद्वारे तीर्थकराः स्वयम्बुद्धाश्चोत्कृष्टतश्चैकेन समयेन चत्वारः प्रत्येकबुद्धा दश अतीर्थकरा-
णामष्टोत्तरशतं स्त्रीणां विंशतिः द्वे तीर्थकर्यौ च। उक्तं तीर्थद्वारे द्रव्यप्रमाणम् ॥५॥ लिङ्गद्वारे द्रव्यतः स्वलिङ्गे अष्टोत्तर-
शतं गृहस्थलिङ्गे चत्वारोऽन्यलिङ्गे दश, तदुक्तं–"चउरो दस अट्ठसयं गिहन्नसलिंगे य" इति। भावतस्तु सर्वेषां स्वलिङ्गमेवेत्युक्तं
लिङ्गद्वारे द्रव्यप्रमाणमिति ॥ ६ ॥ चारित्रद्वारे सामायिकसूक्ष्मसम्पराययथाख्यातचारित्रे सामायिकच्छेदोपस्थापनीय-
सूक्ष्मसम्पराययथाख्यातचारित्रे चाष्टोत्तरशतं सामायिकपरिहारविशुद्धिकसूक्ष्मसम्पराययथाख्यातचारित्रे सामायिकच्छेदो-
पस्थापनीयपरिहारविशुद्धिकसूक्ष्मसम्पराययथाख्यातचारित्रे च दशकं २ सिद्ध्यति, तदुक्तं–पच्छाकडं चरित्तं तिगं चउक्कं
च तेसिमट्ठसयं। परिहारिएहिं सहिए दसगं दसगं च पंचकडे ॥१॥" इत्युक्तं चारित्रद्वारे द्रव्यप्रमाणम् ॥ ७ ॥ बुद्धद्वारे प्रत्ये-
कबुद्धानां दशकं बुद्धबोधितानां पुरुषाणामष्टोत्तरशतं बुद्धबोधितानां स्त्रीणां विंशतिः नपुंसकानां दशकं, बुद्धीबोधि-
तानां स्त्रीणां विंशतिः बुद्धीबोधितानां पुरुषादीनां विंशतिपृथक्त्वं, तदुक्तं सिद्धप्राभृतवृत्तौ–"बुद्धीहिं चेव बोहियाणं पुरि-

साईणं सामन्नेण वीसपुहुत्तं सिज्झइ" अत्र बुद्धी मल्लिस्वामिनीप्रभृतिका तीर्थकरी सामान्यसाध्व्यादिका वा वेदितव्या, तदुक्तं सिद्धप्राभृतवृत्तौ–बुद्धीओ सयंबुद्धीओ मल्लीपमुहाओ अन्नाओ य सामन्नसाहुणीपमुहाओ बोहंति" इत्युक्तं बुद्धद्वारे द्रव्यप्रमाणम् ॥८॥ ज्ञानद्वारे प्रत्युत्पन्ननयमाश्रित्य केवलज्ञान एव सिद्ध्यति । पूर्वभावमपेक्ष्य मतिश्रुतज्ञानिनश्चत्वार एकस्मिन् समये सिद्ध्यन्ति, मतिश्रुतमनःपर्यवज्ञानिन एकस्मिन् समये उत्कृष्टतो दश सिद्ध्यन्ति, मतिश्रुतावधिज्ञानिनां मतिश्रुतावधिमनःपर्यवज्ञानिनां चाष्टोत्तरशतं सिद्ध्यतीत्युक्तं ज्ञानद्वारे द्रव्यप्रमाणम् ॥९॥ अवगाहनाद्वारे एकस्मिन् समये जघन्यावगाहनायां चत्वारो मध्यमावगाहनायामष्टोत्तरशतमुत्कृष्टावगाहनायां द्वौ यवमध्येऽष्टौ । तदुक्तं–"उक्कोसगाहणाए दो सिद्धा होंति एकसमएणं । चत्तारि जहन्नाए अट्ठसयं मज्झिमाए उ ॥ १ ॥" गाथापर्यन्तवर्त्तिनस्तुशब्दस्याधिकार्थसंसूचनात्–"जवमज्झे अट्ठ" इति । यवस्य मध्यमिव मध्यमत्रोत्कृष्टावगाहनायाः सपादपञ्चशतधनूरूपाया अर्धं द्विषष्ट्यधिकद्विशतधनूंषि, एवमन्यत्रापि समर्धं यवमध्यं बोध्यम्, तदुक्तं सिद्धपञ्चाशिकावृत्तौ–"यवमध्यं नाम उत्कृष्टावगाहनायाः पञ्चविंशत्यधिकपञ्चशतधनूरूपायाः अर्धं द्विपष्ठ्युत्तरद्विशतधनूंपि, एवमन्येऽपि समर्धस्य यवमध्यमिति संज्ञा" इत्युक्तमवगाहनाद्वारे द्रव्यप्रमाणम् ॥१०॥ उत्कृष्टद्वारे येषां सम्यक्त्वपरिभ्रष्टानामनन्तः कालोऽभूत् तेषामष्टोत्तरशतं सिद्ध्यति, असंख्येयकालच्यूतसम्यक्त्वाः संख्येयकालच्यूतसम्यक्त्वाश्च दश सिद्ध्यन्ति, अप्रतिपतितसम्यक्त्वाश्चत्वारः सिद्ध्यन्ति, तदुक्तम्–"जेसिं अणंतकालो पडिवाओ तेसिं होइ अट्ठसयं । अप्पडिवडिए चउरो दसगं दसगं च सेसाणं ॥१॥" इत्युक्तमुत्कृष्टद्वारे द्रव्यप्रमाणम् ॥११॥ अन्तरद्वारे सान्तरेणैको बहवो वा यावदष्टोत्तरशतं सिद्ध्यतीत्युक्तमन्तरद्वारे द्रव्यप्रमाणम् ॥१२॥ अनुसमयद्वारे एकादयो द्वात्रिंशत्पर्यन्ताः

निरन्तरमष्टौ समयान् यावत् सिद्ध्यन्ति, ततोऽवश्यमन्तरम् । त्रयस्त्रिंशदादयोऽष्टचत्वारिंशत्पर्यन्ताः निरन्तरं सिद्ध्यमानाः सप्त समयान् यावत्प्राप्यन्ते, ततोऽष्टमसमये नियमादन्तरं भवति । एकोनपञ्चाशदादयः षष्टिपर्यन्ताः षड् समयान् यावत् सिद्ध्यन्तो लभ्यन्ते, परतोऽन्तरम् । एकषष्ट्यादयो द्वासप्ततिपर्यन्ताः पञ्चसमयान् सिद्ध्यमानाः लभ्यन्ते, ततोऽन्तरम् । त्रिसप्तत्यादयश्चतुरशीतिपर्यन्ताश्चतुरः समयान् यावत्, एवं पञ्चाशीत्यादयः षण्णवतिपर्यान्तास्त्रीन् समयान् यावत्, सप्तनवत्यादयो व्यधिकशतपर्यन्ता द्वौ समयौ यावत्, त्र्युत्तरशतं यावदष्टोत्तरशतमेकेन समयेन सिद्ध्यति, ततो द्वितीयसमयेऽवश्यमेवान्तरं भवति, तदुक्तं पञ्चसंग्रहे–''बत्तीसा अडयाला, सट्ठी बावत्तरी य चुलसीई । छन्नउइ दु अट्ठसयं, एगाइ जहुत्तरे समए ॥१॥" वृत्तिः–''एकादयो द्वात्रिंशत्पर्यन्ता निरन्तरमष्टौ समयान् यावत् प्राप्यन्ते । इयमत्र भावना–प्रथमसमये जघन्यत एको द्वौ वा सिद्ध्यतः, उत्कृष्टतो द्वात्रिंशत्सिद्ध्यन्ति । द्वितीयसमयेऽपि जघन्यत एको द्वौ वा सिद्ध्यतः, उत्कृष्टतो द्वात्रिंशत् । एवं तृतीयचतुर्थसमयेऽपि यावदष्टमेऽपि समये जघन्यत एको द्वौ वा सिद्ध्यत उत्कृष्टतो द्वात्रिंशत् परतोऽवश्यमन्तरम् । तथा त्रयस्त्रिंशदादयोऽष्टचत्वारिंशत्पर्यन्ता निरन्तरं सिद्ध्यन्तः सप्तसमयान् यावत् प्राप्यन्ते, परतो नियमादन्तरम् । एवमेकोनपञ्चाशदादयः षष्टिपर्यन्ता निरन्तरं सिद्ध्यन्त उत्कृष्टतः षट् समयान्, परतोऽन्तरम् । एकषष्ट्यादयो द्विसप्ततिपर्यन्ता निरन्तरं सिद्ध्यन्त उत्कृष्टतः पञ्च समयान्, ऊर्ध्वं नियमादन्तरम् । त्रिसप्तत्यादयश्चतुरशीतिपर्यन्ता निरन्तरं सिद्ध्यन्त उत्कृष्टतश्चतुरः समयान् । पञ्चाशत्यादयः षण्णवतिपर्यन्ता निरन्तरं सिद्ध्यन्त उत्कृष्टतस्त्रीन् समयान् । तथा सप्तनवत्यादयो द्व्युत्तरशतपर्यन्ता निरन्तरं सिद्ध्यन्त उत्कर्षतो द्वौ समयौ, परतोऽन्तरम् । त्र्युत्तरशतादयोऽष्टोत्तरशतपर्यन्ता निरन्तरं सिद्ध्यन्तो नियमत एकमेव समयं यावत् प्राप्यन्ते, न द्वित्रादिसमयान्,

तथा चाह—'एगाइ जहोत्तरे समए' इति, एकादीन् यथोत्तरान् समयान् यावत्। इदं च पश्चानुपूर्व्या समयसंख्याप्रतिपादनं, ततोऽयमर्थः—ब्युत्तरशतादयोऽष्टोत्तरशतपर्यन्ता एकं समयं यावत्। सप्तनवत्यादयो ब्युत्तरशतपर्यन्ता द्वौ समयौ। एवं यावदेकादयो द्वात्रिंशत्पर्यन्ता अष्टौ समयानिति" श्रीमलयगिरिया वृत्तिः। "एकादयो रूपवृद्ध्या यावद् द्वात्रिंशज्जीवाः प्रथम (क्षपक) श्रेण्याद्यसमये क्षपकत्वं प्रतिपद्यन्ते न तेभ्योऽभ्यधिकास्तदुत्तरसमये एकादयो रूपवृद्ध्या यावदष्टचत्वारिंशन्न तेभ्योऽभ्यधिकास्तृतीयसमये एकादयो रूपवृद्ध्या षष्टिं यावदेवं चतुर्थसमये द्विसप्ततिं यावत्, पञ्चमसमये चतुरशीतिं यावत्, षष्ठसमये षण्णवतिं यावत्, सप्तमसमये व्यधिकं शतं, अष्टमसमये एकादयो रूपवृद्ध्या अष्टाभ्यधिकशतपर्यन्ता जीवाः श्रेणीं सिद्धत्वं वा प्रतिपद्यन्ते, तत्परतः प्रतिपत्तिरेव नास्ति, एते चोत्कृष्टतः सर्वेऽपि व्यधिकपदशतप्रमाणा इति गाथार्थः" इति स्वोपज्ञा वृत्तिः। एकैकस्मिन् विकल्पे शतपृथक्त्वं मन्तव्यमिति सिद्धप्राभृतकारादयः। उक्तं द्रव्यप्रमाणमनुसमयद्वारे ॥१३॥ गणनाद्वारेऽल्पबहुत्वद्वारे च द्रव्यप्रमाणं प्रागिव द्रष्टव्यम् ॥१४॥१५॥ इत्युक्तं द्रव्यप्रमाणम् ॥

क्षेत्रप्ररूपणा पूर्वभावमपेक्ष्य सत्पदप्ररूपणायामेव कृता, प्रत्युत्पन्ननयमतेन क्रियते—तत्र पञ्चदशस्वपि द्वारेषु सकलकर्मक्षयं कृत्वात्र बोन्दिं त्यक्त्वा ऋजुश्रेण्याऽस्पृशद्गत्या सर्वसिद्धानपेक्ष्य मनुष्यक्षेत्रप्रमाणे सिद्धिक्षेत्रे गतः सिध्यति, तदुक्तं—"इहं बोंदिं चइत्ताणं तत्थ गंतूण सिज्झति" इति। स्पर्शनाविचारेऽप्येवमेव। एकैकसिद्धापेक्षया तु सा स्वावगाहमात्रम्। तथा विवक्षितसमयसिद्धः स्वसम्बन्धिभिः सर्वप्रदेशैः एकप्रदेशावगाढानन्तान् सिद्धान् स्पृशति, ततोऽसंख्येयगुणान् देशप्रदेशावगाढान् स्पृशति, तदुक्तं "फुसइ अणंते सिद्धे सव्वपएसेहिं नियमसो सिद्धो। ते उ असंखेज्जगुणा देसपएसेहिं जे पुट्ठा ॥१॥" इति। ननु क्षेत्रस्पर्शनयोः कः प्रतिविशेष इति चेत्? उच्यते—स्पर्शनाऽवगाहविशेष एव किन्तु स्पर्शना मनागतिरिक्ता, यथैकपरमाणुरेकमाकाशप्रदेशमवगाहते

सप्ताकाशप्रदेशान् स्पृशतीति विशेषः, तदुक्तं–"एगपएसोगाढं सत्तपएसा य से फुसणा" इत्युक्ते क्षेत्रस्पर्शनाद्वारे ॥

अथ कालद्वारे चेयं परिभाषा–सर्वेषु द्वारेषु यत्र यत्राष्टोत्तरशतमेकेन समयेन सिद्ध्येत् तत्र तत्राष्टौ समयान् "बत्तीसा अडयाला" इति गाथानतिक्रमेण निरन्तरं सिद्ध्यमानाः प्राप्यन्ते । यत्र यत्र विंशतिः दश वैकेन समयेन सिद्ध्येत् तत्र तत्र चतुरः समयान् निरन्तरं सिद्ध्यमानाः प्राप्यन्ते, शेषेषु स्थानेषु द्वौ समयौ । इदमतिसंक्षिप्ततरमुक्तमतो विनेयजनानुग्रहाय किञ्चिद्विस्तरतो भाव्यते–तत्र क्षेत्रद्वारे जम्बूद्वीपे धातकीखण्डे पुष्करवरद्वीपे च प्रत्येकं भरतैरावतमहाविदेहेषूत्कर्षतोऽष्टौ समयान् यावन्निरन्तरं सिद्ध्यन्तो लभ्यन्ते, हरिवर्षादिष्वधो लोके च चतुरः चतुरः समयान्, नन्दनवने पाण्डकवने कालोदधौ च द्वौ समयौ सिद्ध्यन्तः प्राप्यन्ते । कालद्वारे उत्सर्पिण्यामवसर्पिण्यां च प्रत्येकं तृतीयचतुर्थारकयोरष्टौ समयान् शेषेषु तु चतुरः चतुरः समयान् यावन्निरन्तरं सिद्ध्यमानाः प्राप्यन्त इत्युक्ते क्षेत्रकालद्वारे ॥ १-२ ॥ गतिद्वारे वैमानिकदेवेभ्य आगता निरन्तरं सिद्ध्यमाना अष्टौ समयान् शेषगतिभ्य आगताः चतुरः समयान् सिद्ध्यमानाः लभ्यन्ते इति गतिद्वारम् ॥३॥ वेदद्वारे पुरुषवेदिभ्यः समागताः पुरुषवेदिनोऽष्टौ समयान् शेषाष्टभङ्गेषु चतुरः २ समयान् यावत् सिद्ध्यमानाः लभ्येरन्निति वेदद्वारम् ॥४॥ तीर्थद्वारे तीर्थकरतीर्थे तीर्थकरीतीर्थे वाऽतीर्थकरसिद्धा उत्कृष्टतोऽष्टौ समयान् तीर्थकरस्तीर्थकर्यश्च द्वौ समयौ । लिङ्गद्वारे स्वलिङ्गे अष्टौ समयान् अन्यलिङ्गे चतुरः समयान् गृहस्थलिङ्गे द्वौ समयाविति नन्दिवृत्तौ सिद्धपञ्चाशीकायां च । सिद्धप्राभृतवृत्तौ तु–"सलिंगे अट्ठसमए सेसे चत्तारि समए" इति तीर्थलिङ्गद्वारे ॥५॥६॥ चारित्रद्वारे अनुभूतपरिहारविशुद्धिकचारित्राश्चतुरः समयान्, शेषा अष्टावष्टौ समयान्, बुद्धद्वारे स्वयम्बुद्धा द्वौ समयौ बुद्धबोधिता

अष्टौ समयान्, प्रत्येकबुद्धा बुद्धीबोधिताः सामान्येन योषितः पुरुषादयो वा प्रत्येकं चतुरः चतुरः समयान्, ज्ञानद्वारे मतिश्रुतज्ञानिनो द्वौ समयौ मतिश्रुतमनःपर्यायज्ञानिनः चतुरः समयान्, मतिश्रुतावधिज्ञानिनः मतिश्रुतावधिमनःपर्यवज्ञानिनो वाष्टावष्टौ समयान्, अवगाहनाद्वारे जघन्यावगाहनायामुत्कृष्टावगाहनायां च द्वौ समयौ, यवमध्ये चतुरः समयान्, मध्यमावगाहनायामष्टौ समयान्, उत्कृष्टद्वारे अप्रतिपतितसम्यक्त्वाः द्वौ समयौ, संख्येयकालप्रतिपतिताः असंख्येयकालप्रतिपतिताश्च चतुरश्चतुरः समयान्, अनन्तकालप्रतिपतिताः अष्टौ समयान् यावत् सिद्ध्यमाना लभ्येरन्नित्युक्तानि चारित्रादीन्युत्कृष्टान्तानि पञ्च द्वाराणि, शेषाणि चत्वारि अन्तरादीनि द्वाराणि नेहावतरन्तीत्युक्तं मौलं पञ्चमं काल इति द्वारम् ॥

अथान्तरद्वारमुच्यते—तत्र क्षेत्रद्वारे सामान्येन जम्बूद्वीपे धातकीखण्डे च विशेषचिन्तायां जम्बूद्वीपस्यैकस्मिन् विदेहे धातकीखण्डसत्कयोः द्वयोरेवं त्रिषु विदेहेषूत्कृष्टमन्तरं वर्षपृथक्त्वं भवति, पुष्करद्वीपार्द्धे सामान्येन विशेषचिन्तायां तद्विदेहयोश्च वर्षाधिकमन्तरं सिद्धिगमनलक्षणं भवति, तदुक्तं सिद्धपञ्चाशीकायां—"जंबुद्दीवे धायइ ओह विभागे य तिसु विदेहेसु । वासपहुत्तं अंतर पुखरद्धुविदेह वासहियं ॥१॥" इत्युक्तं क्षेत्रद्वारेऽन्तरम् ॥१॥ कालद्वारे भरतेषु ऐरवतेषु च जन्मत उत्कृष्टमन्तरं किञ्चिदूनाऽष्टादशसागरोपमकोटीकोट्यः, संहरणतः संख्येयानि वर्षसहस्राणि, जघन्यतः पुनरुभयत्राप्येकः समयः, तदुक्तं सिद्धप्राभृते "जम्मउ भरहेरवएसु तिसु अट्ठारकोडकोड्डुदही। संहरणओ संखवासा सेसेसु जहण्णओ समओ॥१॥" इत्युक्तं संक्षेपतः कालद्वारम् ॥२॥ गतिद्वारे नरकगतेरागत्योपदेशतः सिद्ध्यतामुत्कृष्टमन्तरं वर्षसहस्रं, हेतुमाश्रित्य प्रतिबोधसंभवेन सिध्यतां संख्येयानि वर्षसहस्राणि, जघन्यतः पुनरुभयत्राप्येकः समयः, तिर्यग्योनिभ्य आगत्योपदेशतः सिद्ध्यतां

वर्षशतपृथक्त्वं, हेतुमाश्रित्य सिद्ध्यतां संख्येयानि वर्षसहस्राणि, जघन्यतः उभत्राप्येकः समयः। तिर्यग्योनिकस्त्रीभ्यः मनुष्येभ्यो मनुष्यस्त्रीभ्यः सौधर्मेशानवर्जदेवेभ्यो देवीभ्यश्च पृथक् २ समागत्योपदेशतः सिद्ध्यतां प्रत्येकमुत्कृष्टमन्तरं सातिरेकं वर्षं, हेतुमाश्रित्य प्रतिवोधतः सिद्ध्यतामन्तरमुत्कृष्टं संख्येयानि वर्षसहस्राणि, जघन्यत उभयत्राप्येकः समयः। तथा पृथ्वीजलवनस्पतिभ्यः गर्भजव्युत्क्रान्तेभ्यः प्रथमद्वितीयनरकेभ्यः सौधर्मेशानदेवेभ्यश्चोपदेशतो हेतुतश्च सिद्ध्यतां प्रत्येकमुत्कृष्टमन्तरं संख्येयानि वर्षसहस्राणि, जघन्यत एकः समयः, इत्युक्तं गतिद्वारम् ॥३॥ वेदद्वारे पुरुपवेदानां पुरुपवेदेभ्य आगतानां पुरुपाणां चोत्कृष्टमन्तरं साधिकं वर्षं स्त्रीनपुंसकवेदानां शेपाष्टभङ्गेषु च संख्येयवर्षसहस्राणि, जघन्यतः सर्वत्रैक एव समय इत्युक्तं वेदद्वारम् ॥४॥ तीर्थद्वारे तीर्थकृतां पूर्वसहस्रपृथक्त्वमुत्कृष्टमन्तरं, तीर्थकरीणामनन्तकालः। प्रत्येकबुद्धानां संख्येयानि वर्षसहस्राणि, अतीर्थकराणां साधिकं वर्षं जघन्यतः सर्वत्रापि समय इति तीर्थद्वारम् ॥५॥ लिङ्गद्वारे गृहस्थलिङ्गे अन्यलिङ्गे च प्रत्येकं वर्षसहस्राण्युत्कृष्टमन्तरं स्वलिङ्गे सिद्ध्यतां साधिकं वर्षं जघन्यतः सर्वत्रैकः समय इति लिङ्गद्वारम् ॥६॥ चारित्रद्वारे सामायिकसूक्ष्मसम्परायययथाख्यातस्वरूपे चारित्रत्रिके उत्कृष्टमन्तरं साधिकं वर्षं सामायिकच्छेदोपस्थापनीयसूक्ष्मसम्पराययथाख्यातरूपे चारित्रचतुष्के सामायिकच्छेदोपस्थापनीयपरिहारविशुद्धिकसूक्ष्मसम्पराययथाख्यातरूपे चारित्रपञ्चके चोत्कृष्टतः किञ्चिदूनाः अष्टादशसागरोपमकोटाकोट्यः यतः छेदोपस्थापनीयपरिहारविशुद्धिके चरणे भरतैरावतेषु प्रथमचरमतीर्थपतितीर्थेषु एव प्राप्येत इति चारित्रद्वारम् ॥७॥ बुद्धद्वारे बुद्धबोधितपुरुपाणां सिद्ध्यतामुत्कृष्टमन्तरं साधिकं वर्षं बुद्धबोधितयोपितां प्रत्येकबुद्धानां च सिद्ध्यतां संख्येयानि वर्षसहस्राण्युत्कृष्टमन्तरं

स्वयम्बुद्धानां पूर्वसहस्रपृथक्त्वं जघन्यतः पुनः सर्वत्र समयः। तदुक्तं सिद्धप्राभृते—"बुद्धेहिं बोहियाणं वासहियं सेसयाण संखसमा। पुव्वसहस्सपुहुत्तं होइ सयंबुद्ध समयियरं ॥१॥" इति बुद्धद्वारम् ॥८॥ ज्ञानद्वारे मतिश्रुतज्ञानिनामुत्कृष्टमन्तरं पल्योपमासंख्येयभागः मतिश्रुतावधिज्ञानिनामुत्कृष्टमन्तरं साधिकं वर्षं, मतिश्रुतमनःपर्यवज्ञानिनां मतिश्रुतावधिमनःपर्यवज्ञानिनां चोत्कृष्टमन्तरं संख्येयवर्षसहस्राणीति ज्ञानद्वारम् ॥ ९ ॥ अवगाहनाद्वारे उत्कृष्टावगाहनायां जघन्यावगाहनायां यवमध्ये चोत्कृष्टमन्तरं श्रेण्यसंख्येयभागगताकाशप्रदेशापहारकालः, मध्यमावगाहनायां साधिकं वर्षं, जघन्यतः सर्वत्र समय इत्यवगाहनाद्वारम् ॥१०॥ उत्कृष्टद्वारे अप्रतिपतितसम्यक्त्ववतां सिद्ध्यतामुत्कृष्टमन्तरं सागरोपमासंख्येयभागः, अनन्तकालप्रतिपतितसम्यक्त्ववतां साधिकं वर्षं, असंख्येयकालप्रतिपतितसम्यक्त्ववतां संख्येयकालप्रतिपतितसम्यक्त्ववतां च संख्येयानि वर्षसहस्राणि, जघन्यतः सर्वत्र समय इत्युत्कृष्टद्वारम् ॥११॥ अन्तरद्वारे सान्तरं सिद्ध्यताम्, अनुसमयद्वारे निरन्तरं सिद्ध्यतां, गणनाद्वारे एककानामनेककानां च सिद्ध्यतां संख्येयानि वर्षसहस्राणि जघन्यतः सर्वत्र समय इत्यन्तरादीनि त्रीणि द्वाराणि ॥१२॥१३॥१४॥ अल्पबहुत्वद्वारं चात्र न संभवतीत्युक्तमन्तरद्वारम् ॥

भावद्वारे सर्वद्वारेषु क्षायिकभाव एव सिद्ध्यति, नान्यत्रेति भावद्वारम् ॥

अथाल्पबहुत्वद्वारमुच्यते—तत्र ये तीर्थङ्कराः, ये च जलैः ऊर्ध्वलोकादौ चत्वारः चत्वारः सिद्ध्यन्ति, ये च हरिवर्षादिषु सुषमसुषमादिषु च संहरणतो दश दश सिद्ध्यन्ति ते परस्परं तुल्याः, तथैवोत्कर्षतो युगपदेकसमयेन प्राप्यमाणत्वात्। तथा विंशतिसिद्धाः स्तोकाः, तेषां स्त्रीषु दुष्प्रमायामेकतमस्मिन् विजये वा प्राप्यमाणत्वात्, तैस्तुल्या विंशतिपृथक्त्वसिद्धाः

यतस्ते सर्वाधोलौकिकग्रामेषु वुद्धीवोधितस्त्र्यादिषु वा लभ्यन्ते ततो विंशतिसिद्धैस्तुल्याः, क्षेत्रकालयोः स्वल्पत्वात् कादा-
चित्कत्वसंभवात् । तेभ्योऽष्टोत्तरशतसिद्धाः संख्येयगुणाः, तदुक्तं सिद्धप्राभृतवृत्तौ—"चउ दसगा दोवि तुल्ला, जओ चउक्क-
सिद्धा तित्थगरा जले उड्ढलोए एवमाइ दस सिद्धा संहरणओ हरिवस्स सुसमसुसमाइसु, तओ तुल्ला । वीसगसिद्धा इत्थी अहोलोगेगविज-
याइसु, अओ चउ दसगेहिं थोवा । वीसपुहुत्तसिद्धा सवाहोलोगवुद्धिवोहियादी, अतो वीसगेहिं तुल्ला, स्वल्पक्षेत्रकालकादाचित्कत्वसं-
भवादित्यर्थः । ततो अट्ठसयसिद्धा संखेज्जगुणा, जंबुद्दीवभरहेरवविदेहाइसु सट्ठाणओ लब्भंतित्ति काउं" गतमल्पबहुत्वम् ॥ १५ ॥
कृतानन्तरसिद्धप्ररूपणा ॥

अथ परम्परसिद्धप्ररूपणोच्यते—तत्र क्षेत्रादिषु पञ्चदशद्वारेषु सत्पदप्ररूपणाऽनन्तरसिद्धवद्वाच्या ॥ मू. द्वा. ॥१॥
द्रव्यप्रमाणचिन्तायां सर्वेष्वपि द्वारेषु सर्वत्रैवानन्ताः सिद्धा वाच्याः, नत्वनन्तरसिद्धवत् संख्येयाः, तदुक्तं सिद्धप्राभृत-
वृत्तौ—"परंपरसिद्धा ण उ जहा अणंतरसिद्धा संखेज्जा इति दव्वपमाणभेओ" इति ॥ मू. द्वा. ॥ २ ॥ क्षेत्रस्पर्शने द्वारे प्रागिव
वाच्ये ॥ मू. द्वा. ॥ ३-४ ॥ कालद्वारे परम्परसिद्धानामनादित्वेनानाद्यनन्तः कालः, न त्वनन्तरसिद्धवदष्टौ समयास्तदुक्तं
सिद्धप्राभृतवृत्तौ—"परंपरसिद्धाणं अनादित्वात् न तु जहा अणंतरसिद्धाणं अट्ठ समया इति कालदारे विसेसो" ॥ मू. द्वा. ५ ॥
अन्तरद्वारेऽन्तरं नास्त्येव यतो विवक्षितप्रथमसमयसिद्धेभ्यो येऽन्येऽतिक्रान्तानादिकालसिद्धास्ते सर्वे परम्परसिद्धाः ॥
मू. द्वा. ६ ॥ भावद्वारे सर्वत्र क्षायिको भावो वाच्यः ॥ मू. द्वा. ७ ॥

अथाल्पवहुत्वमुच्यते—सर्वस्तोकाः समुद्रसिद्धास्तेभ्यः द्वीपसिद्धाः संख्येयगुणाः, जलसिद्धाः स्तोकाः, स्थलसिद्धाः

संख्येयगुणाः, ऊर्ध्वलोकसिद्धाः स्तोकास्तेभ्योऽधोलोके संख्येयगुणास्ततस्तिर्यग्लोके संख्येयगुणाः । लवणजलधौ सिद्धाः सर्वस्तोकाः ततः कालोदसमुद्रसिद्धाः संख्येयगुणास्तेभ्योऽपि जम्बूद्वीपसिद्धाः संख्येयगुणाः तेभ्यो धातकीखण्डसिद्धाः संख्येयगुणास्तेभ्योऽपि पुष्करवरद्वीपार्द्धसिद्धाः संख्येयगुणाः । तदुक्तं सिद्धप्राभृते—"लवणे कालोए वा जंबूदीवे य धायईसंडे । पुक्खरवरे य दीवे कमसो थोवाइ संखगुणा ॥ १ ॥" इति । जम्बूद्वीपस्यौघतः भरतैरवतयोः सिद्धाः सर्वस्तोकाः ततो महाविदेहसिद्धाः संख्येयगुणाः । जम्बूद्वीपे संहरणतो हिमवच्छिखरिसिद्धाः सर्वस्तोकाः १, तेभ्यो हैमवतैरण्यवतसिद्धाः संख्येयगुणाः २, तेभ्योऽपि महाहिमवद्रुक्मिसिद्धाः संख्येयगुणाः ३, तेभ्योऽपि देवकुरूत्तरकुरुसिद्धाः संख्येयगुणाः ४, तेभ्योऽपि हरिवर्षरम्यकवर्षसिद्धा विशेषाधिकाः ५, इति सिद्धप्राभृते, तथा च तद्ग्रन्थः—"हरिवस्सरम्मगवाससिद्धा विसेसाहिया", नन्दीवृत्तौ तु—"तेभ्योऽपि हरिवर्षरम्यकसिद्धाः संख्येयगुणाः क्षेत्रबाहुल्यात्", एवमेव सिद्धपञ्चाशिकायामपि । तेभ्योऽपि निषधनीलवत्सिद्धाः संख्येयगुणाः ६, तेभ्योऽपि भरतैरवतसिद्धाः संख्येयगुणाः, स्वस्थानत्वात् ७, तेभ्यो महाविदेहसिद्धाः संख्येयगुणाः, सदा भावात् महत्त्वाच्च ८, । अथ धातकीखण्डमाश्रित्याल्पबहुत्वमुच्यते—संहरणतो हिमवच्छिखरिसिद्धाः सर्वस्तोकाः १, तेभ्यो महाहिमवद्रुक्मिसिद्धाः संख्येयगुणाः २, तेभ्योऽपि निषधनीलवत्सिद्धाः संख्येयगुणाः ३, तेभ्योऽपि हैमवतैरण्यवतसिद्धा विशेषाधिकाः ४, तेभ्यो देवकुरूत्तरकुरुसिद्धाः संख्येयगुणाः ५, तेभ्योऽपि हरिवर्षरम्यकसिद्धा विशेषाधिकाः ६, तेभ्योऽपि भरतैरवतसिद्धाः संख्येयगुणाः ७, तेभ्योऽपि महाविदेहसिद्धाः संख्येयगुणाः ८ । तथा पुष्करवरद्वीपार्धे संहरणतो हिमवच्छिखरिसिद्धाः सर्वस्तोकाः १, तेभ्यो महाहिमव-

द्रुक्मिसिद्धाः संख्येयगुणाः २, तेभ्योऽपि निषधनीलवत्सिद्धाः संख्येयगुणाः ३, तेभ्योऽपि हैमवतैरण्यवतसिद्धाः संख्येयगुणाः ४, तेभ्योऽपि देवकुरूत्तरकुरुसिद्धाः संख्येयगुणाः ५, तेभ्योऽपि हरिवर्षरम्यकसिद्धाः विशेषाधिकाः ६, तेभ्योऽपि भरतैरवतसिद्धाः संख्येयगुणाः, स्वस्थानमिति कृत्वा ७, तेभ्योऽपि महाविदेहसिद्धाः संख्येयगुणाः क्षेत्रबाहुल्यात् स्वस्थानाच्च ८। अथ त्रयाणां संयोगेनाल्पबहुत्वमुच्यते—सर्वस्तोकाः जम्बूद्वीपे हिमवच्छिखरिसिद्धाः १, तेभ्यो हैमवतैरण्यवतसिद्धाः संख्येयगुणाः २, तेभ्योऽपि महाहिमवद्रुक्मिसिद्धाः संख्येयगुणाः ३, तेभ्योऽपि देवकुरूत्तरकुरुसिद्धाः संख्येयगुणाः ४, तेभ्योऽपि हरिवर्षरम्यकसिद्धा विशेषाधिकाः ५, तेभ्योऽपि निषधनीलवत्सिद्धाः संख्येयगुणाः ६, तेभ्यो धातकीखण्डहिमवच्छिखरिसिद्धाः संख्येयगुणाः, स्वस्थाने परस्परं तुल्याः ७, ततो धातकीखण्डमहाहिमवद्रुक्मिपुष्करवरद्वीपार्द्धहिमवच्छिखरिसिद्धाः संख्येयगुणाः, स्वस्थाने तु चत्वारोऽपि परस्परं तुल्याः ८, ततो धातकीखण्डनिषधनीलवत्सिद्धाः पुष्करवरद्वीपार्द्धमहाहिमवद्रुक्मिसिद्धाः संख्येयगुणाः, चत्वारोऽपि परस्परं तुल्याः ९, ततो धातकीखण्डहैमवतैरण्यवतसिद्धाः विशेषाधिकाः १०, ततोऽपि पुष्करवरद्वीपार्द्धनिषधनीलवत्सिद्धाः संख्येयगुणाः ११, ततो धातकीखण्डदेवकुरूत्तरकुरुसिद्धाः संख्येयगुणाः १२, ततोऽपि धातकीखण्डहरिवर्षरम्यकवर्षसिद्धा विशेषाधिकाः १३, ततः पुष्करवरद्वीपार्द्धहैमवतैरण्यवतसिद्धाः संख्येयगुणाः १४, ततः पुष्करवरद्वीपार्द्धदेवकुरूत्तरकुरुसिद्धाः संख्येयगुणाः १५, तेभ्योऽपि पुष्करवरद्वीपार्द्धहरिवर्षरम्यकवर्षसिद्धाः विशेषाधिकाः १६, ततो जम्बूद्वीपभरतैरवतसिद्धाः संख्येयगुणाः १७, तेभ्योऽपि धातकीखण्डसत्कभरतैरवतसिद्धाः संख्येयगुणाः १८, ततोऽपि पुष्करवरद्वीपार्द्धभरतैरवतसिद्धाः संख्येयगुणाः १९, ततोऽपि जम्बूद्वी-

पे विदेहसिद्धाः संख्येयगुणाः २०, ततो धातकीखण्डविदेहसिद्धाः संख्येयगुणाः २१, ततोऽपि पुष्करवरद्वीपार्द्धविदेहसिद्धाः संख्येयगुणाः २२। इदं च क्षेत्रविभागेनाल्पबहुत्वं सिद्धप्राभृतवृत्त्यनुसारेण लिखितं, गतं क्षेत्रद्वारम् ॥ १ ॥

कालद्वारे अवसर्प्पिण्यां सिद्धाः सर्वस्तोकाः, उत्सर्प्पिण्यां विशेषाधिकाः, नोत्सर्प्पिण्यवसर्प्पिण्यां संख्येयगुणा इत्युक्तमोघतः कालद्वारमथ विभागत उच्यते—तत्रावसर्प्पिण्यामेकान्तदुष्षमकाले संहरणतः सिद्धाः सर्वस्तोकाः १, ततो दुष्षमकालसिद्धाः संख्येयगुणाः २, ततः सुषमदुष्षमासिद्धाः असंख्येयगुणाः, कालस्यासंख्येयगुणत्वात् ३, तेभ्योऽपि सुषमारकसिद्धाः विशेषाधिकाः ४, ततोऽपि सुषमसुषमारकसिद्धाः विशेषाधिकाः ५, तेभ्योऽपि दुष्षमसुषमारकसिद्धाः संख्येयगुणाः ६, तदुक्तं नन्दीवृत्तौ—"अइदूसमाइ थोवा संख असंखा दुवे विसेसहिया। दूसमसुसमा संखगुणा उ ओसप्पिणीसिद्धा ॥१॥" इति। एवमेवोत्सर्प्पिण्यामपि द्रष्टव्यम्, तदुक्तं नन्दीवृत्तौ—"अइदूसमाइ थोवा संख असंखा उ दुन्नि सविसेसा। दूसमसुसमा संखगुणा उ उस्सप्पिणीसिद्धा॥१॥" इति। अथोत्सर्प्पिण्यवसर्प्पिण्योः समुदायेनाल्पबहुत्वमुच्यते—तत्र द्वयोरप्येकान्तदुःषमारकसिद्धाः सर्वस्तोकाः १, तत उत्सर्प्पिणीदुःषमारके सिद्धाः विशेषाधिकाः २, ततोऽवसर्प्पिण्यां दुःषमारकसिद्धाः संख्येयगुणाः ३, ततो द्वयोरपि सुषमदुःषमारकसिद्धा असंख्येयगुणाः ४, ततोऽपि द्वयोः सुषमारकसिद्धाः विशेषाधिकाः ५, ततोऽपि द्वयोः सुषमसुषमारकसिद्धाः विशेषाधिकाः ६, ततोऽपि दुःषमसुषमारकसिद्धाः संख्येयगुणाः ७, ततोऽवसर्प्पिण्यां सर्वसिद्धाः विशेषाधिकाः ८, तेभ्योऽप्युत्सर्प्पिण्यां सर्वसिद्धाः विशेषाधिकाः ९। इदमल्पबहुत्वं सिद्धपञ्चाशिकानुसारेणोक्तम्। सिद्धप्राभृते त्वन्यथा दृश्यते, तथा च तद्ग्रन्थः—"अइदूसमाए थोवा सविसेस असंख तिण्णि सविसेसा। तय काले ओसप्पिणिसिद्धाणऽप्पाबहुं एयं॥९२॥" वृत्तिः—"अइदूसमाए" गाहा

ओसप्पिणीए अइदूसमाए सव्वत्थोवासिद्धा १, दूसमाए विसेसाहिया, तीर्थसद्भावात् शुभतरकालयोगादित्यर्थः २, तओ दूसमासुसमाए असंखेज्जगुणा ३, तओ उवरिहुत्तं तिण्णि अरगा विसेसाहिया णेयव्वा । पच्छद्धं कण्ठंति गाथार्थः ॥ ९२ ॥ संपयं उस्सप्पिणिमहिकिच्चाह–"अइदूसमाइ दुण्णि उ थोवा असंखा तिई विसेसहिया । तय काले उस्सप्पिणि सिद्धाणऽप्पाबहुं एयं ॥ ९३ ॥" वृत्तिः–"अइदूसमाइ" गाहा–उस्सप्पिणीए अइदूसमाए आइगहणा दूसमाए य एए दोण्णि वि अरए अहिकिच्च सव्व थोवा सिद्धा १, दूसमसुसमाए असंखगुणा २, 'तिइ विसेसहिय'त्ति तिण्णि अरगा विसेसाहिया णेयव्वा । पच्छद्धं कण्ठंति गाथार्थः ॥९३॥ कालदारं" इति कालद्वारम् ॥ २ ॥ गतिद्वारे मानुषीभ्योऽनन्तरागताः सिद्धाः सर्वस्तोकाः, ततो मानुषेभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, ततो नरकेभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, ततः तिर्यग्योनिस्त्रीभ्योऽनन्तरागताः सिद्धाः संख्येयगुणास्ततस्तिर्यग्योनिपुरुषेभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, ततो देवीभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, ततो देवेभ्योऽनन्तरागताः संख्येयगुणाः । तथैकेन्द्रियेभ्योऽनन्तरागताः सिद्धाः सर्वस्तोकाः, ततः पञ्चेन्द्रियेभ्योऽनन्तरागताः संख्येयगुणाः । तथा वनस्पतिकायिकेभ्योऽनन्तरागताः सिद्धाः सर्वस्तोकाः, ततः पृथिवीकायिकेभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, ततोऽप्कायिकेभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, ततस्त्रसकायिकेभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः । तथा चतुर्थपृथिवीभ्योऽनन्तरागताः सिद्धाः सर्वस्तोकाः, ततस्तृतीयपृथिवीतोऽनन्तरागताः सिद्धाः संख्येयगुणाः, ततोऽपि द्वितीयपृथिवीतोऽनन्तरागताः सिद्धाः संख्येयगुणाः, ततोऽपि पर्याप्तबादरप्रत्येकवनस्पतिभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, ततो बादरपर्याप्तभूकायिकेभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, ततो बादरपर्याप्ताप्कायिकेभ्योऽनन्तरागताः सिद्धाः

संख्येयगुणाः, ततो भवनपतिदेवीभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, ततो भवनपतिदेवेभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, ततो व्यन्तरदेवीभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, ततो व्यन्तरदेवेभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, ततो ज्योतिष्कदेवीभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, ततो ज्योतिष्कदेवेभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, ततो मनुष्यस्त्रीभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, ततो मनुष्येभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, ततो रत्नप्रभानैरयिकेभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, ततोऽपि तिर्यग्योनिस्त्रीभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, ततोऽपि तिर्यग्भ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, ततोऽप्यनुत्तरोपपातिकदेवेभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, तेभ्यो ग्रैवेयकेभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, तेभ्योऽप्यच्युतदेवेभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, तेभ्योऽप्यारणदेवलोकदेवेभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, एवमधस्तावन्नेयं यावत् सनत्कुमारदेवलोकदेवेभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, तेभ्योऽपीशानदेवीभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, ततोऽपि सौधर्मदेवीभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, ततोऽपीशानदेवेभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, ततोऽपि सौधर्मदेवलोकदेवेभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, तदुक्तं सिद्धप्राभृते—"मणुई मणुया णारय तिरिक्खिणी तह तिरिक्ख देवीओ। देवा य जहा कमसो संखेज्जगुणा मुणेयव्वा ॥ १ ॥ एगिंदिएहिं थोवा सिद्धा पंचिंदिएहिं संखगुणा। तरुपुढविआउतसकाइएहिं संखगुणा कमसो ॥ २ ॥ णारग चउत्थापुढवी तच्चा दोच्चा तरूपुढविआऊ। भवणवइदेविदेवा एवं वणजोइसाणंपि ॥ ३ ॥ मणुसी मणुस्स पढमा उ णारया तह तिरिक्खि तिरिया य। देवा अणुत्तरादी सव्वे वि सणंकुमारं ता ॥ ४ ॥ ईसाणदेविसोहम्मदेविईसाणदेवसोहम्मा।

सव्वेसि जहा कमसो अणंतरायाण संखगुणा ॥ ५ ॥ इति गतिद्वारम् ॥ ३ ॥ वेदद्वारे नपुंसकसिद्धाः सर्वस्तोकाः, तेभ्योऽपि स्त्रीसिद्धाः संख्येयगुणाः, ततोऽपि पुरुषसिद्धाः संख्येयगुणाः । तथाऽनन्तरागताः सिद्धा अप्येवमेव वाच्याः, तथाहि नपुंसकेभ्योऽनन्तरागताः नपुंसकसिद्धाः सर्वस्तोकाः, ततोऽपि नपुंसकेभ्य एवानन्तरागताः स्त्रीसिद्धाः संख्येयगुणाः, तेभ्योऽपि तत एवानन्तरागताः पुरुषसिद्धाः संख्येयगुणाः, ततः सामान्येन नपुंसकसिद्धाः विशेषाधिकाः । तथा स्त्रीवेदेभ्योऽनन्तरागताः नपुंसकसिद्धाः सर्वस्तोकाः, ततोऽपि स्त्रीवेदेभ्योऽनन्तरागताः स्त्रीसिद्धाः संख्येयगुणाः, ततोऽपि स्त्रीवेदेभ्य एवानन्तरागताः पुरुषसिद्धाः संख्येयगुणाः, ततोऽपि सामान्येन स्त्रीसिद्धाः विशेषाधिकाः । तथा पुरुषवेदेभ्योऽनन्तरागताः नपुंसकसिद्धाः सर्वस्तोकाः ततोऽपि पुरुषवेदेभ्योऽनन्तरागताः स्त्रीसिद्धाः संख्येयगुणाः ततोऽपि पुरुषेभ्योऽनन्तरागताः पुरुषसिद्धाः संख्येयगुणाः ततः सामान्येन पुरुषसिद्धाः विशेषाधिकाः, तदुक्तं सिद्धप्राभृते—"थोवा णपुंस इत्थी संखा संखगुणा तओ पुरिसा । ताणमणंतरमागयभेयाण वि ते वि एमेव ॥ १ ॥" इति वेदद्वारम् ॥ ४ ॥ तीर्थद्वारे तीर्थकरीसिद्धाः सर्वस्तोकाः, ततोऽपि तीर्थकरी तीर्थे प्रत्येकबुद्धसिद्धाः संख्येयगुणाः, तेभ्यस्तत्तीर्थ एव श्रमणीसिद्धाः संख्येयगुणाः, तेभ्यस्तत्तीर्थे मुनिसिद्धाः संख्येयगुणाः, ततोऽपि तीर्थकरसिद्धा अनन्तगुणाः, ततोऽपि तीर्थकरतीर्थ एव प्रत्येकबुद्धसिद्धाः संख्यातगुणाः, ततोऽपि तीर्थकरतीर्थे श्रमणीसिद्धाः संख्येयगुणाः, ततोऽपि तीर्थकरतीर्थे मुनिसिद्धाः संख्यातगुणाः । गतं तीर्थद्वारम् ॥५॥ लिङ्गद्वारे सर्वस्तोकाः गृहस्थलिङ्गसिद्धास्तेभ्योऽन्यलिङ्गसिद्धाः असंख्यातगुणाः, ततोऽपि स्वलिङ्गसिद्धाः असंख्यातगुणा इत्युक्तं लिङ्गद्वारम् ॥ ६ ॥ चारित्रद्वारे सर्वस्तोकाश्छेदोपस्थापनीयपरिहारविशुद्धिकसूक्ष्मसम्परायपयथाख्यातचारित्र-

सिद्धाः १, सामायिकरहितं च च्छेदोपस्थापनीयं भग्नचारित्रीयस्यावगन्तव्यम् । ततः सामायिकच्छेदोपस्थापनीयपरिहारविशुद्धिकसूक्ष्मसम्परायथाख्यातचारित्रसिद्धाः संख्यातगुणाः २, तेभ्यश्छेदोपस्थापनीयसूक्ष्मसम्परायथाख्यातचारित्रसिद्धाः असंख्यातगुणाः ३, तेभ्यः सामायिकच्छेदोपस्थापनीयसूक्ष्मसम्परायथाख्यातचारित्रसिद्धाः संख्येयगुणाः ४, तेभ्यः सामायिकसूक्ष्मसम्परायथाख्यातचारित्रसिद्धाः संख्यातगुणाः ५ । तदुक्तं सिद्धप्राभृते–"थोवा परिहारचउ पंचग संखा असंख छेयतिगं । छेयचउक्कं संखे सामाइयतिगं च संखगुणं ॥ १ ॥" इत्युक्तं चारित्रद्वारम् ॥ ७ ॥ बुद्धद्वारे स्वयम्बुद्धसिद्धाः सर्वस्तोकाः ततोऽपि प्रत्येकबुद्धसिद्धाः संख्येयगुणाः ततो बुद्धीबोधितसिद्धाः संख्यातगुणाः तेभ्यो बुद्धबोधितसंख्यातगुणाः इत्युक्तं बुद्धद्वारम् ॥ ८ ॥ ज्ञानद्वारे मतिश्रुतमनःपर्यवज्ञानिनः सिद्धाः स्तोकाः, तेभ्यो मतिश्रुतज्ञानिनः सिद्धाः संख्येयगुणाः, ततोऽपि मतिश्रुतावधिमनःपर्यवज्ञानिनः सिद्धाः असंख्येयगुणाः, ततोऽपि मतिश्रुतावधिज्ञानिनः सिद्धाः संख्यातगुणा इत्युक्तं ज्ञानद्वारम् ॥ ९ ॥ अवगाहनाद्वारे सर्वस्तोकाः द्विहस्तप्रमाणजघन्यावगाहनासिद्धाः, ततो धनुःपृथक्त्वाभ्यधिकपञ्चधनुःशतप्रमाणोत्कृष्टावगाहनासिद्धाः असंख्यातगुणाः, ततोऽपि मध्यमावगाहनासिद्धाः असंख्यातगुणाः, तदुक्तं सिद्धप्राभृते–"ओगाहणा जहण्णा थोवा उक्कोसिया असंखगुणा । तत्तोवि असंखगुणा णायव्वा मज्झिमाए वि ॥ १ ॥" अस्याः वृत्तिः–"ओगाहणा गाहा, ओगाहणा जहण्णा दुहत्था तीए सव्वत्थोवा १, उक्कोसिया धणुपुहुत्ताहिगपञ्चधणुसइगा तीए असंखगुणा २, तत्तो वि असंखगुणा मज्झिमाए त्ति सुत्तत्थो ३ । विसेसत्थो पुण इमो–सव्वत्थोवा पंचधणुसइगाए ओगाहणाए सिद्धा १, साइरेगपंचधणुसइगाए असंखेज्जगुणा २, ऊणगपंचधणुसइगाए संखेज्जगुणा ३ । सत्तरयणिगाए सिद्धा

सव्वत्थोवा १, ऊणगसत्तरतणिगाए असंखेज्जगुणा २, साइरेगसत्तरयणिगाए संखेज्जगुणा ३ । एगओ पुण सत्तरतणियाए ओगाहणाए सिद्धा सव्वत्थोवा १, पंचधणुसतिगाए असंखेज्जगुणा २, **नन्दीवृत्तौ तु**–"सर्वस्तोकाः सप्तहस्तप्रमाणावगाहनासिद्धाः, तेभ्यः पञ्चधनुःशतप्रमाणावगाहनासिद्धाः संख्येयगुणाः," **सिद्धपञ्चाशीकावृत्तौ तु**–"सर्वस्तोकाः सप्तहस्तावगाहनाः सिद्धाः, ततः पञ्चधनुःशतप्रमाणावगाहनाः सिद्धाः विशेषाधिकाः" इति, तओ ऊणगसत्तरतणियाए असंखेज्जगुणाइ ३, कहमेयं लब्भइ ? जओ महाविदेहगा-तित्थगरा पंचधणुसयावगाहिणगा सिज्झंति सव्वकालं, भण्णइ–पंचधणुसइगं एगं चेव ओगाहणाठाणं, ऊणसतरतणिगाणि पुण सत्तरतणिहिंतो आढत्ताणि पएसहाणीए जाव दुहत्थसिद्धा ताव एत्थंतरे असंखेज्जाणि ओगाहणाट्ठाणंतराणि लब्भंति, तेसु य सव्वेसु दुहत्थेहिंतो आरब्भ पएसुत्तराइएसु विसेसाहिया सिद्धा लब्भंति, तेणं एगट्ठाणसिद्धेहिंतो असंखट्ठाणसिद्धा असंखेज्जगुणा चेव हवंति । अह मणसि वद्धमाणतित्थे चेव संखेज्जकालवत्तिणो ऊणसत्तरतणिगा तहिं पंचधणुसइएहिंतो विवरीयसंखगुणा ण होंतित्ति, भण्णइ, पंचधणुसइगाणं पविरलभावत्तणओ जइ एगेणावि पएसेण ऊणाहिया तित्थगरादी लब्भंति तहावि अहिकदत्थो लब्भइ, अणंतरवयणण्णहाणुवत्तितो मन्तव्वमित्यलमतिप्रसङ्गेन । अनया दिशा शेषमपि भावयितव्यम् । तओ ऊणसत्तरतणिसिद्धेहिंतो अइरेगपंचधणुसइगाए असंखेज्जगुणा ४, ऊणपंचधणुसइगाए असंखेज्जगुणा ५, अइरेगसत्तरतणिगाए विसेसाहिया ६, णोउस्सप्पिणीअणुभावाणुवत्तिउसभाजियतित्थसिद्धेहिंतो आरओ एए इह पक्खे घेप्पंति ॥ १ ॥" इत्युक्तमवगाहनाद्वारम् ॥ १० ॥ **उत्कृष्टद्वारे** अप्रतिपतितसिद्धाः स्तोकाः, तेभ्यः संख्येयकालप्रतिपतितसिद्धाः असंख्येयगुणाः, तेभ्योऽसंख्येयकालप्रतिपतितसिद्धाः संख्येयगुणाः, ततोऽप्यनन्तकालप्रतिपतितसिद्धाः असंख्येयगुणाः इत्युक्तमुत्कृष्टद्वारम् ॥११॥ **अन्तरद्वारे** सर्वस्तोकाः षण्मासान्तरसिद्धाः, तत एकसमयान्तर-

सिद्धाः संख्येयगुणाः, ततो द्विसमयान्तरसिद्धाः संख्येयगुणाः, एवं तावद्वाच्यं यावद्यवमध्यम्, ततः परं संख्येयगुणहीनाः तावद्वाच्याः यावदेकसमयहीनषण्मासान्तरसिद्धेभ्यः षण्मासान्तरसिद्धाः संख्येयगुणहीना इत्युक्तमन्तरद्वारम् ॥ १२ ॥ अनुसमयद्वारे सर्वस्तोकाः अष्टसमयसिद्धाः, अष्टौ समयान् यावन्निरन्तरं सिद्ध्यतां जीवानां स्तोकानामेव लभ्यमानत्वात् । ततः सप्तसमयसिद्धाः संख्यातगुणाः, ततः षट्समयसिद्धाः संख्यातगुणाः, एवं समयहान्या तावद्वाच्या यावत् समयद्विकसिद्धाः संख्येयगुणाः । एकसमयसिद्धास्तु नात्र संभवन्ति, नैरन्तर्याभावादित्युक्तमनुसमयद्वारम् ॥ १३ ॥ गणनाद्वारे अष्टोत्तरशतसिद्धाः सर्वस्तोकाः, ततः सप्ताधिकशतसिद्धाः अनन्तगुणाः, ततः षडधिकशतसिद्धा अनन्तगुणाः । एवमेकैकहान्याऽनन्तगुणास्तावद्वाच्याः यावदेकपञ्चाशत्सिद्धेभ्यः पञ्चाशत्सिद्धाः अनन्तगुणाः, तेभ्य एकोनपञ्चाशत्सिद्धाः असंख्येयगुणाः, ततोऽप्यष्टचत्वारिंशत्सिद्धाः असंख्येयगुणाः, एवमेकैकहान्या तावत् वाच्याः यावत् षड्विंशतिसिद्धेभ्यः पञ्चविंशतिसिद्धाः असंख्येयगुणाः, ततस्तेभ्यश्चतुर्विंशतिसिद्धाः संख्यातगुणाः, ततोऽपि त्रयोविंशतिसिद्धाः संख्येयगुणाः, एवं संख्यातगुणा अप्येकैकहान्या तावद्वाच्याः यावद्द्विसिद्धेभ्यः एकैकसिद्धाः संख्यातगुणाः, तदुक्तं सिद्धप्राभृते—"अट्ठसयसिद्धा थोवा सत्तहियसया अणंतगुणियाओ । एवं परिहायंते सपयाओ जाव पण्णासं ॥ १ ॥ तत्तो पण्णासाओ असंखगुणिया उ जाव पणवीसं । पणवीसा आरद्धा संखगुणा होंति एगंता ॥ २ ॥" इति गतं गणनाद्वारम् ॥ १४ ॥ अस्मिन्नेवाल्पबहुत्वद्वारे यो विशेषः सः प्रदर्श्यते— सर्वस्तोकाः अधोमुखस्थितसिद्धाः, ते च पूर्ववैरिभिः यादोभिरुत्पाट्य नीयमाना अधोमुखकायोत्सर्गस्थिता वा वेदितव्याः । तेभ्योऽप्यूर्ध्वस्थितकायोत्सर्गस्थिताः संख्येयगुणाः, ततोऽप्युत्कटासनसिद्धाः संख्येयगुणाः, ततोऽपि वीरासनसिद्धाः संख्ये-

यगुणाः, ततोऽपि न्यूब्जासनसिद्धाः संख्यातगुणाः–न्यूब्जा उपविष्टा एवाधोमुखा द्रष्टव्याः, तेभ्योऽपि पार्श्वस्थितसिद्धाः
संख्यातगुणाः, ततोऽप्युत्तानस्थितिसिद्धाः संख्येयगुणाः, तदुक्तं पश्चानुपूर्व्यां सिद्धप्राभृते–"उत्ताणगपासेल्लगणिकुज्ज-
वीरासणे य उक्कुडुए। उद्धट्ठिय ओमत्थिय संखेज्जगुणेणहीणाए ॥ १ ॥" इत्युक्तमल्पबहुत्वद्वारम् ॥ १५ ॥ मू. द्वा. ८ ॥
अथ सर्वगताल्पवहुत्वविशेषज्ञापनाय सन्निकर्षद्वारमुच्यते–सन्निकर्षो नाम संयोगो ह्रस्वदीर्घयोरिव विवक्षितं किञ्चित्प्र-
तीत्य विवक्षितस्याल्पतया वहुत्वेन वाऽवस्थानरूपः सम्बन्धः, तदुक्तं–संयोग सन्निगाओ पडुच्च सम्बन्ध एगट्ठा"। इयमत्र व्या-
प्तिः–यत्र यत्राष्टोत्तरं शतमुपलभ्यते तत्र तत्रोपरितनमष्टकरूपमपनीय शेषस्य शतस्य चतुर्भिर्भागो ह्रियते, हृते च भागे लब्धाः
पञ्चविंशतिः, तत्र पञ्चविंशतिसंख्येयकप्रथमचतुर्थभागे क्रमेण संख्यातगुणहानिर्वक्तव्या, तद्यथा–सर्वबहव एकैकसिद्धाः
ततो द्विकद्विकसिद्धाः संख्यातगुणहीनाः ततोऽपि त्रिकत्रिकहीनाः संख्यातगुणहीनाः एवं तावद्वाच्यं यावत् चतुर्विंशति-
सिद्धेभ्यः पञ्चविंशतिसिद्धाः संख्यातगुणहीनाः। द्वितीये पुनः चतुर्थभागे क्रमेणासंख्येयगुणहीना वक्तव्याः, तथाहि–पञ्च-
विंशतिसिद्धेभ्यः षड्विंशतिसिद्धाः असंख्येयगुणहीनाः एवमेकैकवृद्ध्याऽसंख्यातगुणहीनास्तावद्वाच्याः यावदेकोनपञ्चा-
शत्सिद्धेभ्यः पञ्चाशत्सिद्धाः असंख्यातगुणहीनाः। तृतीयचतुर्थभागे च क्रमेणानन्तगुणहीना वक्तव्याः, तथाहि—
पञ्चाशत्सिद्धेभ्यः एकपञ्चाशत्सिद्धाः अनन्तगुणहीनाः ततोऽपि द्विपञ्चाशत्सिद्धाः अनन्तगुणहीनाः एवं तावद्वक्तव्याः
यावत् सप्तोत्तरशतसिद्धेभ्य अष्टोत्तरशतसिद्धा अनन्तगुणहीनाः, तदुक्तं सिद्धप्राभृते–"पढमे भागे संखा असंखा बिइए
अणंता तइयाइ" इति। तथा यत्र यत्र विंशतिसिद्धाः तत्र तत्रेयं व्याप्तिः–प्रथमे चतुर्थभागे संख्यातगुणहीनाः द्वितीय-

चतुर्थभागेऽसंख्यातगुणहीनाः तृतीये चतुर्थे चानन्तगुणहीनाः, तथाहि—एकैकसिद्धाः सर्वबहवः ततस्तेभ्यो द्विकद्विकसिद्धाः संख्यातगुणहीनाः तेभ्यः त्रिकत्रिकसिद्धाः संख्यातगुणहीनाः एवं तावद्वक्तव्या यावत्पञ्चसिद्धाः संख्यातगुणहीनाः ततः पञ्चकसिद्धेभ्यः षडादिसिद्धाः क्रमेणासंख्यातगुणहीनास्तावद्वाच्याः यावद्दशसिद्धाः नवसिद्धेभ्योऽसंख्यातगुणहीनाः, तत एकादशादयः सर्वेऽप्यनन्तगुणहीनाः तावद्वाच्याः यावद्विंशतिसिद्धाः अनन्तगुणहीनाः । एवमधोलोकादिष्वपि विंशतिपृथक्त्वसिद्धौ प्रथमचतुर्थविभागे संख्यातगुणहानिः द्वितीयचतुर्थभागेऽसंख्यातगुणहानिः तृतीयस्माच्चतुर्थभागादारभ्य पुनः सर्वत्राप्यनन्तगुणहानिः। यत्र पुनः दश दश सिद्ध्यन्ति तत्रैवं व्याप्तिः—त्रिकं यावत्संख्येयगुणहानिः ततश्चतुष्के पञ्चके चासंख्येयगुणहानिः ततः षट्कादारभ्य सर्वत्राप्यनन्तगुणहानिः, तथाहि—एकैकसिद्धाः सर्वबहवः ततो द्विकद्विकसिद्धाः संख्यातगुणहीनाः ततः त्रिकत्रिकसिद्धाः संख्येयगुणहीनाः तेभ्यश्चतुष्कचतुष्कसिद्धाः असंख्यातगुणहीनाः ततः पञ्चपञ्चसिद्धाः असंख्येयगुणहीनाः ततः षडादयः सर्वेऽप्यनन्तगुणहीना वाच्याः । यत्र पुनरवगाहनया यवमध्यादावुत्कृष्टतः अष्टौ सिद्ध्यन्तः प्राप्यन्ते तत्रेयं व्याप्तिः—चतुष्कं यावत् संख्यातगुणहीनाः ततः परमनन्तगुणहीनाः, तथाहि—एकैकसिद्धाः सर्वबहवः तेभ्यो द्विकद्विकसिद्धाः संख्यातगुणहीनाः तेभ्योऽपि त्रिकसिद्धाः संख्येयगुणहीनाः ततः चतुश्चतुःसिद्धाः संख्यातगुणहीनाः ततः परं पञ्चादयोऽनन्तगुणहीनाः, अत्रासंख्येयगुणहानिः न विद्यते, तदुक्तं सिद्धप्राभृतटीकायां—"असंखगुणहाणी णत्थि" इति । यत्र लवणादौ द्वयं द्वयं सिद्ध्यति तत्रैकैकसिद्धाः सर्वबहवः द्विकद्विकसिद्धाः अनन्तगुणहीनाः । यत्र पुनरूर्ध्वलोकादौ चत्वारः सिद्ध्यन्ति तत्रेयं व्याप्तिः—एकैकसिद्धाः सर्वबहवः तेभ्यो द्विकद्वि-

कसिद्धा असंख्येयगुणहीनाः, तेभ्यः त्रिकत्रिकसिद्धा अनन्तगुणहीनाः, तेभ्योऽपि चतुश्चतुस्सिद्धाः अनन्तगुणहीनाः, संख्यातगुणहानिः न विद्यते, तदुक्तं सिद्धप्राभृते–“संखेज्जविवज्जिया चउक्के” इति। एवं सर्वक्षेत्रेषु कर्मभूम्यकर्मभूम्यन्तरद्वीपेषु सन्निकर्षमार्गणा कर्त्तव्या। तदेवं द्रव्यप्रमाणे सन्निकर्षश्चिन्तितः। शेषद्वारेण सन्निकर्षद्वारं सिद्धप्राभृतवृत्तितः स्वयं परिभावनीयम्, ग्रन्थविस्तरभयात् नात्र लिख्यते इति ॥ मू. द्वा. ९ ॥ इत्युक्तं सिद्धकेवलज्ञानम्। वस्तुतस्तु भवस्थकेवलिनां सिद्धानां च केवलज्ञाने न कश्चिदपि भेदः, यस्तु भेदः प्रतिपादितः स प्रथमक्षणाप्रथमक्षणचरमक्षणाचरमक्षणसयोगित्वायोगित्वाद्युपाधिकृतो द्रष्टव्यो न वास्तवः। तच्च केवलज्ञानं द्रव्यादिभेदेन चतुष्प्रकारं भवति, तत्र द्रव्यतः सर्वद्रव्याणि जानाति पश्यति, क्षेत्रतः सर्वं क्षेत्रं जानाति पश्यति, कालतः सर्वं कालं जानाति पश्यति, भावतः सर्वान् भावान् जानाति पश्यतीत्युक्तं केवलज्ञानम्। मिथ्यात्वसंयुक्तत्वेन कुत्सितं ज्ञानमज्ञानं तच्च मतिश्रुतविभङ्गरूपमित्युक्ताऽष्टधा ज्ञानमार्गणा ॥

मार्गणा-
द्वार-
॥ १५१ ॥



अथ संयमद्वारं निरूप्यते "संजम"त्ति सम्पूर्वक-'यम् उपरमे' इत्यस्य धातोः रूपम्, संयमनं सम्यगुपरमणं सावद्ययोगादिति संयमः, यद्वा पापव्यापारसंभारात् संयम्यते नियम्यते आत्माऽनेनेति संयमः, यद्वा शोभना यमाः पंचमहाव्रतलक्षणाः अस्मिन्निति संयमः चारित्रं तच्च षोढा सामायिकं छेदोपस्थापनीयं परिहारविशुद्धिकं सूक्ष्मसम्परायं यथाख्यातं देशविरतिचारित्रं तत्प्रतिपक्षोऽसंयमश्चेति । तत्र समानां ज्ञानदर्शनचारित्राणामायः लाभः समायः स एव सामायिकम्, यद्वा समो रागद्वेषादिविप्रमुक्तो यः सर्वभूतानामात्मवत्पश्यकः तस्यायो लाभः प्राप्तिरिति यावत् समायः स एव सामायिकं सर्वसावद्यविरतिरूपं मूलगुणाधाररूपं तदुक्तं वाचकमुख्यैः "सामायिकं गुणानामाधारः खमिव सर्वभूतानाम् । नहि सामायिकविहीनाश्चरणगुणान्विता येन ॥ १ ॥ तस्माज्जगाद भगवान् सामायिकमेव निरुपमोपायम् । शारीरमानसानेकदुःखनाशस्य मोक्षस्य ॥२॥" इति । यद्यपि सामान्येन सर्वाण्यपि चारित्राणि सामायिकमुच्यते तथापि च्छेदादिपर्यायविशेषैः विशेष्यमाणमर्थतः शब्दान्तरतश्च नानात्वं भजते । प्रथमं पुनरविशेषात् सामान्यशब्द एवावतिष्ठते सामायिकमिति । तच्च द्विधा इत्वरं यावत्कथिकं च । तत्रेत्वरं भाविव्यपदेशान्तरसद्भावेन स्वल्पकालिकम् । तच्च प्रथमचरमतीर्थपतितीर्थे यावन्नूतनदीक्षितस्य महाव्रतानि नारोप्यन्ते तावत् कालं भरतैरवतेषु भवति । प्रव्रज्याग्रहणसमयादारभ्यात्मकथां यावत् यद्भवति तद्यावत्कथिकं तच्च प्रथमचरमतीर्थपतितीर्थवर्जद्वाविंशतितीर्थपतितीर्थे महाविदेहान्तर्वर्तितीर्थेषु च मुनीनां भवति, तेषामुपस्थापनाविरहादिति ।

तथा पूर्वपर्यायस्य च्छेदेनोपस्थापनं महाव्रतेष्वारोपणं यत्र चारित्रे तच्छेदोपस्थापनीयम् । तच्च द्विविधं सातिचारम्, निरतिचारम्, तत्रानतिचारं शैक्षकस्य महाव्रतारोपणं तीर्थान्तरसंक्रामतो वा चतुःमहाव्रतधारिणः पंचमहाव्रतारोपणं केशीगणा-

॥ १५१ ॥

धिपादीनामिव। सातिचारं पुनः मूलगुणघातिनः पुनः महाव्रतारोपणम्। एतच्चारित्रं भरतैरवतेषु प्रथमचरमतीर्थपतितीर्थयोरेव भवति, नान्यत्रेति। परिहारः तपोविशेषः तेन विशुद्धिः यस्मिन् चारित्रे तत्परिहारविशुद्धिकम्। तच्च द्विविधं निर्विशमानकं निर्विष्टकायिकं च, तत्र विवक्षिततपोविशेषासेवकाः निर्विशमानकाः, आसेवितविवक्षिततपोविशेषाः निर्विष्टकायिकाः, तदव्यतिरेकाच्चारित्रमपि तथोच्यते। इह च नवको गणः चत्वारो निर्विशमानकाः चत्वारोऽनुचराः एकः कल्पस्थितो वाचनाचार्यश्च। यद्यपि सर्वे श्रुतातिशयसम्पन्नाः तथापि कल्पत्वात् तेषामेकः कश्चित् कल्पस्थितोऽवस्थाप्यते। तेषां तपस्त्रिधा जघन्यं मध्यममुत्कृष्टं त्रिविधमप्येतत्कालभेदेन नवधा भवति। तथाहि–ग्रीष्मकाले कालस्यातिरूक्षत्वेन जघन्यं चतुर्थं मध्यमं षष्ठमुत्कृष्टमष्टमं शीतकाले जघन्यं षष्ठं मध्यममष्टममुत्कृष्टं दशभक्तं वर्षाकाले जघन्यमष्टमं मध्यमं दशभक्तमुत्कृष्टं द्वादशभक्तम्, पारणके आचाम्लमेतत्तपो निर्विशमानकानामनुपरिहारिकाणां कल्पस्थितस्य च सदैवाचाम्लमिति। भिक्षा च सप्तधा भवति, तद्यथा संसृष्टा असंसृष्टा उद्धृता अल्पलेपा उद्गृहीता प्रगृहीता उज्झितधर्मेति। तत्र संसृष्टाभ्यां खरंटिताभ्यां हस्तपात्राभ्यां या भिक्षा दीयते सा संसृष्टा, असंसृष्टाभ्यां अखरंटिताभ्यां हस्तपात्राभ्यां या भिक्षा दीयते सा असंसृष्टा, स्थाल्यादिभ्यः स्वार्थं भोजनाय प्रक्षिप्ता या भिक्षा दीयते सा उद्धृता, निर्लेपं पृथुकादि तत्स्वरूपा या भिक्षा दीयते साऽल्पलेपा, भोजनकाले शरावाद्याहितभोज्यवस्तुमध्यादुत्पाट्य या दीयते सा उद्गृहीता, भोजनार्थं करोत्पाटितभोज्यमध्यात् या भिक्षा दीयते सा प्रगृहीता, अन्यानभिलष्यमाणा परित्यज्यमानभक्ताद्यन्नरूपा या भिक्षा दीयते सा उज्झितधर्मेति। तत्राद्ये द्वे वर्जयित्वा शेषासु पञ्चसु भिक्षासु द्वयोरभिग्रहः एकया भक्तमप-

रया पानकम्, तद्दिवसे शेषाणामग्रहणम् । एवं षण्मासानन्तरं परिहारिका अनुपरिहारिकत्वमनुपरिहारिकाः परिहारिकत्वं षण्मासान् यावद्भजन्ते, ततो वाचनाचार्यः षण्मासान् यावत् परिहारिकत्वं भजते, अष्टानामन्यतमो वाचनाचार्यः शेषाः सप्तानुपरिहारिका भवन्ति । एवमष्टादशमासप्रमाणोऽयं कल्पः, तत्समाप्तौ च ये केचित् जिनकल्पं स्वीकुर्वन्ति ते यावत्कथिकाः, ये गच्छमुपयन्ति ते इत्वरिका इति । एतेषां महात्मनामतीव दुःसहा वेदना सद्योपघातिन उपसर्गाश्च कल्पप्रभावात् न प्रादुर्भवेयुः, जिनकल्पिकानां संभवेयुरपि । कल्पप्रतिपत्तिः तीर्थकरसमीपे तदासेवकसमीपे वा भवति, तदुक्तं बृहत्कल्पभाष्ये''पडिवन्ना जिणिंदस्स पादमूलस्स जे ठिऊ । ठायंति तेउ अण्णे न उण ठावितठावगा ॥ १ ॥" एतद्विषयसंग्राहकं प्रवचनसारोद्धारोक्तं गाथानवकमुपन्यस्यते ।

"परिहारियाण उ तवो जहन्नमज्झो तहेव उक्कोसो । सीउण्हवासकाले भणिओ धीरेहिं पत्तेयं ॥ १ ॥ तत्थ जहन्नो गिम्हे चउत्थ छट्ठं उ होइ मज्झिमओ । अट्ठममिह उक्कोसो इत्तो सिसिरे पवक्खामि ॥ २ ॥ सिसिरे उ जहन्नाई छट्ठाई दसमचरिमगो होई । वासासु अट्ठमाई वारसपज्जंतगो णेओ ॥ ३ ॥ पारणगे आयामं पंचसु गहो दोसुभिग्गहो भिक्खे । कप्पठिया वि पइदिण करेंति एमेव आयामं ॥ ४ ॥ एवं छम्मासतवं चरितुं परिहारिआ अणुचरंति । अणुचरगो परिहारारियपयठिए जाव छम्मासा ॥ ५ ॥ कप्पठिओ वि एवं छम्मासतवं करेइ सेसाओ । अणुपरिहारिगभावं वयंति कप्पठियत्तं च ॥ ६ ॥ एवं सो अट्ठारसमासपमाणो उ वण्णिओ कप्पो । संखेवओ विसेसो विसेससुत्ता उ नायव्वो ॥ ७ ॥ कप्पसमत्तिइए तयं जिणकप्पं वा उविंति गच्छं वा । पडिवज्जमाणगा पुण जिणसगासे पवज्जंति ॥ ८ ॥ तित्थयरसमीवासेवगस्स पासेव न उण अन्नस्स । एएसिं जं चरणं परिहारविसुद्धिगं तं तु ॥ ९ ॥" इति ।

तत्रैकोनविंशतिद्वाराणि भवन्ति, तद्यथा–क्षेत्रद्वारम्, कालद्वारम्, चारित्रद्वारम्, तीर्थद्वारम्, पर्यायद्वारम्, आगमद्वारम्, वेदद्वारम्, कल्पद्वारम्, लिंगद्वारम्, लेश्याद्वारम्, ध्यानद्वारम्, गणद्वारम्, अभिग्रहद्वारम्, प्रव्रज्याद्वारम्, मुंडापनद्वारम्, प्रायश्चित्तविधिद्वारम्, कारणद्वारम्, निष्प्रतिक्रमद्वारम्, भिक्षापथद्वारम् ( वन्धद्वारम् ) इति । तत्र क्षेत्रमार्गणा द्विधा जन्मतः सद्भावतश्चोभयथापि भरतैरवतेषु न तु महाविदेहेषु, न चैतेषां संहरणमस्ति येन जिनकल्पिका इव संहरणतः सर्वासु कर्म्मभूमिष्वकर्मभूमिषु वा प्राप्येरन्, तदुक्तं–"खित्ते दुहेह मग्गण जम्मणओ चेव संतिभावे य । जम्मणओ जहिं जाओ संतीभावो य जहि कप्पो ॥ १ ॥ खेत्ते भरहेरवएसु हुंति संहरणवज्जिया नियमा" इति ॥ १ ॥

कालद्वारे पञ्चसु भरतेषु पञ्चस्वैरवतेषु प्रथमचरमतीर्थपतितीर्थयोरवसर्पिण्यां जन्मतः तृतीये चतुर्थे आरके, उत्सर्प्पिण्यां पुनः जन्मतो द्वितीये तृतीये चतुर्थे आरके, सद्भावतोऽवसर्प्पिण्यां तृतीये चतुर्थे पञ्चमे आरके, उत्सर्प्पिण्यां पुनः सद्भावतः तृतीये चतुर्थे आरके ते भगवन्तो भवन्ति, अर्थात् मध्यमतीर्थंकृतां तीर्थेषु महाविदेहेषु च नोत्सर्प्पिण्यवसर्प्पिणीरूपे चतुर्थारकप्रविभागे काले परिहारविशुद्धिकाः न भवन्तीत्यापन्नम् । तदुक्तं बृहत्कल्पभाष्ये–"भरहेरवएसु वासेसु जदा तित्थगरो भवे । पुरिमा पच्छिमा चेव कप्पं दो संति ते इमं ॥ १ ॥" अन्यत्रापि–"अवसप्पिणीए दोसु जम्मणओ तीसु संति भावेणं । ओसप्पिणिविवरीओ जम्मणओ संति भावेणं ॥ १ ॥" इति ॥ २ ॥

चारित्रद्वारे संयमस्थानानि तान्यसंख्येयलोकाकाशप्रदेशप्रमाणानि षट्स्थानानि भवन्ति, तद्यथा–आद्यानां द्वादशकषायाणां क्षयोपशमात् सर्वविरतित्वं भवति, तत्र प्रथमे सर्वजघन्ये संयमस्थाने चरणपर्यवाः सर्वाकाशप्रदेशतोऽनन्तगुणा

भवन्ति, तदुक्तं—"ते केत्तिया पएसा सव्वागासस्स मग्गण होइ । ते तत्तिया पएसा अविभागतओ अणंतगुणा ॥ १ ॥" इति । यद्वोत्कृष्टविशुद्धिकस्य देशविरतस्य ये पर्यवाः निर्विभागीकृता भागास्ते सर्वजीवानन्तकेन गुणिताः सन्तः सर्वविरतस्य जघन्ये संयमस्थाने चरणपर्यवा भवन्ति, ततोऽनन्तभागाधिकं द्वितीयं संयमस्थानं भवति, प्रथमे संयमस्थाने यावन्तः चरणपर्यवाः तेषां सर्वजीवानन्तकेन विभक्ते सति ये लब्धाः तावद्भिः चरणपर्यवैरधिकं द्वितीयं संयमस्थानं भवतीत्यर्थः । एवमुत्तरत्राप्यनन्तगुणत्वं बोद्धव्यम् । ततोऽप्यनन्तभागाधिकं तृतीयं संयमस्थानं भवति । एवं संयमस्थानान्यनन्तभागोत्तराणि तावद्वाच्यानि यावदङ्गुलासंख्येयभागगताकाशप्रदेशप्रमाणानि भवन्ति, एतेषां समुदाय एकं कण्डकं भवति । प्रथमकण्डकचरमचरणस्थानादनन्तरं चरणस्थानं तदसंख्येयेन भागेनाभ्यधिकं प्रथमकण्डकचरमचरणस्थानपर्यवापेक्षयाऽसंख्येयभागाधिकैः पर्यवैरधिकं द्रष्टव्यमित्यर्थः । ततः पुनरपि यथोत्तरमनन्तभागवृद्धानां संयमस्थानानां कण्डकं वक्तव्यम् । ततः पुनरप्येकमसंख्येयभागाधिकं संयमस्थानं वाच्यम् । एवमनन्तभागवृद्धसंयमस्थानकण्डकव्यवहितान्यसंख्येयभागाधिकानि संयमस्थानानि तावद्वाच्यानि यावत्कण्डकमात्राणि भवन्ति । ततः पुनरप्यनन्तभागवृद्धानां संयमस्थानानां कण्डकमभिधायैकं संख्येयभागाधिकं संयमस्थानं वक्तव्यम् । ततः पुनरपि यावन्ति संयमस्थानानि प्रागतिक्रान्तानि तावन्ति संयमस्थानानि गत्वा द्वितीयं संख्येयभागाधिकं संयमस्थानं वक्तव्यम् । एवं संख्येयभागाधिकान्यपि संयमस्थानानि कण्डकमात्राणि वाच्यानि । ततः पुनरपि प्रागतिक्रान्तानि संयमस्थानान्यभिधाय संख्येयभागाधिकस्थाने संख्येयगुणाधिकमेकं संयमस्थानं वक्तव्यम्, एवं संख्येयगुणाधिकानि संयमस्थानानि कण्डकमात्रा-

ण्यभिधाय ततः पुनरपि यावन्ति मूलत आरभ्य प्रागतिक्रान्तानि संयमस्थानानि तावन्त्यतिक्रम्य संख्येयगुणाधिकसंयमस्थानप्रसङ्गेऽसंख्येयगुणाधिकमेकं संयमस्थानं वक्तव्यम् । ततो मूलत आरभ्य यावन्त्यतीतानि तावन्ति भूयोऽप्यतिक्रम्य द्वितीयमसंख्येयगुणाधिकं संयमस्थानं वक्तव्यम् । एवमसंख्येयगुणाधिकान्यपि संयमस्थानानि कण्डकमात्राणि भवन्ति । ततः पूर्वपरिपाट्या पुनरप्यसंख्येयगुणाधिकसंयमस्थानप्रसङ्गे अनन्तगुणाधिकं संयमस्थानं वक्तव्यम् । ततो मूलत आरभ्य यावन्ति संयमस्थानानि प्रागतिक्रान्तानि तावन्त्युक्त्वा पुनरपि द्वितीयमनन्तगुणाधिकं संयमस्थानं वक्तव्यम् । एवमनन्तगुणाधिकान्यपि संयमस्थानानि कण्डकमात्राणि वाच्यानि । ततः पूर्वपरिपाट्या पञ्चापि वृद्धयो वक्तव्याः, अनन्तगुणवृद्धिस्तु न लभ्यते, षट्स्थानकस्य परिसमाप्तत्वात् । एतत्प्रथमं षट्स्थानकम् । प्रथमषट्स्थानकपरिसमाप्त्यनन्तरं यत् संयमस्थानमनन्तभागवृद्धं तद्द्वितीयषट्स्थानकस्य प्रथमं भवति । ततः पूर्वक्रमेण द्वितीयं षट्स्थानकं वक्तव्यम् । एवमसंख्येयलोकाकाशप्रदेशतुल्यानि षट्स्थानकानि वक्तव्यानि । अत्र षड्विधा वृद्धिः षोढा च हानिर्भवति, तद्यथा अनन्तभागवृद्धिरसंख्येयभागवृद्धिः संख्येयभागवृद्धिः संख्येयगुणवृद्धिरसंख्येयगुणवृद्धिरनन्तगुणवृद्धिः, अनन्तभागहानिरसंख्येयभागहानिः संख्येयभागहानिः संख्येयगुणहानिरसंख्येयगुणहानिरनन्तगुणहानिश्च । तत्र कियन्मात्रेणानन्तासंख्येयसंख्येयभागेन कियन्मात्रेण वा संख्येयासंख्येयानन्तगुणेन गुणकारेण वृद्धिर्भवति तन्निरूप्यते—सर्वजीवानन्तकेनासंख्येयलोकाकाशप्रदेशप्रमाणेनोत्कृष्टसंख्यातकेन विभक्ते सति गुणिते सति च यः समागच्छति तेन वृद्धं स्थानं द्रष्टव्यम् । तथाहि—प्रथमसंयमस्थानकस्य सर्वजीवसंख्याप्रमाणेन राशिना भागे हृते सति यल्लभ्यते स इहानन्तभागो ग्राह्यस्तेनाधिकं

द्वितीयं संयमस्थानं भवति। तस्यापि सर्वजीवप्रमाणेन राशिना भागे हृते सति यल्लभ्यते तेनाधिकं तृतीयं संयमस्थानं भवति। एवं यद्यत् संयमस्थानं यतो यतोऽनन्तभागाधिकमुपलभ्यते तत्तत्तस्य तस्य सर्वजीवप्रमाणेन राशिना भागलभ्येनानन्ततमेनांशेनाभ्यधिकं द्रष्टव्यम्। असंख्येयभागेनाभ्यधिकं नाम पाश्चात्यस्य संयमस्थानस्यासंख्येयेन लोकाकाशप्रदेशप्रमाणेन राशिना भागे हृते सति यल्लभ्यते सोऽसंख्येयभागस्तेनाभ्यधिकमिति। तदुक्तं कर्म्मप्रकृतौ अनुभागबन्धाधिकारे श्रीमच्छिवशर्म्मसूरिपादैः—"सव्वजियाणमसंखिज्जलोग संखिज्जगस्स जेट्ठस्स। भागो तिसु गुणणा तिसु छट्ठाणमसंखियालोगा ॥१॥" इति। संयमस्थानप्रस्तावे प्रज्ञप्तिवृत्तौ तु—"पूर्वोक्तकल्पितराशेर्दशसहस्राणि १०००० लोकाकाशप्रदेशप्रमाणेनासंख्येयकेन कल्पनया पञ्चाशत्प्रमाणेन भागे हृते लब्धं द्विशती द्वितीयप्रतियोगिपुलाकचरणपर्यवाग्रं नवसहस्राण्यष्टौ च शतानि ९८०० पूर्वभागलब्धा च द्विशती तत्र प्रक्षिप्ता जातानि दशसहस्राणि ततोऽसौ लोकाकाशप्रदेशपरिमाणासंख्येयकभागहारलब्धेन शतद्वयेन हीनः इत्यसंख्येयभागहीनः" इति। तथा संख्येयभागाधिकं नाम पाश्चात्यस्य संयमस्थानस्योत्कृष्टेन संख्येयकेन भागे हृते सति यल्लभ्यते स संख्येयतमो भागस्तेनाभ्यधिकम्। तथा संख्येयगुणाधिकं नाम पाश्चात्यस्य संयमस्थानस्योत्कृष्टेन संख्यातकेन गुणिते सति यावान् राशिर्भवति तावत्प्रमाणम्। तथाऽसंख्येयगुणाधिकं नाम पाश्चात्ये संयमस्थानेऽसंख्येयलोकाकाशप्रदेशप्रमाणेन राशिना गुणिते सति प्रज्ञप्तिवृत्त्यभिप्राये तु लोकाकाशप्रदेशप्रमाणेनासंख्येयकेन राशिना गुणिते सति यावान् राशिर्भवति तावत्प्रमाणम्। तथाऽनन्तगुणवृद्धं नाम पाश्चात्ये संयमस्थाने सर्वजीवसंख्याप्रमाणेन राशिना गुणिते सति यावान् राशिर्भवति तावत्प्रमाणम्। ननु विशुद्धसंयमस्थानसम्बन्धिविशुद्धतरपर्यवापेक्षयाऽविशुद्धतरसंयमस्थानसंबन्ध्यविशुद्धतरपर्यवा हीनाः,

ते चानन्तभागेन हीनाः असंख्येयभागेन हीनाः संख्येयभागेन हीनाः संख्येयगुणेन हीनाः असंख्येयगुणेन हीनाः अनन्तगुणेन हीनाश्च भवन्तीति प्रतिपादितम्, अत्र च भागादिहानीनां भवने न कापि क्षतिः परं संख्येयगुणादिहानयः कथं भवेयुरिति चेत्? सापेक्षत्वेनोच्यमाने न कापि क्षतिः, तथाहि–उत्कृष्टविशुद्धिकस्यासत्कल्पनयोत्कृष्टसंयमस्थानपर्यवाग्रं दशसहस्राणि १००००, तस्य सर्वजीवानन्तकेन कल्पितेन शतप्रमाणेन भागेन हृते शतं लब्धं १००, ततो हीनविशुद्धिकस्य संयमस्थानपर्यवाग्रं शतेन विहीनं नवशताधिकनवसहस्रपरिमितं भवति ९९००, पूर्वभागलब्धं शतं तत्र प्रक्षिप्तं जातानि दशसहस्राणि, ततोऽसौ सर्वजीवानन्तकेन भागहारलब्धेन शतेन हीन इत्यनन्तभागहीनः। पूर्वोक्तकल्पितदशसहस्राशेरसंख्येयलोकाकाशप्रदेशप्रमाणेन प्रज्ञप्तिवृत्त्यभिप्रायेण तु लोकाकाशप्रदेशप्रमाणेनासंख्येयकेन कल्पनया पञ्चाशत्प्रमाणेन भागेन हृते लब्धं द्विशतं तेन विहीनमष्टशताधिकनवसहस्रपरिमितं संयमस्थानपर्यवाग्रं भवति। भागलब्धा च द्विशती तत्र प्रक्षिप्ता जातानि दश सहस्राणि ततोऽसौ लोकाकाशप्रदेशपरिमाणेनासंख्येयलोकाकाशप्रदेशपरिमाणेन वा भागहारेण लब्धेन शतद्वयेन हीन इत्यसंख्येयभागहीनः। ततोऽपि हीनविशुद्धिकस्य संख्येयभागहीनं संयमस्थानपर्यवाग्रमसत्कल्पनया नवसहस्रप्रमाणं भवति, तथाहि–पूर्वोक्तकल्पितदशसहस्रपर्यायराशेः उत्कृष्टसंख्यातकेन कल्पनया दशपरिमाणेन भागेन हृते सति लब्धं सहस्रं तेन विहीनं नवसहस्रं भवति, भागलब्धं सहस्रं तत्र प्रक्षिप्तं जातानि दशसहस्राणि ततोऽसावुत्कृष्टसंख्येयकेन भागहारेण लब्धेन सहस्रेण हीनः संख्येयभागहीन इति। ततोऽपि हीनविशुद्धिकस्य संख्येयगुणहीनं संयमस्थानपर्यवाग्रमसत्कल्पनया सहस्रपरिमितं भवति, तथाहि–उत्कृष्टविशुद्धिकस्य चरणपर्यवाग्रं

कल्पनया दशसहस्रकं ततो संख्यातगुणहीनविशुद्धिकस्य संयमस्थानपर्यवाग्रं सहस्रं यतश्चोत्कृष्टसंख्यातकेन दशकपरिमाणेन गुणकारेण गुणितः साहस्रो राशिर्जायते दश सहस्राणि, एवं साहस्रिकः तेनोत्कृष्टसंख्यातकेन कल्पनया दशकपरिमाणेन गुणकारेण हीनोऽनभ्यस्त इति संख्येयगुणहीनः। ततोऽपि हीनविशुद्धिकस्यासंख्येयगुणहीनं संयमस्थानपर्यवाग्रमसत्कल्पनया द्विशतं, तथाहि-उत्कृष्टविशुद्धिकस्य चरणपर्यवाग्रमसत्कल्पनया दशसहस्रकं, यतो द्विशतमसंख्येयलोकाकाशप्रदेशप्रमाणेन लोकाकाशप्रदेशप्रमाणेनासंख्यातकेन वा कल्पनया पञ्चाशत्प्रमाणेन गुणकारेण गुणितं जायते दशसहस्राणि ततः तेनासंख्येयलोकाकाशप्रदेशप्रमाणेन लोकाकाशप्रदेशप्रमाणासंख्यातकेन वा कल्पनया पञ्चाशतपरिमाणेन गुणकारेण हीनोऽनभ्यस्तो द्विशतिकोऽसंख्येयगुणहीनः। ततोऽपि हीनतरविशुद्धिकस्य संयमस्थानपर्यवाग्रमनन्तगुणहीनमसत्कल्पनया शतप्रमाणं, तथाहि-सर्वोत्कृष्टविशुद्धिकस्य संयमस्थानपर्यवाग्रं दशसहस्रं कल्पितं, ततः सर्वजघन्यविशुद्धिकं शतमेवं भवति, सर्वजीवानन्तकेन कल्पनया शतपरिमाणेन गुणकारेण गुणितो यः शतिको राशिर्जायते दशसहस्राणि स तेन सर्वजीवानन्तकेन कल्पनया शतपरिमाणेन गुणकारेण हीनोऽनभ्यस्त इत्यनन्तगुणहीनः। एवं प्रागुक्तवृद्धिषट्स्थानकशब्दार्थोऽप्येभिरेव भागापहारगुणकारैर्व्याख्येयः, तथाहि-एकस्योत्कृष्टविशुद्धिकस्य कल्पनया दशसहस्राणि संयमस्थानपर्यवाग्रं तदन्यस्य नवशताधिकानि नवसहस्राणि संयमस्थानपर्यवाग्रं ततो द्वितीयापेक्षया प्रथमोऽनन्तभागाधिकः, तथा यस्य संयमपर्यवाग्रं शतद्वयोनदशसहस्रप्रमाणं तदपेक्षया प्रथमोऽसंख्येयभागाधिकः, तथा यस्य नवसहस्रपरिमितं पर्यवाग्रं तदपेक्षया प्रथमः संख्येयभागाधिकः, तथा यस्य संयमपर्यवाग्रं सहस्रप्रमाणं तदपेक्षया प्रथमः

संख्येयगुणाधिकः, तथा यस्य संयमस्थानपर्यवाग्रं द्विशतं तदपेक्षया प्रथमोऽसंख्येयगुणाधिकः, तथा यस्य संयमस्थानपर्यवाग्रं शतं तदपेक्षया प्रथमोऽनन्तगुणाधिक इति ।

अथ संयमस्थानानामधस्तनस्थानप्ररूपणा क्रियते–तत्र पञ्च मार्गणा भवन्ति, तद्यथा–अनन्तरप्ररूपणा, एकान्तरितप्ररूपणा, द्व्यन्तरितप्ररूपणा, त्र्यन्तरितप्ररूपणा, चतुरन्तरितप्ररूपणा चेति । तत्र प्रथमादसंख्येयभागवृद्धसंयमस्थानादधः कियन्त्यनन्तभागवृद्धानि संयमस्थानानि भवन्तीति चेत्? उच्यते–कण्डकमात्राण्येव । प्रथमात् संख्येयभागमात्रवृद्धात् संयमस्थानादधः कियन्त्यसंख्येयभागवृद्धानि संयमस्थानानि भवन्तीति चेत्? तान्यपि कण्डकमात्राण्येव । एवं प्रथमात् संख्येयगुणवृद्धसंयमस्थानादधः संख्येयभागवृद्धानि संयमस्थानानि प्रथमाच्चासंख्येयगुणवृद्धसंयमस्थानादधः संख्येयगुणवृद्धानि संयमस्थानानि प्रथमादनन्तगुणवृद्धात् संयमस्थानादधोऽसंख्येयगुणवृद्धानि संयमस्थानानि च तानि सर्वाण्यपि कण्डकमात्राण्येव भवन्तीत्यनन्तरमार्गणा । तथा प्रथमात् संख्येयभागवृद्धात् संयमस्थानादधः कियन्त्यनन्तभागवृद्धानि संयमस्थानानि? उच्यते, कण्डकवर्गः कण्डकं च । एवं प्रथमात्संख्येयगुणवृद्धात् संयमस्थानादधोऽसंख्येयभागवृद्धानि संयमस्थानानि तावन्त्येव । प्रथमादसंख्येयगुणवृद्धात् संयमस्थानादधः संख्येयभागवृद्धानि संयमस्थानान्यपि तावन्त्येव । प्रथमादनन्तगुणवृद्धात् संयमस्थानादधः संख्येयगुणवृद्धानि संयमस्थानान्यपि तावन्तीति । कथमेतावन्मात्राण्येव भवन्तीति चेत्? श्रूयतां विवक्षितप्रथमसंयमस्थानादनन्तराधस्तनसंयमस्थानानां कण्डकमात्राणां प्रत्येकमधस्तादधस्तनसंयमस्थानानि कण्डकमात्राणि प्राप्यन्त इति कण्डकं कण्डकेन गुणितं कण्डकवर्गो भवति उपरि चैकं कण्डकमित्येकान्तरिता

मार्गणा । प्रथमात् संख्येयगुणवृद्धात् संयमस्थानादधः कियन्त्यनन्तभागवृद्धानि संयमस्थानानि ? उच्यते—कण्डकघनो द्वौ कण्डकवर्गौ कण्डकं च । एवं प्रथमादसंख्येयगुणवृद्धात् संयमस्थानादधोऽसंख्येयभागवृद्धानि संयमस्थानानि तावन्त्येव । प्रथमादनन्तगुणवृद्धात् संयमस्थानादधः संख्येयभागवृद्धानि संयमस्थानानि तावन्त्येव । कात्र भावनेति चेत् ? उच्यते—इह प्रथमात् संख्येयगुणवृद्धात् संयमस्थानादध एकैकस्य संख्येयभागवृद्धस्य संयमस्थानस्याधः प्रत्येकमनन्तभागवृद्धानां संयमस्थानानामेकैककण्डकाधिकः कण्डकवर्गः प्राप्यते । संख्येयभागवृद्धानि च संयमस्थानानि कण्डकमात्राणि । ततः कण्डकवर्गः कण्डकेन गुणितः कण्डकघनो भवति । कण्डकं च कण्डकगुणितं कण्डकवर्गः । अन्त्यसंख्येयभागवृद्धाच्च संयमस्थानादुपरि कण्डकवर्ग एकं च कण्डकं प्राप्यते । ततो द्व्यन्तरितमार्गणायामनन्तभागवृद्धानां संयमस्थानानां कण्डकघनो द्वौ कण्डकवर्गावेकं च कण्डकं भवति । एवमग्रेऽप्यूह्यम् । एषा द्व्यन्तरिता मार्गणा । प्रथमादसंख्येयगुणवृद्धात् संयमस्थानादधः कियन्त्यनन्तभागवृद्धानि संयमस्थानानि ? उच्यते—एकः कण्डकवर्गवर्गः त्रयः कण्डकघनाः त्रयः कण्डकवर्गा एकं च कण्डकम् । एवं प्रथमादनन्तगुणवृद्धात् संयमस्थानादधोऽसंख्येयभागवृद्धानि संयमस्थानान्यप्येतावन्मात्राण्येवेत्यवसेयम् । काऽत्र भावनेति चेत् ? उच्यते—इह प्रथमादसंख्येयगुणवृद्धात् संयमस्थानादध एकैकस्य संख्येयगुणवृद्धस्य संयमस्थानस्याधः प्रत्येकमनन्तभागवृद्धानां संयमस्थानानां कण्डकघनो द्वौ कण्डकवर्गौ कण्डकं चैकं प्राप्यते । संख्येयगुणवृद्धानि च संयमस्थानानि कण्डकमात्राणि । ततः कण्डकघनः कण्डकेन गुणितः कण्डकवर्गवर्गो भवति, तथाहि—चतुष्कस्य घनश्चतुःषष्टिप्रमाणः, स च चतुष्केण गुण्यते ततो द्विशतं षट्पञ्चाशदधिकं भवति, अयं चतुष्कस्य

वर्गवर्गः, चतुष्कस्थानीयं चेह कण्डकं द्रष्टव्यमिति । द्वौ कण्डकवर्गौ कण्डकेन गुणितौ द्वौ कण्डकघनौ भवतः, वर्गस्य
वर्गमूलेन गुणने घनस्य निष्पत्तेः, कण्डकं च कण्डकेन गुणितं कण्डकवर्गः । संख्येयगुणवृद्धसंयमस्थानस्योपर्येकः कण्डक-
घनो द्वौ च कण्डकवर्गौ कण्डकं चैकं प्राप्यते, तत्पूर्वराशौ प्रक्षेप्यम्, ततस्त्र्यन्तरितमार्गणायामनन्तभागवृद्धानामेकः
कण्डकवर्गवर्गः त्रयः कण्डकघनाः त्रयः कण्डकवर्गाः एकं च कण्डकं प्राप्यते । एवमसंख्येयभागवृद्धानामपि संयमस्था-
नानां भावनीयम् । एषा त्र्यन्तरिता मार्गणा । प्रथमादनन्तगुणवृद्धात् संयमस्थानादधः कियन्त्यनन्तभागवृद्धानि संयम-
स्थानानि ? उच्यते—अष्टौ कण्डकवर्गवर्गाः षट् कण्डकघनाः चत्वारः कण्डकवर्गाः एकं च कण्डकम् । कथमिति चेत् ?
उच्यते—इह कण्डकमसत्कल्पनया चतुस्संख्यात्मकं कल्प्यते । तत्र प्रथमादनन्तगुणवृद्धात् संयमस्थानादध एकैकस्या-
संख्येयगुणवृद्धस्य संयमस्थानस्याधः प्रत्येकमनन्तभागवृद्धानां संयमस्थानानामेकः कण्डकवर्गवर्गः त्रयः कण्डकघनाः
त्रयः कण्डकवर्गाः एकं च कण्डकं प्राप्यते, असंख्येयगुणवृद्धानि च संयमस्थानानि कण्डकमात्राणि, ततः कण्डकवर्ग-
वर्गाः असंख्येयाः कण्डकमात्राः प्राप्यन्ते, तथापि कण्डकमिह चतुःसंख्यात्मकं कल्पितमिति चत्वारः कण्डकवर्ग-
वर्गाः लब्धाः, त्रयश्च कण्डकघनाः चतुःसंख्यात्मकेन कण्डकेन गुणिता जाता द्वादश कण्डकघनाः, घनश्चतुष्केण गुणितः
कण्डकवर्गवर्गो भवति, ततोऽत्र लब्धाः त्रयः कण्डकवर्गवर्गाः, सर्वसंख्यया जाताः सप्त कण्डकवर्गवर्गाः, कण्डकवर्गाश्च
त्रयः चतुःसंख्यात्मकेन कण्डकेन गुणिता जाता द्वादश वर्गाः, कण्डकवर्गश्च कण्डकेन गुणितः कण्डकघनो भवति, यथा
चतुष्कवर्गः षोडश चतुष्केण गुणितश्चतुष्षष्ठ्यात्मकघनः, ततो लब्धास्त्रयः कण्डकघनाः, कण्डकं च कण्डकेन गुणितमेकः

कण्डकवर्गः, असंख्येयगुणवृद्धसंयमस्थानकण्डकाच्चोपरि एकः कण्डकवर्गवर्गः त्रयः कण्डकघनाः त्रयः कण्डकवर्गा एकं च कण्डकं प्राप्यते, तच्च पूर्वराशौ प्रक्षिप्यते, तत उक्तप्रमाणं सम्पद्यते । उक्तं च—"अडकण्डकवग्गवग्गा वग्गा चत्तारि छ घणं कण्डं । चउअंतरवुड्डीए हेट्ठट्ठाणपरूवणया ॥ १॥" इति । वस्तुगत्या तु चतुरुत्तरकण्डकमिताः कण्डकवर्गवर्गाः षट् कण्डकघनाश्चत्वारः कण्डकवर्गाः एकं च कण्डकं भवति । उक्ता चतुरन्तरिता मार्गणा, उक्ता च संयमस्थानानामधस्तनप्ररूपणा । तत्र यानि जघन्यानि असंख्येयलोकाकाशप्रदेशप्रमाणानि संयमस्थानानि सामायिकस्य च्छेदोपस्थापनीयस्य च भवन्ति तानि समानपरिणामत्वेन परस्परं तुल्यानि भवन्ति । तत ऊर्ध्वमसंख्येयलोकाकाशप्रदेशप्रमाणानि यानि तानि परिहारविशुद्धिकस्य भवन्ति, एतानि सामायिकच्छेदोपस्थापनीययोरप्यविरोधीनि, तत्र तयोः संभवात् । परिहारविशुद्धिकसंयमस्थानेभ्य ऊर्ध्वमपि यान्यसंख्येयलोकाकाशप्रदेशप्रमाणानि संयमस्थानानि तानि सामायिकच्छेदोपस्थापनीययोः भवन्ति । तत ऊर्ध्वं यान्यसंख्येयान्यन्तर्मुहूर्त्तसमयप्रमाणानि संयमस्थानानि तानि सूक्ष्मसम्परायस्य भवन्ति । तत ऊर्ध्वमेकमजघन्यानुत्कृष्टं यथाख्यातचारित्रस्य भवति । तदुक्तं बृहत्कल्पभाष्ये जिनकल्पिकाधिकारे—"तुल्ला जहन्नट्ठाणा संजमठाणाए पढमबितियाणं । तत्तो असंखलोए गंतुं परिहारियट्ठाणा ॥ १ ॥ तेवि असंखलोए अविरुद्धा तेवि पढमविइयाणं । उवरिंपि ततो असंखा संजमट्ठाणा उ दोण्हंपि ॥ २ ॥" व्याख्या—"प्रथमद्वितीययोः सामायिकच्छेदोपस्थापनीययोः संयमस्थानयोः संबन्धीनि यानि जघन्यस्थानानि तानि परस्परं तुल्यानि विशुद्धिसाम्यात् । जघन्यसंयमस्थानेभ्यः परतोऽसंख्येयान् लोकान् गत्वा, असंख्येयलोकाकाशप्रदेशप्रमाणेषु संयमस्थानेषु व्यतीतेष्वित्यर्थः, परिहारिकस्य—परिहारविशुद्धिकस्य संयमस्थानानि भवन्ति, तान्यप्यसंख्येया लोका असंख्येयलोकाकाशप्रदेशप्रमाणानि ।

एतानि च प्रथमद्वितीययोरपि—सामायिकच्छेदोपस्थापनीययोः विशुद्धिविशेपसाम्यादविरुद्धानि तयोरपि सम्बन्धीनि भवन्तीत्यर्थः। ततः परिहारिकसंयमस्थानेभ्य उपर्यपि असंख्येयानि संयमस्थानानि द्वयोरपि सामायिकच्छेदोपस्थापनीययोः भवन्ति। ततः सामायिकच्छेदोपस्थापनीये व्यवच्छिद्येते। ततः परं सूक्ष्मसम्परायस्यान्तर्मुहूर्त्तसमयप्रमाणान्यसंख्येयानि संयमस्थानानि भवन्ति। तत ऊर्ध्वमनन्तगुणमेकं यथाख्यातचारित्रस्य संयमस्थानमिति"। अतीतनयमाश्रित्य तु पूर्वप्रतिपन्नो विवक्ष्यते तदा शेपेष्वपि संयमस्थानेषु भवति, परिहारविशुद्धिकल्पसमाप्त्यनन्तरमन्येष्वपि चारित्रेषु संभवात्, तेष्वपि च वर्त्तमानस्यातीतनयमपेक्ष्य पूर्वप्रतिपन्नत्वात्, उक्तं च बृहत्कल्पभाष्ये—"सट्ठाणे पडिपत्ति अन्नेसु वि हुज्ज पुव्वपडिवन्नो। अन्नेसु विवट्टन्तो तीय नयं वुच्चई पप्प ॥ १ ॥" व्याख्या—"स्वस्थाने स्वेपु परिहारविशुद्धिकचारित्रसत्केपु संयमस्थानेषु वर्त्तमानः परिहारकल्पस्य प्रतिपत्तिं करोति। पूर्वप्रतिपन्नोऽन्येष्वपि सामायिकादिसंयमस्थानेपु स्वीयसंयमस्थानापेक्षया विशुद्धतरेष्वध्यवसायविशेषाद्भवेत्। तेषु चान्येष्वपि संयमस्थानेषु वर्त्तमानोऽसावनुभूतपूर्वपरिहारविशुद्धिकसंयमस्थानत्वादतीतनयमतीतार्थाभ्युपगमपरं व्यवहारनयं प्राप्याङ्गीकृत्य परिहारविशुद्धिक इति प्रोच्यते, निश्चयनयमङ्गीकृत्य पुनर्नोच्यते संयमस्थानान्तराध्यावसायादिति" ॥ ३ ॥

तीर्थद्वारे नियमात् तीर्थे प्रवर्त्तमाने सत्येव परिहारविशुद्धिको भवति, नानुत्पन्ने विगमे वा तीर्थे जातिस्मरणादिना, तदुक्तं—"तित्थत्ति नियमो च्चिय होइ स तित्थंमि न उण तदभावे। विगए अणुपन्ने वा जाईसरणाइएहिं ॥ १ ॥" इति। ननु कतरस्मिन् तीर्थे परिहारविशुद्धिककल्पो भवतीति चेत्? भरतैरवतेषु दशस्वपि क्षेत्रेषु प्रथमचरमतीर्थपतितीर्थेष्वेवैष कल्पो भवति नान्यतीर्थपतितीर्थेषु, तदुक्तं बृहत्कल्पभाष्ये—"भरहेरवएसु वासेसु जता तित्थगरो भवे। पुरिमा पच्छिमा चेव

कप्पं देसंति ते इमं ॥ १ ॥" व्याख्या—"भरतैरवतेषु वर्षेषु दशस्वपि यदा तृतीयचतुर्थकारयोः पश्चिमे भागे यथाक्रमं पूर्वाः पश्चिमाश्च तीर्थंकरा भवेयुः तदा ते भगवन्त इमं प्रस्तुतं कल्पं दिशन्ति—प्ररूपयन्ति, अर्थादापन्नं मध्यमतीर्थकृतां महाविदेहेषु च तीर्थेषु नास्ति परिहारकल्पस्थितिरिति"। ननु पूर्वपश्चिमतीर्थकरतीर्थेषु कियन्तं कालं परम्परया परिहारविशुद्धिकानां गच्छो भवतीति चेत् ? प्रथमतीर्थपतितीर्थेषु देशोने द्वे पूर्वकोटी चरमतीर्थपतितीर्थेषु देशोने द्वे शते वर्षाणां भवतः, तथाहि—इहादिजिनकाले पूर्वकोट्यायुषो मनुजा जन्मत आरभ्य संजाताष्टवर्षाः प्रव्रजितास्तेषां च नवमे वर्षे उपस्थापना संजाता एकोनविंशतिवर्षपर्यायाणां च दृष्टिवाद उद्दिष्टस्तस्य च वर्षेण योगः समाप्तिं नीतः एवं नवविंशतिश्च मीलिता एकोनत्रिंशद्वर्षाणि भवन्ति। एतावत्सु वर्षेषु गतेषु ऋषभस्वामिनः पार्श्वे परिहारकल्पं प्रतिपन्नाः तत एकोनत्रिंशद्वर्षन्यूनां पूर्वकोटीं परिहारकल्पे तैरनुपालिते सति येऽन्ये तेषां मूले परिहारकल्पं प्रतिपद्यन्ते तेऽप्येवमेवैकोनत्रिंशद्वर्षन्यूनां पूर्वकोटिं परिहारकल्पमनुपालयन्तीत्येवं देशोने द्वे पूर्वकोटी भवतः। एवं वर्द्धमानस्वामिनः काले वर्षशतायुषो मनुजा जन्मत आरभ्य संजाताष्टवर्षाः प्रव्रजिताः पूर्वोक्तरीत्या विंशतिवर्षेऽधीतदृष्टिवादाः श्रीमन्महावीरसकाशे परिहारकल्पं स्वीकृतवन्तः देशोनवर्षशतं चानुपालयन्ति निजायुःपर्यन्ते चान्येषां तत्कल्पं प्रवर्त्तयन्ति। तेऽपि चैवमेवैकोनत्रिंशद्न्यूनवर्षशतं परिहारकल्पं पालयन्तीत्येवं देशोने द्वे शते वर्षाणां भवतः। नन्वष्टादशमासप्रमाणोऽयं कल्प इति प्रागुक्तमत्र च वर्षशतं पालयन्तीत्युक्तं तत्कथं नात्र विरोध इति चेत् ? प्रान्ते जिनकल्पिकग्रहणापेक्षयोक्तत्वेन न विरोधगन्धोऽपि। ननु तृतीया पूर्वकोटी तृतीयं वर्षशतं वा कथं न भवतीति चेत् ? उच्यते—जिनेन्द्रपादमूले जिनेन्द्रसमीपप्रतिपन्नसाधुसकाशे वा तेऽमुं कल्पं प्रतिपद्यन्ते नान्येषां पार्श्वेऽत-

स्तृतीया पूर्वकोटिः तृतीयं च वर्षशतं न भवतीति, तदुक्तं बृहत्कल्पभाष्ये—"केयईयं कालसंयोगं गच्छो उ अणुसज्जती। पव्व-
तित्थयरेसु पुरिमेसु तह्वा पच्छिमएस्सु य॥१॥ पुव्वसयसहस्साइं पुरिमस्स अणुसज्जती। वी उन सयवासाइं पच्छिमस्साणुसज्जती॥२॥ पालयित्ता सयं ऊणं वासाणं ते अपच्छिमे। काले
ज्जा अट्ठवासस्स दिट्ठिवातो उ वीसर्हिं। इति एकूणतीसाए सयमूणं तु पच्छिमे॥ ३॥ पडिवन्ना जिणिंदस्स पादमूलस्स जे ठिआ। ट्ठायंति उ ते अण्णे न उ ट्ठावियट्ठावगा॥ ५॥"
देसिवि अण्णेसिं इति ऊणा तु वेसत॥ ४॥
इति तीर्थद्वारव्याख्यानेन पर्यायद्वारमपि व्याख्यातमेव। यत्र पर्यायद्वारे जघन्येनैकोनत्रिंशद्वर्षाणि गृहिपर्यायः विंशतिव-
र्षाणि व्रतपर्याय उक्तः तत्र जन्मत आरभ्य पर्यायः स गृहिपर्यायः। ननु कथमेकोनत्रिंशद्वर्षाणि गृहिपर्यायो भवतीति चेत्?
उच्यते—जन्मतोऽष्टवार्षिकः प्रव्रजितो विंशतिवर्षपर्यायस्य च दृष्टिवाद उद्दिष्टः एकेन वर्षेण योगः समाप्तः सर्वमीलनेन
जातान्येकोनत्रिंशद्वर्षाणि व्रतपर्यायः, प्रव्रज्याप्रतिपत्तेरारभ्य च जघन्यतो विंशतिवर्षाणि यावत् प्रमाणपर्यायस्यैव दृष्टि-
वादोद्देशभावात्, उक्तं च पञ्चवस्तुके—"एयस्स एस नेओ गिहिपरियाओ जहन्नगुणतीसा। जइपरियाओ वीसा दोसु वि उक्कोसदे-
सूणा॥" इति। यत्पुनरत्र सूत्रे—"जम्मेण तीस वरिसो परियाएणिगुणवरिसो य। परिहारं पट्ठविउं कप्पइ मणुओ हु एरिसओ॥"
'जन्मना त्रिंशत्वार्षिकः पर्यायेण एकोनविंशतिवार्षिकः परिहारं प्रस्थापयितुं ईदृशो मनुष्यः कल्पते नान्य' इत्युक्तं तद-
संगतमिव लक्ष्यते, कल्पादिभिर्व्यभिचारात्, यदुक्तं कल्पभाष्ये—"नियमा होइ स तित्थे गिहिपरियाए जहन्निगुणतीसा। जइ-
परियाए वीसा दोसु वि उक्कोसदेसूणा॥" इति॥ ४–५॥

आगमद्वारे जघन्येनाधीतनवपूर्वा उत्कृष्टतः किञ्चिन्न्यूनदशपूर्वधराः स्युः, न चापूर्वमागमं ते भगवन्तोऽधीयन्ते

यतस्तं कल्पमधिकृत्य प्रगृहीतोचितयोगाराधनत एव कृतकृत्यतां भजन्ते, पूर्वाधीतं तु विश्रोतसिकादिक्षयनिमित्तं नित्यमेवैकाग्रमनसः सम्यगनुस्मरन्ति प्रायः, तदुक्तं पञ्चवस्तुके–"अपुवं नाहिज्जइ आगममेसो पडुच्च तं जम्मं। जमुचियपगिट्ठजोगाराहणओ चेव कयकिचो ॥ १ ॥ पुवाहीयं तु तयं पायं अणुसरइ निच्चमेव स। एगग्गमणो सम्मं विसोयसिगाइखयहेऊ ॥ २ ॥" इति ॥ ६ ॥

वेदद्वारे प्रवृत्तिकाले पुरुषवेदो नपुंसकवेदो वा स्यात् न स्त्रीवेदः, स्त्रीयाः परिहारविशुद्धिककल्पप्रतिपत्त्यसंभवात्। अतीतनयमधिकृत्य पुनः पूर्वप्रतिपन्नश्चिन्त्यमानः सवेदो वा भवेदवेदो वा, श्रेणिप्रतिपत्त्यभावे सवेदः उपशमश्रेणिप्रतिपत्तौ वाऽवेदः, तदुक्तं पञ्चवस्तुके–"वेदो पवत्तिकाले इत्थीवज्जो उ होइ एगयरो। पुवपडिवन्नओ पुण होज्ज सवेओ अवेओ वा॥ १ ॥" इति ॥ ७ ॥

कल्पद्वारे स्थितकल्पे एवायं नास्थितकल्पे, "ठियकप्पम्मि य नियमा" इति वचनात्। तत्राचेलक्यादिषु दशस्वपि स्थानेषु ये स्थिताः साधवस्तत्कल्पः स्थितकल्प उच्यते, ये पुनश्चतुर्षु शय्यातरपिण्डादिष्ववस्थितेषु कल्पेषु स्थिताः शेषेषु चाचेलक्यादिषु षट्स्वस्थिताः तत्कल्पोऽस्थितकल्पः, उक्तं च पञ्चवस्तुके–"ठिअमट्ठिए य कप्पे आचेलक्काइएसु ठाणेसुं। सवेसु ठिया पढमो चउ ठिय छसु अट्ठिया बिइओ ॥" इति। आचेलक्यादीनि च दशस्थानान्यमूनि–आचेलक्यौद्देशिकशय्यातरराजपिण्डकृतिकर्मव्रतज्येष्ठप्रतिक्रमणमासकल्पपर्युषणकल्परूपाणि स्थानानि, तदुक्तं पञ्चवस्तुके–" आचेलक्कुद्देसियसिज्जायररायपिंडकिइकम्मे। वयजिट्ठप्पडिक्कमणे मासं पज्जोसवणकप्पे ॥" चत्वारश्चावस्थिताः कल्पा इमे शय्यातरपिण्डव्रतज्येष्ठकृतिकर्म-

रूपाः, तदुक्तं—"सिजायरपिंडंमि चउज्जामे य पुरिसजेट्ठे य । कियकम्मस्स य करणे चत्तारि अवट्ठिया कप्पा ॥" इति ॥ ८ ॥

लिङ्गद्वारे नियमात् द्विविधेऽपि परिहारविशुद्धिकाः भवन्ति, द्रव्यलिङ्गे भावलिङ्गे च, एकेनापि विना विवक्षितकल्पोचितसमाचार्ययोगादिति ॥ ९ ॥

लेश्याद्वारे तेजःप्रभृतिकासूत्तरासु तिसृषु विशुद्धासु लेश्यासु परिहारविशुद्धिकस्य प्रतिपत्तिर्भवति न कृष्णादिषु तिसृषु । पूर्वप्रतिपन्नस्तु कश्चित् कृष्णादिष्वपि भवति, तथापि नातिसंक्लिष्टासु वर्त्तते, कृष्णादिषु वर्त्तमानोऽपि न प्रभूतं कालमवतिष्ठते किन्तु स्तोककालं यतः स्ववीर्यवशात् शीघ्रमेव ताभ्यः व्यावर्तते । अथ प्रथमत एव कस्मात्तत्र प्रवर्त्तत इति चेत् ? कर्म्मवशात्, तथा चोक्तं पञ्चवस्तुके—"लेसासु विसुद्धासुं पडिवज्जइ तीसु न उण सेसासु । पुव्वपडिपन्नओ पुण हुज्जा सव्वासु कहंचि ॥१॥ नचंतसंकिलिट्ठासु थोवकालं व हन्दि इयरासु । चित्ता कम्माणगइ तहावि विरियं फलं देइ ॥२॥" व्याख्या—"लेश्यासु विशुद्धासु तैजस्यादिषु तिसृषु प्रतिपद्यते कल्पं, न पुनः शेषास्वाद्यासु, पूर्वप्रतिपन्नः पुनः कल्पस्थो भवेत् सर्वास्वपि शुद्धाशुद्धासु कथञ्चित्कर्म्मवैचित्र्यादिति गाथार्थः । नात्यन्तसंक्लिष्टासु वर्त्तते तथा स्तोककालं च हंदीतरासु अशुभासु चित्रा कर्म्मणां गतिः येन तास्वपि वर्त्तते । तथापि वीर्यं फलं ददाति येन तद्भावेऽपि भूयश्चारित्रशुद्धिरिति गाथार्थः" इति ॥ १० ॥

ध्यानद्वारे प्रवर्द्धमानेन धर्म्मध्यानेन परिहारविशुद्धिकं प्रतिपद्यते पूर्वप्रतिपन्नः पुनरार्त्तरौद्रयोरपि भवति केवलं प्रायेण निरनुबन्धः, तदुक्तं पञ्चवस्तुके—"झाणंमि वि धम्मेणं पडिवज्जइ सो वड्ढमाणेण । इयरेसु वि ज्झाणेसु पुव्वपडिवन्नो न पडिसिद्धो ॥ १ ॥ एवं अकुसलजोगे उद्दामे तिव्वकम्मपरिणामा । रुद्दट्टेसु वि भावो इमस्स पायं निरणुबन्धो ॥ २ ॥" इति ॥ ११ ॥

गणद्वारे जघन्यतः त्रयः उत्कृष्टतः शतसंख्याकाः गणाः परिहारविशुद्धिकं प्रतिपद्यन्ते, पूर्वप्रतिपन्नाः पुनः जघन्यत उत्कृष्टतश्च शतशः । पुरुषगणनया तु जघन्यतः प्रतिपद्यमानाः सप्तविंशतिरुत्कृष्टतः सहस्रं, पूर्वप्रतिपन्नास्तु जघन्यतः शतश उत्कृष्टतः सहस्रशः, तदुक्तं बृहत्कल्पभाष्ये—"सत्तावीसा जहन्नेणं उक्कोसेण सहस्ससो । निग्गंथसूरा भगवन्तो सव्वग्गेणं वियाहिया ॥" व्याख्या—"सप्तविंशतिः पुरुषा जघन्येन त्रिषु गणेषु समुदितेषु भवन्ति, एकैकस्मिन् गणे नव जना भवन्तीति भावः, उत्कर्षतः सहस्रः सहस्रसंख्याकाः पुरुषा भवन्ति । शताग्रशो गणानामुत्कर्षतः प्रथमतः प्रतिपद्यमानकानां वक्ष्यमाणत्वात् । एवं ते भगवन्तो निर्ग्रन्थशूराः सर्वाग्रेण सर्वसंख्यया व्याख्याताः ।" गणमधिकृत्य प्रमाणमाह—"सयग्गसो य उक्कोसा जहन्नेणं तओ गणा । गणो य णव तो वुत्तो एमेता पडिवत्तितो ॥ २ ॥" व्याख्या—"शताग्रशः शतसंख्याकगणा उत्कर्षतोऽमीषां प्रथमतः प्रतिपत्तारो भवन्ति । जघन्येन तु त्रयो गणाः, गणश्च नवको नवपुरुषमान उक्तः । एवमेताः प्रतिपत्तयः प्रमाणादिविषयाः प्रकारान्तरा मन्तव्या" इति । बृहत्कल्पप्रथमोद्देशकभाष्येऽपि—"गणओ तिन्नेव गणा जहन्नपडिवत्ति सयस उक्कोसा । उक्कोसजहन्नेणं सयसो च्चिय पुव्वपडिवन्ना ॥ १ ॥ सत्तावीस जहन्ना सहस्समुक्कोसओ य पडिवत्ती । सयसो सहस्ससो वा पडिवन्न जहन्नउक्कोसा ॥ २ ॥" इति । अन्यच्च यदा पूर्वप्रतिपन्नः कल्पमध्यादुपद्रवैरेको म्रियते स्थविरकल्पं वा गतो भवति शेषास्तमेव कल्पमनुपालयितुकामा भवन्ति तदोपसम्पदर्थं समागतानां मध्यात् गृहीत्वा गणः पूर्यते शेषास्तूपसम्पदर्थं समागताः पारिहारिकतपस्तुलनां कुर्वन्तास्तिष्ठन्ति, ते च पारिहारिकैः सह तिष्ठन्तोऽकल्पनीया न भवन्ति, तैश्च सह तावत्तिष्ठन्ति यावदुपसम्पदर्थमन्ये न समागच्छन्ति समागतैस्तु तैः पूरयित्वा पृथक् गणः क्रियते, तदुक्तं बृहत्कल्पभाष्ये—"एवं तु ठाविए कप्पे उवसंपज्जति जो

तर्हि । एगो दुवे अणेगो वा अविरुद्धा भवन्ति ते ॥१॥" व्याख्या—"एवमनन्तरोक्तनीत्या कल्पे स्थापिते सति यद्येकादयो म्रियेरन् अन्यत्र वा जिनकल्पादौ गच्छेयुः ततो यस्तत्र तेषां मध्ये उपसम्पद्यते स एको द्वौ वाऽनेके वा भवेयुः तत्र यावद्भिः पारिहारिकगण ऊनस्तावत्साधून् उपसम्पदर्थमागतानां मध्यात् गृहीत्वा गणः पूर्यते, ये शेषास्ते पारिहारिकतपस्तुलनां कुर्वन्तस्तिष्ठन्ति, ते च पारिहारिकैः सार्द्धं तिष्ठन्तेऽविरुद्धा भवन्ति—पारिहारिकाणामकल्पनीया न भवन्तीत्युक्तं भवति । ते च तावत्तिष्ठन्ति यावदन्ये उपसम्पदर्थमुपतिष्ठन्ते । तैः पूरयित्वा पृथक् गणः क्रियते" । इदमेव उच्यते—"तत्तो य ऊणए कप्पे उवसंपज्जति जो तहिं । जत्तिएहिं गणो ऊणो तत्तिते तत्थ पक्खिते ॥ २ ॥" व्याख्या—"ततश्च पूर्वोक्तकारणादूनके एकद्व्यादिभिः साधुभिरपूर्णे कल्पे यस्तत्रोपसम्पद्यते तत्रायं विधिः यावद्भिरेकादिसंख्याकैः स गण ऊनस्तावत्२सख्याकानेव साधून् तत्र गणे प्रक्षिपेत् प्रवेशयेत्" । "ततो अणूणए कप्पे उवसंपज्जति जो तहिं । उवसंपज्जमाणं तु तप्पमाणं गणं कुज्जा ॥ ३ ॥" व्याख्या—"अथ कोऽप्युपद्रवैः न कालगतस्तत यदि नवजनाः पूर्णास्ततः पृथक् गणो भवति, अथापूर्णास्ततः प्रतीक्षाप्यन्ते यावदन्ये उपसम्पदर्थमागच्छन्ति । एवमन्यूनके कल्पे योऽन्यसाधुजनस्तत्रोपसम्पद्यते तमुपसम्पद्यमानं साधुजनं मीलयित्वा तत्प्रमाणं नवपुरुपमानं गणं कुर्यात् स्थापयेत्" इति । नन्वेते भगवन्तो निजायुःशेषं सद्योपघातिरोगाभावं च सातिशयश्रुतोपयोगेन ज्ञात्वैव परिहारविशुद्धिकं कल्पं प्रतिपद्यन्ते नान्यथा, तदुक्तं बृहत्कल्पभाष्ये—"अप्पणो आउगं सेसं जाणित्ता ते महामुणी । परक्कमं च बलविरियं पच्चावाते तहेव य ॥ १ ॥" व्याख्या—"आत्मनः आयुःशेषं सातिशयश्रुतोपयोगेन ज्ञात्वा ते महामुनयो बलं शारीरं सामर्थ्यं वीर्यं जीवशक्तिः तदुभयमपि दर्शितस्वफलं पराक्रमः एतान्यात्मनो विज्ञायामुं कल्पं प्रतिपद्यन्ते, तथा प्रत्यपाया जीवीतोपद्रवकारिणो रोगादयस्तानपि तथैव प्रथममेवाभोगयन्ति, 'किं प्रतिपन्नानां भविष्यन्ति न वे'ति ।

यदि न भवन्ति ततः प्रतिपद्यन्ते अन्यथा तु नेति" ततः कथमुच्यते 'उपद्रवैरेको म्रियते' इति चेत्? सत्यमष्टादशमासाभ्यन्तरे नैव भवन्ति मरणादयः परमाष्टादशमासपूर्णे तु मरणादिभवने न कापि क्षतिः, तदुक्तं बृहत्कल्पभाष्ये–"अट्ठारससु पुण्णेसु एते उवद्दवा" इति ॥ १२ ॥

अभिग्रहद्वारे अभिग्रहाश्चतुर्विधाः तद्यथा–द्रव्याभिग्रहाः क्षेत्राभिग्रहाः कालाभिग्रहा भावाभिग्रहाश्च विचित्रा भवन्ति । परिहारविशुद्धिकानामेतेऽभिग्रहाः न सन्ति यस्मादेतेषां यथोदितकल्पपरिपालनरूपोऽभिग्रहो विद्यते, तथा चोक्तं पञ्चवस्तुके–"दव्वाई अभिग्गहा विचित्तरूपा न हुंति इत्तरिआ । एयस्स जाव वाहिओ कप्पो च्चि अभिग्गहो जेण ॥ १ ॥ एयम्मि गोयराई नियया नियमेण निरववाया य । तप्पालणं चिय परं एयस्स विसुद्धठाणं तु ॥ २ ॥" इति । यद्यपि द्रव्यादयो विचित्रा अभिग्रहा न सन्ति तथापि संसृष्टासंसृष्टे वर्जयित्वा शेषासु पञ्चस्वेषणासु द्वयोरभिग्रहः तत्रापि एकया भक्तमपरया पानकमन्वेषयन्ति, आह च बृहत्कल्पभाष्यकृत्–"संसट्ठमाइयाणं सत्तण्हं एसणाण उ । आइल्लाहिं उ दोहिं तु अग्गहो गह पंचहिं ॥ १ ॥ तत्थवि अन्नयरिए एगीए अभिग्गहं काऊणं" ति वस्त्रगवेषणे प्रतिमाचतुष्टयं भवति, तद्यथा–उद्दिष्टवस्त्रं प्रेक्षावस्त्रमन्तरावस्त्रमुज्झितधर्मवस्त्रमिति । तत्र गुरुसमक्षमदृष्टं यज्जघन्यमध्यमोत्कृष्टमेकेन्द्रियपञ्चेन्द्रियविकलेन्द्रियसमुद्भवं वा प्रतिज्ञातं तदेव गृहिभ्यो याच्यमानमुद्दिष्टं वस्त्रमिति प्रथमा प्रतिमा । प्रेक्षा अवलोकनं तत्पुरःसरं यद्वस्त्रं याच्यते तत्प्रेक्षावस्त्रं यथा कोऽपि साधुः कस्याप्यागारिणः सत्कं वस्त्रं दृष्ट्वा भणति यादृशमेतद्वस्त्रं दृश्यते तादृशमिदमेव वा मे प्रयच्छेति भणन् तदेव वस्त्रं हस्तप्रान्तेन दर्शयति तत्प्रेक्षावस्त्रमिति द्वितीया प्रतिमा । तथाऽभिनवं वस्त्रयुगलं परिधाय प्रावृत्य च पुरातनं

स्थापयितुकामो न तावदद्यापि स्थापयतीत्यत्रान्तरा यद्याच्यते तदन्तरावस्त्रमन्तरीयोत्तरीयरूपमभिनववस्त्रयुगलम् तत्रान्तरीयं नाम निवसनं परिधानवस्त्रमित्यर्थः, उत्तरीयं नाम प्रावरणं प्रच्छदपटीत्यर्थः । यद्वान्तरीयं यत् शय्यायामधस्तनं वस्त्रमास्तीर्यते, उत्तरीयं पुनः यत्तदुपरि प्रस्तीर्यते, अन्तरीयोत्तरीयवस्त्रयुगलेऽन्यस्मिन्नभिनवे प्राप्ते परिहिते वा प्राक्तनं वस्त्रयुगलं स्थापयितुकामेनात्रान्तरा यन्मार्ग्यते तदन्तरावस्त्रमिति तृतीया प्रतीमा । उज्झितधर्मं त्यागार्हं वस्त्रं तच्च चतुर्विधं भवति, तद्यथा–द्रव्योज्झितं क्षेत्रोज्झितं कालोज्झितं भावोज्झितमिति । तत्र द्रव्योज्झितं केनचिदगारिणा प्रतिज्ञातं मया स्थूलं वस्त्रं न गृहीतव्यमन्यदा तस्य तदेव केनापि वयस्यादिनोपढौकितं स ब्रूते पर्याप्तं ममैतेन नाहं गृह्णामि इतरोऽपि ब्रूते ममाऽप्यलमेतेन नाऽहमात्मना दत्तं पुनः स्वीकरोमीत्येवं द्वाभ्यामपि परित्यक्तममुष्मिन् देशकाले यदि जिनकल्पिकादिसाधुरवभाषितमनवभाषितं वा लभेत तद्द्रव्योज्झितं ज्ञातव्यम् । अत्रानवभाषितं नाम याच्ञां विना स्वयमेव ताभ्यां प्रदत्तमिति । क्षेत्रोज्झितं यथाऽहं लाटदेशोद्भवं वस्त्रं परिधानप्रावरणोपभोगं नैवानयामीति केनचित् प्रतिज्ञा कृता भवेत् । अन्यदा केनचिदागत्य तदेव ढौकितं ततः पूर्वोक्तरीत्या ताभ्यामुभाभ्यामपि परित्यक्तं क्षेत्रप्राधान्यविवक्षया क्षेत्रोज्झितं ज्ञातव्यम् । यद्वा कार्पटिकाः स्वदेशं प्रत्यागच्छन्तः स्वदेशाद्देशान्तरं प्रस्थिताः अपान्तरालेऽपायबहुलामटवीं गत्वा किं तस्कराणां हेतोः वस्त्रभारमुद्वहाम इति कृत्वा यदुज्झितं यद्वा वस्त्रप्रचुरे देशेऽन्यत्सुन्दरतरं वस्त्रं लब्ध्वा पुरातनं परित्यजेयुरेतत्सर्वं क्षेत्रोज्झितम् । तथा गन्धकाषायिकादिकं शीतस्वभावं वस्त्रं यत्केनापि श्रीमता ग्रीष्मे परिभुज्यते तदेव वर्षास्वनुपयोगित्वात् परिह्रियते तत्परिह्रियमाणं कालोज्झितमेवमुष्णस्वभावेषु वस्त्रेष्वपि भावना कार्या ।

गन्धकापायिकं स्वभावतो ग्रीष्मकाले शीतस्वभावं सर्वसन्तापहरं शास्त्रे पठ्यते, तथा चोक्तं—"सरसो चन्दनपंको अग्घइ सरसा य गंधकासाई। पाडलसरीस मल्लिय पियाइं काले निदाहंमि" ॥ यद्वा गन्धकापायिकं वर्षाकालादावयोग्यं भविष्यतीत्यभिसन्धाय वर्षाकालात्पूर्वमेव परित्यजेत् तत्कालोज्झितम्। तथा कोऽपि कस्यापि पार्श्वेऽभिनवानि निवसनानि लब्ध्वा स पुराणानि यस्य कस्यचित् ददाति, सोऽपि दीयमानानि जीर्णानीति कृत्वा नेच्छति तदेतद्भावं जीर्णतापर्यायमाश्रित्योज्झितं भावोज्झितं ज्ञातव्यमिति चतुर्थी प्रतिमा। प्रतिमेति वस्त्रग्रहणप्रकारा इति। शेषो विधिः पिण्डैषणातोऽवलोकनीयः। अनन्तरोक्तया वस्त्रैषणया वस्त्रमन्वेषयन्तं साधुं परो वदेत् यथा—'आयुष्मन् श्रमण! त्वं मासादौ गते समागच्छ ततोऽहं वस्त्रादिकं दास्यामि' इत्येवं तस्य न श्रृणुयात् प्रत्युत 'दातुमीहा चेत्? इदानीमेव ददस्व' एवं वदन्तं साधुं परो ब्रूयात् यथाऽनुगच्छ तावत् पुनः स्तोकवेलायां समागताय दास्यामीत्येतदपि न प्रतिश्रृणुयात् प्रत्युतेदानीमेव ददस्वेत्येव वदेत् एवं वदन्तं साधुं गृहस्थो भगिन्यादिकमाहूय वदेत् 'यथाऽऽनयैतद्वस्त्रं येन श्रमणाय दीयते वयं पुनरात्मार्थमन्यं जीवोपमर्दनेन करिष्यामः' इति एतत्प्रकारं वस्त्रं लब्धमपि पश्चात्कर्मभयेन न प्रतिगृह्णीयादिति। तथा पर एवं वदेत् यथा 'चन्दनादिना सुगन्धिद्रव्येण घर्षणादिकां क्रियां कृत्वा दास्यामि' तदेतन्निशम्य प्रतिषेधं विदध्यात्। अथ प्रतिषिद्धोऽप्येवं कुर्यात् ततो न प्रतिगृह्णीयादिति। एवमुदकादिना धावनं कृत्वा यद्वा कन्दादीनि वस्त्रादपनीय दास्यामीत्यपि निशम्य प्रतिषेधं कुर्यात्, निषिद्धोऽप्येवं कुर्यात् ततो न प्रतिगृह्णीयादिति। यदि याचितः सन् कदाचिद्वस्त्रं दद्यात् तं च ददमानमेवं ब्रूयात् 'यथा त्वदीयमेवाहं वस्त्रमन्तोपान्तेन नैवाप्रत्युपेक्षितं गृह्णामि' यतः कर्मोपादानमेतत्, कथमिति चेत्?

किञ्चित्कुण्डलादिकमाभरणजातं बद्धं भवेत् सचित्तं वा किञ्चित् बद्धं स्यादतः पूर्वोपदिष्टं यद्वस्त्रं तत्प्रत्युपेक्ष्य ग्राह्यं नान्यथेति, तदुक्तं प्रथमाङ्गे द्वितीयश्रुतस्कन्धे वस्त्रैपणाख्ये पञ्चमाध्ययनस्य प्रथमोद्देशके—"इच्चेइयाइं आयतणाइं उवाइकम्म अह भिक्खू जाणिज्जा चउहिं पडिमाहिं वत्थं एसित्तए, तत्थ खलु इमा पढमा पडिमा—से भि० २ उद्देसिय वत्थं जाइज्जा तं० जंगियं वा जाव तूलकडं वा तह० वत्थं सयं वा ण जाइज्जा परो० फासुयं पडि० पढमा पडिमा ॥ १ ॥ अहावरा य दुच्चा पडिमा से भि० पेहाए वत्थं जाइज्जा गाहावई वा० कम्मकरी वा से पुव्वामेव आलोइज्जा आउसोत्ति वा २ दाहिसि मे इत्तो अन्नयरं वत्थं १, तहप्प० वत्थं सयं वा० परो० फासुयं एस० लाभे० पडि० दुच्चा पडिमा ॥ २ ॥ अहावरा तच्चा पडिमा से भिक्खू० वा से जं पुण० तं अंतरिज्जं वा उत्तरिज्जं वा तहप्पगारं वत्थं सयं० पडि० तच्चा पडिमा ॥ ३ ॥ अहावरा चउत्था पडिमा—से० उज्झियधम्मियं वत्थं जाइज्जा जं वा अन्ने बहवे समण० वणीमगा नावकंखंति तहप्प० उज्झिय० वत्थं सयं० परो० फासुयं जाव प० चउत्था पडिमा ॥ ४ ॥ इच्चेयाणं चउण्हं पडिमाणं जहा पिंडेसणाए। सिया णं एताए एसणाए एसमाणं परो वइज्जा आउसंतो समणा इज्जाहि तुमं मासेण वा दसराएण वा पंचराएण वा सुते सुततरे वा तो ते वयं अन्नयरं वत्थं दाहामो, एयप्पगारं निग्घोसं सुच्चा नि० से पुव्वामेव आलोइज्जा आउसोत्ति वा २ नो खलु मे कप्पइ एयप्पगारं संगारं पडिसुणित्तए, अभिकंखसि मे दाउं इयाणिमेव दलयाहि से णेवं वयंतं परो वइज्जा आउ० स० अणुगच्छाहि तो ते वयं अन्न० वत्थं दाहामो से पुव्वामेव आलोइज्जा आउसोत्ति वा २ नो खलु मे कप्पइ संगारवयणे पडिसुणित्तए, से णेवं वयंतं परो णेया वइज्जा—आउसोत्तिवा भइणित्ति वा आहरेयं वत्थं समणस्स दाहामो अवियाइं वयं पच्छावि अप्पणो सयट्ठाए पाणाइं ४ समारंभसमुद्दिस्स जाव चेइस्सामो एयप्पगारं निग्घोसं सुच्चा निसम्म तहप्पगारं वत्थं अफासुअं जाव नो पडिगाहिज्जा। सिआ णं परो

नेता वइज्जा आउसोत्तिवा २ आहारेयं वत्थं सिणाणेवा ४ आघंसित्ता वा प० समणस्स णं दाहामो एयप्पगारं निग्घोसं सुच्चा नि० से पुव्वामेव आउ० भ० मा एयं तुमं वत्थं सिणाणेण वा जाव पघंसाहि वा अभि० एमेव दलयाहि से सेवं वयंतस्स परो सिणाणेण वा पघंसित्ता दलइज्जा तहप्प० वत्थं अफा० नो प० । से णं परो नेता वइज्जा० भ० आहारएयं वत्थं सीओदगवियडेणवा २ उच्छोलेत्ता वा पहोलेत्ता वा समणस्स णं दाहामो एय० निग्घोसं० तहेव च नवरं मा एयं तुमं वत्थं सीओदग० उसि० उच्छोलेहि वा पहोलेहि वा अभिकंखसि सेसं तहेव जाव नो पडिगाहिज्जा । से णं परो ने० आ० भ० ! आहरेयं वत्थं कंदाणि वा जाव हरियाणि वा विसोहित्ता समणस्स णं दाहामो एय० निग्घोसं तहेव नवरं मा एयाणि तुमं कंदाणि वा जाव विसोहेहि नो खलु मे कप्पइ एयप्पगारे वत्थे पडिग्गाहित्तए से सेवं वयंतस्स परो जाव विसोहित्ता दलइज्जा तहप्प० वत्थं अफासुअं नो प० । सिया से परो नेता वत्थं निसिरिज्जा से पुव्वा०आ० भ० तुमं चेव णं संतियं वत्थं अंतोअंतेणं पडिलेहिज्जिस्सामि केवलीबूया आ० वत्थं तेण बद्धे सिया कुंडले वा गुणे वा हिरण्णे वा सुवण्णे वा मणी वा जाव रयणावली वा पाणे वा बीए वा हरिए वा अह भिक्खू णं पु० जं पुव्वामेव वत्थं अंतोअंतेण पडिलेहिज्जा ॥" (सू० १४६) इति । एतासां चतसृणां प्रतिमानां मध्यादनाद्योर्द्वयोर्ग्रहः उपरितनयोर्द्वयोरस्वीकारस्तत्रापि एकतरस्यां ग्रहणं यदा चतुर्थ्यां ग्रहणं न तदा तृतीयस्यां यदा तृतीयस्यां ग्रहणं न तदा चतुर्थ्यां, तदुक्तं बृहत्कल्पभाष्ये—"उवहिणो अग्गहो दोसु इयरो एक्कतरीयओ" इति ॥१३॥

प्रव्रज्याद्वारे एते भगवन्तो नान्यं प्रव्राजयन्ति, कल्पस्थितिरिति कृत्वा, तादृक्कल्पस्थितौ जिनेन्द्राज्ञैव प्रमाणम् । चरमानशनिवन्निरपेक्षाऽपि ध्रुवं प्रव्राजनशीलं जीवं विज्ञायोपदेशं पुनर्नियमात् वितरन्ति, तमपि यथासन्नेन गुणमपेक्ष्य, न पुनर्दिगाद्यपेक्षया कारणेन । तदुक्तं पञ्चवस्तुके—"पव्वावेइ ण एसो अण्णं कप्पट्ठिउत्ति काऊणं । आणाए तह ...

निरविक्खो ॥१॥ उवएसं पुण विअरइ धुवपवत्ती (ध्रुवपद्मावं) विआणिउं किंची। तं पि जहासन्नेणं गुणओ न दिसादिविवक्खाए ॥२॥" तमपि संविग्नगीतार्थसाधूनां समीपे प्रहिण्वन्तीति ॥ १४ ॥

मुण्डापनद्वारे नान्यं मुण्डापयति, ननु प्रव्रज्यानन्तरं नियमान्मुण्डनं भवतीति प्रव्रज्याग्रहणेनैव तद्गृहीतं किमर्थं पृथग्द्वारमुपात्तमिति चेत् ? उच्यते नायं नियमो यदुत प्रव्रज्यानन्तरं मुण्डनं भवत्येव, अयोग्यस्य कथञ्चिद्दत्तायामपि प्रव्रज्यायां पुनरयोग्यतापरिज्ञाने मुण्डनायोगादतः पृथगिदं द्वारमिति ॥ १५ ॥

प्रायश्चित्तविधिद्वारे एतेषां पूज्यानां मनसापि सूक्ष्ममप्यतिचारं प्राप्तानां जघन्येनापि चतुर्गुरवः प्रायश्चित्तं भवति, यत एष कल्प एकाग्रताप्रधानस्ततस्तद्भङ्गे गुरुतरो दोष इति। तदुक्तं पञ्चवस्तुके–"आवण्णस्स मणेण वि अइआरं नियमओ अ सुहुमं पि। पच्छित्तं चउगुरुगा सव्वजहन्नं तु णेयव्वं ॥ १ ॥" परिहारविशुद्धिकानां स्खलितादौ प्राप्ते कल्पस्थितः यत् प्रायश्चित्तं ददाति तत्तैर्वोढव्यम् । अनुपरिहारिकाणामपराधपदापन्नानां प्रायश्चित्तं प्रदाने स एव कल्पस्थितो गीतार्थः प्रमाणम् । तदुक्तं–"पमाणं कप्पट्ठिओ तो तत्थ ववहारं ववहरित्तए । अणुपरिहारियाणं पि पमाणं होति से ऊ ॥ १ ॥" इति ॥ १६ ॥

कारणद्वारे कारणं नामालम्बनं तत्पुनः सुविशुद्धं ज्ञानादिकं तच्चास्य न विद्यते येन तदाश्रित्यापवादपदासेविता स्यात् । एष हि महात्मा सर्वत्र निरपेक्षः क्लिष्टकर्मक्षयनिमित्तं प्रारब्धमेव स्वं कल्पं यथोक्तविधिना समानयन् वर्त्तते । तदुक्तं पञ्चवस्तुके–"कारणमालंवणमो तं पुण नाणाइयं सुपरिसुद्धं । एयस्स तं न विज्जइ उचियं तव साहणो पायं ॥१॥ सव्वत्थ निरविक्खो आढवियं दढं समाणंतो । वट्टइ एस महप्पा किलिट्ठकम्मक्खयनिमित्तं ॥ २ ॥" इति ॥ १७ ॥

निष्प्रतिकर्मताद्वारे एष महात्मा निष्प्रतिकर्मशरीरोऽक्षिमलादिकमपि कदाचिन्नापनयति, प्राणान्तिकेऽपि महाव्यसने समापतिते द्वितीयं पदं न सेवते, चिकित्सादिकं न करोतीत्यर्थः । उक्तं च पञ्चवस्तुके—"निप्पडिकम्मसरीरो अच्छिमलाई वि नावणेइ सया । पाणान्तिए विय तहा वसणंमि न वट्टए बीए ॥ १ ॥ अप्पबुहुत्ता लोयणविसयाईओ उ होइ एसत्ति । अहवा सुह-भावाओ बहुगं पेयं चिय इमस्स ॥ २ ॥" इति ॥ १८ ॥

भिक्षापथद्वारे भिक्षाविहारक्रमश्चास्य तृतीयस्यां पौरुष्यां भवति, शेषासु पौरुषीषु कायोत्सर्गः । निद्राऽपि चास्यात्यल्पा द्रष्टव्या । यदि पुनः कथमपि जङ्घाबलं परिक्षीणं भवति तथाऽप्येको विहरन्नपि महाभागो न द्वितीयपदमासेवते किन्तु तत्रैव यथाकल्पमात्मीययोगान् विदधाति । तदुक्तं पञ्चवस्तुके—"तईयाए पोरिसीए भिक्खाकालो विहारकालो उ । सेसासु य उस्सग्गो पायं अप्पा य निद्दा वि ॥ १ ॥ जंघाबलंमि खिणे अविरहमाणोवि न बीयमावज्जे ( णवर णावज्जे )। तत्थेव अहाकप्पं कुणइ उ जोगं महाभागो ॥२॥" इति ॥ १९ ॥

चत्वारोऽपि परिहारिकाः परस्परं समुद्देशादिसंभोगं न कुर्वन्ति, अनुपरिहारिकाणां कल्पस्थितस्य चैक एव संभोगः पञ्चापि प्रतिदिवसमाचाम्लं कुर्वन्ति, यस्तु कल्पस्थितः स स्वयमाहाराद्यर्थं न गच्छति, तद्योग्यमाहारादिकमनुपरिहारिका आनयन्ति, ते च परिहारिकाणां भिक्षादौ पर्यटतां गवां पृष्ठतो गोपाला इव पृष्ठतः स्थिताः नित्यं प्रयत्नवन्त उपयुक्ताश्च हिण्डन्ति । नवानामपि सूत्रार्थयोः प्रतिपृच्छां वाचनां च मुक्त्वा नास्त्यन्या संकथा । परिहारिकस्य कारणे उत्थाननिषदनाद्यशक्ति-रूपे आलाप आत्मनिर्देशरूपो भवति, यथोत्थास्यामि उपविशामि भिक्षां हिण्डिष्ये मात्रकं प्रक्षिप्ये इत्यादि । यथा

किल कश्चिदुद्यानिकां गत एकान्तरतिप्रसक्तः स्वच्छन्दसुखं विहरमाण आस्ते एवं ते परिहारिका अपि एकान्तसमाधिरसासिंधुनिमग्नमनसस्तूद्यानिकासदृशं तत्तपः परिवहन्ति। एवमष्टादशभिः मासैः कल्पे समानीते सति ये जिनकल्पिकास्ते तमेव कल्पमेकादिसंख्यान्यूना अपि यावज्जीवं परिपालयन्ति। तदुक्तं—"एवं समाणिए कप्पे जे तेसिं जिणकप्पिया तमेव कप्पं ऊणा वि पालए जावज्जीवियं ॥ १ ॥" ये स्थविरकल्पिकाः तेऽष्टादशभिर्मासैः पूर्णैः पुनः गच्छं समागच्छन्तीति।

यावत्कथिकपरिहारविशुद्धिकाः जिनकल्पिका इत्युच्यन्ते, तत्स्वरूपं बृहत्कल्पभाष्यतो लिख्यते—तत्राष्टौ द्वाराणि भवन्ति, तद्यथा—प्र[1]व्रज्या ग्रहणासेवनाविषयं शि[2]क्षापदं ग्रहणशिक्षयाधीतसूत्रस्या[3]र्थग्रहण[4]मनियतवासः शिष्याणां निष्[5]पत्तिः वि[6]हारः समाचारी स्थितिरिति। तत्र प्रव्रज्याद्वारं द्विप्रकारं तद्यथा—श्रु[1]त्वाऽभि[2]समेत्य च। अल्पवक्तव्यत्वादादौ जातिस्मरणादिकोऽभिसमागम उच्यते, सोऽपि द्विप्रकारः सनिमित्तकोऽनिमित्तकश्च। तत्र यत् बाह्यं निमित्तं संप्राप्य जातिस्मरणादिकमुपजायते तत्सनिमित्तकं तेनाभिसमेत्य प्रव्रज्याप्रतिपत्तिः यथा वल्कलचीरिप्रभृतीनां, यत्पुनः बाह्यं निमित्तमसम्प्राप्य स्वयमेव तत्तदावरणक्षयोपशमादेव जातिस्मरणादिकमुपजायते तदनिमित्तकं तेन प्रव्रज्याप्रतिपत्तिः यथा स्वयंबुद्धकपिलादीनाम्। आदिशब्दात् श्रावकस्य गुणप्रत्ययप्रभवावधिज्ञानेनान्यतीर्थिकस्य वा विभङ्गज्ञानेन प्रव्रज्याप्रतिपत्तिः संभवतीत्युक्तमभिसमेत्यद्वारम्। अथ श्रुत्वेतिद्वारमुच्यते, तीर्थकरगणधरादीनां धर्माचार्याणां धर्म्मदेशनां श्रुत्वा प्रव्रज्याप्रतिपत्तिर्भवति। अत्र छात्रः प्रश्नयति स धर्म्मः कीदृशः? केन वा कथयितव्यः? के वानुपाये दोषाः? के वा तस्योपायकथने गुणाः? उपायो विधिरनुपायोऽविधिरिति। जन्ममरणाद्यनेकदुःखविनाशकात्यन्तिकनिरुपमेयसुखजनको मिथ्यात्वादिनिद्राविद्रवणेन

सम्यग्दर्शनादिको भव्यपुण्डरीकविकाशकारी जिनप्रज्ञप्तो धर्म्मः इति। नन्वेवंविधो भागवतो धर्मं उपदिश्यमानः किं सर्वेषां बोधं न जनयति येनैवमभिधीयते–'भव्यपुण्डरीकविकाशकारीति चेत्?' ओमिति ब्रूमः, तथाहि–यथा भानोः प्रभापटलं दृष्ट्वा सरसि स्थितानि वरपुण्डरीकाणि प्रभाते विकाशयन्ति, तत्रैव स्थितानि च कुमुदानि न विकाशयन्ति, एवं जिनवर-भानोरागमप्रभापटलेन भव्यपुण्डरीकाः सम्यक्त्वादिना विकाशयन्ति, अभव्यदुर्भव्यादिकुमुदास्तु न विकाशयन्ति कालकसौकरिकादिवत्। भव्यपुण्डरीका अपि न सर्वे विकाशयन्ति, किन्तु केचन एव विकाशं प्राप्नुवन्ति, "भव्वावि ते अणंता सिद्धिसुहं न पावंति" इति वचनात्। वाचकमुख्या अप्यूचुः–"सद्धर्म्मवपनादनघकौशलस्य, यल्लोकबान्धव तवापि खिलान्यभूवन्। तन्नाद्भुतं खगकुलेष्विह तामसेषु, सूर्यांशवो मधुकरी चरणावदातः ॥ २ ॥" इति प्रथमप्रश्नोत्तरम्। निशीथाध्ययनसूत्रार्थधारिणा साधुना स धर्म्मः कथयितव्यः, स हि संविग्नो गीतार्थत्वेनोत्सर्गापवादपदानि स्वस्थाने स्वस्थाने नियुञ्जानो न विपरीतप्ररूपणयात्मानं परं वा भवभ्रमणभाजनमातनोतीति द्वितीयप्रश्नोत्तरम्। ननु पूर्वं तावत्कथको भवति पश्चादुपदेशं श्रुत्वा धर्म्म उपजायतेऽतः किमेवं 'स कीदृश' इति प्रथमं धर्म्मस्वरूपमुपदिश्य पश्चात् 'केन कथयितव्य' इति कथयता क्रमोल्लङ्घनं कृतं न स्यादिति चेत्? न, कथकेनापि पूर्वं गुरुसमीपे धर्म्मस्य श्रुतत्वात् न क्रमोल्लङ्घनं कृतं भवति। स च धर्म्मः उपायेनैव वक्तव्यः, नानुपायेन। नन्वनुपायेन कथने के दोषा इति चेत्? उच्यते, यः खल्वनुपासको मिथ्यादृष्टिः प्रथममेव धर्म्मश्रवणार्थमुपागतस्तस्य पुरतः प्रथमं यतिधर्मो वक्तव्यः, यदि यतिधर्म्ममकथयित्वैव श्रावकधर्मं कथयति तदा चत्वारो गुरुकाः तपसा कालेन च गुरवः। यदि मोहवशात् प्रव्रज्याप्रतिपत्तुमशक्तस्तदा मूलोत्तर-

गुणभेदात् द्विविधः श्राद्धधर्म्मो वक्तव्यः सम्यक्त्वमूलानि द्वादशव्रतानीत्यर्थः । यदि श्रावकधर्म्ममकथयित्वा सम्यग्दर्शनमात्रं कथयति तदापि चत्वारो गुरवो नवरं कालेन लघवः । यदि मोहवशात् श्रावकधर्म्ममपि कर्त्तुमसमर्थः तदा सम्यग्दर्शनमुपदेष्टव्यम् । अनुपदिश्य सम्यग्दर्शनं मद्यमांसादिविरतिं कथयति चेत्? तदापि ते एव प्रायश्चित्ताः भवन्ति, केवलं तपसा लघवः कालेन गुरवः । यदि सम्यग्दर्शनमपि स्वीकर्त्तुं नोत्सहते तदा मद्यमांसादिविरतिः कथनीया । मद्यमांसादिविरतिमकथयित्वैवैहिकामुष्मिकं वा फलं कथयति तदा चत्वारो गुरवः तपसा कालेन च लघवः । सर्वत्राज्ञाभङ्गादयोऽपि दोषा भवन्ति । किञ्च ये प्रव्रज्यां गृहीतुमुत्सुका अपि कथकाविधिदोषरञ्जितास्त एवं चिन्तयेयुः यदि श्राद्धधर्म्मेणापि कामभोगान् भुञ्जानैः सुगतिरवाप्यते ततः किमनया सिकताकवलनिरास्वादनया प्रव्रज्यया, एवं सम्यग्दर्शनमात्रेणापि सुगतिरवाप्यते तर्हि को नामात्मानं विरतिशृङ्खलायां प्रक्षिप्स्यतीत्यादि । एवं ते विपरिणमिताः प्रव्रज्यां गृह्णन्तः षट्कायान् विराधयेयुरतस्तेन कथकेन भवार्णवे प्रक्षिप्ताः भवन्ति; चिरेण मुक्तिपदप्राप्तेः । अपि च ते जीवा एवं चिन्तयेयुः एषा एवात्र परिपाटी यत्पूर्वं श्रावकधर्म्मं स्पृष्ट्वा पश्चात् यतिधर्म्मं प्रतिपद्यते अथवा पूर्वं सम्यग्दर्शनमात्रमुररीकृत्य ततो देशविरतिमुपादीयते यद्वा पूर्वं मद्यमांसादिविरतिं प्रतिपद्य ततः सम्यग्दर्शनमिति । अपि च संसारे आरम्भबहुलतायाः भवभ्रमणकारणत्वेन भवादुद्विग्नचेताः कश्चिद्वैराग्याधिरूढः प्रव्रज्यां प्रतिपत्तुं समागतः तत्पुरतो धर्म्मकथी मुनिः श्रावकधर्म्मं प्ररूपयितुं लग्नः न च तं धर्म्मं रोचते, असौ वैराग्याधिरूढत्वात्, ततश्च विपरिणमय्यान्यत्र गच्छेदेवं चाविधिना धर्म्मं कथयन् षट्कायानामुपरि द्रव्यभावाभ्यां निरनुकम्पो धर्म्मकथी स्यात्, अतोऽविधिना नैव धर्म्मः कथनीयः किन्तु विधिना

उक्तदोषाभावादिति तृतीयप्रश्नोत्तरम् । अथ विधिना धर्म्मकथने के गुणा इति चतुर्थप्रश्नोत्तरं दीयते, प्रथमतो यतिधर्म्मस्य क्रियमाणा प्ररूपणा तीर्थानुसज्जनायै भवति, बहूनां जन्तूनां प्रव्रज्याप्रतिपत्तेः, कृता चानुसज्जनाऽऽत्महिताय जायते, प्रव्रज्याप्रदानेन चानेके भवसमुद्रात् समुद्धरिता भवन्ति, ततः सम्यग्दर्शनादेर्मार्गस्य प्रभावना भवति । यत एते गुणाः अतः प्रथमतः एव यतिधर्म्मकथा स्वरूपतो गुणतश्च कर्त्तव्या, स्वरूपतो यथा—"खन्तिमद्दवअज्जव" इत्यादि । गुणतो यथा—"नो दुष्कर्मप्रयासो न कुयुवतिसुतस्वामिदुर्वाक्यदुःखम्, राजादौ न प्रणामोऽशनवसनधनस्थानचिन्ता न चैव । ज्ञानाप्तिर्लोकपूजा प्रशमसुखरसः प्रेत्य मोक्षाद्यवाप्तिः, श्रामण्येऽमी गुणाः स्युः तदिह सुमतयः किं न यत्नं कुरुध्वम् ॥ १ ॥" इत्यादि । मुनिधर्म्मं प्रतिपत्तुमशक्तश्चेत् ? सम्यक्त्वमूलद्वादशव्रतरूपः श्रावकधर्मो वक्तव्यः, तमपि न प्रतिपद्यते तदा सम्यग्दर्शनं, तदपि न प्रतिपद्यते तदा मद्यमांसादिविरतिर्वक्तव्या, अयं विधिरनुपासकस्य पुरतो धर्म्मकथने, उपासकस्य तु पुरतो यथा रुचिः धर्म्मकथां करोति, न कश्चिद्दोषः । तथा च भाष्यम्—"पव्वज्जा सिक्खपयमत्थगगहणं च अनियओ वासो । निप्पत्ती य विहारो सामायारी ट्ठिई चेव ॥ १ ॥ सोच्चभिसामच्चा पवज्जा अभिसमागमो तत्थ । जाइस्सरणाईओ सनिमित्तऽनिमित्तिओ वावि ॥ २ ॥ सोच्चा उ होइ धम्मं स केरिसो केण वा कहेयव्वो । के तस्स गुणा वुत्ता दोसा अणुवाय कहणाए ॥ ३ ॥ संसारदुक्खमहणो विवोहओ भवियपुण्डरियाणं । धम्मो जिणपन्नत्तो पगप्पजइणा कहेयव्वो ॥ ४ ॥ जह सूरस्स य भावं दुट्ठुं वरकमलपोंडरीयाइं । वुज्झन्ति उदयकाले तत्थ उ कुमुदा न वुज्झंति ॥ ५ ॥ एवं भवसिद्धिया जिणवरसूरस्सत्तिप्पभावेणं । वुज्झन्ति भवियकमला अभवियकुमुदा न वुज्झन्ति ॥ ६ ॥ पुव्वं तु होइ कहओ पच्छा धम्मो उ उक्कमो किं नु । तेण वि पुव्वं धम्मो सुओ उ तम्हा कमो एसो ॥ ७ ॥ जइधम्मं

अकहेत्ता अणुदुविधं सम्मं गंस विरइं च । अणुवासए कहिंते चउजमला कालगा चउरो ॥ ८ ॥”—चत्वारि यमलानि तपः कालयुगललक्षणानि येषु ते चतुर्यमलाः चत्वारः कालकाश्चत्वारश्चतुर्गुरुका इत्यर्थः—“जीवा अब्भुट्ठिता अविहीकहणाइरंजिया संता । अभिसंवुडा होंति संसारमहन्नवं तेणं ॥ ९ ॥ एसेव य नूणं कमो वेरग्गगओ न रोयए । तं च दुहतोय निरणुकंपा सुणिपायसतरत्थअट्ठुवमा ॥ १० ॥”—‘सुणि’त्ति वीरशुनिका दृष्टान्तो यथा सा वीरशुनिका पूर्वमालमालैः परिसेविता पश्चात्सद्भूतमपि नेच्छति, एवमत्रापि पूर्वं श्राद्धधर्म्मे कथिते पश्चाद्यत्नतोऽभिधीयमानमपि श्रमणधर्म्ममसौ न प्रतिपद्यते । ‘पायस’त्ति यथा कस्यापि प्राघुर्णकस्य पूर्वं वा सितभक्तं दत्तं ततः स उदरपुरं तद्भुक्तवान् पश्चात् घृतमधुसंयुक्तं पायसमपि दीयमानं तस्मै न रोचते । ‘तरत्थअट्ठुवम’त्ति यथा तरक्षो व्याघ्रविशेषः स पूर्वमस्थ्नां जिघ्राणः पश्चादामिषमपि न रोचयति, एवमस्यापि श्रावकधर्म्मघ्राणस्य यतिधर्मो न प्रतिभासते—“तित्थाणुसज्जणाए आयहिगाए परं समुद्धरति । मग्गप्पभावणाए जइ धम्मकहा अओ पढमं ॥ ११ ॥” इति । प्रथमं प्रव्रज्याद्वारं समाप्तम् ।

प्रव्रज्यानन्तरं शैक्षकस्यावश्यं शिक्षा दातव्याऽतः प्रव्रज्यानन्तरं शिक्षाद्वारं प्रतन्यते, सा च द्विप्रकारा भवति, तद्यथा—ग्रहणशिक्षा आसेवनशिक्षा च । तत्र ग्रहणशिक्षा सूत्रग्रहणरूपा, प्रत्युपेक्षणरूपा चाऽऽसेवनशिक्षा, तत्र कश्चित् प्रव्रजितः सन्नासेवनशिक्षां सम्यगभ्यस्यति, न पुनः ग्रहणशिक्षां, स चाचार्यैः गजस्नातेन श्लीपदिना च प्रतिबोध्यः । तथाहि—भो सौम्य ! गृहाण त्वमेनां ग्रहणशिक्षामधीष्व विधिवद्यथाक्रममाचाराङ्गादिश्रुतमिति सूरिभिरुक्ते स प्राह—भदन्त ! प्रव्रजितोऽहं श्रमणः तपस्वी निक्षिप्तपरिग्रहो निरारम्भश्च संजातोऽतो दीक्षायामेकाग्रमना धर्म्मचिन्तायां दृढो निष्कम्पो

भवामि । किञ्चेर्यादिसमितिषु समितस्य द्वादशसु पञ्चविंशतिषु वा भावनासु भावितात्मनो मनोगुप्त्यादिषु गुप्तात्मनः प्रत्युपेक्षायामभ्युत्थानादिरूपे विनये वैयावृत्त्यादिषु च प्रयत्नवतो लोकविरुद्धेषु च जुगुप्सितकुलभिक्षाग्रहणादिषु लोकोत्तरविरुद्धेषु च नवनीतचलितान्नग्रहणादिषूभयविरुद्धेषु च मद्यपानादिषु प्रतिनिवृत्तस्य संयमव्यापारेषूद्यतमतेः एवंविधस्य मम किं पठितेन कार्यं न किञ्चिदित्यर्थः । आचार्याः शिक्षयन्ति वत्स ! यदर्थं भवान् प्रव्रजितः स एवार्थो न सेत्स्यति यथा गजो मलापनयनार्थं नद्यां गतस्तत्र च स्नात्वोत्तीर्णः सन् बहुतरां रेणुं करेण गृहीत्वा स्वकीयेऽङ्गे प्रक्षिपति, तथास्वाभाव्यात्, तथा भूरि उद्यमं कुर्वाणोऽपि उग्रविहार्यपि अज्ञानी जीवः कर्म्मरूपं मलं नापनयति किन्तूपचिनोति, एवं त्वमपि कर्म्ममलनिर्घातनार्थं प्रव्रजितः परं श्रुताभ्यासमन्तरेण प्रवचनविरुद्धानि समाचरन् प्रत्युत भूयस्तरेण कर्म्मरजसाऽऽत्मानं गुण्डयिष्यसि । एवं श्लीपदनाम्ना रोगेण यस्य पादौ शिलावन्महाप्रमाणौ भवतः स एवंविधः श्लीपदी यथा क्षेत्रं स्वल्पं निदायति भूयस्तरं पादाभ्यां भूमौ लगयति मर्दयति च, एवं श्रुताभ्यासं विनाऽजानन् चरणसस्यमसंयमपङ्के लगयति लगयित्वा च सकलमप्युपमर्दयति । पुनरपि शिष्यः प्राह हे भदन्त ! यथा रोगार्त्तः पुरुषो वैद्यमेव पृच्छति, न वैद्यसंहितां पठति, तद्वदहमपि कर्म्मरोगचिकित्सकान् पूज्यान् पृष्ट्वैव सर्वामपि क्रियां करिष्यामि न पुनः श्रुताभ्यासं करिष्यामि । अत्राचार्याः प्राहुः यद्यपि वैद्यमपृष्ट्वा नैव रोगार्त्तः स्वयं क्रियां करोति तथापि क्रियायाः परिज्ञानेऽधिकारोऽस्ति यथा वैद्यः पुनः पुनः प्रष्टव्यो न भवति एवं त्वमप्यस्मान् पृष्ट्वैव सर्वां क्रियां करिष्यसि तथापि दशवैकालिकादिसूत्रमधीत्य षड्कायरक्षणविधिं जानीहि ज्ञात्वा च तथा कुरु यथा बहुशः प्रष्टव्यं न स्यात् । ननु रोगार्त्तस्य

स वैद्यो दूरे वर्त्ततेऽतस्तस्य तत्क्रियापरिज्ञाने प्रयोजनमस्ति मम पूज्याः सदैवाभ्यर्णे वर्त्तन्तेऽतो ज्ञास्यन्ति भगवन्तः स्वयमेव मदीयं स्खलितं ज्ञात्वा च मां सम्यक् सारयिष्यन्ति अतो नास्ति ममाध्ययनप्रयोजनमित्यत्रोच्यते कुलादिभिरागाढकारणैः यदा गुर्वादयस्ते स्वाधीना न भविष्यन्ति तदा किं करिष्यसि? अन्धस्थविरवत् पराभवमेव प्राप्स्यतीत्यर्थः। तथाहि—उज्जयिन्यां नगर्यां सोमिलाख्यो द्विजः परिवसति। स च प्रज्ञाचक्षुः संजातस्तस्याष्टौ पुत्राः तेषामष्टौ वध्वः। स पुत्रैः भणितो नेत्ररोगापनयनार्थं चिकित्सा क्रियते, स प्रतिभणति अष्टानां पुत्राणां षोडश नेत्राण्यष्टानां च वधूनां षोडश नेत्राणि द्वे च मम भार्यायाः इत्येवं स्वजनानां चतुस्त्रिंशन्नेत्राण्येतानि ममैव सन्ति, किं चिकित्सया। अन्यदा गृहं ज्वलितमात्मरक्षणपरायणाः पुत्रादयस्त्वरितं प्रनष्टाः न निष्काशितोऽन्धः स्थविरो दग्धश्च तत्रैव। कृतचिकित्सकस्तादृशं पराभवं न प्राप्नुयात्, अपि तु मनुजसत्कान् तादृशान् भोगान् प्राप्नुयात्। एवं त्वमप्यनधीतशास्त्रः संसारेऽशुभकर्म्मभिः धक्ष्यसि। एवमुक्तेऽपि स न पठति तदा पुनरपि कृपापरीतचेतसः प्राहुः भो सौम्य! मैवमसद्ग्रहं कुरु, गृहाण सूक्ष्मव्यवहितातीन्द्रियपदार्थेषु तृतीयं लोचनं श्रुतं, तदेव हिताहितावलोकनसमर्थम्। अत्रार्थे वा ज्ञायतां ज्ञातं युवराजस्य यतस्तस्य स्वल्पमपि लौकिकं श्रुतं महते उपकाराय संजातं, तथाहि—अवन्त्यां नगर्यामनिलराजसुतो यवनामा राजा तस्य गर्दभाख्यो युवराजः पुत्रोऽतीव रूपवती अडोलिकाख्या तस्य पुत्री दीर्घपृष्ठाख्यः सचिवः। अडोलिकायां तीव्रानुरागात् युवराजो दुर्वली जातस्तत्कारणं चात्याग्रहेण मन्त्रिणा पृष्टं, तेन यथातथ्यमुक्तम्, ज्ञातेषु लोकेष्वपभ्राजना भविष्यत्यतो भूमिगृहे निक्षिप्य भोगान् भुञ्जिहि लोकाश्च ज्ञास्यन्त्याडोलिका क्वापि नष्टेति मन्त्रिणोक्तं, तेनापि तथैव कृतं ज्ञातं च राज्ञा,

ज्ञात्वा वैराग्यतरङ्गितमनसा प्रव्रज्या गृहीता, ततो गर्दभो राजा जातः, पुत्रस्नेहात् स मुनिः पुनः पुनः तत्रैव नगरे आगच्छति, एकदाऽवन्त्याः समीपवर्त्तियवक्षेत्रे क्षेत्रपालो यवान् रक्षति, तत्र च गर्दभ आगत्येतस्ततोऽवलोकयति, तं च दृष्ट्वा क्षेत्रपालस्तं प्रतिभणति—"आधावसी पधावसी ममं वा निरिक्खसी । लखिओ ते मया भावो जवं पच्छेसि गद्दभा ॥ १ ॥" अयं श्लोकोऽवन्त्यामागच्छता साधुना गृहीतस्तत्र च डिम्भा अट्टालिकां क्रीडां कुर्वन्ति, उत्क्षिप्ताऽट्टालिका मूषकबिले पतिताः, डिम्भैश्चान्वेषितापि न मिलिता, तत्रैकेन बालेनेतस्ततोऽवलोकयन्न दृष्टाऽवलोकितं चोन्दरुकबिलं ततस्तेनानुमितमत्र पतितेति, भणितं च तेन—"इओगया तओगया मग्गिज्जंती न दीसइ । अहमेयं वियाणामि अगडे छुढा अडोलिया ॥ २ ॥" अयमपि श्लोको मुनिना गृहीतः । पश्चात्स साधुरवन्त्यां प्रविश्य कुम्भकारशालायां वसतिं याचयित्वा स्थितो राज्यावस्थायां पराभूतो दीर्घपृष्ठाख्यः सचिवो मुनिं दृष्ट्वा चिन्तयति कथं प्राक्तनं वैरं गृह्णामीति । ततो रजन्यामुपाश्रयसमीपे भूमौ शस्त्राणि निक्षिप्तानि राज्ञः प्रत्ययार्थम् । राजानं प्रति निवेदितं परीषहादिभिरुद्विग्नस्तव पिता राज्यं गृहीतुं समागतो यदि न प्रत्यायसि तर्हि तत्र गत्वा भूमिनिक्षिप्तान्यायुधान्यवलोक्यतां, तत्र गत्वा च दृष्टानि तानि ततः संजातप्रत्ययः । तदा च कुम्भकारशालायामेको मूषको भयेनापसरति, तमुद्दिश्य कुम्भकारेण श्लोकः पठितः—"सुकुमालगभद्दलया रत्तिं हिंडणसीलया । भयं ते नत्थि संमूला दीहपट्ठाओ ते भयं ॥ ३ ॥" अयमपि श्लोको मुनिना गृहीतः । ततः स राजा स्वपितरं मुनिं मारयितुकाम एकान्तं गवेषयति 'मम लोके उड्डाहो मा भवत्वि'ति कृत्वा, पश्चान्मन्त्रिणा सह रजन्यामेकान्तेन कुम्भकारशालायां लीनस्तिष्ठति । तत्र तेन साधुना पठितः प्रथमश्लोकः—"अधावसी"इत्यादि । व्याख्या—"आ—ईषदाभिमु-

ध्येन वा धावसि आधावसि प्रकर्षेण पृष्ठतो वा धावसि प्रधावसि ममापि च निरीक्षसे लक्षितस्ते मया भावोऽभिप्रायो यथा यवं
यवधान्यं चरितुं प्रार्थयसि भो गर्दभ द्वितीयपक्षे यवनामानं मारयितुं भो गर्दभ नृपते ! प्रार्थयसीति श्रुत्वा राज्ञा ज्ञातमेते अतिशय-
ज्ञानिनः ।" ततो मुनिना पठितो द्वितीयः श्लोकः—"इओगया तओगया" इत्यादि । तस्यार्थः—"इतो गता मृग्यमाणा न दृश्य-
तेऽहमेतद्विजानामि, अगडे भूमिगृहे गर्त्तायां वा क्षिप्ता अडोलिका, 'मोयडांडि'इति भाषायाम्, पक्षे नृपतिदुहिता इति श्रुत्वा विस्मितो
राजाऽहो एते ज्ञानिनो मया रहसि कृतमपि ज्ञातमिति ।" ततो मुनिना तृतीयः श्लोकः पठितः—"सुकुमालग" इत्यादि । तदर्थः—
"मूषकस्य राज्ञश्च शरीरसौकुमार्यभावात् सुकुमारकेत्यामन्त्रणं 'भद्दलग'त्ति भद्राकृते रात्रौ हिण्डनशीलमूषकस्य दिवा मातुषावलोकन-
चकिततया राज्ञस्तु वीरचर्यया रात्रौ पर्यटनशीलत्वात् भयं ते तव नास्ति मन्मूलात् मन्निमित्तात् किन्तु दीर्घपृष्टादेकत्र सर्पादन्यत्र त्वमा-
त्यात्ते तव भयमिति" श्रुत्वा च राज्ञा निश्चितमेष अमात्यो ममैव मारयितुकाम एवंविधं यत्नं करोतीति । न च मम पिता
वान्तान् भोगान् पुनः वाञ्छति ततोऽमात्यस्य मस्तकं छित्त्वा जनकं प्रति गत्वा सर्वं निवेदितं क्षामितश्च जनक इति । ततः
स राजर्षिः चिन्तयति, अहो पूज्या मामनेकशो भणन्ति स्म आर्याधीष्वाधीष्व सूत्रं परमहं नापाठिषं यदि नाम ईदृशा-
नामपि मुग्धश्लोकानां पठितानामीदृशं फलमाविरभूत् किं पुनः सर्वज्ञोपज्ञश्रुतस्य फलं भविष्यतीति विचिन्त्य गुरुसकाशे
गत्वा मिथ्यादुष्कृतं दत्त्वा सम्यक्पाठितुं लग्न इति । उपदेशरत्नाकरे त्विदं कथानकमित्थमुपलभ्यते—तथाहि—"विशा-
लायां यवो नाम राजा तस्याङ्गजो गर्दभिलः सुताऽणुल्लिका अमात्यो दीर्घपृष्ठश्च । नृपोऽन्यथा निशान्त्ययामे प्रबुद्धोऽचिन्तयत् नूनं
प्राग्भवे किमप्यद्भुतं सुकृतं कृतं मया तस्य प्रभावात् अब्धिमेखलां भुवमखण्डिताज्ञः शास्मि एषा गजादिसम्पन्मे मद्देशे न दुर्भिक्षाद्यपि

तत्पुनः सुकृतं कुर्वे यतः आगामिनि भवेऽपि सुन्दरं स्यादित्यादि । ततः प्रातः सुतं राज्ये न्यस्य हितमनुशिष्य च वनप्राप्तान् गुरून्नत्वा तदुपान्ते गृहीतं व्रतम् । तीव्रं तपस्तप्यते, वैयावृत्तरसतः स सह गुरुभिर्विहरति गुरुभिः वहूक्तेऽपि श्रुतं न पठति 'वद्धोऽहं कर्मभिः मम नावाप्तिः पाठस्य' इत्यादि ब्रूते । अन्यदा लाभं दृष्ट्वा गुरुभिः सुतं प्रतिबोधयितुं विशालायां प्रहितः । गुरुवचः शिरसा प्रपद्य चलितः । पथ्यचिन्तयत्-मम पाठः स्वल्पोऽपि नायाति, किं पुत्रस्यान्येषां चोपदेक्ष्यते इति । शेषं गाथात्रिकग्रहणं तथैव । एतां गाथात्रयीं कल्पद्रुमचिन्तामणिकामधेनुत्रयीमिव प्राप्तां मन्यमानः स मुनिः पुनः पुनः परावर्त्तयते । अत्रान्तरे तत्र पुरे दीर्घपृष्ठामात्येन राज्ञः स्वसाऽणुलिका स्वगृहान्तर्गूढगृहे गोपिताऽस्ति । भूपं केनाप्युपायेन निहत्य स्वसुतं राज्ये निवेश्यैनां पाणौ कारयिष्यामीति । राज्ञा भटैः शोधितापि स्वसा न लब्धा । तावन्मंत्री यवराजर्षिमागतं श्रुत्वा 'तपसा प्राप्तज्ञानोऽयं भावी ज्ञानेन च ज्ञात्वा मत्स्वरूपं राज्ञे निवेदयिष्यति चेत्तदा नृपः सकुलं मां निग्रहीष्यतीति किमप्यनागतमुपायं करोमी'ति ध्यात्वा निश्येवोपवनं प्राप्तः पृष्टोऽनवसरागमहेतुं छलं मार्गयित्वा स्माह व्रताद्भग्नस्ते पितात्रागत्य कुम्भकृद्गृहे स्थितः प्रातस्तव राज्यं गृहीतेति । तदाकर्ण्य नृपः प्रोचे पिता चेद्राज्यं लाति तर्हि भाग्यं मे तत्पादौ सेविष्ये । मन्त्री प्रोचे स्वभाग्योदयेन लब्धं राज्यं नान्यस्मै समर्प्यते पितापि वध्यो विविधयुक्तिभिः । कैतवभृता तेन प्रतिपादितो नृपः पितुर्वधाय निशीथे खड्गहस्तः कुम्भकृद्गेहं गतः छिद्रेण पितरं वीक्षते, तावद्यवर्षिणा आद्या गाथा गुणिता, तां श्रुत्वा चिन्तितं । मत्पित्रा ज्ञानेन ज्ञातोऽहमितस्ततः पश्यन् । अपि च यद्ययं ज्ञानी तन्मे स्वसुः शुद्धिं वक्तु, तावद्द्वितीया गाथा गुणिता तेन, तच्छ्रुत्वा जातः प्रत्ययः गुणप्रशंसादि चक्रे, पुनरचिन्ति, मत्स्वसा येन गोपिता तन्नाम प्रकाशयतु पिता, तावत्तृतीया गाथा परावर्त्तिता । ततो भग्नसन्देहो हृष्टो द्वारसुद्व्याख्यान्तर्गतः । पितरं ज्ञानिनं जिघांसुं स्वं निन्दन् मुदश्रुर्मुनिं नत्वा स्वापराधप्रकटनपरः क्षमितवान्,

मुनिर्मौनमेवाकरोत् । तदेव हि सर्वार्थसाधनमिति । ततो नृपः स्वगृहागतो रात्रिशेषमतिवाह्य प्रातः मन्त्रिगृहं भटैः शोधयित्वा भूमिगृहे भगिनी लब्धा । मन्त्रिणं देशाभिरकासयत् । ततो ज्ञानिनं मुनिं प्रशशंस । तं च नत्वा तदुक्तं धर्म्मं प्रत्यपद्यत मन्त्र्यादिभिः परैश्च सह, ततः स यवराजर्षिर्बन्धुवर्गं प्रतिबोध्य गुरुपार्श्वे गतः प्रमादं त्यक्त्वा श्रुतं पपाठ" इति ।

किञ्च श्रुताध्ययनेऽष्टौ गुणरूपाणि द्वाराणि भवन्ति, तद्यथा—आत्महितं[1] परिज्ञा[2] भावसंवरो[3] नवनवसंवेगो[4] निष्प्रकम्पता[5] तपो[6] निर्जरा[7] परदेशकत्वमिति[8] । तत्र योऽनधीतसूत्रार्थः स स्वकीयं हिताहितमजानन्नतिक्रमादिभिः संयमरत्नं दूषयन् सन् भवसमुद्रे निमज्जति, अधीतसूत्रार्थस्तु स्वकीयं हिताहितं जानन् अतिक्रमादिभ्यः संयमरत्नं रक्षयित्वा भवात् विनिर्मुक्तो भवतीत्यात्महितद्वारम् ॥ १ ॥ परिज्ञा द्विधा ज्ञपरिज्ञा प्रत्याख्यानपरिज्ञा च, तत्र ज्ञपरिज्ञया हिताहितं जानन् प्रत्याख्यानपरिज्ञया पञ्चेन्द्रियैः संवृतः मनोगुप्त्यादिभिः गुप्तः शुभध्यानैकमानसो विनीतोऽविरतिं प्रत्याख्यातीति परिज्ञाद्वारम् ॥ २ ॥ समित्यादयो ये भावाः संयमे उपयोगिनो जिनैराख्यातास्तान् सर्वानपि भावान् अधीतश्रुतो ज्ञानेन जानाति, अत एव तत्त्ववृत्त्या ज्ञानी भावसंवरयुक्तो भवतीति भावसंवरद्वारम् ॥ ३ ॥ अतिशयरसयुक्तमागमं यथा यथाऽवगाहते तथा तथा मुनिरभिनवसंवेगात् शुभभावसुखासिकया मोदत इत्यभिनवसंवेगद्वारम् ॥ ४ ॥ कृतश्रुताभ्यासो दर्शनप्रधाने तपोनियमरूपे संयमे स्थित्वा कर्म्ममलेन विशुध्यमानः सन् यावज्जीवमपि निष्प्रकम्पः स्थिरचित्तवृत्तिः संयमाध्वनि विहरतीति निष्प्रकम्पताद्वारम् ॥ ५ ॥ स्वाध्यायसमं तपो नाभूत् न भवति न च भविष्यति, प्रभूततरकर्म्मक्षयहेतुत्वादिति तपोद्वारम् ॥६॥ योऽज्ञानी नैरयिकादिभवेषु वर्त्तमानो वर्षकोटीभिः यत्कर्म क्षपयति तत्कर्म्म ज्ञानी त्रिभिर्गुप्त उच्छ्वासमा-

त्रेण क्षपयतीति निर्जराद्वारम् ॥ ७ ॥ यो मुनिरधीतसूत्रार्थः साधूनध्यापयन् आत्मनो ज्ञानावरणीयं कर्म्मोपहन्ति, ते च साधवो ज्ञानोपदेशेनाचिरादेवापारसंसारमहोदधेरुत्तरन्ति, एवं च कुर्वता तीर्थकृतामाज्ञाराधिता भवति । अध्याप्यमानसाधूनां च वात्सल्यं प्रभावना भक्तिश्च पारमेश्वरप्रवचनस्य कृता भवति, तीर्थस्य चाव्यवच्छित्तिरासूत्रिता भवति एते गुणाः परोपदेशकत्वे भवन्तीति परदेशकत्वद्वारम् ॥ ८ ॥

अत्र जिनकल्पिकेनाधिकारः स तु नियमात् जिनकाले गणधरादिकेवलिनां वा काले भवति, ततः शिष्य एवं हेतुदृष्टान्तैः प्रज्ञापितो भणति, भगवन् यद्येवं ततः पठाम्यहं, परमाचक्षतां पूज्याः भगवद्भिः कुत्राधीतं यतोऽसौ जिनकल्पिको भविष्यति स च जिनकाले केवलिकाले वेति चेत् ? आनन्तर्येण पारम्पर्येण वेति ब्रूमः तत्र यदि गणधरश्चेदानन्तर्येण जिनसकाश एवाधीतमिति ब्रूयात्, गणभृद्विनेयश्चेत् ? पारम्पर्येणाधीतमिति ब्रूयादिति । एवमुदिते सति शिष्यो धूलिज्ञातं चिखिल्लज्ञातं चाऽऽख्यातवान्, यथा धूलिरेकत्र स्थापयित्वान्यत्र नीयमाना परिशटति, एवं ततोऽप्यन्यत्र नीयमाना भूयस्तरा परिशटति स्तोका चावतिष्ठते, तथा प्रासादे लिप्यमानो मनुष्यपरम्परया दीयमानश्चिखिल्लो बहुः परिशटति स्तोकमात्रावशेष एव सर्वान्तिमस्य हस्तं प्राप्नोति, एवं पारम्पर्येण सूत्रार्थौ परिशटितौ भवतः, तस्माज्जिनपादमूलं व्रजामि, तत्राविनष्टमेव सूत्रं भविष्यति । न च सर्वज्ञपार्श्वे पादैः पदैरक्षरैर्घोषैर्मात्राभिर्बिन्दुना वा हीनं सूत्रं भवति, परम्परया तु न तादृशं, यथा यादृशो भानुप्रकाशो न तादृशः खद्योतस्य, यद्वा राज्ञः सेवा विधीयमाना यादृशं फलमुपढौकयति न तादृशममात्यादीनां विधीयमाना सेवा, यादृशानि वा पदानि गजानां न तादृशानि कुन्थ्वादीनां संभवन्ति, एवं यादृशानि महार्थानि भगवतस्तीर्थकृतो वचनानि

न तादृशानि परेषां कदापि भवन्तीत्युक्ते सति पूज्याः प्राहुः, कोष्टपदानुसारिबीजबुद्धिमद्भिरधीतं श्रुतं न परिक्षीयते, किन्तु तथैवावतिष्ठते । ननु कोष्टादिबुद्धिमन्तः कीदृशा भवन्तीति चेत् ? उच्यते, यथा कोष्टके धान्यं प्रक्षिप्तं चिरकालं तथैवा-
वतिष्ठते, कालान्तरे कणमपि न परिगलति, एवं येषु सूत्रार्थौ निक्षिप्तौ तदवस्थावेव तिष्ठतस्ते कोष्टबुद्धिमन्तः । तथा ये गुरुमुखादेकं पदं श्रुत्वा शेषमश्रुतमपि पदनिकुरम्बमवगाहन्ते ते पदानुसारि बुद्धिमन्तः । ये त्वेकं बीजभूतमर्थपदमनुसृत्य शेषमवितथमेव प्रभूततरमर्थपदनिवहमवगाहन्ते ते बीजबुद्धिमन्तः । विद्यन्ते साम्प्रतमपि कोष्टादिबुद्धिमन्तोऽतो मा ब्रूहीदृशानि धूलिज्ञातादीनि । किञ्च भगवत्समीपेऽधीयमानानां मुनीनामपि कौतुकधर्म्मश्रवणादिभिर्व्याकुलता भवति, सकलस्यापि लोकस्य कौतुकहेतुत्वात् । कौतुकं समवसरणम् । समवसरणं नाम वायूदकपुष्पवासप्राकारत्वादिभिः भगवतो विभूतिः । तदुक्तमावश्यकचूर्णौ—"समवसरणं नाम एत्थ वायूदगपुष्फवासपागारत्तयादिभिः भगवतो विभूती" इति । तच्च दशभिः द्वारैरुच्यते, तान्यमूनि समवसरणविधिः, कियद्दिति, भगवतो रूपवर्णनम्, पृच्छा, व्याकरणम्, श्रोतृपरिणामः, दानम्, बलिः, तदानयनविधिः, तीर्थदेशना चेति । यस्मिन् क्षेत्रे विभोः पूर्वं समवसरणं न जातं तत्र नियमेन भवति, अन्यत्र त्वनियमः । भगवत्समवसरिष्यमाणां योजनपर्यन्तां भूमिं शक्रादिसम्बन्धिन आभियोगिका देवाः स्वस्वामिनियोगात् संवर्त्तकवातेन शोधयन्ति, तृणकाष्ठादिकचवरमपनयन्ति । ततो भाविरेणूपद्रवोपशान्तये जलाभ्रं विकुर्व्य सुरभिगन्धोदकवृष्टिं विकुर्वन्ति, ततः सुमनसभ्रं विकुर्व्य जानुदघ्नमधो निक्षिप्तवृन्तां पुष्पवृष्टिं विकुर्वन्ति । ततश्च वक्ष्यमाणैः देवैः प्राकारत्रयं क्रियत इति बृहत्कल्पवृत्तिकाराभिप्रायः । समवसरणप्रकरणे तु विभो यत्र केवलज्ञानं समु-

स्वतः तथ वायुकुमाराः वातं विकुर्व्य योजनपरिमितां मण्डलाकारां भुवं तृणकाष्ठादिकचवरैः शोधयन्ति, ततो मेघकुमाराः सुरभिगन्धोदकान् मेघान् वर्षयन्ति, तत ऋतूनधिष्ठातारो व्यन्तरसुराः अधोमुखवृन्तान् जलस्थलजानत्युत्कटगन्धप्रसरान् पञ्चवर्णान् दिव्यपुष्पप्रकरान् वर्षन्ति, ततो वाणव्यन्तराः मणिकनकरत्नैः पीठबन्धं कुर्वन्ति, तदुक्तं समवसरणप्रकरणे–"पयडियसमत्तभावो केवलिभावो जिणाण जत्थ भवे। सोहंति सव्वओ तहिं महिमा जोयणमनिलकुमरा ॥ १ ॥ वरिसंति मेहकुमरा सुरहिजलं उउसुरा कुसुमपसरं। विरयंति वणा मणिकणगरयणचित्तं महिअलं तो ॥ २ ॥" इति। ततो भवनपतयः कनकमयकपिशीर्षकं रूप्यमयं बाह्यं वप्रं विरचयन्ति। ज्योतिष्काः रत्नमयकपिशीर्षकं सुवर्णमयं मध्यमं प्राकारं विरचयन्ति। वैमानिकाः मणिमयकपिशीर्षकं रत्नमयमाभ्यन्तरिकं प्राकारं विकुर्वन्ति। त्रीण्यप्येतानि सर्वरत्नमयचतुर्द्वारोपेतानि विकुर्वन्ति। ननु मणिरत्नयोः कः प्रतिविशेष इति चेदुच्यते–मणयः चन्द्रकान्तादयः रत्नानीन्द्रनीलादीनीति। समवसरणं वृत्तचतुरस्रभेदात् द्विधा भवति। तत्र वृत्ते वप्रत्रयभित्तयः प्रत्येकं धनुस्त्रयस्त्रिंशदङ्गुलद्वात्रिंशत्पृथुला भवन्ति। तथा त्रयाणामपि वप्राणामन्तराण्युभयपार्श्वमिलनेनैकक्रोशषट्धनुःशतप्रमाणानि भवन्ति। तृतीयवप्राभ्यन्तरे पीठिकाद् उभयपार्श्वे त्रयोदश २ शतानि धनूंषि भवन्ति। बहिर्वर्तीनि दशसहस्रसोपानानि योजनमध्ये न गण्यन्ते। ततः सर्वमीलने योजनं परिपूर्णं जातम्। तथाहि–हस्तप्रमाणोच्चानि हस्तप्रमाणपृथुलानि च दशसहस्राणि सोपानानि गत्वा रजतमयः प्रथमो वप्रः समागच्छति। तस्माच्चाग्रे पञ्चाशद् धनूंषि प्रतरः समभाग इत्यर्थः। ततो हस्तोच्चानि हस्तपृथुलानि पञ्चसहस्राणि सोपानानि, तेषां धनूंषि सपादसहस्राणि गत्वा द्वितीयो वप्रः, ततोऽग्रे पञ्चाशत् धनुःप्रतरः, ततः पुनस्तावत्प-

माणानि तावन्त्येव सोपानानि गत्वा तृतीयो वप्रस्ततस्त्रयोदश शतानि धनूंषि गत्वा पीठमध्यमम् । तथा तिस्रोऽपि भित्तयः प्रत्येकं त्रयस्त्रिंशद् धनुरेकहस्ताष्टाङ्गुलपृथुलाः त्रिगुणा कृता धनुःशतं भवति । सर्वसङ्कलने चैकस्मिन् पार्श्वे चत्वारि सहस्राणि धनुषां जातानि, द्वितीयपार्श्वेऽपि चत्वारि सहस्राणि भवन्ति, उभयमीलने वृत्तसमवसरणे परिपूर्णं योजनं भवति । ननूभयपार्श्वेऽधोवर्त्तिनां विंशतिसहस्राणां सोपानानां हस्तपृथुलत्वेन पञ्चसहस्रधनुरधिकं योजनं भवतीति चेत्? योजनमध्ये न गण्यन्त इति प्रागुक्तमेव । चतुर्द्वारं सोपानत्रयान्वितं जिनतनुपरिमाणोच्चं द्विशतधनूंषि पृथुलं दीर्घं च मणिमयं समवसरणस्य मध्ये पीठं भवति । चतुरस्रे समवसरणे वप्रत्रयभित्तयः प्रत्येकं शतधनुःपृथुला भवन्ति । तथा प्रथमद्वितीयवप्रयोरन्तरमुभयपार्श्वमिलनेन सार्द्धक्रोशः, द्वितीयतृतीययोश्चान्तरमुभयपार्श्वमिलनेन क्रोशः, अभ्यन्तरवप्रभित्त्योरन्तरमेकक्रोशषट्शतधनुःप्रमाणं भवति । अस्मिन्नपि समवसरणे एकपार्श्वे योजनार्द्धं भवति । तथाहि—बाह्यवप्रभित्तिर्योजनमध्ये न गण्यते, ततश्च बाह्यवप्रमध्यमवप्रयोरन्तरं दशशतानि धनूंषि, मध्यवप्राभ्यन्तरवप्रयोरन्तरं पञ्चदशशतधनुःप्रमाणम्, अभ्यन्तरवप्रभित्तिः शतधनुर्मानम्, अभ्यन्तरवप्रात् त्रयोदशशतधनूंषि पीठमध्यममेवं च मीलने चतुस्सहस्राणि धनूंषि जातानि । तथा चैकपार्श्वेऽपि क्रोशद्वयमुभयमिलने च योजनं भवतीति । मणिपीठिका च भूमितः ऊर्ध्वं सार्द्धक्रोशद्वयं भवति, यतो विंशतिसहस्राणि करोच्चानि सोपानानि भवन्तीति । विशेषचूर्णाविह्थं विशेषो दृश्यते—"चाउक्कोणा तिन्नि पागारा रइज्जन्ति चउद्दारा अब्भिंतरिल्लो लोहियक्खेहिं मज्झिल्लो पीयएहिं बाहिरिल्लो सेएहिं सव्वो समोसरणभागो जोयणं अब्भिन्तरमज्झिमाणं पागाराणं अंतरं जोयणं मज्झिमबाहिराणं पागाराणं अंतरं गाउअं" इति बृहत्क-

ल्पवृत्तौ लिखितमस्तीति । तथाऽभ्यन्तरप्राकारान्तरस्य मध्यदेशभागे भगवतः प्रमाणात् द्वादशगुणोच्छ्रयः समधिकयोजनपृथुलोल्लसद्बहलपाटलपल्लवजालसर्वकालविकसदसमानकुसुमसमूहविनिस्सरदविरलपरिमलोद्गारसमाकृष्यमाणभ्रमरनिकुरम्बरणरणारवशिशिरीकृतप्रणमद्भव्यजननिकरश्रवणविवरोऽतिमनोरमाकारशाली विशालशालश्चैत्यवृक्षः समस्ति । ननु जिनतनोः द्वादशगुणोच्चत्वोच्यमाने वीरविभोः द्वादशगुणः एकविंशतिर्धनुःप्रमाणो जायते, तथा च सति–"तिन्नेव गाऊआइं चेइ रुक्खो जिणस्स पढमस्स । सेसाण बारसगुणो वीर बत्तीस य धणूणि ॥ १ ॥" इत्यनेन सह कथं न विरोध इति चेत्? सत्यम्, केवलमशोकमाश्रित्य द्वादशगुणत्वमुक्तम्, तदुपर्येकादश धनूंषि शालवृक्षः । एवमुभयमिलने द्वात्रिंशद्गुणत्वं गाथायामुक्तमिति न विरोधलवोऽपि । तदुक्तं समवायाङ्गसूत्रे–"बत्तीसं धणुआइं चेइयरुक्खो उ वद्धमाणस्स । निच्चोउगो असोगो उच्छन्नो सालरुक्खेणं ॥ १ ॥" वृत्तिः "'निच्चोउगो'ति नित्यं–सर्वदा ऋतुरेव–पुष्पादिकालो यस्य स नित्यर्तुकः 'असोगो'त्ति अशोकाभिधानो यः समवसरणभूमिमध्ये भवति, 'उच्छन्नो सालरुक्खेणं' अवच्छन्नः सालवृक्षेण" अत एव वचनादशोकस्योपरि शालवृक्षोऽपि कथञ्चिदस्तीत्यवसीयते । शालश्च श्रीवीरस्वामिनोऽभूत् अन्येषां तीर्थकृतां न्यग्रोधादयः । उक्तश्च समवायाङ्गे–"चउवीसाए तित्थयराणं चउवीसं चेइयरुक्खा हुत्था । तंजहा-नग्गोहसत्तवण्णे साले पिअए पिअंगुछत्ताहे । सरसे अ नागरुक्खे माली य पिअंगु रुक्खे अ ॥ १ ॥ तंदुगपाडलजंबू आसत्थे खलु तहेव दधिवत्तो । नंदी रुक्खो तिलओ अवंगरुक्खो असोगो अ ॥ २ ॥ चंपयबउलो अ तहा वेदवरुक्खो तहेव धवरुक्खो । सालो अ वद्धमाणस्स चेइअरुक्खजिणवराणं ॥ ३ ॥" इति । तदधस्तादावश्यकवृत्त्यानुसारेण सर्वरत्नमयं समवसरणप्रकरणकाराभिप्रायेण मणिमयं प्रागुक्तस्वरूपं

पीठं तदुपरि चैत्यवृक्षस्याधस्ताद्देवच्छन्दकं तस्याभ्यन्तरे चत्वारि सिंहासनानि सपादपीठानि तदुपरि चत्वारि छत्रत्रिकाणि छत्रातिछत्ररूपाणि प्रतिरूपत्रिकमष्टौ चामरधराः प्रतिरूपं द्वयोः द्वयोः चामरधरयोः सद्भावात् । कनककुशेशयसंस्थितानि स्फाटिकानि चत्वारि सिंहासनपुरतो धर्म्मचक्राणि भवन्ति । वप्रेषु प्रतिद्वारं ध्वजच्छत्रमकरमुखमङ्गलपाञ्चालीपुष्पदामवेदिपूर्णकलशान् मणिमयतोरणत्रिकाणि कृष्णगुरुकुन्दरुक्कमिश्रमनोहारिगन्धयुक्तधूपघटिकाश्च धर्म्मध्वजमानवध्वजगजध्वजासिंहध्वजनाम्नश्चतुरो ध्वजान् चतुर्षु दिक्षु गजसिंहाङ्कितान् लघुलघुतरध्वजयुतान् घण्टिकायुतांश्च योजनसहस्रदण्डान् वातोदकादिकं च वाणमन्तराः कुर्वन्तीति समवसरणप्रकरणे । तदुक्तं—"ज्झयछत्तमयरमंगलपंचालीदामवेइवरकलसे । पइदारं मणितोरणतिअधूवघडी कुणंति वणा ॥ १ ॥" आवश्यकनिर्युक्तौ छत्रसालभञ्जिकामकरध्वजचिन्हसंस्थानानीति तोरणानां विशेषणत्वेनोक्तानि न च पृथक्तया, तथा च तत्पाठः—"मणिकणयरयणचित्ते चउद्दिसिं तोरणे विउव्वंति । सच्छत्तसालभंजियमयरद्धयचिंधसंठाणे ॥ १ ॥" इति । यत्तु—"चेइदुम पेढ छंदय आसण छत्तं च चामराओ । जं चाण्णं करणिज्जं करेंति तं वाणमन्तरिया ॥ १ ॥" इति गाथायामावश्यकवृत्तिकारैः सामान्येन व्यन्तरा इत्युक्तं तथापि विशेषपरतया बोध्यमन्यथा मूलेन सह विरोधापत्तेः । आवश्यकचूर्णावपि—"अब्भितरपागारस्स य बहुमज्झे चेतियरुक्खो तस्स हेट्ठा देवच्छदओ भवति तस्सब्भंतरे सीहासणं भवति, तस्स उवरि छत्तातिच्छत्तं उभयो पासे यदो जक्खा[1] चसद्दा पुरओ धम्मचक्कं च पउसपइट्ठितं । एताणि को करोति ? उच्यते 'चेतिद्रुम' ५—२८ ॥ ५५३ ॥ सिद्धा" इत्युक्तम् । मुद्रितावश्यकचूर्णौ सपादत्रिशत-

१ 'चेइदुम' इति गाथास्थः

तमे पत्रे तु—“इह पुण इमं णाणत्तं जाव सामी ण पावइ ताव रतिं चेव देवेहिं तिन्नि पागारा कता अन्तो मज्झे बाहिं ति अब्भंतरे वेमाणिया सव्वरयणमयं णाणामणिपंचवन्नेहिं कविसीसएहिं मज्झिमं जोइसिया सोवन्नं रयणकविसीसगं बाहिरं भवणवासी ता रययं हेमजंबूणतकविसीसगं अवसेसं जं वातविउयणं वरिसणं पुप्फोवगारो य धूवदाणं च तं वंतरा करेंति, असोगवरपाययं जिणउच्चत्ताओ बारसगुणं सक्को विउयति, ईसणो उवरिं छत्ताइच्छत्तं चामरधरा य बलिचमरा असोगहेट्ठाओ पेढं देवछंदगं सीहासणं सपायपीढं फालिहमयं धम्मचक्कं च पउमपतिट्ठियं” इत्युक्तं तत्तु वीरविभुमाश्रित्योक्तमित्यवसीयते । तदुक्तं मलयगिरिपादैरावश्यकवृत्तौ—“व्यन्तरदेवाः कुर्वन्ति, एष सर्वतीर्थकृतां सर्वसमवसरणन्यायः, अस्मिंस्तु भगवतः समवसरणेऽशोकवरपादपं शक्रः, छत्रातिच्छत्रमीशानो विकुर्वितवान् चामरे चामरधरौ बलिचमराविति सम्प्रदायः” इति । आवश्यकमूलवृत्तौ तु—“अशोकवृक्षं जिनतनुतः द्वादशगुणमुच्चं शक्रो विकुर्वतीत्युक्तं तत्तु यदेन्द्रः स्वयमेवैकाकी आगत्य करोति तमाश्रित्यावश्यकवृत्तौ श्रीमद्धरिभद्रसूरिपादैः समाधानं कृतं तथा च तट्टीका—“यत्र तु ऋद्धिमान् समवतरेत् कश्चिदिन्द्रः सामानिकादिः तत्रैक एव तत्प्राकारादिकं सर्वं करोति, अत एव च मूलटीकाकृताऽभ्यधायि—‘असोगपायवं जिणउच्चत्तणाओ बारसगुणं सक्को विउव्वइ’ इत्यादि” इत्युक्तं तत्त्वं तद्विदो विदन्ति । अयं विधिर्यत्र बहवो देवेन्द्राः समागच्छन्ति तत्र समवसरणे भवति । यद्येकः कश्चिदृद्धिमान् सामानिकादिः समवसरति तत्रैक एव तत्प्राकारादिकं सर्वं करोति, यदीन्द्रादयो महर्द्धिकाः न समागच्छेयुस्तत्र भवनपत्यादयः कुर्वन्तीति न नियमः । विभोः चरणकमलयोः निपतमाना देवाः सर्वासु दिक्षु कलकलशब्देनोत्कृष्टिः सिंहनादं कुर्वन्ति । उत्कृष्टिः हर्षविशेषप्रेरितो ध्वनिविशेषः । पञ्चवर्णानां जलस्थलजानामधःकृतवृन्तानामुपरिमुखानां विकस्वराणां सुमनसां समन्ततो योजनं भूमौ जानुद्वय-

॥१७२॥

सं वृष्टिं विकुर्वन्ति । आयोजनभूमिकुसुमवर्षणविषये केचन कृपार्द्रीकृतचेतसः प्रेरयन्ति, ननु विकसितकुसुमप्रचयनिचितानां समवसरणभूमौ जीवदयारसिकान्तःकरणानां श्रमणानां कथमवस्थानगमनादिकं कर्तुं युज्यते? जीवविघातहेतुत्वादिति । तत्र केचिदुत्तरयन्ति, तानि कुसुमानि सचित्तान्येव न भवन्ति विकुर्वणयैव देवैस्तेषां कृतत्वादिति । एतच्चायुक्तं यतो न तत्र विकुर्वितान्येव पुष्पाणि भवन्ति, जलस्थलजानामपि कुसुमानां संभवात् । तदुक्तमावश्यकनिर्युक्तौ—"वेंटट्ठाइं सुरभिं जलथलयं दिव्वकुसुमाणी हारिं । पइरंति समन्तेणं दसद्धवण्णं कुसुमवासं ॥ ४६ ॥" एवं श्रुत्वा अपरे सहृदयंमन्या उत्तरयन्ति यत्र व्रतिनस्तिष्ठन्ति न तत्र देशे देवाः पुष्पाणि किरन्तीति । एतदप्युत्तराभासं न खलु तपोधनैः काष्ठीभूतावस्थामवलम्ब्य तत्रैव देशेऽवश्यं स्थातव्यम्, प्रयोजने गमनागमनादेरपि तत्र सम्भवादिति, तस्मान्निखिलगीतार्थसम्मतमिदमुत्तरमत्र दीयते—यथैकयोजनमात्रायां समवसरणधरणावपरिमितसुरासुरादिलोकसम्मर्देऽपि न परस्परमाबाधा काचित् तथा तेषामाजानुप्रमाणक्षिप्तानाममन्दमकरन्दसम्पत्सम्पादितानन्दमन्दारमचकुन्दकुन्दकुमुदकमलदलमुकुलमालतीविकचविचकिलप्रमुखकुसुमसमूहानामप्युपरि सञ्चरिष्णौ स्थास्नौ च मुनिनिकरे विविधजननिचये च न काचिदाबाधा प्रत्युत सुधारससिच्यमानानामिव बहुतरसमुल्लासस्तेषामापद्यते, अचिन्तनीयनिरुपमतीर्थकरप्रभावोज्जृम्भमाणप्रसादादेवेति । सूर्योदये प्रथमायां पौरुष्यां चतुर्थ्यां पौरुष्यां चावगाहमानायां देवपरिकल्पितयोः सहस्रपत्रयोः पद्मयोः पादौ न्यासीकुर्वन् विभुः पूर्वद्वारेण प्रविशति । पद्मानि च नव भवन्ति, तत्राग्रेतनयोः द्वयोरुपरि पादन्यासं करोति, विभोः पृष्ठतोऽन्यानि सप्त भवन्ति, तेषां यद्यत् पाश्चात्यं तत्तत्पादन्यासं कुर्वतो भगवतः पुरतः तिष्ठति । तदुक्तमावश्यकनिर्युक्तौ—"सूरोदयपच्छि-

गाए ओगाहन्तीए पुव्वओऽईइ । दोहिं पउमेहिं पाया मग्गेण य होइ सत्तान्ने ॥ १ ॥" अस्या गाथायाः चूर्णिः—तत्थ भगवं पढमपोरुसीए ओगाहंतीए आगंतूणं पुव्वउत्ति पुरच्छिमेणं दारेणं पविसित्ता चेतिरुक्खं आदाहिणं करेत्ता पुरत्थाभिमुहो निसीयति । जत्थ य भगवं एतो पादे ठवति तत्थ सहस्सपत्ताणि दो पऊमाणि भवन्ति पिट्ठओ य सत्त पउमाणि दीसंति" इति । यत्र वीरविभोः केवलज्ञानमुत्पन्नं तत्र प्रव्रज्याप्रतिपत्त्यभावं विज्ञाय विभुर्विशिष्टधर्म्मोपदेशदानाय न प्रवृत्तवान् किन्तु ज्ञानोत्पत्तिस्थाने मुहूर्त्तमात्रं 'जित'मिति कृत्वा देवपूजामनुभूय देशनामात्रं च कृत्वा मध्यमायां पुरि संख्यातीतैः देवैः सह कमलेषु चरणन्यासं कुर्वन् सन् गतः । अत्र चूर्णिकारैः सप्त पद्मानि मतान्तरेण तु नवेत्युक्तं, तथा च चूर्णिः—"जाहे सामिस्स केवलणाणं उपन्नं ताहे इंदादीया देवा सवड्ढीए हट्ठतुट्ठा णाणुप्पदामहिमं करेंति । तत्थ भगवं जाणति नत्थि एत्थ पव्वयं ततो जत्थ नत्थि पव्वयं ततो तत्थ ण पवत्तिज्जति ततो य वारसेहिं जोयणेहिं मज्झिमा नाम नगरी, तत्थ सोमलिज्जो नाम माहणो सो जंन्नं जयइ, तत्थ य एक्कारस अज्झावगा आगता भवियरसीय, ताहे सामी तत्थं मुहुत्तं अच्छति जाव देवा पूयं करेंति, एस केवलकप्पो किर जं उप्पन्ने नाणे मुहुत्तमेत्तं अच्छियव्वं, ताहे सामी रत्तीं य तं वचति तत्थ वचंतो असंखेज्जाहिं देवकोडीहिं परिवुडो देवुज्जोएण सव्वो पंथो उज्जोवितो जधा दिवसो, जत्थ भगवतो पादा तत्थ देवा सत्त पउमाणि सहस्सपत्ताणि णवणीतफासाणि विउव्वंति, मग्गतो तिन्नि पुरओ तिन्नि एगंपायणिकमे, एगे भणंति—मग्गतो सत्त पउमाणि दीसंति, जत्थ पाओ कीरति ताहे अन्नं दीसति, मग्गओ सत्त दो पादेसु एवं णव । एवं जाव मज्झिमाए णयरीए महसेणवणं उज्जाणं संपत्तो । तत्थ देवा बितियं समोसरणं करेंति महिमं च सूरुग्गमणे । एगं जत्थ नाणं वितिअं इमं चेव । अहवा एगं छउयत्थकालियाए एगं इमं चेव" इति । प्रविश्य चैत्यद्रुमस्य प्रदक्षिणां च विधाय पूर्वाभिमुखः

सिंहासनमध्यास्ते । यासु दिक्षु च भगवतो मुखं न भवति तासु तिसृष्वपि तीर्थंकाराकारधारकाणि सिंहासनचामर-
छत्रधर्मचक्रालङ्कृतानि प्रतिरूपकाणि देवकृतानि भवन्तीति पूर्वमुक्तमेवेति । ननु भुवनगुरुरूपस्य त्रिभुवनातिशायित्वेन
देवकृतानां प्रतिबिम्बानां रूपं तीर्थपतितनुरूपतुल्यं न भविष्यतीति चेत् ! जिनपतिप्रभावात् जिनपतिरूपानुरूपं रूपं
भवति । तथा सर्वोऽपि लोको जानीते भगवान् अस्माकं पुरतो धर्म्मं कथयति । भगवत्पादमूलं जघन्यत एकेन गणध-
रेणाविरहितं भवति, स च प्रायेण ज्येष्ठ एव भवति । स च पूर्वद्वारेण प्रविश्य जिनं प्रदक्षिणीकृत्य प्रणिपत्य चाग्नेयीदिशि
भगवतो निकटे निषीदति । शेषा अपि गणधरा भगवन्तं प्रदक्षिणीकृत्य प्रणम्य च तीर्थस्य पृष्ठतः पार्श्वतश्च निषीद-
न्तीत्यावश्यकचूर्णौ । तथा च तत्पाठः—"जो तित्थं सो दारेण पविसित्ता तित्थगरं तिक्खुत्तो वंदित्ता दाहिण पुरत्थिमे दिसि भाए नि-
सीयति, सेसा गणहरा एवं चेव काउं तित्थस्स भगतो पासेसु निसीयंति" इति । बृहत्कल्पवृत्तौ मलयगिर्यावश्यकवृत्तौ चाप्येवमेव ।
तीर्थंकरस्य पार्श्वतः पृष्ठतश्च निषीदन्तीत्यावश्यकवृत्तावुक्तं हरिभद्रसूरिपादैः । ततो भगवन्तः केवलिनोपि पूर्वद्वारेण प्रविश्य
त्रिभुवनगुरुं त्रिःप्रदक्षिणीकृत्य नमस्तीर्थायेति वचसा तीर्थं नमस्कृत्याग्नेयीदिशि गणधरपृष्ठतो निषीदन्तीत्यावश्यकचूर्णौ ।
तथा च तत्पाठः—"जे केवलिणो ते पुरच्छिमेणं दारेण पविसित्ता भगवं तिखुत्तो पयाहिणं काउं नमो तित्थस्सत्ति भणित्ता तित्थस्स
गणहराण य पिठओ निसीयंति" । बृहत्कल्पवृत्तौ मलयगिर्यावश्यकवृत्तौ चाप्येवमेव । हारिभद्रीयावश्यकवृत्तौ तु तीर्थकरं तीर्थं
च प्रणम्य गणधरपृष्ठतो निषीदन्तीत्युक्तमिति । एवं मनःपर्यवज्ञानिनोऽवधिज्ञानिनः चतुर्दशदशनवपूर्वधरा आमर्षौष-
ध्यादिविविधलब्धिमन्तश्च प्राच्यद्वारेण प्रविश्य भगवन्तं त्रिःप्रदक्षिणीकृत्य प्रणम्य च नमस्तीर्थाय नमो गणधरेभ्यो नमः

केवलिभ्यः इत्यभिधाय केवलिनां पृष्ठत उपविशन्तीति बृहत्कल्पवृत्तौ । "नमो तित्थस्स नमो केवलिणं ति भणित्ता केवलिणं पिठतो निसीदंति" इत्यावश्यकचूर्णौ । आवश्यकवृत्तौ च मनःपर्यवज्ञानिनोऽपि भगवन्तं तीर्थं केवलिनश्चाभिवन्द्य पुनः केवलिपृष्ठतो निषीदन्तीत्युक्तम् । शेषाः संयताः प्राचीनद्वारेणैव प्रविश्य भुवनगुरुं प्रदक्षिणीकृत्य वन्दित्वा च नमस्तीर्थाय नमो गणभृद्भ्यो नमः केवलिभ्यो नमोऽतिशयज्ञानिभ्य इति भणित्वाऽतिशयज्ञानिनां पृष्ठतः निषीदन्तीति बृहत्कल्पवृत्तौ मलयगिर्यावश्यकवृत्तौ च । मुद्रितावश्यकचूर्णौ तु—"अवसेसा संजया निरतिसया पुरत्थिमेणं चेव दारेण पविसित्ता भगवन्तं पयाहिणं काउं वंदित्ता 'णमो तित्थस्स ( नमो केवलीणं ) नमो अतिसेसियाणं' ति भणित्ता अतिसेसियाण पिट्ठतो निसीदंति" इति । तथा वैमानिकदेव्योऽपि पूर्वद्वारेण प्रविश्य विश्वबन्धुं त्रिःप्रदक्षिणीकृत्य प्रणम्य च नमस्तीर्थाय नमः केवलिभ्यः नमोऽतिशायिभ्यः नमः सर्वसाधुभ्य इति भणित्वा निरतिशयसाधूनां पृष्ठतः तिष्ठन्ति न निषीदन्ति । श्रमण्योऽपि पौरस्त्यद्वारेण प्रविश्य तीर्थकृतं प्रदक्षिणीकृत्य प्रणम्य च तीर्थस्य साधूनां च नमस्कारं विधाय वैमानिकदेवीनां पृष्ठतः तिष्ठन्ति, न निषीदन्तीति बृहत्कल्पवृत्तौ । एवमावश्यकवृत्तावपि । चूर्णौ तु—"समणीओ पुरत्थिमेण चेव दारेणं पविसित्ता तित्थगरं पयाहिणं करेत्ता वंदित्ता य 'नमो तित्थस्स नमो अतिसेसियाणं' ति भणित्ता वेमाणियदेवीणं पिट्ठतो ठायंति न निसीदंति" इति । मलयगिर्यावश्यकवृत्तौ तु—"नमस्तीर्थाय नमः केवलिभ्यः नमोऽतिशायिभ्यः नमः शेषसाधुभ्य इत्युक्त्वा वैमानिकदेवीनां पृष्ठतः तिष्ठन्ति" । तथा भवनपतिदेव्यो ज्योतिष्कदेव्यो व्यन्तरदेव्यश्च दाक्षिणात्यद्वारेण प्रविश्य तीर्थकरादीनभिवन्द्य दक्षिणपश्चिमदिग्भागे यथाक्रममेव तिष्ठन्तीति बृहत्कल्पावश्यकवृत्त्योः । आवश्यकचूर्णौ तु—"भवणवासिणीओ वंतरीओ जोतिसिणीओ

एताओ दाहिणेण दारेणं पविसित्ता तित्थगरं पयाहिणीकरेत्ता वंदित्ता य दाहिणपच्चत्थिमेण ठायंति, भवणवासिणीण पिट्ठओ जोतिसिणीओ तासिं पिट्ठतो वंतरीओ" इति । भवनपतिज्योतिष्कव्यन्तरदेवास्तु पश्चिमद्वारतः प्रविश्य विश्ववन्धुं प्रदक्षिणीकृत्य प्रणम्य च भगवन्तं उत्तरपश्चिमदिग्भागे यथाक्रमं तिष्ठन्तीति बृहत्कल्पवृत्तौ । आवश्यकवृत्तौ तु एते हि भगवन्तं साधुंश्च यथोपन्यासमेवोत्तरपश्चिमे पार्श्वे तिष्ठन्तीति । वैमानिकाः मनुजाः स्त्रियश्चोत्तरद्वारेण प्रविश्य त्रिभुवनगुरुं त्रिःप्रदक्षिणीकृत्य तीर्थकरादीनभिवन्द्योत्तरपूर्वदिग्भागे यथाक्रममेव तिष्ठन्ति । "अत्र च मूलटीकाकारेण भवनपतिदेवीप्रभृतीनां स्थानं निषीदनं वा स्पष्टाक्षरैर्नोक्तम्" इत्यावश्यकवृत्तौ हरिभद्रसूरिपादाः । आवश्यकभाष्येऽपि स्थाधातोरेव सामान्येन प्रयोगः कृतः । तथा च तद्ग्रन्थः—"संजयवेमाणित्थी संजइ पुव्वेण पाविसिउं वीरं । काउं पयाहिणं पुव्वदक्खिणे ठंति दिसि भागे ॥ १ ॥ जोइसियभवणवंतरदेवीओ दक्खिणेण पविसंति । चिट्ठंति दक्खिणावरदिसिंमि तिगुणं जिणं काउं ॥ २ ॥ अवरेण भवणवासी वंतरजोइससुरा य अइगंतुं । अवरुत्तरदिसिभागे ठंति जिणं तो नमंसित्ता ॥ ३ ॥ समहिंदा कप्पसुरा राया णरणारिओ उदीणेणं । पविसित्ता पुव्वुत्तरदिसिए चिट्ठंति पंजलिआ ॥ ४ ॥" इति । पूर्वाचार्योपदेशलिखितपट्टकादिचित्रकर्मबलेन तु सर्वा एव देव्यो न निषीदन्ति, देवाः पुरुषाः स्त्रियश्च निषीदन्तीति प्रतिपादयन्ति केचन इत्यप्यावश्यकवृत्तौ । पूर्वदक्षिणाऽपरदक्षिणाऽपरोत्तरापूर्वोत्तराणामेकैकस्यां दिशि उक्तलक्षणं संयतवैमानिकाङ्गनासंयत्यादित्रिकं त्रिकं भवति । तदुक्तमावश्यकनिर्युक्तौ—"एक्केक्कीयदिसाए तिगं तिगं होइ सन्निविट्ठं तु । आदिचरिमे विमिस्सा थीपुरिसा सेसपत्तेयं ॥ १ ॥" इति । बृहत्कल्पभाष्येऽपीयमेव गाथोपन्यस्ता । तत्र च वृत्तौ—"एकैकस्यां दिशि त्रिकं २ सन्निविष्टमूर्ध्वस्थितं वा भवतीत्युक्तम्" । समवसरणप्रकरणे तु—"मुणिवेमाणिणिसमणी सभवणजोइवणदे-

विदेवतिअं । कप्पसुरनरित्थितिअं ठंतिग्गेयाइ विदिसासु ॥ १ ॥ चउदेविसमणीउद्धट्ठिया निविट्ठा नरित्थिसुरसमणा । इय पण सग परिस सुणंति देसणं पढमवप्पंतो ॥ २ ॥ इयआवस्सयवित्तीवुत्तं चुन्नीइ पुण मुणि निविट्ठा । दो वेमाणिणिसमणी उड्ढा सेसा ठिआ उ नव ॥ ३ ॥" इति । मलयगिरिपादास्त्वावश्यकवृत्तौ–"इहैवं सम्प्रदायः देव्यः सर्वा एव न निषीदन्ति, देवा मनुष्या मनुष्यस्त्रियश्च निषीदन्ति" इति । तत्त्वं तद्विदो विदन्ति । अल्पर्द्धयो ये देवा मनुजा वा पूर्वं भगवत्समवसरणे समागतास्तिष्ठन्ति, पश्चादागच्छन्तं महर्द्धिकं प्रणमन्ति । यो महर्द्धिकः पूर्वं स्थितस्तं पश्चादागता अल्पर्द्धयः प्रणमन्तो यथास्थानं व्रजन्ति । तथा भगवत्समवसरणे 'गन्तव्यं भवता अतः स्थानात्' इत्येवंलक्षणयन्त्रणापि न भवति । समवसरणे च स्त्रीकथादिरूपा विकथा सामान्यतो विशेषप्रबन्धात्मिका वा वार्त्तापि च न भवति । तथा कुतोऽपि बलवतो वैरिणः सकाशात् सन्त्रासोऽपि न जायते, प्रत्युत भगवतः साम्यसुधासिन्धुपूरेण प्लावितमनसां तेषां विलीयन्ते विरोधानुबन्धविषोर्म्मय इति । तदुक्तं निर्युक्तौ–"एंतं महिड्ढियं पणिवयंति ठियमवि वयंति पणमंता । ण वि जंतणा ण विकहा ण परोप्परमच्छरो ण भयं ॥ १ ॥" इति । द्वितीयवप्रान्तः सिंहमृगमहिषादयस्तिर्यञ्चस्तत्रैवेशानकोणे विभोर्विश्रामार्थं रत्नमयो देवच्छन्दः तृतीये च लोकानां वाहनानि भवन्ति । वप्रात् बहिः देवा मनुष्यास्तिर्यञ्चश्च प्रत्येकं मिश्रा वा निर्गच्छन्तः प्रविशन्तश्च लभ्यन्ते । तदुक्तमावश्यकनिर्युक्तौ–"बिइयंमि होन्ति तिरिया तइए पागारमन्तरे जाणा । पागारजढे तिरियाऽवि होन्ति पत्ते य मिस्सा वा ॥१॥" इति । वप्रत्रयेऽपि द्वारपालानां नामादीनि समवसरणप्रकरणगाथाभिः लिख्यते–"पीअसिअरत्तसामा सुरवणजोइभवणा रयणवप्पे । धनुदण्डपासगयहत्थसोमजमवरुणधणयक्खा ॥ १ ॥ जयविजयाऽजियअपराजिअत्ति सिअअरुणपीअनीलाभा । बीए देवीजुअला अभयं-

कुलपासमगरकरा ॥ २ ॥ तइअवहि सुरा तुंबरुखट्टंगिकचालजडमउडधारी । पुव्वाइदारवाला तुंबरुदेवो अ पडिहारो ॥ ३ ॥" इति । वृत्ते च समवसरणे कोणे कोणे एकैका वापी तथा चतुरस्रे च कोणे कोणे द्वे द्वे वाप्यौ । तदुक्तं समवसरणप्रकरणे—"तह चउरंसे दुदु वावी कोणओ वट्टि इक्किका" इत्युक्तं समवसरणविध्याख्यं प्रथमं द्वारम् ॥

सर्वविरतिं देशविरतिं सम्यक्त्वं वा कश्चिद्ग्रहीष्यतीति ज्ञात्वैव विभुः धर्म्मदेशनां करोति, अन्यथा तु न करोत्येवा-मूढलक्ष्यत्वात् विभोः । तत्र मनुजश्चतुर्णामन्यतमत्सामायिकं प्रतिपद्यते । तिर्यञ्चः सर्वविरतिवर्जानि त्रीणि सम्यक्त्वश्रुत-सामायिकरूपे द्वे वा प्रतिपद्यन्ते । यदि नास्ति कश्चित् मनुजतिरश्चां प्रतिपत्ता तदा सुरेषु नियमत एव सम्यक्त्वप्रतिपत्तिः भवति । तदुक्तमावश्यकनिर्युक्तौ—"मणुए चउमण्णयरं तिरिए तिण्णिव दुवेव पडिवज्जे । जइ नत्थि नियमतो च्चिय सुरेसु सम्म-त्तपडिवत्ती ॥१॥" इति । ननु तर्हि देवानां समवसरणकरणप्रयासोऽपार्थकः स्यादिति चेत् ? न, यतो न भविष्यति स कालो यत्र भगवति देशनां कुर्वंति सत्यपि देवमनुजतिरश्चामन्यतमः चतुर्णां सामायिकानामन्यतमत्सामायिकं न प्रतिपद्यत इति ॥

विश्वबन्धुः 'नमस्तीर्थाय' इति भणित्वाऽशेषसमवसरणस्थसंज्ञिजिज्ञासितार्थप्रतिपत्तिनिबन्धनेन योजनव्यापिन्या जात्यश-र्कराद्राक्षादिरसमिश्रितपरिक्कथितस्निग्धदुग्धरसादिपरममधुरिममनोरमपदार्थसार्थातिशायिशब्दपूर्विकार्द्धमागधिभाषया माल-वकैशिकादिकग्रामरागपवित्रया च धर्म्मदेशनां करोति । सा च सर्वेषामार्यानार्यमनुजदेवतिरश्चां स्वस्वभाषारूपेण परिणमति । तदुक्तमावश्यकचूर्णौ—"सा वि य णं अद्धमागहाभासा भासिज्जमाणि सव्वेसिं तेसिं आयरियमणायरियाणं अप्पप्पणो भासापरिणामेण परिणमति" इति । ननु कृतकृत्योऽस्ति भगवान् कथं तीर्थप्रणामं करोतीति चेत् ? अत्रोच्यते—तीर्थं श्रुतज्ञानं तत्पूर्विकाऽर्हता-

मर्हत्ता, न खलु केनापि भवान्तरे श्रुताभ्यासमन्तरेण तीर्थकरनाम निकाचितमिति । तथा यद्यहं तीर्थं पूजयामि ततस्तीर्थकरस्यापि पूज्यमिदमिति कृत्वा लोकोऽपि पूजयिष्यति, लोकस्य पूजितपूजकत्वात् । तथा विनयमूलं धर्म्मं प्ररूपयिष्यामि, अतः प्रथमतो विनयं प्रयुङ्क्ते येन सर्वोऽपि लोके मद्वचनं सुतरां श्रद्दधीत । अत्र निर्युक्तिगाथा—"तप्पुव्विया अरहया पूइयपूता य विणयकम्मं च । कयकिच्चो वि जह कहं कहए णमए तहा तित्थं ॥ १ ॥" अस्याः चूर्णिः—"तत्थ सुयणाणेणं भगवओ तित्थकरत्तं जातं तित्थगरो य सुतवतिरित्तो होति तो सुयणाणेणं वायजोगीहोऊणं धम्मं कहेति लोगो य पूतियपूयओ तो जदि अहं एयं पूएमि तो लोगो जाणिहिति—जदि तित्थगरस्स एस गुरुकओ को जाणाति किंपि एत्थ परिवसति ? । किंच विणयमूलो धम्मो पवेयव्वो, तो अहं चेव पढमं विणयं पऊंजामि, पच्छा लोगो सुट्ठुतरं सद्दहिस्सति, किं च जहा कयकिच्चो वि होन्तओ तित्थगरो धम्मं कहेति तह तित्थमवि नमति" इति । ननु कृतकृत्योऽपि भगवान् कथं धर्मदेशनां करोतीति चेत् ? उच्यते—भगवता तीर्थकरनामकर्मावश्यं वेदितव्यम्, तस्य च वेदनेऽयमेवोपायः यदग्लान्या धर्मदेशनादिकरणम् । तथा चावश्यकनिर्युक्तौ—"तं च कहं वेइज्जइ अगिलाए धम्मदेसणाइहिं" इति । अथ समवसरणे मुनयः कियद्दूरतः समागच्छन्तीति चेत् ? उच्यते—यत्र नगरादौ विवक्षिततीर्थकरापेक्षया पूर्वं समवसरणं न जातं तत्र द्वादशयोजनाभ्यन्तर्वर्त्तिभिः मुनिभिरवश्यमागन्तव्यमन्यथा चतुर्लघवः प्रायश्चित्तं भवति । यद्वा पूर्वं समवसरणं येन मुनिना न दृष्टं तेन द्वादशयोजनाभ्यन्तरतोऽवश्यमागन्तव्यम्, अवज्ञयाऽनागमने चतुर्लघवः प्रायश्चित्तं भवति । तदुक्तमावश्यकनिर्युक्तौ—"जत्थ अपुव्वोसरणं न दिट्ठपुव्वं व जेण समणेणं । वारसहिं

जोयणेहिं सो एइ अणागमे लहुया ॥ १ ॥" 'अनागच्छति' अवज्ञया ततोऽनागमने सति 'लहुग' त्ति चतुर्लघवः प्रायश्चित्तं भवतीति हरिभद्रसूरिपादाः तद्वृत्तावित्युक्तं कियदितिद्वारम् ॥

विभोः कीदृग्रूपमित्युच्यते—सर्वे देवाः एकीभूय यद्यशेषसुन्दररूपनिर्मापणशक्त्या विश्वान्तर्वर्त्तिसारसारतरसारतमान् पुद्गलान् गृहीत्वाऽङ्गुलप्रमाणं रूपं विकुर्वीरन् तथापि तत् जिनपादाङ्गुष्ठं प्रत्यङ्गारक इव दृश्यते । प्रसङ्गतो गणधरादीनां रूपसम्पदुच्यते—जिनपतिरूपादनन्तगुणहीनं गणधररूपं ततोऽनन्तगुणहीनमाहारकशरीरिणस्ततोऽनन्तगुणमनुत्तरोपपातिकदेवानाम्, ततोऽप्यनन्तगुणहीनं नवमग्रैवेयकस्य ततोऽनन्तगुणहीनमष्टमग्रैवेयकस्य ततोऽनन्तगुणहीनं सप्तमग्रैवेयकस्य ततोऽनन्तगुणहीनं षष्ठग्रैवेयकस्य ततोऽनन्तगुणहीनं पञ्चमग्रैवेयकस्य ततः तुर्यग्रैवेयकस्यानन्तगुणहीनं ततोऽपि तृतीयग्रैवेयकस्यानन्तगुणहीनं ततो द्वितीयग्रैवेयकस्यानन्तगुणहीनं ततः प्रथमग्रैवेयकस्यानन्तगुणहीनं ततोऽच्युतकल्पस्थदेवानामनन्तगुणहीनं तत आरणकल्पस्थदेवानामनन्तगुणहीनं ततः प्राणतकल्पस्थदेवानामनन्तगुणहीनं तत आणतकल्पस्थदेवानामनन्तगुणहीनं ततः सहस्रारकल्पस्थदेवानामनन्तगुणहीनं ततोऽनन्तगुणहीनं शुक्रकल्पस्थदेवानां ततोऽनन्तगुणहीनं लान्तककल्पस्थदेवानाम्, ततोऽनन्तगुणहीनं ब्रह्मदेवलोकदेवानाम्, ततोऽनन्तगुणहीनं महेन्द्रकल्पस्थदेवानाम्, ततोऽनन्तगुणहीनं सनन्तकुमारदेवानाम्, ततोऽनन्तगुणहीनमीशानदेवलोकदेवानां ततोऽनन्तगुणहीनं सौधर्मदेवलोकदेवानाम् । ततोऽनन्तगुणहीनं ज्योतिष्कदेवानां ततोऽनन्तगुणहीनं भवनपतिदेवानां ततोऽनन्तगुणहीनं व्यन्तरदेवानाम्, ततोऽनन्तगुणहीनं चक्रवर्त्तिनां ततोऽनन्तगुणहीनं वासुदेवस्य ततोऽनन्तगुणहीनं बलदेवस्य ततोऽनन्तगुणहीनं माण्डलिकस्य शरीररूपं

भवति । ततः शेषाः राजानः प्रजालोकश्च परस्परं षट्स्थानपतिताः भवन्ति । तद्यथा-केचनानन्तभागहीनाः केचनासंख्येयभागहीनाः केचन संख्येयभागहीनाः केचन संख्येयगुणहीनाः केचनासंख्येयगुणहीनाः केचनानन्तगुणहीना इति । तथा वज्रर्षभनाराचसंहननसमचतुरस्रसंस्थानवर्णगतिश्वासोच्छ्वासादयः सौभाग्यादेयसुस्वरयशःकीर्त्त्योदयश्च नामकर्म्मोदयकार्यविशेषाः गोत्रकर्मणः कार्यविशेषाः उच्चैर्गोत्रत्वादयो भगवतोऽनन्यसदृशाः भवन्ति । छद्मस्थावस्थायामपि क्षयोपशमविशेषाः सत्त्वदानलाभादयोऽनुत्तराः किं पुनः केवलिनि । तथा गोक्षीरधारधवलं रुधिरं मांसं चाबीभत्समाहारनीहारौ चर्मचक्षुषामगोचरौ इत्यादयोऽनेकेऽतिशयाश्च वरीवर्त्तन्ते । ननु भगवतोऽसातवेदनीयोऽदयोऽशुभवर्णादीनां चोदयः कथं दुःखजनको न भवतीति चेत्? अल्पोदयत्वान्न तथा, यथा परिपूर्णे पयस्कुण्डे निम्बरसविन्दुरित्युक्तं रूपद्वारम् ॥

ननूत्कृष्टरूपत्वेन विभोः किं प्रयोजनमितिचेत्? अत्रोच्यते-उत्कृष्टं रूपं पुण्येन लभ्येतेति मत्वा श्रोतारो धर्म्मकर्म्मणि प्रवर्तेरन् । अपि च रूपवानपि यदि धर्म्मं करोति तर्हि शेषैस्तु सुतरां कर्त्तव्य एवेति श्रोतृबुद्धिरुपजायते । सुरूप आदेयवाक्योऽपि भवति श्रोतृरूपाभिमानपरिहारी चातः प्रशंसामो भगवत एवैतादृशं रूपं भवति नान्येषामिति पृच्छाद्वारम् ।

ननु प्रभूतसंशयिनां नरामरतिरश्चां व्याकरणं कुर्वन् कथं संशयव्यवच्छित्तिं करोतीति चेत्? अत्रोच्यते-युगपदेकेनैव निर्वचनेनायमेव विश्वबन्धोरतिशयविशेषः । ननु क्रमेण संशयव्यवच्छेदे का क्षतिरितिचेत्? उच्यते, सर्वजीवेषु युगपन्निर्वचनेन भगवतो वीतरागस्य तुल्यत्वं भवति, युगपज्जिज्ञासतां तुल्यकालसंशयिनां कालभेदेन कथने रागद्वेषगोचरचित्तवृत्तिसंभावनाप्रसङ्गात् । तथा क्रमेण व्याकरणे त्वसंख्येयेनापि कालेनासंख्येयानां संशयिनां संशयव्यवच्छित्तिः न

स्यात्, ततश्च कस्यचित् संशयिनोऽनिवृत्तसंशयस्यैव कालेन मृत्युना हरणं स्यात् । युगपन्निर्वचने सर्वज्ञप्रत्ययोऽपि श्रोतॄणामुपजायते, क्रमेण व्याकरणे तु निवृत्तसंशयस्यापि कस्यचित् सर्वज्ञप्रतीतिर्नोपजायते । ऋद्धिविशेषश्चायं भगवतो यद्युगपत्सर्वसंशयिनामशेषसंशयव्यवच्छित्तिं करोतीति विभोरचिन्त्याऽप्रमेया गुणविभूतिरित्युक्तं व्याकरणद्वारम् ॥

अथ श्रोतृपरिणामद्वारमुच्यते–यथा वर्षोदकमेकरूपमपि भूमिभेदेन भिन्नभिन्नतया परिणमति, कृष्णसुरभिमृत्तिकायां पतितं स्वच्छं सरसं सुगन्धं, ऊपरभूमिकायां च विपरीतं भवति, शुक्तिकायां मौक्तिकरूपेण परिणमति, एवं साधारणा जैनगीरपि सर्वेषां श्रोतॄणां स्वस्वभाषात्वेन परिणमते । अथ जैनवाचः सौभाग्यगुणत्वमावश्यकनिर्युक्त्युक्तं प्रतिपाद्यते–"साधारणासावत्ते तदुवओगो उ गाहगगिराए । न य निविज्जइ सोया किढिवाणियदासिआहरणा ॥ १ ॥" वृत्तिः– "साधारणा सर्वसंज्ञिनां भाषासु सामान्या, यद्वा क्षीरखण्डादीनि मधुरद्रव्याण्येकत्र मीलितानि यथा सुस्वादुतया साधारणानि भवन्ति एवमसावप्यतीव सुस्वादुतया साधारणा, नरकादौ पततो वा जन्तून् या सम्यग् धारयति सा साधारणा, असपत्ना–अनन्यसदृशी, यस्या अपरवाग्भिः व्याघातो न क्रियते, ग्राहयतीति ग्राहिका अर्थपरिच्छेदकारिणी, ग्राहिका चासौ गीश्च ग्राहकगीः, एवंविधायां तस्यां तस्यामुपयोग एकाग्रता तदुपयोगः तुशब्दस्यावधारणार्थकत्वात् तदुपयोग एव श्रोतुर्भवति, उपयोगे सत्यप्यन्यत्र निर्वेददर्शनात्तस्यामपि निर्वेदः स्यादित्याह–न च निर्विद्यते श्रोता भागवतीं वाचं शृण्वन्, कुतः खल्वयमर्थोऽवगन्तव्य इत्याह–किढिवाणिजदास्युदाहरणात् । तथाहि–एकस्य वणिजः एका काष्ठिकी दासी, काष्टिकी स्थविरा, सा प्रत्यूषसि काष्ठेभ्यो गता, तृष्णाक्षुधाक्रान्ता मध्याह्ने आगता, अतिस्तोकानि काष्ठान्यानीतानीति पिट्टिता बुभुक्षिता तृषिता पुनः प्रस्थापिता, सा च अवगाहमानायां पश्चिमायां पौरुष्यां बृहत्तरं काष्ठभारं गृहीत्वा गच्छति, कालश्च

ज्येष्ठमूलो मासः, अथ तस्याः स्थविरायाः काष्ठभारादेकं काष्ठं पतितं तदा तयाऽवनम्य तद्गृहीतं तस्मिन् समये च भगवांस्तीर्थकरो धर्मं कथितवान् योजनव्यापिना स्वरेण, सा स्थविरा तं शब्दं शृण्वन्ती तथैवावनता श्रोतुमारब्धा, उष्णं क्षुधां पिपासां परिश्रमं च न वेत्ति, सूर्यास्तसमये तीर्थकरो धर्मं कथित्वोत्थितः, स्थविरा गता, अनेन दृष्टान्तेन यदि तीर्थपतिः सततं कथयेत् तदा श्रोता क्षुत्पिपासापरिश्रमभयशीतोष्णादीन्यविगणयन् सर्वायुष्कमपि भगवत्समीपवर्त्त्येव क्षपयेदि"त्युक्तं श्रोतृपरिणामद्वारम् ॥

दानं द्विविधं वृत्तिदानं प्रीतिदानं च । तत्र भगवान् येषु देशनगरग्रामादिषु विहरति तेभ्यः देवसिकीं वार्तां ये खल्वानयन्ति, यथा भगवानद्यामुकस्मिन् क्षेत्रे विहरतीति, तेषां यद्भगवत्किंवदन्तीनिवेदकवृत्तिकल्पं संवत्सरनियतं परिभाषितं दानं दीयते तद्वृत्तिदानम्। यत् पुनः स्वनगरे भगवदागमननिवेदकाय नियुक्ताय वा हर्षप्रकर्षाधिरूढमानसैः दीयते तत्प्रीतिदानमिति बृहत्कल्पवृत्तौ, आवश्यकवृत्तौ तु—"तत्र वृत्तिः या परिभाषिता नियुक्तपुरुषेभ्यः, प्रीतिदानं यद्भगवदागमननिवेदने परमहर्षात् नियुक्तेतरेभ्यो दीयते, तत्र वृत्तिः संवत्सरनियता, प्रीतिदानमनियतम्" इति । एतद्द्वयमपि यथा चक्रवर्त्यादयः प्रयच्छन्ति तथोच्यते—सार्धत्रयोदशसुवर्णलक्षाः वृत्तिदानं सार्धत्रयोदशसुवर्णकोटयः प्रीतिदानं चक्रिणा दीयते । एवमेव वासुदेवा अपि, नवरं सुवर्णस्थाने रूप्यं वक्तव्यम् । माण्डलिकाः सार्धत्रयोदशसहस्राणि रूप्यकाणां नियुक्तेभ्यः प्रतिवर्षं ददति, प्रीतिदानं सार्धत्रयोदशलक्षाणि रूप्यकाणां ददति । अन्येऽपि चेभ्यादयो भक्तिविभवानुरूपमुभयरूपमपि दानं ददति । नन्वेवं दाने के गुणा इति चेत् ? उच्यते—चक्रिभिरित्थं ददद्भिः देवानामनुवृत्तिः कृता भवति, देवा अपि भगवतः पूजां कुर्वन्तीति कृत्वा भगवति पूज्यमाने तेषामपि सन्तोषो भवतीत्यर्थः । तथा भगवतो भक्तिः कृता

भवति, तथाऽभिनवश्राद्धानां स्थिरीकरणं स्यात्, तथा कथकसत्त्वानुकम्पा कृता भवति। सातवेदनीयं च बध्यते। तथा प्रभावना च तीर्थस्य कृता भवति, अहोऽमीषां धर्मः श्रेयान् यत्र देवगुरुभक्तिसम्भारसुभगमीदृशमौदार्यमित्युक्तं दानद्वारम् ॥

भगवान् सम्पूर्णप्रथमपौरुष्यां धर्ममाचष्टे। अत्रान्तरे बलिं प्रविशति। स च चक्रवर्त्तिमाण्डलिकादिभिः कृतोऽमात्यादिभिः कृतो वा तदभावे नगरनिवासिविशिष्टलोकसमुदायेन कृतो वा भवति। तथा स दुर्बलिकया खण्डितानां बलवत्या छटितानामीश्वरादिगृहेषु वीननार्थमर्पितानां ततश्च पुनरानितानां फलकवीनितानामाढकपरिमितानां तन्दुलानां भवति। सुरा अपि तत्र गन्धादीन् प्रक्षिपन्ति। तदुक्तमावश्यकनिर्युक्तौ—"राया य रायमच्चो तस्सऽसई पउरजणवओ वावि। दुब्बलिखंडियबलिछडियतंदुलाणाढगं कमला ॥ १ ॥ भाइयपुणाणियाणं अखंडफुडियाण फलगसरियाणं। कीरइ बली सुरा वि य तत्थेव छुहंति गंधाई ॥ २ ॥" इत्युक्तं बलिद्वारम् ॥

सत्रिदशाः राजादयः बलिं गृहीत्वा तूर्यनिनादेन दिग्मण्डलमापूरयन्तः खल्वागच्छन्ति, पूर्वद्वारेण च प्रवेशयन्ति, बलिप्रवेशनसमकालं च धर्मदेशनातः प्रभुः व्युपरमते। बलिव्यग्रदेहो राजादिः भगवन्तं त्रिःप्रदक्षिणीकृत्य विभोः पादान्तिके पातयति। अर्धं चापतितमेव बलिं देवाः गृह्णन्ति, शेषार्द्धस्याप्यर्द्धं बलिस्वामी राजादिर्गृह्णाति, तच्छेषं च सर्वं शेषलोको गृह्णाति। शिरसि प्रक्षिप्तेन तस्य सिक्थेनापि खलु सर्वामयाः प्रशमं यान्ति, अन्ये च षण्मासं यावत् न कुप्यन्ति। तदुक्तमावश्यकनिर्युक्तौ—"बलिपविसणसमकालं पुव्वद्दारेण ठाति परिकहणा। तिगुणं पुरओ पाडण तस्सद्धं अवडियं

देवा ॥ १ ॥ अद्धद्धं अहिवइणो अवसेसं हवइ पागयजणस्स । सव्वामयप्पसमणणी कुप्पइ णऽण्णो य छम्मासा ॥ २ ॥" इत्युक्तं बल्यानयनविधिद्वारम् ॥

इत्थं बलौ क्षिप्ते भगवानुत्थाय प्रथमप्रकारान्तरादुत्तरद्वारेण निर्गत्योत्तरपूर्वस्यां दिशि स्फटिकमये देवच्छन्दके यथासुखं समाधिना व्यवतिष्ठते । द्वितीयपौरुष्यां प्रथमगणधरोऽन्यो वा धर्ममाचष्टे । ननु भगवानेव किमिति नाचष्टे, गणधरकथने वा केऽपि गुणाः सन्ति ? सन्तीति ब्रूमः, तथाहि—भगवतः परिश्रमविश्रामो भवति, तथाऽस्य भगवतः शिष्या अप्येवंविधव्याख्यानलब्धिसम्पन्ना इति शिष्यगुणदीपनाकृता भवति । तथोभयतः श्रोतॄणां प्रत्ययोऽप्युपजायते, यथा भगवताऽभ्यधायि तथा गणधरोऽप्यभिधत्ते न शिष्याचार्ययोः परस्परं वचनविरोध इति भगवदुक्तानुवादिनि गणधरे भगवद्वत् यथार्थवादीति श्रोतॄणां प्रत्ययो भवति । तथा शिष्याचार्यक्रमोऽपि दर्शितो भवति, आचार्यादुपश्रुत्य योग्येन शिष्येण तदुक्तार्थव्याख्यानं कर्तव्यमिति गणभृद्देशनायां गुणा भवन्तीति । क्व निषण्णो गणधरो धर्मदेशनां करोतीति चेत् ? उच्यते, राज्ञोपनीतसिंहासने तदभावे भगवतः पादपीठे वोपविष्टोऽसंख्येयेषु भवेषु यद्बभूव भविष्यति वा तत्सर्वमपि कथयति, यद्दुःखगम्यमपि वस्तुजातं परः पृच्छेत् तदशेषमपि कथयति, सर्वाभिलाप्यपदार्थप्रतिपादनशक्तिमत्त्वात् । किञ्चावधिमनःपर्यायाद्यतिशयज्ञानरहितो 'न जानात्ययं गणधरः छद्मस्थः सर्वज्ञो वा' निःशेषप्रश्नोत्तरप्रदानसामर्थ्यत्वादित्युक्ता प्रसङ्गतः समवसरणवक्तव्यतेति ॥

एवमादिकारणैः समवसरणे तीर्थकरस्य समीपेऽध्ययनस्य व्याक्षेपो भवतीत्युक्ते शिष्यः प्राह—भगवन् सत्यमेवैतत् यद्यूयमा-

दिशथ, अत इहैव पठामीत्युक्त्वा द्वादशवर्षाणि यावत् सकलस्यापि श्रुतस्याध्ययनं करोति । गतं द्वितीयं शिक्षापदद्वारम् ॥

द्वादशवर्षाणि यावत् सूत्रमधीत्य द्वादशवर्षाण्येव सूत्रस्यार्थोऽवश्यं श्रोतव्यः । किं कारणमिति चेत् ? श्रूयतामत्रार्थे दृष्टान्तः, यथा वलीवर्दः सकलं दिवसं वाहयित्वा हलादरघट्टाद्वा विमुक्तः सन् यां काञ्चित् शुभामशुभां वा चारिं प्राप्नोति तां सर्वामनास्वादन्नेव चरति, पश्चात् व्रातः सन्नुपविश्य प्राक् चीर्णं रोमन्थायते रोमन्थायमानश्च तदास्वादमुपलभते, ततोऽसौ नीरसं कचवरं परिजहाति, एवमसावपि गृहवासारहट्टान्मुक्तः प्रथमं यत्किमपि चारिकल्पं गुरुसकाशात् सूत्रमधिगच्छति तत्सर्वमर्थास्वादविरहितं गृह्णाति, सूत्रग्रहणे कृते सत्यर्थग्रहणं करोति । यदि पुनरर्थं न गृह्णीयात् तदा तत्सूत्रं निरास्वादमेव संजायेत, अर्थे तु श्रुते सम्यक् तदर्थमवबुध्यमानः सन्नसौ यथावदुपदेशमाचरति, कचवरकल्पान् दोषदुष्टानभिलापान् परिहरति । एवं शालिज्ञातमपि ज्ञातव्यम् । यथा कर्षको महतापि कष्टेन शालिं निष्पाद्य लवनादिक्रियापुरस्सरं कोष्ठागारे निक्षिपति, यदि च तैरुपभोगं न करोति तदा तत्संग्रहकरणं व्यर्थमेव स्यात्, एवं द्वादशवार्षिके कृतेऽपि सूत्राध्ययनपरिश्रमे यदि तदीयमर्थं न श्रृणुयात् तदा सर्वोऽपि परिश्रमो व्यर्थः स्यात् । सम्यगवधारिते चार्थे सकलोऽपि परिश्रमः सफलः स्यात् । द्वादशवर्षाणि यावदधीतेऽप्यर्थे स्वज्ञानावरणक्षयोपशमानुसारेण केषाञ्चित् ज्ञानं भवति, केषाञ्चित् न भवति । तदुक्तं बृहत्कल्पभाष्ये–"जइ वारस वासाइं सुत्तं गहियं सुणाहि से अहुणा । वारस चेव समाओ अत्थं तो नाहिसि न वा णं ॥ १ ॥" इति । किञ्च जिनेन्द्रप्रवचने संज्ञास्वसमयपरसमयोत्सर्गापवादहीनाधिकाक्षरजिनकल्पिकस्थविरकल्पिकार्याकालैकवचनभयादिप्रतिपादकान्यनेकविधानि सूत्राणि सन्ति । तदुक्तं बृहत्कल्पभाष्ये–"सन्नाइसुत्तससमयपरसमयउस्सग्ग-

मेव । अववायहीणाहियजिणथेरे अज्जाकालेगवयणाई ॥ १ ॥" वृत्तिः—"इह मौनीन्द्रे प्रवचनेऽनेकधा सूत्राणि भवन्ति । तत्र किञ्चित्संज्ञासूत्रं यथा 'जे छेए से सागारियं नासेवे य' 'यः छेकः—पण्डितः स सागारिकं—मैथुनं न सेवेत' अथवा 'सवामगन्धं परिण्णाय निरामगंधो परिव्वए' आममविशोधिकोटिः । तथा 'आरं दुगुणेणं ( पारं एगगुणेणं )' 'आरं संसारस्तं द्विगुणेन रागद्वेषयुगलेन पारं निर्वाणं तदेकगुणेण रागद्वेषपरिहारलक्षणेन' जीवः प्राप्नोतीति गम्यते । आदिग्रहणादेशीभाषानियतं सूत्रं गृह्यते । तथा 'दिगिंछापरीसहे' दिगिंच्छेत्ति बुभुक्षा । स्वसमयसूत्रं यथा 'करेमि भंते! सामाइयमि'त्यादि । परसमयसूत्रं यथा—'पंचखंधे वयंतेगे वाला उ खणजोइणो' । उत्सर्गसूत्रं यथा—'अभिक्खुणं निविगइयगया य' इत्यादि । अपवादसूत्रं यथा—'तिण्हमन्नयरागस्स निसिज्जा जस्स कप्पइ जराए अभिभूयस्स वाहियस्स तवस्सिणो' । 'हीणमिति' हीनाक्षरं यदक्षरं विना सूत्रस्यार्थो न पूर्यते । 'अधिक'मित्यधिकाक्षरमेवंविधं यत् पूर्वमजानता सूत्रमधीतं तस्यार्थं सम्यगवगम्य हीनं प्रतिपूरयति, अधिकं परित्यजति । जिनकल्पिकसूत्रं यथा "तेगिच्छं नाभिनंदिज्जा संचिक्खित्तगवेसए । एयं खु तस्स सामन्नं जं न कुज्जा न कारवे ॥ १ ॥" स्थविरकल्पसूत्रं यथा—'भिक्खू इच्छिज्जा अन्नयरं तेगिच्छं आउंट्टित्तए' । अथवा जिनकल्पस्थविरकल्पयोः सामान्यसूत्रमिदं—'संसट्ठकप्पेण चरिज्ज भिक्खू' । आर्यासूत्रं यथा—'कप्पइ निग्गंथीणं अंतोलित्तं घडिमत्तयं धारित्तए' । 'काल'त्ति कालविषयं किमपि सूत्रं भवति यथा—अनागतं कालमङ्गीकृत्य 'नयालभेज्जा निउणं सहायं गुणाहियं वा गुणओ समं वा' इत्यादि । 'वयणाइं'ति वचनमेकवचनादिकं षोडशधा यथा पीठिकायां तत्प्रतिपादकं सूत्रमाचाराङ्गे भाषाध्ययने 'एगवयणं वयमाणे एगवयणं वएज्जा दुवयणं वयमाणे दुवयणं वएज्जा वहुवयणं वयमाणे वहुवयणं वएज्जा इत्थीवयणं वयमाणे इत्थीवयणं वएज्जा मुद्रिताचाराङ्गे तु 'से एगवयणं वइस्सामीति एगवयणं वइज्जा जाव पुरुस-

वयणं वइस्सामीति पुरुसवयणं वइज्जा' इत्थी वेस पुरिसो वेस नपुंसगं वेस इत्यादि आदिशब्दात् भयसूत्रादिपरिग्रह" इत्येवमनेकधा सूत्रसम्भवेन तदर्थग्रहणमन्तरेण न शक्यते कीदृशमिति विवेकः कर्तुमिति कर्त्तव्यमर्थग्रहणम् । ननु कण्ठतो यः सूत्रे निबद्धोऽर्थस्तेनैव वयं संतुष्टाः किमस्माकं दुरधिगमत्वात् बहुपरिक्लेशेनार्थग्रहणप्रयासेनेति चेत्? मैवमालस्यं विधेयम्, यतो निर्दोषसारवद्धिश्वतोमुखादयः सूत्रगुणा अपि यथाविधि गुरुमुखादर्थे श्रूयमाण एव प्रकटीभवन्ति । अपि च यथा द्वासप्ततिकलापण्डितः सुप्तः सन्न किञ्चित्ताः कला जानीते, बोधितस्तु जानाति, एवं सूत्रमप्यर्थेनानवबोधितं सुप्तमिव द्रष्टव्यम् । सूत्राणां चार्थो यथाविधि गुरुसम्प्रदायादेवाध्येतव्यो न यतस्ततो विचित्रार्थनिबद्धत्वात्सूत्राणामिति गतं तृतीयमर्थग्रहणद्वारम् ॥

अर्थग्रहणे समाप्ते सति यो विनेयः आचार्यपदयोग्यः स नियमादेशदर्शनं द्वादश वर्षाणि यावत् कारयितव्यः । नन्वेवंविधस्य गीतार्थस्य देशदर्शनमन्तरेण किं न सिद्ध्यतीति चेत्? अत्रोच्यते—सम्यगर्थस्य कृतेऽपि निर्णये शास्त्रनिबद्धा देशीभाषायुक्ताः तत्तद्देशेषु प्रसिद्धाः शब्दाः जात्यन्धस्य चन्द्रमिव नानादेशदर्शनमन्तरेण साक्षात् कर्त्तुं न शक्यन्ते । प्रत्यक्षदर्शनमन्तरेण च शास्त्रानुसारेण प्रकटा अप्यर्था व्यवहारोपयोगिनो न भवन्ति, अत आचार्यपदयोग्यः नियमेन देशदर्शनाय पर्यटति, अन्यस्य त्वनियमः । स च जघन्येनावश्यंतयाऽऽत्मतृतीयः कृत्वा प्रेषणीयः । देशदर्शनं कुर्वतः किमिदमृतुबद्धकालयोग्यं क्षेत्रं वर्षाकालयोग्यं वा क्षेत्रं ग्लानादियोग्यं वाऽऽर्यमनार्यं वा क्षेत्रमित्यादिकं जानाति । देशदर्शनं च कुर्वतो दर्शनशुद्धिर्जायते अन्येषां च स्थिरीकरणं भवति, देशप्रवेशद्वारमतिशया जैनपदपरीक्षा च जायन्ते ।

तत्र दर्शनशुद्धिः पञ्चसु कल्याणकभूमिषु विहरतोऽत्र किल भगवतां जन्म जज्ञेऽत्र दीक्षां प्रतिपन्ना भगवन्तः, अत्र च केवलज्ञानमासादितवन्तः, इह पुनः परिनिर्वृत्ता एवं बहुजनमुखेषु श्रुत्वा स्वयं च दृष्ट्वा निश्शङ्कितत्वभावादतीव विशुद्धं सम्यक्त्वं भवतीत्युक्तं दर्शनशुद्धिद्वारम् ॥ प्रमादादिविकथारहितानां विशुद्धलेश्याकानां सुविहितानां साधूनामयं भाव्याचार्योऽवगाहितसमस्तसिद्धान्तसिन्धुरभ्यस्तचरणकरणसमाचारीकः इत्थं देशदर्शनं करोतीति भावनया साधूनां संवेगजनकत्वेन स्वयं विहितानुष्ठानो विकथाविरहितो विशुद्धलेश्याकः स्थिरीकरणं करोतीत्युक्तं स्थिरीकरणद्वारम् ॥ मागधमालवमहाराष्ट्रलाटकर्णाटकद्राविडगौडविदर्भादिदेशभाषायां कुशलः सन् नानादेशीयभाषानिबद्धस्य सूत्रस्योच्चारणेऽर्थकथने च कुशलो भवत्यत एव देशदर्शनार्थं गन्तव्यम् । तथाऽभाषिकानामपि धर्मं कथयति, निश्शेषदेशभाषानिष्णातत्वात् । अव्यक्तवर्णविभागा भाषा येषां तेऽभाषिका तान् प्रतिबोध्य प्रव्राजयति, सर्वेऽपि च शिष्याः स्वभाषया भाष्यमाणत्वेनास्माकमयमिति कृत्वाऽऽचार्ये प्रीतिं भजन्ते । तथा प्रियधर्मा पापभीरुः साधर्म्मिकानां द्रव्यतः भक्तपानादिना भावतः स्खलितादिषु सारणादिना वत्सलोऽशठः इत्येवंविधः साधुर्नानादेशेषु पर्यटतः संयमयोगेषु सीदन्तान् परानपि साधून् सदुपदेशदानादिना संविग्नयति । तदुक्तं बृहत्कल्पभाष्ये—"नानादेसीकुसलो नाणादेसीकयस्स सुत्तस्स । अभिलाव अत्थ कुसलो होइ तओणेण गंतव्वं ॥ १ ॥ कहयति य आभासियाण वि अभासिए अवि पव्वयावेइ । सव्वेवि तत्थ पीई बंधंति सभासिओ णेत्ति ॥२॥ पियधम्मवज्जभीरु साहम्मियवच्छलो असढभावो । संविग्गावेइ परं परदेसपवेसणं साहु ॥३॥" इत्युक्तं देशप्रवेशद्वारम् ॥ तथाऽऽचार्याणां पर्युपासनया सूत्रे अर्थे च यानि शङ्कितानि पदानि पृच्छति सति निश्शङ्कितानि जातानि तान्येव देशदर्शनाद्विशिष्टानुभवगोचराणि भवन्ति । अत एव सूत्रा-

र्थविपर्योऽभ्यासातिशयो भवति । तथा भाव्याचार्योऽयं देशदर्शनं करोतीति श्रुत्वा पर्युपास्यमानाचार्यसम्बन्धिनः शिष्याः सूत्रार्थग्रहणादावुद्यमं कुर्वन्ति । गृहिणोऽपि च तद्गुणग्रामरञ्जिताः भविष्यदाचार्यपार्श्वे प्रव्रज्यां प्रतिपद्यन्त इति । तथाऽतिशयाश्चतुर्विधा भवन्ति । तद्यथा–सूत्रार्थाऽतिशयाः समाचार्यतिशया विद्यायोगा मन्त्राश्चेति । तत्राद्य उक्त एव । स देशदर्शनं कुर्वाणस्तेषु तेषु नगरग्रामादिषु महानुभावानां वहुश्रुतानामाचार्याणां गच्छे बहुशः प्रवेशेन निर्गमनेन च समाचारीकुशलो भवति । विद्या स्त्रीदेवताधिष्ठिता पूर्वसेवादिप्रक्रियासाध्या वा, योगाः पादलेपप्रभृतयो गगनगमनादिफलाः, मन्त्राः पुरुषदेवताधिष्ठिताः पठितसिद्धा वा, यद्वा विद्यायोगा मन्त्राश्च सूत्रेऽन्तर्भावविवक्षायां तु द्विविधा अतिशयाः सूत्रार्थातिशयाः समाचार्यतिशयाश्च । अतिशयानामुपलब्धिरपूर्वाचार्यपर्युपासनायां भवतीत्युक्तमतिशयद्वारम् ॥ तथा स देशदर्शनं कुर्वन्निदं क्षेत्रं स्वाध्यायहितमिदं च संयमहितमत्र सुलभा भिक्षा अत्र भद्रको जनसमूहः अत्र दानश्रद्धालवश्चेदं च वर्षाकालयोग्यमिदं चर्तुवद्धयोग्यमिदं चोभययोग्यमित्यादिकं सम्यग् जानातीति प्रागुक्तमेवेत्युक्तं जनपदपरीक्षाद्वारम् ॥ समासं चानियतवासाख्यं चतुर्थद्वारम् ॥

इत्थं तेन देशदर्शनं कुर्वता शिष्याः प्रतीच्छकाश्च समाचार्यां सूत्रार्थग्रहणायां च निष्पादितव्याः । देशदर्शनं कुर्वन् 'एष महाभागः सूत्रार्थयोरव्यवच्छित्तिं करिष्यती'ति वुद्ध्या स सूत्रार्थनिमित्तं प्रतीच्छकैरभिगम्यते । नन्वेष महाभाग इति कथं ज्ञायते, न चासौ डिंडिमाडम्बरेण वहुश्रुतोऽहं वहुश्रुतोऽहमित्युद्घोषयति, सद्विवेकसुधाधाराधौतचेतस्कत्वात्, मिथ्यात्वाभिमानाख्यप्रबलतमस्तिरस्कृतसंज्ञानलोचनप्रसराणामितरजन्तूनामेव तथाप्रवृत्तिसम्भवाच्चेति चेत्? अत्रो-

च्यते, यथा प्रावृट्काले यः पुष्पितः कदम्बवृक्षो वननिकुञ्जे गुप्तस्तिष्ठति तथापि प्रसरताऽऽत्मसम्बन्धिना गन्धेन भ्रमरैः मधुकरीभिश्च सूच्यते एवमयमपि चरणगुणसुस्थितः सूत्रार्थपौरुषीकरणं प्रत्युद्युक्तः ज्ञानदर्शनादिना परां निष्ठां प्राप्तः प्रसरता परिमलकल्पेन निजगुणनिकुरम्बेन भ्रमरमधुकरीकल्पाभिः स्वपरिवारवर्तिभिः साधुसाध्वीभिश्च कदम्बवदुद्यानादावत्यन्तनिगूढोऽपि तिष्ठन् श्लाघ्यते परेषां साधूनां सूच्यते च। यद्वा कुत्र न ज्वलति ज्वलनः कुत्र वोदयप्राप्तः शशी प्रकटो न भवति, एवं सत्पुरुषा अपि ज्ञानादिभिरभ्यन्तरलक्षणैः शरीरसौन्दर्यादिभिः शङ्खचक्रादिभिश्च बाह्यलक्षणैः प्रकटा भवन्त्येव। ततस्तेषां साधूनां तस्यान्तिके उपसम्पद्भवति, तेन च तेषां यथाविधि प्रतीच्छना कर्त्तव्या इत्येष एक उपसम्पत्प्रकार उक्तः। रथयात्रादौ वहूनां साधूनां मेलापके सति "अट्ठे लोए" इति व्यञ्जनभेददूषितं सूत्रं परिवर्त्तयन्तं कमपि साधुं श्रुत्वा स प्रतिनोदनां करोति 'अट्टे लोए' इति पठ, स प्राह किमिति, जातार्थो ब्रूते 'अट्ठे' इत्यर्थो न मीलति, इतरः प्राह 'किमर्थः समस्ति'? ओमिति, नमस्कारमादिकृत्वा दृष्टिवादपर्यन्तस्य सर्वस्यापि सूत्रस्यार्थो विद्यते। ननु तर्हि 'अट्टे' इत्यस्य कोऽर्थः, आर्त्तश्चतुर्धा नामस्थापनाद्रव्यभावभेदात्। जीवस्याजीवस्य जीवयोः अजीवयोः जीवानामजीवानामुभयेषां वा 'आर्त्त' इति नाम क्रियते तन्नामार्त्तः। अक्षादौ 'आर्त्त' स्थाप्यते तत् स्थापनार्त्तः। सचित्तादिद्रव्यैरप्राप्तैः प्राप्तवियुक्तैर्वा य आर्त्तः स द्रव्यार्त्तः। क्रोधादिभिरभिभूतो भावार्त्तः। एवं द्रव्यभावार्त्ताभ्यां सकलोऽपि लोकः पीडितो वर्त्तत इति श्रुत्वा प्रमुदितः स साधुः चिन्तयति, अहो अस्य सूत्रलवस्यापीदृग् हृदयङ्गमोऽर्थस्ततो यदि सर्वस्याप्यधीतसूत्रस्यार्थमवबुध्यते तदा सुन्दरं भवतीत्यभिसन्धायार्थग्रहणार्थं तस्यैव पार्श्वे उपसम्पदं प्रतिपद्यते, ततोऽसौ विधिनार्थं कथयतीति द्वितीयः प्र-

कारः। यद्वा देशदर्शनं कृत्वा गुरूणां समीपे समागतस्तं गुरुराचार्यपदे प्रतिष्ठाप्य दिग्बन्धे च कृतेऽनुज्ञाते च सति विहारं
कुर्वतोऽस्य पार्श्वे प्रतीच्छकानां साधूनामुपसम्पदं भवतीति व्याख्यातं त्रिभिः प्रकारैरुपसम्पद्द्वारमिति ॥

स्वकीयपार्श्वे प्रव्रजितानामुपसम्पन्नानां चासौ सूत्रं पाठयति, आसेवनाशिक्षां च ग्राहयति, तथेत्वरकालं दिग्बन्धनं
करोति, यथा यावदाचार्याणां पार्श्वे व्रजामस्तावदहमेव भवतामाचार्योपाध्यायस्तत्र गतानां त्वाचार्याः । ज्ञानदर्शनचा-
रित्रार्थमुपसम्पद्यमानाः साधवः प्रत्येष्टव्याः । पार्श्वस्थादयस्तु चारित्रार्थमुपसंपद्यमानाः संग्राह्याः । सूत्रार्थग्रहणार्थं दर्श-
नप्रभावकशास्त्राध्ययनार्थं च समागता न संग्राह्याः । ग्रहणात् पूर्वमसावात्मपरोभयविषयां तुलनां करोति । आत्मतु-
लना च चतुर्विधा भवति । तद्यथा–द्रव्यतः क्षेत्रतः कालतो भावतश्च । तत्र द्रव्यतः एषामुपसम्पन्नानां यदेषणीयान्या-
हारोपधिशय्यादीनि स्वयमुत्पादयितुं समर्थो न वा, क्षेत्रत ऋतुबद्धविहारयोग्यानि वर्षावासयोग्यानि वा क्षेत्राणि उत्पाद-
यितुं शक्नोमि न वा अध्वानः राजद्विष्टादितो वा तारणादिकर्तुमहं समर्थो न वा, कालतः दुर्भिक्षाशिवभयादौ निर्वाहयितुं
शक्तोऽस्मि न वा, भावतः ग्लानीभूतानां बालवृद्धानां वा प्रायोग्यमुत्पादयितुं समर्थो न वा, क्रोधादीनां निग्रहं कर्त्तुं समर्थो
न वा, यद्वा यन्निमित्तमुद्दिश्यैते उपसम्पद्यन्ते तस्य सारणां कर्त्तुं समर्थो न वेत्यात्मतुलनां करोतीत्युक्ता चतुर्विधात्मतु-
लना । परतुलनाऽपि चतुर्विधा भवति, तद्यथा–द्रव्यतः क्षेत्रतः कालतो भावतश्च । तत्रादावेव प्रतीच्छकाः प्रष्टव्याः
द्रव्यतः आहारादीनां लाभोऽनियतः कदाचिद्भवति कदाचिन्नेति । योऽपि भवति, सोऽपि विरसः पुराणौदनादिः हिङ्ग्वा-
द्यसंस्कृतः रूक्षश्च वल्लचणकादिरुज्झितप्रायः । क्षेत्रतः बहिर्ग्रामभिक्षार्थं पर्यटनं भवति । तथा यत्र लोकोऽल्पभिक्षाप्रदाता

सोऽपि स्तोकमेव ददाति तथा यत्र विहर्त्तव्यं तत्र कालप्रतिकूलाश्च प्रायो वसतयः प्राप्यन्ते । कालतः कदाचिन्मासकल्पस्थाने वर्षावासस्थाने वोनमतिरिक्तं वावस्थानं कारणे स्यात् । क्वचित्क्षेत्रेऽकाले सूत्रपौरुष्या अर्थपौरुष्या वा वेलायां भिक्षा प्राप्येत, ततः सूत्रार्थहानिरपि भाविनी, क्वचित् क्षेत्रे पूर्वार्द्धे पूर्णेऽपि अल्पाहारो लभ्यते, एवं पानकमपि न सम्पद्येत । भावतः खरपरुषनोदनायामपि कषायनिग्रहो नियतः कर्त्तव्यः कदाचित् धर्मकथादिव्यग्रतया सूत्रार्थयोः व्याघातोऽपि भवेत् । एतत्सर्वमपि यद्यङ्गीकर्त्तुमुत्सहेत तर्हि प्रतिपद्यध्वमुपसम्पदमिति । उभयविषया तुलना स्थिरीकरणार्थं बोद्धव्या । यदि प्रतीच्छका अनन्तरोक्तं सर्वं प्रतिपद्यन्ते तदा वध्वा दृष्टान्तं कर्त्तव्यम् । यथा पितृगृहे गवाक्षादिस्थितां रथाश्वादीनवलोकयन्तीं वधूं न निवार्यते । श्वशुरादिभिस्तु माभूदस्याः प्रसङ्गतः परपुरुषविषयोऽप्यवलोकनहेवाक इति वार्यते । वारिता सत्यपि यदि नोपरमते तर्हि निन्द्यते 'आ कुलपांसने किमेवं करोषी'त्यादिना । तथापि न निवर्त्तते ततः कशादिभिस्ताड्यते, एवमपि यदि न तिष्ठति ततो गृहात् निष्काश्यते, मा भूदपरासामपि गृहमहिलानामस्याः प्रसङ्गजनित एवंविध एव कुहेवाक इति कृत्वा । ये तु पितृगृहसम्बद्धाः स्वजनास्ते तस्या दोषानाच्छादयन्ति, कथञ्चिदुपालम्भप्रदानादिनाऽनाच्छादयन्तोऽपि न गृहान्निष्काशयन्ति, गौरवार्हत्वात् । अयं चात्रोपनयः—पितृगृहस्थानीयो युष्माकं स्वगच्छः श्वशुरकुलस्थानीया वयमश्वरथाद्यवलोकस्थानीयं प्रमादासेवनं गवाक्षादिस्थानीयान्यपुष्टालम्बनानि ततो युष्माकं स्वगणे प्रमादासेवनं कृतमपि क्षम्यते, अल्पं प्रायश्चित्तं तत्र दीयते, महत्यपराधेऽपि न गणान्निष्काशनं क्रियते, गौरवार्हत्वात् । वयं पुनः भवतां स्वल्पमप्यपराधपदं न सहाम इत्युक्ते यदि ते प्रतीच्छका यत् पूज्या आदिशन्ति तदस्माकं प्रमाणमिति

भणेयुस्तदा ते प्रतीच्छ्यन्ते । एते च द्विविधाः–पार्श्वस्थादयः संविग्नाश्च । तत्र ये पार्श्वस्थादयस्ते पार्श्वस्थमुण्डिताः संविग्नमुण्डिताश्च, संविग्ना अपि सांभोगिका असांभोगिकाश्च । तत्र ये पार्श्वस्थादिभिः मुण्डितास्तेषां दीक्षादीनादारभ्यालोचना दीयते, ये तु संविग्नमुण्डिताः पश्चादवसन्नीभूतास्तेषां यद्दिनादारभ्यावसन्ना जाताः तद्दिनादारभ्यालोचना दीयते । ये तु संविग्नाः समनोज्ञा अमनोज्ञा वा तेषां यद्दिने स्वगच्छतो निर्गतास्तद्दिनादारभ्यालोचना देया । शुद्ध्यर्थं मूलं छेदं वा यत्प्रायश्चित्तापन्नं तद्दत्वा स्वकीयां प्रतिदिनक्रियाकलापरूपां चक्रवालसमाचारीं तथा कथयन्ति आचार्या यथा ते कल्पिका भवन्ति । यावच्च समाचारीं न समधिगच्छन्ति तावन्तं कालं भिक्षार्थमपि न हिण्डाप्यन्ते, समाचारीशिक्षणव्याघातात् । असंस्तरणे तु रात्रावपि समाचारी शिक्षणीया । अप्रीतिपरिहारार्थं समाचारीशिक्षणं द्रष्टव्यम् । गृहीतसामाचारीकाणां सूत्रार्थवाचना दातव्या । वाच्यमानानां च तेषां समाचारीकरणे प्रमादवतामुपदेशः स्मारणा प्रतिस्मारणा च कर्त्तव्या । तत्रास्माकमेषा समाचारी यन्निद्राविकथादयः प्रमादाः परिहर्त्तव्या इत्युपदेशः । निद्रादिविकथासु प्रत्युपेक्षितदुष्प्रत्युपेक्षितादिषु चैकवारं स्खलितानां स्मारणा भवति । यथा भो महाभाग! पूर्वमेते प्रमादा इति तवोक्तमतो जानन्नपि कथं प्रमाद्यतीति स्मारणा । स्फुटं रूक्षं च न वक्तव्यमप्रीतिकरत्वात् । स्फुटं नाम यस्तेन प्रमादः कृतः स परिस्फुटं नाभिधीयते किन्त्वन्यव्यपदेशेन भणितव्यः। रूक्षं यथा भो–निर्धर्म्म! भो निरक्षर! भो निश्शूक! इत्यादि । तथाकथने च सकषायित्वात् कलहं कृत्वा गच्छान्निर्गच्छेत् । यथा महताभारेण भारितो बलीवर्दो हलं वा वहमानः प्राजनकेनातिप्रनोदितः भारं पातयति हलं वा भनक्ति, एवमयमपि संयमभारं पातयति । अत एव यदा प्रमादः कृतस्तदैव न भण्यते । स

वक्तव्यश्चावश्यमेव, तदुक्तमुपदेशमालायाम्-"रूसउ परो मा वा विसं वा परियट्टउ। भासियव्वा हिया भासा सपक्खगुणकारिया ॥ १ ॥" तस्माद्यथावसरं 'जिनाज्ञाराधनपराः वयं भवन्तमेवं भणामो न पुनः मत्सरप्रद्वेषादिने'ति संयमयोगेषु सीदतां स्मारणाकर्त्तव्या। स्मारणानन्तरं तदैव प्रतिस्मारणा न कर्त्तव्या किन्त्वन्यस्यां वेलायां द्वितीयदिवसे वा कर्त्तव्या। सा चैवं-भो महाभाग! तवैको महानपराधः सोढः यदि पुनर्द्वितीयमपराधं करिष्यसि तर्हि न सहिष्यामः। यथा कश्चिच्चौरः गवाद्यपहरणं कुर्वन्नारक्षकैः गृहीतस्ततस्तेन मुच्यतां मामैकवारं न पुनः स्वल्पमपि चौर्यं करिष्यामि इत्युक्ते दयालुत्वादपरोपरोधाद्वा मुक्तः, पुनरपि पूर्वाभ्यासवशादाद्रच्छगणं गृहीतमल्पं चौर्यं कृतमित्यर्थः, तथापि तितिक्षितः, पुनस्तेन लोभ्रो गृहीतः सन् याच्यमानोऽपि मोक्षणं न क्रियते। एवं भवतोऽप्येकवारं महदप्यपराधपदं तितिक्षितमित ऊर्ध्वं स्वल्पमपि न सहिष्यामः। इत्थमुक्तोऽपि यदि प्रमाद्यति तदा मासलघु प्रायश्चित्तं दत्त्वा वक्तव्यं न पुनः प्रमादः कर्त्तव्यः। एवमुक्तेऽपि पुनः प्रमाद्यति तदापि मासलघुकं दातव्यमेवं वारत्रयादूर्ध्वं यदि न निवर्त्तते तदा निष्काशना कर्त्तव्या निर्गच्छ मदीयगच्छादिति। यदि प्रमादान्निवर्त्त्य 'भगवन् ममापराधनिकुरम्बं क्षमध्वं न पुनरेवं करिष्यामी'ति प्रतिभणति तदा 'तम्बोलपत्रज्ञातेन निष्काशितः' इति वक्तव्यम्। सम्प्रत्यप्रसत्तेन भवितव्यमित्युक्त्वा मासलघुप्रायश्चित्तं दातव्यम्। अथ निष्काशनविधिरुच्यते-प्रमाद्यन्त एकोऽनेके वा भवन्ति। एकश्चेत्? सुखेनैव निर्गच्छ मद्गच्छादित्यभिधाय निष्काश्यते। बहवश्चेत्? निर्गच्छत मद्गच्छादिति भणिता अपि वयं बहिस्तिष्ठाम इत्यवष्टम्भं कृत्वा न व्रजन्ति तदा शेषसाधून् रहस्यं ज्ञापयित्वाऽन्येन केनापि मिषेण यथा न तेषां शङ्का भवति तथोपधिं विहारयोग्यं कारयित्वाऽन्यव्यपदेशेनैव

ते रात्रौ चिरं जागरणं कारापणीया यथा प्रातर्न शीघ्रमुत्तिष्ठन्ति । तथा शय्यातरस्याग्रे रहसि कथनीयं यथा वयं प्रभात एवामुकं ग्रामं व्रजिष्यामः । यदि कोऽपि महता निर्वन्धेन युष्मान् प्रश्नयेत् यथा–'आचार्याः क्व गता' इति । ततो भवद्भिः तस्य यथावन्निवेदनीयम् । ततो गमनं कर्त्तव्यम् । गतेष्वाचार्येषु ये ब्रूयुः–'भव्यं जातमुग्रदण्डव्यसनिनः आचार्यात् मुक्ता वयमिति' न तेषामधिकारः, ये पुनः परित्यक्ताः वाढं परितप्यन्ते यथा 'अहो तातपादैः परित्यक्ता वयं कथमिव भविष्याम' इति ते महता निर्वन्धेन शय्यातरं पृच्छन्ति कथय कुत्रास्मान् विमुच्य गताः क्षमाश्रमणाः । ततः शय्यातरमुखात् स्थानं श्रुत्वा यदि त्वरितं समागच्छन्ति तदा तेषां विनयहानिः न कर्त्तव्या । पूर्ववदभ्युत्थानादिकं दण्डग्रहणं च कर्त्तव्यम् । ततस्ते वद्धाञ्जलिपुटाः पादपतिताः छिन्नमुक्तावलिप्रकाशान्यश्रूणि विमुञ्चन्तो विज्ञापयन्ति–भगवन् क्षमध्वमस्मदीयमपराधं, प्रसादमधुरया दृशाऽस्मान् विलोकयत, भूयः प्रतीच्छकतया प्रतिपद्यध्वं, स्मारणादिनाऽनुग्रहं कुरुत, महात्मनः प्रणिपातपर्यवसितप्रकोपा भवन्ति इत ऊर्ध्वं प्रयत्नतः प्रमादं परिहरिष्याम इति । ततो गच्छसत्काः साधवः आचार्यान् कृताञ्जलयः प्रसादयन्ति । गुरवो ब्रूवते–आर्या ! अलं मम दुष्टाश्वसारथिकल्पेनामून् प्रत्यावार्यककरणेन । एवमुक्ते पुनः साधवो भणन्ति–स को नाम सारथिर्भवति यो विनीतानपि वाजिनो दमयेदपि तु न कश्चिदित्यर्थः । यस्तु दुष्टानश्वान् दमयति स लोकेऽश्वदम उच्यते । अपि च–भगवन् दुस्त्यजान्यनुपयोगगमनादीनि प्रमादस्खलितानि भवन्ति जन्तूनाम्, अनादिकालिनसंसर्गित्वात् । अतः परं स्मारणादिरूपा यन्त्रणा न चिरकालभाविनी भविष्यति । असीषां सात्मीभावमुपागतेऽप्रमत्ते तु को नाम स्मारणादिकं करिष्यति । स्मारणादियन्त्रणा चापा-

तकटुकापि परिणामसुन्दरा पर्यन्ते तथ्या चेत्युपादेयैवेत्युक्ते आचार्या राज्ञो ज्ञातं कुर्वन्ति–यथा कस्यचित् राज्ञः चक्षुषि दुस्सहा तीव्रतरा वेदना जाता तत्र चागन्तुकः कश्चिद् वैद्यः समागतस्तेन चोक्तं मम पार्श्वे गुटिका वर्तते तदञ्जनेन सर्वापि वेदनोपशाम्यति परमञ्जनानन्तरं मुहूर्त्तं यावत्तीव्रतराऽसह्या च वेदना भवति, तितिक्षितुं क्षमश्चेदञ्जेमि । मुहूर्त्तं यावच्च मम वधार्थमादेशो न कर्तव्य इत्युक्ते च राज्ञा प्रतिपन्नं तद्वचः नेत्रे चाञ्जितेऽसह्या तीव्रतरा वेदना समुत्पन्ना ततो राज्ञा वैद्यवधार्थमादेशः कृतः प्रतिपन्नवचनत्वात्तत्पुरुषैर्न वधितस्ततो मुहुर्त्तानन्तरं वेदनोपशमिता नेत्रे निरुग्जाते क्रमेण च सुखी जातः । अयमत्रोपनयः–तस्य राज्ञः दुस्सहमपि गुटिकाञ्जनं क्रमेण चक्षुषोः प्रगुणीकरणात् परिणामसुन्दरं समजनि, एवं भवतामपि स्मारणादिकं खरपरुषत्वाद्यापातकटुकमपि परिणामसुन्दरं द्रष्टव्यम्, उभयत्र कल्याणपरम्पराकारणत्वादिति । एवमविनीतानां परित्यागस्त्यक्तानां पुनरागतानां भूयः संग्रहो विधेयः, ये तु स्वभावतो विनीतास्तेषां स्मारणैव कर्त्तव्या । एवं देशदर्शनं कुर्वन् शिष्यप्रतीच्छकनिष्पत्तिं द्वादशसंवत्सराणि सूत्रार्थग्रहणादिना करोतीति गतं पञ्चमं शिष्यनिष्पत्तिद्वारम् ॥

अथ विहारद्वारमुच्यते–देशदर्शनं कृत्वा गुरुपादमूलमागतस्य गुरुभिराचार्यपदमारोप्य दिग्बन्धानुज्ञायां विहितायां नवकल्पविधिना विहरतो यः शिष्यनिष्पादनविधिरुक्तः स एवमेव द्वादशवर्षाणि यावद्विज्ञेयस्तुल्यवक्तव्यत्वादिति ॥

अथ जिनकल्पिकमाश्रित्य विहारमुच्यते–अव्यवच्छित्तिमनोद्वारम्, पञ्चानामाचार्यादीनां तुलनाद्वारम्, उपकरणद्वारम्, भावनाद्वारम्, परिकर्मद्वारम् ,वटवृक्ष इति द्वारम् । तत्राचार्येण सूत्रार्थयोरव्यवच्छित्तिं कृत्वा पर्यन्ते रात्रौ धर्म्मजागरिकां जाग्रतेत्थं चिन्तनीयम्–यथा अनुपालितो मया प्रव्रज्यारूपो दीर्घपर्यायः उचितेभ्यः प्रतीच्छकादिभ्यः प्रदत्ता

च मया वाचना, निष्पादिताश्च भूयांसः शिष्याः, तदेवं कृता तीर्थस्याव्यवच्छित्तिस्तत्करणे च कृतमात्मनः ऋणमोक्षणमत
ऊर्ध्वं प्रशस्यतरं ममात्मनो हितं कर्त्तुं किं जिनकल्पादिनाभ्युद्यतविहारेण विहरामि, आहोस्विदागमोक्तविधिना संलेख-
नाद्युत्तरकालमभ्युद्यतमरणेन म्रियेऽहम् । जिनकल्पपरिहारविशुद्धकल्पयथालन्दकल्पभेदात् त्रिविध उद्यतविहारः । पाद-
पोपगमनेङ्गिनीमरणभक्तप्रत्याख्यानभेदात् त्रिविधमभ्युद्यतमरणम्, द्वे अप्येते श्रेयसी । अतः कतरदनयोः प्रतिपत्तव्य-
मिति चिन्तयति । स्वयमेव सातिशयश्रुतज्ञानोपयोगाद्दीर्घायुष्कालं ज्ञात्वा सातिशयमाचार्यं वान्यं पृष्ट्वा बहुशेषमवबु-
ध्याऽक्षीणजङ्घाबलश्चेदभ्युद्यतविहारं प्रतिपद्यते, क्षीणजङ्घाबलश्चेत् वृद्धवासमध्यास्ते । स्तोकमायुश्चेत् पादपोपगमना-
दीनामेकतमं मरणं प्रतिपद्यते इति गतमव्यवच्छित्तिकरणद्वारम् ॥ अभ्युद्यतविहारस्याचार्योपाध्यायप्रवर्त्तकस्थविरगणा-
वच्छेदकाः प्रायोऽधिकारिणो भवन्ति । ते च जिनकल्पं प्रतिपित्सवः तुलनार्थमित्थं विधिं कुर्वन्ति—यद्याचार्यो जिन-
कल्पं प्रतिपित्सुस्तदान्याचार्ये परिमितकालीनं गणनिक्षेपं करोति । एवमुपाध्यायादयोऽप्यात्मनस्तुल्यगुणे स्वकीयं स्थान-
मित्वरकालं निक्षिपति । ननु किमर्थमसावित्वरं गणादिनिक्षेपं करोति न यावज्जीवमिति चेत् ? उच्यते—राधावेधस-
दृशं गणानुपालनं दुष्करमतो द्रष्टव्यमेतेऽभिनवाचार्यादयः किमस्य गणादेरनुपालनं कर्त्तुं यथावत् समर्था न वा, सम-
र्थाश्चेत् जिनकल्पं प्रतिपद्यते असमर्थाश्चेत् न यतस्तथाविधयोग्याभावे जिनकल्पानुपालनात् सूत्रोक्तनीत्या गणाद्यनुपालनं
श्रेष्ठतरं समस्ति, बहुतरनिर्जरालाभकारणत्वात् । न हि बहुगुणपरित्यागेन स्वल्पगुणोपादानं कर्त्तुं विदुषामुचितम् प्रतिष्ठि-
तकार्यारम्भत्वात्तेषामित्यभिसन्धाय भगवानित्वरं गणादिनिक्षेपं करोति । तदुक्तमाराध्यपादैः श्रीमद्धरिभद्रसूरिभिः पञ्च-

वस्तुके—“पिच्छामु ताव एए केरिसगा होन्तिमंस्स ठ्ठाणस्स । जोग्गा ण वि पाएण निव्वहणं दुक्करं होइ ॥ १ ॥ न य बहुगुणचाएणं थोव-गुणपसाहणं बुहजणाणं । इट्ठं कयाइ कज्जं कुसला सुपइट्ठियारंभा ॥ २ ॥” इत्युक्तं तुलनाद्वारम् ॥ अथोपकरणद्वारमुच्यते—यावज्जिनकल्पप्रायोग्यमन्यत् शुद्धैषणायुक्तं प्रमाणोपेतवस्त्राद्युपधिं नोत्पादयति तावद्यथाकृतमेव गृह्णाति । स्वकल्पप्रायोग्ये उपकरणे लब्धे सति प्राक्तनमुपकरणं व्युत्सृजतीत्युक्तमुपकरणद्वारम् ॥

अथ भावनाद्वारमुच्यते—जिनकल्पं प्रतिपित्सुरात्मानं भावनाभिः सम्यग्भावयति । ननु सर्वेऽपि साधवः भावितात्मान एव भवन्त्यतः किं पुनः भावयितव्यमिति चेत्? उच्यते—यद्यपि सर्वैः साधुभिः विविधैः प्रकारैरिन्द्रियकषाययोगा जितास्तथापि जिनकल्पं प्रतिपत्तुकामेनेहामुष्मिकापायपरिभावनादिना तथेन्द्रियाणां जयः कर्त्तव्यः यथेष्टानिष्टविषयेषूपागतेष्वपि रागद्वेषोत्पत्तिर्नैव जायते, कषायाणामपि तथा जयः कर्त्तव्यो यथा दुर्वचनादिश्रवणरूपं बाह्यं कारणमवाप्यापि तेषामुदय एव न भवति । मनःप्रभृतियोगानामपि जये तथा यतितव्यं यथा तेषामार्त्तध्यानादिकं दुष्प्रणिधानमुदयमेव नासादयति । ननु योगेन्द्रियाणि न जेतव्यानि तेषां कषायरहितानां दुःखहेतुत्वाभावादिति चेत्? अत्रोच्यते, योगेन्द्रियैर्विना कषायाणामुत्पत्तिरेव न भवति यतस्तैः सह कषायाणामविनाभावो वर्त्तते, तेन कषायजयार्थं तज्जय आवश्यक एवेति । ननु भावनाभावितान्तरात्मनः के गुणा भवन्तीति चेत्? सावधानीभूय शृणु—तपोभावनाभावितस्य परिश्रमजयो भवति, चतुर्थादितपसा न परिश्राम्यतीत्यर्थः । सत्त्वभावनाभावितात्मा निर्भीको भवति । एकत्वभावनाभावितस्यैक एवाहमिति बुद्ध्या लघुभावो भवति । श्रुतभावनाभावितस्य तपो भवति, तदुक्तं—“न वि अत्थि न वि होही सज्झायसमं

तवो कम्मं"। किञ्च श्रुतभावनां भावयन्नन्येशामपि श्रद्धां जनयति, यथा वयमपि कदैवं विदधामः, पौरुष्यादिकालमानमपि श्रुतपरावर्त्तनानुसारेण स्वयमेवोच्छ्वासादिकालकलनतो जानाति। धृतिभावनाभावितः स्वजनादिषु निर्म्ममो भवति। तत आत्मा भावनया भावनीयः। सा च द्रव्यभावभेदाद्विविधा भवति। तत्र द्रव्यभावना नानाविधाकलाभ्यासः, यथा धानुष्कः प्रथमं स्थूलद्रव्यवेधं करोति, ततः क्रमेण सूक्ष्मं सूक्ष्मतरं सूक्ष्मतमं यावत् स्वरेणापि लक्ष्यस्य वेधं करोति। तथाऽश्वः शीघ्रं शीघ्रतरं धावमानः शिक्षाविशेषात् महदपि गर्त्तादिकं लङ्घयति, गजो वा शिक्ष्यमाणः प्रथमं काष्ठानि ततः क्षुल्लकान् पाषाणान् ततो गोलिकां तदनु बदराणि तदनन्तरं सिद्धार्थानप्यभ्यासातिशयाद्गृह्णाति, प्लवको वा प्रथमं वंशेन विलग्नः सन् प्लवते ततः पश्चादभ्यस्यन्नाकाशेऽपि तानि करणानि करोति। एताः सर्वा अपि द्रव्यभावना उक्ताः। भावतः संक्लिष्टासंक्लिष्टभेदात् द्विधा भावना। तत्राप्रशस्तभावनायाः परित्यागः कर्त्तव्यः। प्रशस्तेऽपि वस्तुनि परित्यागो घटते, जिनकल्पिकानां तत्र गुणा भवन्ति। यथाऽऽचार्यादीनामवर्णभाषणश्रवणे औदासीन्यमवलम्बमानस्याप्यस्य गुण एव भवति, न पुनः स्थविरकल्पिकस्येव यथाशक्ति तन्निवारणमकुर्वतो दोष इति। कान्दर्पिकीदैवकिल्बिष्याभियोग्यासुरीसम्मोहीभेदादप्रशस्तभावना पञ्चधा भवति। तत्स्वरूपं बृहत्कल्पभाष्यतोऽवसेयम्। इत्थं जिनकल्पं प्रतिपद्यमानस्तपःप्रभृतिभिर्भावनाभिस्तुलनां करोति। तत्र तपोभावनोच्यते—येन यत्पौरुष्यादिकं तपः सात्मीयभावं नानीतं तेन तत्तपः सात्मीयभावमानयनार्थं त्रिवारं कर्त्तव्यम्। यथा प्रथमं पौरुषीं वारत्रयासेवनेन सात्मीयभावमानीय ततः पूरिमार्द्धं तथैवासेव्य सात्मीयभावमानयति। एवमेकाशनकनिर्विकृतिकादिष्वपि बोध्यम्। अत्र यथा कश्चित् गिरिनदीं तरन् परतटे चिह्नं करोति

यथाऽमुकस्मिन् वृक्षाद्युपलक्षिते प्रदेशे मया गन्तव्यमिति स च तरन् तीक्ष्णेनोदकवेगेनापह्रीयते, ततो व्यावृत्य भूय उत्तरति भूयोऽप्यपह्रीयते, ततस्तथैवोत्तरति, एवं यावत् सकलामपि गिरिनदीमुत्तरीतुं न शक्नोति तावत्तदुत्तरणाभ्यासं न मुञ्चति, एवमयमपि क्षुत्परीषहजयार्थं यावद्विवक्षितं तपः सात्मीयभावं नायाति तावत्तदभ्यासं न मुञ्चति । एवमेकैकं तपस्तावत् करोति यथा तेन तपसा क्रियमाणेनापि विहितानुष्ठानस्य हानिर्न भवति । यदि कथञ्चिदनेषणीयकरणादिरूपो देवादिकृतोपसर्गः षण्मासीं यावद्भवेत्तदापि षण्मासान् यावदुपोषित एवास्ते न पुनरनेषणीयमाहारं गृह्णाति । क्रियमाणेन तपसाऽल्पाहारसद्भावेऽपि नेन्द्रियाणि विषयेषु धावन्ति, न क्लाम्यन्ति, न च स्निग्धमधुरेष्वशनादिषु सज्जीभवन्ति, तेषु परिभोगाभावेनादराभावात् । तपसेन्द्रियाणि दान्तानि भवन्ति, तथा करोति यथा ज्ञानादिषु समाधिरुत्पद्यते इत्युक्ता तपोभावना । अथ सत्त्वभावनोच्यते—राजप्रव्रजितादयो ये पूर्वं गृहवासे वीरचर्यादिना रात्रौ निर्गता आकस्मिकं भयसहितस्करगोपादिसम्बन्धिषु सहेतुकं च घोरे संग्रामे सात्त्विकतया प्रविष्टा विषोढवन्तः, तेऽपि जिनकल्पं प्रतिपित्सवः सत्त्वभावनयात्मानमवश्यमेव भावयन्ति । कथमिति चेत्? स्थविरकल्पिकानां यत् पार्श्वतः उत्तानकं त्वग्वर्तनं वा कारणे त्रिषु यामेषु शयनकारणाभावे तु तृतीये प्रहरे कल्पते तत्सर्वं शनैः शनैः जयति, उपाश्रयादिषु यन्मूषकादिभयं सम्भवति तदपि जयति । सत्त्वभावनायां पञ्च प्रतिमा भवन्ति, तत्र प्रथमा प्रतिमा उपाश्रये, द्वितीया उपाश्रयात् बहिः, तृतीया चतुष्के, चतुर्थी शून्यगृहे, पञ्चमी स्मशाने । तत्र प्रथमा प्रतिमाऽपरिभोग्ये गम्भीरे सान्धकारे उपाश्रयसत्केऽपवरके वा कोष्टके वाऽलिन्दके वा प्रसुप्तेषु शेषसाधुषु निद्रां त्यक्त्वा ध्यानार्थं

कायोत्सर्गं तिष्ठता भवति । तस्यां स तथा भयं जयति यथा निशाचरैः मूषकमार्जारादिभिः स्पृष्टस्य वादितस्य वा सहसा भयोद्रेकजनितरोमोद्धर्षः पलायनं वा न जायत इत्युक्ता प्रथमा प्रतिमा । शेषप्रतिमाचतुष्केऽप्येवमेव बोध्यम्, नवरं यानि भयादीनि प्रथमप्रतिमायामुक्तानि तानि तस्कराऽऽरक्षकश्वापदादिभयसहितानि द्वितीयप्रतिमायां मन्तव्यानि । शेषासु तिसृषु तानि सविशेषतराणि तथा दिव्यमानुषतैरश्चोपसर्गरूपाणि च सम्यग्जयतीति यावत् सत्त्वभावनया भाविता-त्मा दिवा रात्रौ वा भीमरूपैः देवैर्भापितोऽप्येष सकलमपि जिनकल्पभारं निर्भयः सन् वहतीत्युक्ता सत्त्वभावना ॥ अथ सूत्रभावनोच्यते—सूत्रं तु स्वनामवदहीनाक्षरमनधिकाक्षरमव्याविद्धाक्षरादिगुणोपेतं चाधीतमेव भवति तथापि सूत्रप-रावर्तनानुसारेणैवोच्छ्वासप्राणस्तोकलवमुहूर्तपौरुषीदिवसरात्र्यादिकं कालं सम्यक् कलयति । एतदुक्तं भवति—मेघादिना-च्छादितेऽप्युभयकालं क्रियाणां प्रारम्भपरिसमाप्तिरूपं दिव्याद्युपसर्गे दिवसरजन्यादिव्यत्ययकरणेऽपि तद्विभागं प्रति-लेखनावश्यककरणकालभिक्षाविहारकालं च सम्यग् जानाति । पौरुष्यादिकालविषयोऽस्य सूर्यादिच्छायायत्तः पराधीनो न भवति । सूत्रपरावर्त्तनया भवति चित्तस्यैकाग्रता विपुला च निर्जरा एवं श्रुतभावनयाऽऽत्मानं भावयन् ज्ञानं दर्शनं तपःप्रधानं संयमं च सम्यक् परिणामयतीत्युक्ता सूत्रभावना ॥ अथैकत्वभावनोच्यते—यद्यपि साधुभिः पूर्वं गृहवासकाल-भाविनं कलत्रपुत्रादिस्वजनसम्बन्धि ममत्वं परित्यक्तं तथाऽप्याचार्यादिविषयं ममत्वं प्रव्रज्याप्रतिपत्तिकाले संजायते, न च स्थविरकल्पिकानां तत्त्याज्यं, भक्तिहेतुत्वात्, जिनकल्पिकानां तु तदपि त्याज्यम्, तथा सस्निग्धावलोकनानि, ये च तैः सहालापास्तान्, परस्परभक्तपानदानग्रहणाद्युपकारं, सूत्रार्थादिप्रतिपृच्छां, प्रतिपृच्छया सहितं परिहासं, पूर्व-

प्रवृत्तां परस्परवार्तां च सर्वं परिजहाति । तत आहारे उपधौ देहे च न ममत्वं करोति । पूर्वं छिन्नममत्वः सन् सर्वेऽपि जीवा अनन्तशः सर्वजन्तूनां स्वजनभावेन शत्रुभावेन च संजाता अतः कोऽत्र स्वजनः को वा पर इति भावनया त्रुटितप्रेमबन्धः स जिनकल्पप्रतिपत्त्यनन्तरं स्वाभाविकान् वैक्रियशक्त्या देवनिर्मितान् वा स्वजनान् व्यापाद्यमानानपि दृष्ट्वा ध्यानात् पुष्पचूलवत् न चलति । पुष्पचूलदृष्टान्तश्चायम्–पुष्पपुरे नगरे पुष्पकेतुराजा पुष्पवतीदेवी पुत्रपुत्रीरूपं युगलं च देव्याः प्रसूतं पुत्रस्य पुष्पचूलः पुत्र्याः पुष्पचूला इत्यभिधानं कृतं तयोः सह वर्द्धितयोरतीवानुरागो वर्त्तते । क्रमेण पुष्पचूलो राजा जातः । पुष्पचूला च गृहजामात्रे दत्ता । सा च भर्त्रा समं केवलं रात्रौ मिलति, सकलं दिवसं भ्रात्रा सहैव तिष्ठति । अन्यदा च पुष्पचूलः प्रव्रजितः, तदनुरागेण पुष्पचूलाऽपि प्रव्रजिता । पुष्पचूलश्च जिनकल्पं प्रतिपित्सुरेकत्वभावनां भावयितुं लग्नः, तत्परीक्षार्थं देवेनोपसर्गे क्रियमाणे पुष्पचूलां कृत्वा विटैः तत्सन्मुखं घर्षणं कर्त्तुं प्रारब्धम्, तया क्रन्दन्त्या चोक्तं–“भो आर्य, मामयं हरत्यतः शरणमस्तु । स च भगवान् व्यवच्छिन्नस्नेहबन्धन ‘एकोऽहं नास्ति मे कश्चन न चाहमपि कस्यचित्’ इत्येकत्वभावनयात्मानं भावयति । देवः स्वस्थानं गतः” एवमेकत्वभावनयात्मा भावयितव्यः । एकत्वभावनया भावितात्मा कामभोगेषु शरीरे वा निःस्पृहः सन् प्रधानयोगसाधनं जिनकल्पपरिकर्म्माराधयतीत्युक्तैकत्वभावनेति ॥ अथ बलभावनोच्यते–बलं द्विविधं शारीरं भावबलं च । तत्र भावोऽभिष्वङ्गः स तु प्रशस्ताप्रशस्तभेदात् द्विधा भवति । अप्रशस्तोऽपत्यकलत्रादिस्नेहजनितो रागः । आचार्योपाध्यायादिषु गुणबहुमानप्रत्ययो रागः प्रशस्तभावः । मानसावष्टम्भेनासौ द्विविधस्यापि भावस्य व्युत्सर्गं करोति । शारीरबलमपि शेषजनापेक्षया जिनकल्पा-

ईस्यातिशायिकं भवति । ननु तपोज्ञानादिभिः भावनाभिः भावयतोऽस्य कृशतरं शरीरबलं भवति, ततः कथमुच्यते शेषजनापेक्षयास्यातिशायिकत्वमिति चेत्? सत्यम्, अस्माभिरपि 'तपोज्ञानादिभावनायुक्तस्य शरीरबलं हीयत' इत्येवं मन्यते, परमसौ सम्यग्धृतिबलेनात्मानं तथाभावयतीत्युच्यते । बलभावनाभावितः परीषहचमूमुपसर्गांश्च निरुत्सुको निष्प्रकम्पमनाः सत्त्वसम्पन्नः सन् सम्पूर्णमनोरथो जयति । तपःप्रभृतयः सर्वा अप्येता भावना धृतिबलपुरस्सरा भवन्ति, न च धृतिबलमन्तरेण तपःकरणाद्यनुगुणभावना भावयितुं शक्यते । न विद्यते जगति तत्कार्यं यद्धृतिमान् सात्त्विकः पुरुषो न साधयति, 'सर्वं सत्त्वे प्रतिष्ठितमिति' वचनादुक्ता बलभावना । एवं पञ्चभिः भावनाभिः भावितात्मा जिनकल्पिकस्य प्रतिरूपो भूत्वा गच्छ एव सन् द्विविधं परिकर्म तृतीयपौरुष्यां भिक्षागमनं च करोति । रूक्षं चाहारं गृह्णाति, एषणा चाभिग्रहयुक्ता भवति । तथा गुरुत्वादिममत्वव्यवच्छेदेनावश्यकयोगानां यथाकालमेव करणेन शुद्धिः, शय्यासंस्तारकस्य विशोधनं तथा प्राक्तनस्योपधेः गणस्य विकृतेश्च विवेकस्तदा तेन कर्त्तव्यः । तीर्थाव्यवच्छित्तिकरणानन्तरं धीरपुरुषाराधितमत्यन्तदुरनुचरमायतौ नियमेन पथ्यमेकान्तहितं जिनकल्पिकविहारमुपैति । द्विविधं परिकर्म भवति, तद्यथा—पाणिपरिकर्म प्रतिग्रहपरिकर्म च । यद्वा सचेलपरिकर्म अचेलपरिकर्म च । तत्र यः पाणिपात्रधारकः प्रतिग्रहधारको वा सचेलको वाऽचेलको वा भविता स पाणिपात्रादिनात्मानं पूर्वमेव भावयति । यद्वा द्विविधं परिकर्म आहारे उपधौ च । तत्राहारं तृतीयपौरुष्यामवगाढायामलेपकृतं तत्रापि निष्पाववल्लचणककुल्माषादिकमन्तं तदेव स्नेहरहितं रब्बादिकं वा रूक्षं च गृह्णाति । तथा सप्तानां पिण्डैषणानां मध्यादाद्ययोः द्वयोः सर्वथाऽस्वीकारः, उद्धृताल्पलेपावगृहीतप्रगृहीतोज्झितधर्म्मिकासु

पञ्चस्वभिग्रहः । तत्राप्यन्यतमयैकया भक्तमन्यतमयैकया च पानकमिति नियम्य शेषाभिः तिसृभिस्तद्दिवसमग्रहणमिति । उपधौ तु वस्त्रपात्रयोः प्रतिमाचतुष्टयं यद्बृहत्कल्पपीठिकायामुक्तं तत्राद्ययोर्द्वयोः वर्जनमुत्तरयोः द्वयोरेव ग्रहणम् । तत्राप्यन्यतरस्यामभिग्रहः । तथोत्कटुकासनस्याभ्यासं करोति । तथा पृथ्वीशिलासु तथाविधेष्वन्येष्वस्थानेषूपविशेत् । जिनकल्पं प्रतिपन्नः पुनः उत्कटुकासन एव तिष्ठति । केचि'त्तूत्कटुको वा तिष्ठेदुपविशेद्वा' इति वदन्ति, साधूनामव्यवहितो नास्ति भूमिपरिभोगः 'सुद्धपुढवीए न निसिए' इति वचनात् । नास्ति च जिनकल्पिकानामौपग्राहिकोपधिः तदभावाच्च निषद्यापि नास्तीति गम्यते, ततोऽर्थादापन्नमुत्कटुक एव तिष्ठति । इत्थमात्मपरिकर्म कृत्वानुकूलेषु द्रव्यक्षेत्रकालभावेषु संघं मीलयित्वा तदभावे स्वकीयं गणं समाहूय तीर्थकरस्यान्तिके तदभावे गणधरसमीपे तदभावे चतुर्दशपूर्वधरान्तिके तदभावेऽभिन्नदशपूर्वधरसमीपे तस्याप्यभावे वटवृक्षस्याधः तदप्राप्तावशोकाश्वत्थवृक्षादीनामधस्ताज्जिनकल्पं प्रतिपद्यत इत्युक्तं वटवृक्ष इतिद्वारम् ॥

केन विधिना जिनकल्पं प्रतिपद्यत इत्युच्यते—आचार्यश्चेत्? स पूर्वमित्वरनिक्षिप्तगणं स्वशिष्यमाचार्यपदे स्थापयित्वा श्रमणसङ्घं क्षमयति । सामान्यसाधुश्चेत्? केवलं क्षमयति न कमपि स्थापयति । कं क्षमयतीतिचेत्? सकलमपि संघं तदभावे स्वकीयं गच्छं वालवृद्धाकुलं तत्रापि ये प्राग्विराधितास्तान् विशेषेण क्षमयति । कया रीत्या क्षमयतीति चेत्? उच्यते-यदि कञ्चित्प्रमादेन मया सुष्ठुपूर्वं न वर्त्तितं तद्भवतः निःशल्यो निष्कषायश्चाहं क्षमयामि । साधवोऽप्यानन्दाश्रुपातं कुर्वाणाः भूमिगतशीर्षाः यथार्हं सूरिभिः क्षामिताः सन्तः क्षमयन्ति । तथाकरणेन च निःशल्यता विनयश्च प्रयुक्तो भवति,

अन्यैरपीत्थं क्षामणपुरस्सरं सर्वं कर्त्तव्यमित्येवंरूपा मार्गदीपना कृता भवति, क्षमापनेन क्रोधाद्यपगमनतो लघुभाव उपजायते। क्षमिता मया सर्वसाधव इत ऊर्ध्वमेक एवासीत्यनुध्यानं भवति, शिष्येषु ममत्वस्य छिन्नत्वेन भूयस्तत्र प्रतिबन्धो न भवतीति क्षमापनायां गुणा उपजायन्ते। स्वपदस्थापिताचार्यसाध्वनुशास्तिर्यथा—भो! सबालवृद्ध एष गणस्तव समर्पितोऽनिर्विण्णः सन् स्मारणावारणादिना सम्यक्प्रपालयेः। न च परित्यक्तोऽहममीभिरित्यादि परिभावनीयम्, यतः एष एव शिष्याचार्यक्रमः यदव्यवच्छित्तिकारकं शिष्यं निष्पाद्य शक्तौ सत्यामभ्युद्यतविहारः प्रतिपत्तव्यः, त्वमपि शिष्यनिष्पादनादिकार्यं कृत्वा पर्यवसाने एवमेव कुर्याः। ये च तव बहुश्रुतपर्यायज्येष्ठादयो विनययोग्याः तेषु पूर्वप्रवृत्तं यथोचितं विनयं मा प्रमाद्य। यः साधुर्येन तपःस्वाध्यायवैयावृत्त्यादिना प्रकारेण निर्जरां प्रत्युपयुज्यते स तथा योजनीयः। तथा भो मुनयोऽयमस्मदपेक्षयाऽवमः समरात्निकोऽल्पश्रुतो वाऽतः किमर्थमस्याज्ञानिर्देशं कुर्महे इति मा यूयममुं परिभवत, यत एष युष्माकं साम्प्रतमस्मत्स्थानीयत्वात् गुरुतरगुणाधिकत्वाच्च विशेषतः पूज्यः, न पुनरवज्ञातुमुचितः। इत्थमुभयेषामनुशास्तिं दत्वा किं करोतीत्युच्यते—यथा पक्षी प्राक्तनस्थाननिरपेक्षः स्थानान्तरं गच्छति, एवमयमपि भगवान् गच्छनिरपेक्षः सभाण्डकः मासकल्पयोग्यं क्षेत्रं तृतीयपौरुष्यां व्रजति, तृतीयायां पौरुष्यामेवास्य भगवतो विहारो नान्यासु पौरुषीषु, यत्र चतुर्थी पौरुषी भवति तत्र नियमेन तिष्ठति। साधवोऽपि मेरुकन्दरातः सिंहवत् सुखसेवनीयाद्गच्छात् निश्चेले सचेले वा तस्मिन् भगवति निर्गते सति कियन्तं भूभागं यावदनुगमनं विधाय ततश्चक्षुर्विषयातिक्रान्ते—अहोऽयं भगवान् स्थविरकल्पविहारं विहायातिदुष्करं जिनकल्पविहारमभ्युपैतीति भावनया हृष्टाः सन्तः स्ववसतिमायान्ति। ततः स

भगवान् विघ्नाभावेन मासकल्पयोग्यं क्षेत्रं विज्ञाय तत्र गत्वा स्वकल्पं प्रतिपालयतीत्युक्तं संक्षेपतः षष्ठं विहारद्वारम्॥

अथ समाचारीद्वारमुच्यते—समाचरणं समाचारः शिष्टजनाचरितः क्रियाकलापः समाचार एव समाचार्यः स्त्रीविवक्षायां ईप् प्रत्यये यकारलोपे च समाचारी। सा त्रिधा—ओघसमाचारी दशधासमाचारी पदविभागसमाचारी च। तत्र ओघः—सामान्यं तद्विषया समाचारी सामान्यतः संक्षेपाभिधानरूपा, सा चौघनिर्युक्त्युक्ता सर्वा ज्ञेया। तत्र प्रत्युपेक्षणादिकः सामान्येन सर्वोऽपि मुनीनामाचारः प्रतिपादितः। तथा जितकल्पनिशीथादिषु छेदग्रन्थेषूक्ता या समाचारी सा पदविभागसमाचारी। इह च तथाविधश्रुतपरिज्ञानशक्तिविकलानां साम्प्रतकालप्रव्रजितानामायुष्कादिह्रासमपेक्ष्य नवमपूर्वादाचाराभिधानात्तृतीयवस्तुनः विंशतितमप्राभृतात् तत्राप्योघप्राभृतप्राभृतात् निर्व्यूढौघसमाचारी। पदविभागसमाचार्यपि नवमपूर्वादेव निर्व्यूढेति। दशविधा चक्रवालसमाचार्युच्यते—चक्रवत् प्रतिपदं भ्रमतीति चक्रवालस्तद्विषया समाचारी चक्रवालसमाचारी तत्प्रतिपादिके चेमे आवश्यकनिर्युक्तिस्थे गाथे—"इच्छा १ मिच्छा २ तहक्कारो ३ आवसिया य ४ निसिहिया ५। आपुच्छणा य ६ पडिपुच्छ ७ छंदणा य ८ निमन्तणा ९॥ १॥ उवसंपया य १० काले सामाचारी भवे दसविहाओ। एतेसिं तु पयाणं पत्तेयं परूवणं वोच्छं॥ २॥" इति। तत्रैषणमिच्छा करणं कारः, कारशब्दः प्रत्येकमभिसम्बध्यते, इच्छया बलाभियोगमन्तरेण करणं इच्छाकारः। एतदुक्तं भवति—कारणाभावे तु साधूनामभ्यर्थनैव न कल्पते, स्वयं ग्लानादौ व्यापृते सति समुत्पन्ने कारणे तु रत्नाधिकोऽप्यवमरात्निकं साधुमभ्यर्थयेत्। अभ्यर्थमानेन चेच्छकार एव सर्वत्र प्रयोक्तव्यः। तथाहि—इच्छाकारेण ममेदं कुर्वित्येवमभ्यर्थनैव कर्त्तव्या, न बलाभियोगपूर्विकया ममेदं कुर्विति। ननु सर्वत्र रत्नाधिकानां कथमिच्छा-

कारः प्रयोक्तव्य इति चेत् ? उच्यते, निर्ग्रन्थानां शैक्षेऽप्याज्ञावलाभियोगानां प्रतिषेधात्, किं पुनः रत्नाधिके । क्वचित् व्यक्तिविशेषे वलाभियोगोऽपि युज्यते । कारणजातेऽनभ्यर्थितोऽपि यः चिकीर्षितं कार्यं कर्तुकामस्तेनापीच्छकारः प्रयोक्तव्य इति ॥ १ ॥ तथा मिथ्या वितथमनृतमिति पर्यायाः, मिथ्याकरणं मिथ्याकारः मिथ्याक्रियेत्यर्थः । संयमयोगवितथाचरणे विदितजिनप्रवचनसारा मुनयस्तत्क्रियायाः वैतथ्यप्रदर्शनायापुनःकरणतया मिथ्याकारं मिथ्यादुष्कृतं विदधते मिथ्याक्रियेयमिति । संयमयोगविपयायां च क्रियायां प्रवृत्तायां वितथासेवने मिथ्यादुष्कृतं दोषापनयनाय समर्थं भवति । पुनः पुनः तदेवासेवने तु न दोषापनयनं भवति, प्रत्युत मृषावादो माया च भवति तदुक्तमावश्यकचूर्णौ—"जं पडुच्च मिच्छादुक्कडं उप्पन्नं तं चेव निसेवति पुणो पावं तत्थ पच्चक्खमुसावादो मायानियडीपसंगो य पुणो पुणो करेंतस्स" इति ॥२॥ तथाकरणं तथाकारः, स च गुरोः वाचनादानादौ पृच्छनानन्तरमुत्तरदाने तथा समाचारीशिक्षणादौ च यथा यूयं वदथ तथैवैतदित्यर्थसूचकस्तथा शब्दः प्रयोक्तव्यः ॥ ३ ॥ तथा अवश्यकर्त्तव्यकरणप्रवृत्तस्य निर्गमनक्रिया पापकरणनिषेधक्रियाऽवश्यकर्मेति वाऽऽवश्यकक्रियेत्येकार्थिका अवश्यकर्त्तव्यस्य क्रिया आवश्यकी । सा च ज्ञानादित्रयहेतुभूते भिक्षाटनादिकारणे सति वसतेर्निर्गच्छता साधुनाऽवश्यं विधेयेति ॥ ४ ॥ तथा निषेधेन—असंवृतगात्रचेष्टानिवारणेन निर्वृत्ता तत्प्रयोजना वा या शय्यास्थानादिप्रवेशनक्रिया सा नैषेधिकी । तत्र शय्या—वसतिस्तस्यां स्थानं—अवस्थानं तच्च प्रस्तावात् प्रवेशलक्षणमादिशब्दात् चैत्यप्रवेशादिपरिग्रहः, प्रतिषिद्धनिसेवननिवृत्तः वहिर्देशाद्वसत्यादौ प्रविशन् नैषेधिकीं विदध्यादिति भावः ॥ ५ ॥ तथा आपृच्छनमापृच्छा, सा विहारभूमिगमनादिषु प्रयोजनेषु गुरोः कार्या, भगवन् ! अहमिदं करोमीति ॥ ६ ॥ तथा

प्रतिपृच्छा–प्रतिप्रश्नः सा च प्राग्नियुक्तेनापि करणकाले निषिद्धेन वा प्रयोजनतः कर्तुकामेन द्वौ त्रीणि वा वारान् पृच्छा कार्या ॥ ७ ॥ तथा छन्दना–पूर्वगृहीतेनाशनादिना शेषसाधुभ्यः आमन्त्रणा कर्त्तव्या यथा मयेदमशनाद्यानीतं यदि कस्यचिदुपयुज्यते ततोऽसाविच्छाकारेण ग्रहणं करोत्विति ॥ ८ ॥ तथा निमन्त्रणाऽगृहीतेनाशनादिनाऽहं भवदर्थमशनाद्यानयामीत्येवंरूपा ॥ ९ ॥ तथोपसम्पदनमुपसम्पत् ज्ञानादिप्रयोजनयापरगुरुकुलादपरस्य विशिष्टश्रुतादियुक्तस्य गुरोः समीपमागमनमिति । सा च त्रिधा–ज्ञानविषया दर्शनविषया चारित्रविषया चेति । तत्र ज्ञानदर्शनयोः सम्बन्धिनी त्रिधा भवति, तद्यथा–वर्तना सन्धना ग्रहणं चैतदर्थं हि उपसम्पद्यत इति । तत्र पूर्वगृहीतस्यैवास्थिरस्य सूत्रादेर्गुणनं वर्त्तना, तस्यैव सूत्रादेः प्रदेशान्तरे विस्मृतस्य योजना सन्धना, तस्यैव सूत्रादेः प्रथमतयाऽऽदानं ग्रहणमेतत्रितयमपि सूत्रार्थतदुभयविषयमवगन्तव्यमेवं ज्ञाने दर्शने च नव भेदा विज्ञेयाः, नवरं दर्शने दर्शनप्रभावकशास्त्रविषये वाच्याः । तथा चारित्रविषयापि वैयावृत्त्यक्षपणविषयभेदादुपसम्पद् द्विधा भवति । तत्र चारित्रार्थं कश्चिदन्यगच्छसत्काचार्याय वैयावृत्त्यकरत्वं प्रतिपद्यते । स च कालतः कश्चिदित्वरकालं कश्चिद्यावज्जीवमिति । ननु किमर्थमत्रोपसम्पदा कार्या स्वगच्छ एवायं किमिति वैयावृत्त्यं न करोतीति चेत्? सत्यम्, स्वगच्छे वैयावृत्त्यादिकरणक्षमा तथाविधा निर्वाहादिसामग्री सम्यक् नास्ति ततः परगच्छोपसम्पदं करोतीति । तथा क्षपणविषयैवं भवति, यथा कश्चित्क्षपणार्थमुपसम्पद्यते, स च क्षपको द्विविधः–इत्वरो यावत्कथिकश्च, यावत्कथिक उत्तरकालेऽनशनकर्त्ता, इत्वरस्तु द्विविधः–विकृष्टक्षपकोऽविकृष्टक्षपकश्च । तत्राष्टमदशमादिकर्ता विकृष्टक्षपकः, पश्चान्तः तपःकारी त्वविकृष्टक्षपक इत्युक्ता साधुविषयोपसम्पत् । यत्पुनरवस्थाननि-

मिसं गृहिणामनुज्ञापनं सा गृहस्थविषयोपसम्पद् भवति ॥ १० ॥ तत्र जिनकल्पिकानामावश्यकीनैषेधिकीमिथ्याकारापृच्छागृहस्थविषयोपसम्पद्रूपाः पञ्च समाचार्यो भवन्ति । शेषाः प्रयोजनाभावात् न भवन्ति । मतान्तरेणावश्यकीं नैषेधिकीं गृहस्थविषयामुपसम्पदां च मुक्त्वा शेषाः सप्त जिनकल्पिकानां न भवन्ति, तद्विषयकप्रयोजनाभावादिति । यद्वा चक्रवाले प्रत्युपेक्षणादौ नित्यकर्मणि जिनकल्पिकादेर्या सामाचारी योग्या सा सर्वत्र सामाचारीद्वारे वक्तव्या । अथ जिनकल्पिकानां श्रुतादिविषया विशेषसमाचारी निरूप्यते—तत्र द्वाराणि सप्तविंशतिर्भवन्ति, तद्यथा—श्रुतम् १, संहननम् २, उपसर्गः ३, आतङ्को ४, वेदना ५, कति जनाः ६, स्थण्डिलम् ७, वसतिः ८, कियच्चिरम् ९, उच्चारः १०, प्रस्रवणम् ११, अवकाशः १२, तृणफलकम् १३, संरक्षणभावः १४, संस्थापनम् १५, प्राभृतिका १६, अग्निः १७, दीपः १८, अवधानम् १९, वत्स्यथ कति जनाः २०, भिक्षाचर्या २१, पानकम् २२, लेपालेपः २३, अलेपः २४, आचाम्लं २५, प्रतिमा २६, मासकल्पश्चेति २७। तत्र जघन्येन यः प्रत्याख्यानप्रवादाख्यस्य नवमपूर्वस्याचाराख्यस्य तृतीयवस्तु जानाति स एव जिनकल्पं प्रतिपद्यते, तदधीत एव कालज्ञानभावात्तदर्वाक्पर्यायस्तु न प्रतिपद्यते । उत्कृष्टतस्तु भिन्नदशपूर्वधरः, अभिन्नदशपूर्वधरस्तु न जिनकल्पं प्रतिपद्यते, यतोऽमोघवचनत्वेन प्रवचनप्रभावनापरोपकारादिद्वारेणैव बहुतरां निर्जरामासादयतीत्युक्तं श्रुतद्वारम् ॥ १ ॥ तथा जिनकल्पिकाः प्रथमसंहननिन एव भवन्ति, अत एवाङ्गीकृतनिर्वाहक्षममनःप्रणिधानरूपया धृत्या वज्रकुट्टिममना भगवन्तो भवन्तीत्युक्तं द्वितीयं द्वारम् ॥ २ ॥ यद्युपसर्गा आतङ्का रोगाश्चोत्पद्यन्ते तदा सम्यग् विषहन्ते । ननु रोगातङ्कयोः कः प्रतिविशेष इति चेत्? कालसहाः रोगाः, सद्योपघातिन आतङ्का

इत्युक्ते तृतीयचतुर्थद्वारे ॥ ३ ॥ ४ ॥ वेदना द्विविधा आभ्युपगमिकी औपशमिकी च । तत्राद्या प्रतिदिनं लोचतापनतपः-प्रभृत्युद्भवा। द्वितीया जराविपाकोद्भवा, जरा प्रतीता, विपाकः कर्मणामुदयस्तदुत्थेत्युक्तं वेदनाद्वारम् ॥ ५ ॥ अयं भगवान् एक एव भवति, न द्वितीयः । कति जना इति द्वारमुक्तम् ॥ ६ ॥ पुरीषोत्सर्गं प्रश्रवणोत्सर्गं चानापातेऽसंलोके च स्थण्डिले करोति, न च निर्लेपयति, रूक्षाल्पाहारस्य कृतकत्वेनाल्पाभिन्नवर्चस्कत्वात्तथाकल्पत्वाच्च । तथा बहुदैवसिके उपसर्गेऽप्यापातादिदोषयुक्ते भूमिभागे कायिकीसंज्ञां च न करोति । तथा विहितशीतत्राणादिकार्यः वस्त्राण्यपि प्रागुक्ते एव स्थण्डिले परिष्ठापयतीत्युक्तं स्थण्डिलद्वारम् ॥ ७ ॥ तथामीषां भगवतां वसतिः निर्ममा निष्परिकर्मा च भवति, स्थविरकल्पिकानामेकां प्रमार्जनां मुक्त्वा एवमेव वसतिर्भवति । परिकर्म च साध्वर्थमुपलेपनादि। न चैते भगवन्तो धूल्यादिना विलानि स्थगयन्ति, न वा गवादिभिः खाद्यमानां भज्यमानां वा वसतिं निवारयन्ति, न च द्वाराणि पिदधति, न वाऽर्गलां दधति। स्थविरकल्पिकाः पुष्टालम्बने वसतेः परिकर्म कुर्वन्त्यपीत्युक्तं वसतिद्वारम् ॥८॥ याच्यमानायां वसतौ तदीयस्वामीत्थं भणति—कियच्चिरं कालमत्र वत्स्यथ । पुरीषप्रश्रवणादीन्यत्र प्रदेशे कुरुत, अत्र तु मा कुरुत । अस्मिन्नवकाशे आसीध्वं न चात्र। एतानि वा हस्तसंज्ञया निर्दिश्यमानानि तृणफलकानि गृह्णीध्वं मा एतानि। बहिर्निर्गच्छन्तो गवादीन् संरक्षत। क्षेत्रादौ गतानां व्याकुलानां वा पतंतीं वसतिं मोपेक्षध्वं किन्तु पुनः संस्काररूपा संस्थापना विधेया। एवमन्या वा स्वाध्यायनिषेधादिरूपां नियन्त्रणां करोति। एतादृशीं कियच्चिरादिद्वारोक्तां वसतिं मनसापि नेच्छन्ति, सूक्ष्मस्याप्यप्रीतिकरस्य परिहारिणोऽमी भगवन्त इत्युक्तानि कियच्चिरादीनि संस्थापनापर्यन्तानि सप्तद्वाराणि ॥१५॥ यस्यां वसतौ बलिः, अग्निः, प्रदीपस्तत्प्रकाशो वा विधीयते, यत्र तिष्ठत्सु सत्स्व-

गारिणो भणन्ति 'अस्माकं गृहे उपयोगं ददत,' तत्र च न वसन्तीत्युक्तानि प्राभृतिकाग्निदीपावधानद्वाराणि ॥१९॥ वसतिमनुज्ञापयन्तो यद्येते भण्यन्ते—'कति जना यूयं वत्स्यथ' तत्रापि न वसन्ति, यत एते भगवन्तः परस्य सूक्ष्मामप्यप्रीतिं नोत्पादयन्ति । तदुक्तं पञ्चवस्तुके—"सुहममपि हु अचियत्तं परिहरइ एसो परस्स नियमेणं । जं तेण तु सद्दाओ वज्जइ अन्नं पि तज्जणणिं ॥१॥" इत्युक्तं वत्स्यथ कति जना इति द्वारम् ॥२०॥ तृतीयस्यां पौरुष्यां प्रगृहीतयैषणयाऽऽहारकं पानकं च गृह्णन्ति, सा चाभिग्रहयुक्ता प्रागुक्तैवेत्यभिहिते भिक्षाचर्यापानकद्वारे ॥२१॥२२॥ अथ लेपालेपालेपाचाम्लद्वाराणि पञ्चवस्तुतः सवृत्तिकाभिस्त्रिभिः गाथाभिर्लिख्यते—"लेवालेवं ति इहं लेवाडेणं अलेवडं जं तु । अण्णेण असंमिस्सं दुगं पि इह होइ विण्णेअं ॥ १ ॥ अलेवं पयईए केवलगं पि हु न तस्सरूवं तु । अण्णे उ लेवकारी अलेवमिति सूरओ बिंति ॥२॥ आयंबिलमेअं पि हु अइसोसपुरीसभेअदोसाओ । उस्सग्गिअं तु किं पुण पयईए अणुगुणं जं से ॥ ३ ॥" वृत्तिः—'लेवालेव' मित्यत्राधिकारे । लेपवता व्यञ्जनादिना, अलेपवद् यदोदनादि, किमुक्तं भवति ? अन्येनासंमिश्रं वस्त्वन्तरेण । द्वितीयमप्यत्र भवति विज्ञेयं, भक्तं पानं चेति गाथार्थः ॥ १ ॥ अलेपद्वारविधिमाह— अलेपं, प्रकृत्या—स्वरूपेण, केवलमपि सत्, न तत्स्वरूपं, तु—लेपस्वरूपमेव, जगार्यायामवत्, अन्ये त्वलेपकारि—परिणामे अलेपमित्येवं, सूरयः—आचार्या ब्रुवते इति गाथार्थः ॥ २ ॥ आयामाम्लद्वारविधिमाह—आयामाम्लमेतदप्यलेपकारि, अतिशोषपुरीषभेददोषात्, वाय्वादिधातुभावेन, औत्सर्गिकमेवौदनरूपं, किं पुनः ? प्रकृतेः देहरूपाया अनुगुणं यद्वल्लादि, 'से' तस्येति गाथार्थः ॥ ३ ॥" इति । बृहत्कल्पवृत्त्यभिप्रायेण तु लेपालेपयोः मध्येऽलेपकृतमेव वल्लचणकादिकमाहारं सौवीरादिकं च पानीयं गृह्णाति । तदपि चाचाम्ले न लाति पुरीषभेदादिदोषसंभवात् ॥ २३ ॥ २४ ॥ २५ ॥ मासिक्यादिका भद्रमहाभद्रादिका च प्रतिमासौ न प्रतिपद्यते, यतोऽस्य भगवतः स्वक-

ल्पप्रतिपालनमेव विशेषाभिग्रह इत्युक्तं प्रतिमाद्वारम् ॥२६॥ जिनकल्पविषयकसूत्रार्थविशारदस्य संहननधृतियुक्तस्य मासकल्पस्थितिमनुपालयतो भगवतः साभिग्रहैषणा भवति। यस्मिन् ग्रामे नगरे वा जिनकल्पिको मासकल्पं करोति, तद्ग्रामं षड्भागी क्रियते प्रतिदिवसं चैकैकां वीथीमटति, यावत् षष्ठे दिवसे षष्ठीं वीथीं पर्यटति । ननु किमर्थं वीथीनां प्रकल्पनमिति चेत् ? तेषां तत्कल्पत्वात् । आधाकर्मादिवर्जनं बहुश्रुतबलेन भगवन्तः कुर्वन्ति । अधःकर्मादिसम्भवस्त्वेवम्—मलपटलजटिलं तपःशोषितवपुषं दृष्ट्वा काचित् श्राद्धिका परं संवेगमागता सती चिन्तयति—किं मे जीवितेन यदीदृशस्य महात्मनो भिक्षा न दीयते, नास्ति च तादृशं शोभनमन्नं यदहमलज्जिता सती दास्यामि । ततः सर्वप्रयत्नेनाहं द्वितीये दिवसे विपुलं भोजनं कृत्वा तुष्टमनसा दास्यामि । ततो भविष्यति मे महान् पुण्यलाभः । इत्थं विचिन्त्य द्वितीये दिवसे विपुलमशनादिभक्तमवगाहिमं चोपस्कृत्य तं भगवन्तं प्रतीक्ष्यमाणा तिष्ठति । तीर्थकरोपदिष्टज्ञानदर्शनचारित्रधरैस्तैः भगवद्भिस्तु सा वीथी परिहृता । प्रथमे दिवसे तद्भक्तमुपस्कृतमाधाकर्म, ततस्त्रीणि दिवसानि यावत् तद्गृहं पूतिर्भवति । इदमुक्तं भवति—यस्मिन् दिवसे जिनकल्पिकः प्रथमवीथ्यां पर्यटन् श्राद्धिकया दृष्टस्तदपेक्षया द्वितीये दिवसे तद्भक्तमाधाकर्म, तदनन्तरं त्रीणि दिवसानि पूतिकं भवति, त्रिषु पूतिदिनेषु तद्गृहे किमप्यन्यन्न कल्पते, चतुर्थे तु कल्पते । तदुक्तं बृहत्कल्पवृत्तौ—"त्रिषु पूतिदिनेषु तस्मिन् गृहेऽन्यदपि किञ्चिन्न कल्पते, यदा तु तृतीयकल्पो गतो भवति तदा कल्पते, कल्पशब्देनेह दिवस उच्यते" इति । अवगाहिमं दिनद्वयमपि क्षमत इति कृत्वा सा श्राद्धिका चिन्तयति—यदर्थमवगाहिमपाको मया कृतः स मुनिरद्य मम गृहाङ्गणं नागतोऽतः कल्ये तस्याहं दास्यामीदमवगाहिममिति विचिन्त्य तद्दानार्थं यदि स्थापयति तदा तृतीयेऽपि

दिवसे आधाकर्म्मैव भवति । यदि पुनः पाकदिवसे एव व्यवच्छिन्नभावनया तयात्मार्थीकृतं तदा भक्तवदवगाहिममपि मौलदिवसापेक्षया द्वितीये दिवसे अधःकर्म, तृतीयादिषु त्रिषु तद्गृहं पूतिकं भवति, षष्ठे तु दिवसे कल्पते । यदि तद्दिवसे नात्मार्थीकृतं तदा तृतीयेऽपि दिवसे तदधःकर्म, ततः त्रिषु पूतिकर्मेति कृत्वा न कल्पते, सप्तमे दिवसे तु तद्गृहं कल्पतेऽत एवासौ भूयः सप्तमे दिवसे तस्यां वीथ्यां पर्यटति । एकस्यां वसतावुत्कृष्टतः सप्त जिनकल्पिका वसन्ति । एकत्र वसन्तोऽपि न परस्परं संभाषणं कुर्वन्ति, अन्योऽन्यवीथीं च संत्यज्य यतन्ति, एकस्यां वीथ्यामेक एव प्रतिदिनमटतीत्युक्तं मासकल्पद्वारम् ॥ २७ ॥ तदुक्तौ चोक्तं समाचारीद्वारम् ॥

स्थितिद्वारे क्षेत्रद्वारम्, कालद्वारम्, चारित्रद्वारम्, तीर्थद्वारम्, पर्यायद्वारम्, आगमद्वारम्, वेदद्वारम्, कल्पद्वारम्, लिङ्गद्वारम्, लेश्याद्वारम्, ध्यानद्वारम्, गणनाद्वारम्, अभिग्रहद्वारम्, प्रव्रज्याद्वारम्, मुण्डापनद्वारम्, प्रायश्चित्तद्वारम्, कारणद्वारम्, निष्प्रतिकर्मद्वारम्, भिक्षापन्थद्वारमित्येकोनविंशतिर्द्वाराणि वक्तव्यानि । तत्र क्षेत्रद्वारे द्विधा मार्गणा, जन्मतः सद्भावतश्च । जन्मतो यत्र क्षेत्रेऽयं प्रथमत उत्पद्यते, सद्भावतस्तु यत्र जिनकल्पं प्रतिपद्यते प्रतिपन्नो वास्ति । तत्र जन्माश्रित्य पञ्चदशस्वपि कर्मभूमिषु भवति । सद्भावं चाश्रित्य पञ्चदशसु कर्म्मभूमिषु देवादिना संहरणतोऽकर्मभूमिष्वपि भवतीत्युक्तं क्षेत्रद्वारम् ॥ कालद्वारेऽवसर्पिण्यां जन्मतस्तृतीयचतुर्थारकयोः सद्भावतः तृतीयचतुर्थपञ्चमारकेषूत्सर्पिण्यां जन्मतो द्वितीयतृतीयचतुर्थारकेषु सद्भावतस्तृतीयचतुर्थारकयोः भवन्ति, द्वितीयारके जन्मतः सद्भावेऽपि तत्र कल्पप्रतिपत्तिः नास्ति, तीर्थसद्भाव एव तत्प्रतिपत्तेः । महाविदेहेषु चतुर्थारकप्रतिविभागे जन्मतः सद्भावतश्च भवति ।

प्रथमद्वितीयतृतीयारकप्रतिभागेषु देवकुरूत्तरकुरुहरिवर्षरम्यकवर्षहेमवतैरण्यवतेषु संहरणमपेक्ष्य सद्भावतो भवन्तीत्युक्तं कालद्वारम् ॥ चारित्रद्वारे सामायिके छेदोपस्थापनीये च संयमे वर्तमानो जिनकल्पं प्रतिपद्यते । तत्र मध्यमतीर्थकरविदेहतीर्थकरतीर्थवर्त्ती सामायिकसंयमे वर्त्तमानः प्रथमचरमतीर्थकृत्तीर्थे तु छेदोपस्थापनीयचारित्रे वर्त्तमानश्च जिनकल्पं प्रतिपद्यते । पूर्वप्रतिपन्नस्त्वसावन्यतमस्मिन् सूक्ष्मसम्परायादौ संयमे भवेदित्युक्तं चारित्रद्वारम् ॥ तीर्थद्वारे नियमात् तीर्थे सत्येव जिनकल्पं प्रतिपद्यते, न तीर्थव्यवच्छिन्नेऽनुत्पन्ने वेत्युक्तं तीर्थद्वारम् ॥ पर्यायद्वारे पर्यायो द्विधा, गृहस्थपर्याययतिपर्यायभेदात् भवति । तत्र गृहस्थपर्यायो–जघन्येन जन्मतः आरभ्य सञ्जाताष्टवार्षिको मतान्तरेण गर्भत आरभ्य सञ्जाताष्टवार्षिकः, ततो दीक्षां प्रतिपद्यते, तत उपस्थापना, विंशत्या वर्षैर्योगतो दृष्टिवादः परिकर्मकालश्च समर्थितः इति सञ्जातैकोनत्रिंशद्वर्षगृहस्थपर्यायः जिनकल्पं प्रतिपद्यते । गृहस्थवासादारभ्य पर्यायः गृहस्थपर्यायः । वर्षाष्टकादधोवर्ती तूभयमतेनापि बालत्वेन दीक्षानर्हः । तदुक्तं धर्मसंग्रहवृत्तौ–"जन्मत आरभ्याष्टौ वर्षाणि यावत् बालोऽभिधीयते, स च न दीक्षां प्रतिपद्यते, वर्षाष्टकादधो वर्त्तमानस्य सर्वस्यापि तथास्वाभाव्यात् देशतः सर्वतो वा विरतिप्रतिपत्तेरभावात्, अन्ये तु गर्भाष्टमवर्षस्यापि दीक्षां मन्यन्ते" इति मतद्वयम् ।

अत्र कथयन्ति केचन कल्पनाकर्मकृतहस्ताः—

"गर्भाष्टमवर्षस्यापि" इति वाक्येन जन्मतः सपादषड्वर्षोऽपि दीक्षार्हो भवति । तथा च जघन्यवयसां दीक्षाप्रदाने मतत्रयं स्यात्, तथाहि–जन्मत आरभ्याष्टवार्षिकः, सपादसप्तवार्षिकः, सपादषड्वार्षिकश्च बालः प्रव्रज्याप्रदानार्हो भवति । तदुक्तं

निशीथचूर्णौ—"पढमदसाए अट्ठवरिसोवरि नवमदसमेसु दिक्खा, आदेसेण वा गब्भट्ठमस्स दिक्खा, जम्मणओ अट्ठमवरिसे"। अयं पाठोऽनुपदोक्तार्थमनुवदति, तद्यथा—वर्षशतप्रमितजीवितकालस्य प्रवचनोक्तदशदशामुद्दिश्याद्यदशायां दशसंवत्सरात्मिकायामष्टवर्षादूर्ध्वमर्थात् नवमदशमेषु दीक्षेति विधेयपदं विधीयत इति प्रथमं तावत्। आदेशेन—मतान्तरेण, गर्भाष्टमस्य, गर्भाष्टमं वर्षं यस्य स इति सुलब्धव्यधिकरणबहुव्रीह्याश्रयणेन, जन्मतः सपादषट्संवत्सरादारभ्य पुनर्दीक्षेति विधेयपदं विधीयते इति द्वितीयं तावत्। तृतीयं तावत् जन्मतोऽष्टमवर्षे सप्तवर्षादूर्ध्वमारभ्याष्टवर्षमभिव्याप्य प्रव्रज्यापरिदानं भवतीति। समर्थयन्ति चैतदेवार्थं पूज्यप्रवरश्रीमद्विजयसिद्धसेनसूरिपादाः प्रवचनसारोद्धारे, श्रीमन्मानविजयवाचकावतंसाश्च धर्मसंग्रहेऽनेन शब्दसन्दर्भेण—"अन्ये तु गर्भाष्टमस्य वर्षस्यापि दीक्षां मन्यन्ते" इति—अन्ये केचनाचार्याः, तुरिति आदेशान्तरसूचकः, गर्भाष्टमवर्षस्य गर्भादष्टमं वर्षं यस्य स गर्भाष्टमवर्षः तस्य, जन्मतः सपादषड्वर्षस्य पुरुषस्य, अपिना चानुपदोक्तः सिद्धान्तपक्षः समुच्चितः, दीक्षामिति विधेयपदम्, मन्यन्ते स्वीकुर्वन्तीत्यर्थः। न चात्र मतद्वयस्यैव ग्रहणात् सपादसप्तवर्षस्य पुरुषस्य विधीयमानां प्रव्रज्यामुद्दिश्य गृह्यमाणो द्वितीयमतः कुतः समागमिष्यतीति वाच्यम्, आद्यन्तयोर्ग्रहणे मध्यमस्यापि ग्रहणं भवतीति न्यायात् पूर्वापरसूचितत्वेन मध्यमस्यापि ग्रहणं भविष्यतितराम्। नन्वष्टत्वस्य गर्भाष्टमगर्भपतिताष्टमपदवाच्यतावच्छेदकत्वात् गर्भाष्टमेत्यादिपदप्रकरणे जन्मतः सपादसप्तसंवत्सरस्यैव पुंसः प्रव्रज्याप्रदानं प्रतिपादयितुं शक्यत इति चेत्? न, प्रागुक्तजन्माष्टजन्माष्टमरूपमतद्वयोरनर्थान्तरतापत्तेर्दुर्निवारत्वात्, पूज्यप्रवेकचूर्णिकारपादैश्चूर्णौ—"पढमदसाए अट्ठवरिसोवरि नवमदसमसु दिक्खा" इति प्रतिपादितपदानुवर्त्तिनवमपदस्योपर्युक्तरीत्या नववाचकत्वात् नवम-

शरदादौ दीक्षादानार्हत्वस्य दूरोत्सर्जनापत्तेश्च । किञ्च "नोमद्" (७-१-१६९) इति सिद्धहेमशब्दानुशासनसूत्रेण संख्यापूरक-मट्प्रत्ययेनाष्टमशब्दनिष्पत्तिसञ्ज्ञातत्वात् प्रारम्भात् समाप्तिपर्यन्तस्य समग्राष्टमाब्दानेहसो बोधकत्वात् तस्याष्टशब्दादनु दीक्षादानविधानरूपानर्थापादकार्थस्य वक्तुं सर्वथाऽशक्यत्वात् । अपि चायमधस्ताद्विचारितविषयोऽपि प्रव्रज्याजघन्यवय उद्दिश्य प्रोक्तपक्षत्रयात्मकं नोऽभीष्टमतमेव समर्थयति । तद्यथा—बालानां जघन्यमध्यमोत्कृष्टात्मिका भेदत्रयी प्राक्तनप्रवचन-प्रतिपाद्यत्वेन प्रतीतिपथमापतति । तेषां प्रत्येकानामपि अवान्तरभेदत्रयी तथैव नयनातिथित्वं प्राप्नोति । तथा चोक्तं श्री-निशीथभाष्यैकादशोद्देशके—"तिविहो य होति बालो उक्कोसो मज्झिमो जहन्नो य । एतेसिं पत्तेयं तिण्हंपि परूवणं वोच्छं ॥१॥ सत्तट्ठग-मुक्कोसो छपण मज्झो उ जा चउ जहन्नो । एवं वयणिप्फन्नं भावो वि वयाणुवत्ती व ॥ २ ॥" स्पष्टीकृतश्चैतदर्थश्चूर्णौ—"तिवि-हो य गाहा । तिविहबालस्स पत्तेयं इमं वक्खाणं । सत्तट्ठ—गाहा । जम्मणतो सत्तट्ठवरिसो जो सो उक्कोसो बालो, छपंचवरिसो मज्झिमो, एकादि जाव चउवरिसो एस जहन्नो । एवं बालत्तवयतो निप्फन्नं प्रायसो भावो वयाणुवत्ति वा सदा । वयाणुवत्तं ति कहं जहा बालो स बालभावो ।" पूर्वोक्तगाथाद्वयी किञ्चिन्न्यूनाधिकभावमाश्रित्य श्रीपञ्चकल्पभाष्येऽपि—"तिविहो य होति बालो उक्कोसो मज्झिमो जहन्नो य । एतेसिं पत्तेयं तिण्हं पि परुवणं वोच्छं ॥ १ ॥ सत्तट्ठगमुक्कोसो छपण मज्झो चउ ति य जहन्नो । एवं वयनिप्फन्नं सब्भावओ होन्ति नव भेदा ॥ २ ॥" निक्षिपति च तच्चूर्णिचन्द्रिका किञ्चित् विभिन्नप्रकारां, तद्यथा—"उक्कोसो बालो छवरिसो सत्तवरिसो, मज्झिमो चउवरिस पंचवरिसो, जहन्नो दुवरिस तिवरिसो" इति । अतः स्पष्टं निष्कर्षितुं पार्यते यत् श्रीनिशीथभाष्यश्रीनिशीथचूर्णिश्रीपञ्चकल्पभाष्यैः सह श्रीपञ्चकल्पचूर्णिर्नानुसरति किन्तु विवदते । चतुर्णामप्येतेषां

सत्रावलोकने षट्सप्ताष्टसंवत्सरात्मकोत्कृष्टबालकः सुतरां स्वीकर्त्तुं सन्मतिरुदेतीत्यतः प्रव्रज्याप्रदानविधाने जघन्यवयःप्रस्तावे पक्षत्रय्यपि प्रसह्य प्रपतति । अष्टापेक्षया जन्मतोऽष्टवर्षवयोरूपः प्रथमपक्षस्तावत्, सप्तकथनापेक्षया जन्मतोऽष्टमवर्षवयोऽङ्गीकारमयो द्वितीयोऽन्तिमश्च षडपेक्षया गर्भतोऽष्टमाब्दवयोऽङ्गीकरणमयो यः स तृतीयो बोद्धव्यः कुशाग्रधियेति । एतन्मतत्रयी प्रारम्भप्रतिपादितश्रीनिशीथचूर्ण्यनुगामिन्येव ज्ञेया । श्रीपञ्चकल्पनिशीथभाष्यावपि समर्थिताशयमेवातितरां समर्थयतः । तच्च पञ्चकल्पभाष्यभाषितम्—"तहियं पढमदसाए अट्ठमवरिसादि होति दिक्खा उ" । भाष्येऽत्र गर्भादष्टमवर्षस्यादिकालग्रहणेन जन्मतो जघन्येन किञ्चिदधिकषट्संवत्सरस्य संयमवितरणार्हत्वं सुष्ठु सम्पद्यते । "दस आउविवागदसा अट्ठमवरिसाइ दिक्खा" इति श्रीनिशीथभाष्यमपि प्रागुदितसरण्या श्रीपञ्चकल्पभाष्यं सम्यगेवानुसरतीति गर्भाष्टमरूपं जन्मतः सपादषट्संवत्सरमयं तृतीयमतं सर्वत्राव्याहतत्वेन सार्वत्रिकस्थितिं समाप्नुवत् न केनापि वारयितुं शक्यमिति परिव्रज्याप्रदानविधानविषयमधिकृत्य जन्माष्टगर्भाष्टमजन्माष्टमसंवत्सररूपपक्षत्रयी प्रमाणप्रतिपन्नत्वेन सिद्ध्यति । कथयन्तु भो सज्जना ! अस्मिन् केनापि मौलिधूननं शक्यं ! यदि यूयमवगन्तुं न शक्नुथ तर्हि मन्दमतित्वेनास्मदुपरि श्रद्धानेनैवालम् । यदि यूयमेतत्स्वीकर्त्तुं न शक्नुथ तदा कदाग्रहग्रथिलत्वेनोपेक्षार्हा एव, इत्यलमतिप्रलपितेन' । अयं पूर्वपक्षः ॥

अत्रोत्तरपक्षः—

सर्वमेतदविचारितमेव रमणीयम् । प्रथमं तावत् या न केनापि प्राक्तनसूरिपुरन्दरेण प्रदर्शिता न केनापि जनेनाद्यावधि श्रुतपूर्वा दृष्टपूर्वा वा, एतादृश्यपि पक्षत्रयी श्रीनिशीथचूर्णिपाठेन वादिना पूर्वपक्षं कुर्वता निष्कासिता सा तस्य सूत्रार्थमतिव्या-

मोहमूलैव, तत्र पक्षद्वयस्यैव विद्यमानत्वात्, तद्यथायथमवलोकयन्तु तद्भाष्येण समं धीधनाः। तत्र श्रीनिशीथभाष्यम्—"दस आउविवागदसा अट्ठमवरिसाइ दिक्खपडिमाते । सेसासु वि छसु दिक्खा पब्भारातिसु सा न भवे ॥१॥" अस्य चूर्णिः—"दस आउगाहा—जं जंमि काले आउयं उक्कोसं दसधा विभत्तं दस आउविवागदसा भवन्ति । प्रतिसमयं भोग्यत्वेनायाति इत्यायुः । विपचनं विपाकः आयुषः परिहाणीत्यर्थः । अनुभागेन युक्तो विभागो दसा उच्यते । ततो यदस्य दसवरिसपरिमाणतो वरिससयाउसो भवन्ति—बाला कीडा मन्दा वला य पन्ना हायणी पवञ्चा पब्भारा मुम्मुही सयणी अ, एयाओ जहा नामाणुभावा य परुवेयव्वा । पढमदसाए अट्ठवरिसोवरि—नवमदसमसु दिक्खा, आदेसेण वा गब्भट्ठमस्स दिक्खा—जम्मणओ अट्ठमवरिसे, कीडादिपवञ्चपज्जंतासु छसु वि दिक्खाणुण्णाता । पब्भरादियासु तिसु वुड्ढोत्ति काउं नाणुण्णाता दिक्खा" । अत्रभाष्ये 'अट्ठमवरिसाइ' इत्युद्देशपदस्यातद्गुणसंविज्ञानबहुव्रीहिसमाश्रयणेन अष्टमं वर्षमादौ यस्य स अष्टमवर्षादिरित्यनेन भाष्यान्तर्वर्त्त्यष्टमपदस्य परिपूर्णाष्टमवाचकत्वं मनसि निधाय चूर्णिकारपादैः "अट्ठवरिसोवरि नवमदसमसु दिक्खा" इत्येवंरूपेण व्याख्यायि । अतः पूर्वपक्षकृता भाष्यसंदर्भेण साधिता जन्मतः सपादषट्कवर्षस्य दीक्षा नैव सिध्यति । एवं पुनः पूर्वपक्षकारेण यद्भाष्यटीकारूपेण वर्तमानश्चूर्णिपाठो विभिद्य स्वतन्त्रेण स्वीयाकूतसाधनाय प्रादर्शि तदपि तस्य बुद्धिवैभवफलं, न शास्त्रकृताम् । भूयोऽप्यग्रे "आदेसेण वा गब्भट्ठमस्स दिक्खा—जम्मणओ अट्ठमवरिसे" इत्यत्रापि मतमेकमेव न तु द्वे, इत्यवधारयन्त्ववधारणकुशलाः। 'मतान्तरेण वा गर्भाष्टमस्य दीक्षे'त्यत्रापि 'गर्भाष्टमस्य' इत्युद्देश्यपदं, 'दीक्षा' इति तु विधेयपदमस्ति । अत्रानुपात्यष्टमपदस्य यथा परिपूर्णाष्टमवाचकत्वं भवति तथाग्रेऽष्टमपदविचारावसरे विचारयिष्यामः । ततोऽत्र परिपूर्णाष्टमाष्टपदयोरभिन्नकालप्रतिपादकत्वात् गर्भादष्टमं—परिपूर्णाष्टमं वर्षं यस्य स

गर्भाष्टमः तस्येत्यागमयुक्तिसुलब्धव्यधिकरणबहुव्रीहिसमासेन गर्भतोऽष्टसंवत्सरादारभ्य दीक्षा विधीयते, न तु गर्भतः सप्तसंवत्सरादनु जन्मतः सपादपञ्चवर्षादनु वा। सा एव गर्भतोऽष्टाब्दादारभ्य विधीयमाना प्रव्रज्या ननु जन्मतः कदा भवेदित्यारेकायामाह चूर्णिकारभगवान्—"जम्मणओ अट्ठमवरिसे" अर्थात् जन्मतोऽष्टमवर्षे मनागधिकसप्तवर्ष इति यावत्, गर्भकालस्य न्यूनीकरणात्। नास्त्यत्र तृतीयमतगन्धोऽपि यथा पूर्वपक्षिणा न्यदर्शि, 'जम्मणओ' इत्यादिवाक्यस्य 'आदेसेण वा' इत्यादिवाक्येन गर्भतः प्रतिपादितकालस्य जन्मतः प्रतिपादयितुं विवरणात्मकत्वेनैव विद्यमानत्वात्। किञ्च पृच्छामो वयं पूर्वपक्षिणं यदि 'जम्मणओ अट्ठमवरिसे' इति तृतीयमतस्योद्देश्यपदं स्यात् तर्हि 'दीक्षा' इति विधेयपदं केन भक्षितं वद! यत उद्देश्यं विधेयं च यदा पृथक्पदाभ्यामुपतिष्ठते तदा प्राप्तमुद्दिश्याप्राप्तं विधीयत इति न्यायः, 'पर्वतो वह्निमान्' इतिवत्, न तु विधेयपदाभावे केवलोद्देश्योक्तिः शाब्दबोधोपस्थितौ शक्या। तदुक्तं व्यक्तिविवेके—"अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत्। न ह्यलब्धास्पदं किञ्चित् कुत्रचित् प्रतितिष्ठति ॥ १ ॥ विधेयोद्देश्यभावोऽयं रूप्यरूपकताऽऽत्मकः। न च तत्र विधेयोक्तिरुद्देश्यात् पूर्वमिष्यते ॥२॥" इति न्यायेनोद्देश्यविधेययोः पौर्वापरस्य नियन्त्रितत्वात् विधेयोक्तिः साऽपि पश्चात्तनी निगडिता। न च प्राक्तनदीक्षापदमत्रानुकर्षणीयम्, प्रथमदीक्षापदस्योभयत्रानुकर्षणसंभवेन 'आदेसेण' इत्यत्रोक्तस्य दीक्षापदस्य वैयर्थ्यापत्तेः, चूर्णिकारभगवन्तं लघुकरणापत्तेश्च। तस्मात् तत्र विधेयपदस्याभावात् तस्य चावश्यकत्वात् 'जम्मणओ अट्ठमवरिसे' इति पदं 'आदेसेण वा गब्भट्ठमस्स दिक्खा' इति पदस्य विवरणात्मकत्वेनैव तिष्ठति, न तु स्वातन्त्र्येण तृतीयं मतं प्रतिपादयितुं शक्नोति। ततः श्रीमन्निशीथचूर्णिशिखरिणो द्वे प्रव्रज्याप्रदानविधानवाहिन्यौ निर्गच्छत इति नभोमणिप्रकाशवन्निर्मलमस्ति। अधुना प्रव्रज्या-

प्रदानविधानमतत्रयीसमर्थने अग्रे पूर्वपक्षप्रदत्तपाठा अपि तां विगणय्य स्वकीयं शस्त्रं स्वीयघातायान्येषां च रक्षणायेव मतद्वयस्यैव समर्थने मतत्रयस्य चोन्मूलने यथा प्रधावन्ति तथा सूक्ष्मेक्षिकया निरीक्षणीयम् । "अन्ये तु गर्भाष्टमवर्षस्यापि दीक्षां मन्यन्त" इति प्रवचनसारोद्धारधर्मसंग्रहोक्तिरपि सपादसप्तवर्षस्य पुरुषस्य प्रव्रज्यामनुजानाति, न तु वादिवदजनिर्गलसपादषड्वर्षस्य पुरुषस्य प्रव्रज्याम्, अत्रत्याष्टमपदस्य परिपूर्णाष्टवाचकत्वस्य प्राग् निशीथचूर्णिवाक्यव्याख्याने उक्तत्वात्, अधस्ताच्च स्फुटीभवनात्, स्वशस्त्रं स्वीयोन्मूलनायाभूत् । शास्त्रेषु मतद्वयस्योक्तत्वात् तृतीयमतस्य ग्रहणं कुतो भविष्यतीति प्रश्ननिराकरणे 'आद्यन्तयोर्ग्रहणे मध्यमस्यापि ग्रहणमि'ति पूर्वपक्षिणा यदुक्तं तदपि विचारशून्यम्, यतः किमयं न्यायश्चूर्णिस्थपाठानुसारेण त्वया समन्वीयते वयसां क्रमाभिप्रायेण वा? आद्ये तव मते मध्यवर्तित्वेन ग्राह्यस्य जन्मतः सपादसप्तवर्षस्य पुरुषस्य प्रव्रज्यारूपस्य मतस्यान्तिमत्वेन न तन्न्यायविषयता । द्वितीये त्वनुपदोक्तमतस्य मध्यमवर्त्तित्वेन ग्रहीतुं शक्यत्वेऽपि वयसां क्रमेण प्राप्तस्य सपादषड्वर्षस्य पुरुषस्य प्रव्रज्यारूपस्य मतस्याद्यत्वभावात् तव मते तु तस्यान्त्यत्वेनाष्टवर्षरूपमतस्य चाद्यत्वेन कथनात् न तन्न्यायविषयता । न च धर्मसंग्रहप्रवचनसारोद्धारादिग्रन्थैः प्रतिपादितमतद्वये तन्न्यायविषयतेतिवाच्यम्, 'आदेसेण वा गब्भट्ठमस्स' इत्यत्र पतिताष्टमपदस्य परिपूर्णाष्टमवाचकत्वस्यासकृदुक्तत्वात्, सपादषड्वर्षरूपस्य तृतीयमतस्य तव वक्त्रनिर्गतस्य लब्धुमशक्यत्वात्, निशीथचूर्णिकृता भगवता तत्पङ्क्तिविवरणेन जन्मतः सपादसप्तवर्षस्य पुरुषस्य प्रव्रज्याविधाने तात्पर्यपर्यवसानस्य निदर्शितत्वात् न तन्न्यायविषयतेति । अपि च नाद्यावधि केनचिदपि मान्यमहोदयप्राक्तनमहर्षिणा 'आदेसेण वा गब्भट्ठमस्स' इत्यस्याः पङ्क्तेः रहस्यनिर्णयः सपादषड्वर्षस्य पुरुषस्य

प्रव्रज्याविधाने न्यदर्शि, प्रत्युत निशीथचूर्णिप्रवचनसारोद्धारसंस्तवकादौ अद्यावधि समागतपरम्परायां च सपादसप्तवर्षस्य पुरुषस्य प्रव्रज्याविधाने तात्पर्यं पर्यवसितं विलोक्यते। अष्टत्वस्य गर्भाष्टमगर्भपतिताष्टमपदवाच्यतावच्छेदकत्वे या 'जन्माष्टजन्माष्टमरूपमतद्वयेऽनर्थान्तरतापत्तिः' प्रागुक्ता सापि सार्गला, यतो जन्माष्टरूपाद्यस्य मतत्वेऽपि जन्माष्टमरूपद्वितीयस्य 'जम्मणओ अट्ठमवरिसे' इत्यस्य 'आदेसेण वा' इत्यस्याः पङ्क्तेः विवरणात्मकतया विद्यमानत्वेन मतान्तरत्वाभावादेव 'जन्माष्टजन्माष्टमरूपद्वय'मित्येवं वचनं व्याहतं कुतस्तरां तेनानर्थान्तरतापत्तिर्वन्ध्यापुत्रेणाध्ययनविधानवत्। किञ्च अष्टमपदस्य वाच्यतावच्छेदककालोऽष्टमवर्षाद्यसमयादारभ्य चरमसमयपर्यन्तं वर्तते, ततस्तत्सर्वोऽपि समयोऽष्टमपदप्रतिपाद्य इत्यष्टमवर्षचरमसमये यथाष्टपदशक्यतावच्छेदकता तथैवाष्टमपदशक्यतावच्छेदकतापि, ततस्तदंशे वाच्यतावच्छेदकतायाः समानत्वेनाष्टमपदेनाष्टस्योपस्थितेः कथञ्चिच्छक्यत्वं यत् संभाव्यते तदपि तदैवोत्पद्यते यदाष्टमपदवाच्यतावच्छेदकता अष्टमवर्षचरमसमये नैयत्यशालिनी शालेत यथाऽष्टपदवाच्यतावच्छेदकता अष्टमवर्षचरमसमये, तच्च परिपूर्णाष्टमत्वग्रहणेनैव भवितुं शक्नोति। परिपूर्णाष्टमे चाष्टपदप्रयोगस्य वाधकत्वाभावात् परिपूर्णाष्टमाष्टयोरनर्थान्तरतायामिष्टापत्तिरेव स्यात्। उक्तनियमस्य च सार्वत्रिकत्वाभावादेव वादेर्निशीथचूर्णिस्थस्य—"पढमदसाए अट्ठवरिसोवरि नवमदसनेसु दिक्खा" इत्यत्र 'नवमपदस्य नववाचकत्वेन नवमशरदादौ दीक्षादानार्हत्वस्य दूरोत्सरणापत्ति'रपि दूरोत्सारिता द्रष्टव्या, अत्रत्य-'नवम'पदस्य "अट्ठवरिसोवरि" इति वाक्यस्य विवरणात्मकत्वेन परिपूर्णनवमवाचकत्वाभावात् तस्य नवपदेन सहैक्यत्वाभावः। ननु 'आदेसेण वा गब्भट्ठमस्स' इत्यत्रत्याष्टमपदस्य परिपूर्णार्थकत्वे किं विनिगमकमिति चेत् "जम्मणओ अट्ठमवरिसे"

इति वाक्यविवृत्तिरेव विनिगमकत्वेनावधारय । पदानामाप्तोक्त्याद्यनेके शक्तिग्राहका वरीवर्तन्ते, ते चाग्रे स्फुटीभविष्यन्ति ।

अथाधुना तादृशानि कियन्ति स्थानानि प्रदर्श्यन्ते यत्र वर्तमानस्य केवलस्याष्टमादिपदस्य चूर्णिटीकाकारैरष्टाद्यर्थोऽकारि । प्रथमं तावत् व्यवहारभाष्ये दशमोद्देशके भाष्यकारभगवान् भाषते—"अहिअट्ठमवरिसस्स विओरवि पढिते न उ कप्पा । देंति अवंजणजातस्स वंजणाण परूवणा ॥ १०१ ॥ जहा चरित्तं धारेउ ऊणट्ठो वज्ज पच्चलो । तहा विवुक्कवुद्धी उ अववायस्स नो सहु ॥ १०२ ॥" वृत्तिः—"अधिकाष्टवर्षस्यास्य पठितेऽप्याचारे, अव्यञ्जनजातस्य, अत्र व्यञ्जनानां प्ररूपणा कर्त्तव्या, सा च सूत्रव्याख्यायां कृता, न तु नैव सूरयः प्रकल्पमाचारप्रकल्पं नामाध्ययनं ददति । कुत इत्याह—जहेत्यादि, यथा ऊनाष्ट ऊनाष्टवर्षश्चारित्रं धारयितुमप्रत्यलोऽसमर्थः तथा अजातव्यञ्जनतया अपक्वबुद्धिः—अपरिपाका या बुद्धिः, अपवादस्य धारणे, न ददति । तथा कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां क्षुल्लकस्य वा क्षुल्लिकाया वा व्यञ्जनजातस्य आचारप्रकल्पं नामाध्ययनमुद्देष्टुम्" । अत्राष्टमपदस्य परिपूर्णाष्टमत्वग्रहणेनैवाष्टार्थकत्वं स्पष्टं गोचरीकर्तुं शक्यते, अन्यथा 'अधिके' इति विशेषणस्य वैयर्थ्यापत्तेः, 'संभवव्यभिचाराभ्यां स्याद्विशेषणमर्थवदि'ति न्यायेन ताभ्यामेव तस्य सार्थक्यनियमात् । किञ्च 'जहा चरित्तं धारेउं ऊणट्ठो' इत्यस्य वृत्तौ 'ऊनाष्टवर्षश्चारित्रं धारयितुमप्रत्यलः' इति वाक्यललामप्रतिपादयन्तो सूत्रकारा वृत्तिकाराश्च स्पष्टमेवाष्टवर्षादधस्तात् सार्वत्रिकप्रव्रज्याप्रतिषेधं सूचयन्ति, तस्य गर्भतो जन्मतो वापि ग्रहणे द्वे एव मते सिद्धान्तसम्मते स्थातुं शक्नुवाते, नान्यदपि तृतीयम् । अथ 'आदेसेण वा गब्भट्ठमस्स' इत्यत्रत्याष्टमपदस्य यदि पूर्वपक्षीयार्थं विधाय सपादषड्वर्षरूपस्य तृतीयमतस्य समुत्थानं क्रियते

तदानुपदोक्तसार्वत्रिकनिषेधस्य सर्वथैवानुपपत्तिर्भवेत् तस्मादस्य निषेधस्योपपत्तयेऽत्रत्याष्टमपदस्य परिपूर्णतायां विवक्षणेनाष्टार्थकत्वं प्रसह्य भविष्यति, तच्च वृत्तिकृद्भिः कृतमेव ।

तथा व्यवहारसूत्रस्य तृतीयोद्देशके–"एगूणतीस वीसा कोडी आयारवत्थुदसमं च। संघयणं पुण आदिल्लयाण तिन्हं तु अन्नयरं ॥१॥" व्याख्या–"द्विविधः पर्यायो गृहिपर्यायो व्रतपर्यायश्च । यो जन्मत आरभ्य पर्यायः स गृहिपर्यायः । स च जघन्यत एकोनत्रिंशद्वर्षाणि । कथमिति चेदुच्यते–इदं गर्भा(जन्मा) ष्टमवर्षप्रव्रजितो विंशतिवर्षपर्यायस्य च दृष्टिवाद उद्दिष्टः, एकेन वर्षेण योगः समाप्तः, सर्वमीलनेन जातान्येकोनत्रिंशद्वर्षाणि । व्रतपर्यायः प्रव्रज्याप्रतिपत्तेरारभ्य, स च जघन्यतो विंशतिर्वर्षाणि, तावत्प्रामाणपर्यायस्यैव दृष्टिवादोद्देशभावात्, उत्कर्षतो जन्मतः पर्यायो व्रतपर्यायो वा देशोनपूर्वकोव्यायुष्के वेदितव्यः" । अत्रापि अष्टमपदस्याष्टार्थकत्वमनन्यगतिकमष्टमपदवाच्यतायां स्वस्यागमाभ्यासित्वं मन्यमानेन वादिना न विस्मरणीयम्, अन्यथा 'सर्वमीलनेनैकोनत्रिंशद्वर्षाणि' इत्यस्यानुपपत्तेः ।

एवं श्रीनिशीथभाष्यभाषितमपि तच्चूर्णिना सहैवमेव संगच्छते, तद्यथा–"दस आउविवागदसा अट्ठमवरिसाइदिक्खपडिमाते" एतच्चूर्णिश्च–"दस आउ गाहा × × पढमदसाए अट्ठवरिसोवरि नवमदसमसु दिक्खा" । अत्रत्यभाष्यस्याष्टमपदस्य चूर्णिकृता भगवता अष्टार्थकत्वं वादिविहिताष्टमार्थकतां दूरोत्सार्य यथा प्रत्यपादि तथा प्राग् दृष्टमेव ।

एवं समवायाङ्गेऽपि सप्तमपदस्य सप्तार्थकत्वं समवेति, तथा चोक्तं–"सत्तमियाए णं भिक्खुपडिमाए" वृत्तिः–"सप्तसप्तमानि दिनानि यस्याः सा सप्तसप्तमिका, सप्त सप्त दिनानि भवन्ति सप्तसु सप्तकेषु अतः सा सप्तदिनसप्तकमयत्वात् एकोनपञ्चाशता दिनैः भवतीति" । अत्रत्यसप्तमपदस्यापि सप्तार्थकत्वं सुस्पष्टमेव, अन्यथाऽनुपदोक्तसंख्याया अनुपपत्तेः ।

तथैव वैशेषिकसूत्रोपस्कारकारकशङ्करमिश्रस्य भूपालं प्रति–"बालोऽहं जगदानन्दो न बाला मे सरस्वती । अपूर्णे पञ्चमे वर्षे वर्णयिष्ये जगत्रयीम् ॥ १ ॥" इति वचनमपि पूर्णार्थकत्वमनुसरति, अन्यथा 'संभवव्यभिचाराभ्यां स्याद्विशेषणमर्थवत्' इति न्यायात् 'अपूर्णे' इत्यस्य विशेषणस्य नैरर्थक्यप्रसङ्गः, अतः 'पञ्चमपदस्य' परिपूर्णपञ्चार्थकतारूपदीपिका प्रसह्य पतिष्यति वादिमनोमन्दिरे।

अपि च "नो मट्" इति सिद्धहेमसूत्रेण संख्यापूरकमट्प्रत्ययेनाष्टमशब्दस्य निष्पत्तेराप्रारम्भसमाप्तिपर्यन्तस्य समग्राष्टमाब्दानेहसो बोधकत्वादष्टाब्दानु दीक्षादानविधानरूपानर्थकारकार्थस्य सर्वथा वक्तुमशक्यत्वमिति' वादिना यदुक्तं तदपि तस्याभिमानिकीं व्याकरणविषयव्युत्पन्नतां विबोधकत्वेऽपि शक्तिग्रहविचारसामर्थ्याभावत्वमेव प्रादुष्करोति । वाद्युक्तनियमनियन्त्रणा तदैव स्यात् यदा व्याकरणादेव शक्तिग्रहो भवेत्, तच्च न सम्भवति, यतः शक्तिग्रहस्य हेतुत्वेन वर्तमानानि बहूनि वस्तूनि भवन्ति । तदुक्तं "शक्तिग्रहं व्याकरणोपमानात् कोशाप्तवाक्यात् व्यवहारतश्च । वाक्यस्य शेषात् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ॥" इति । अत्रावलोकनेन स्पष्टं सन्द्रष्टुं शक्यते यथा शक्तिग्रहे व्याकरणं प्रमाणं तथैवाप्तवाक्यादीन्यपि । एवमेकपदमेकशक्त्यैकत्र प्रयुज्यमानमपि तस्यान्यशक्त्याऽन्यत्र प्रयोगो विधीयमानो निषेद्धुं न शक्यते, यथा पङ्कजपदस्यावयवशक्त्या पङ्कजनिकर्तृत्वे प्रयुज्यमानेऽपि समुदायशक्त्या पद्मे प्रयोगो न विरुद्ध्यते । न चात्र पङ्कजनिकर्तुः पद्मे निराबाधत्वादेव प्रयोगः शक्तेरन्यथासिद्धत्वमिति वाच्यम्, यतोऽवयवशक्त्याः समुदायशक्तौ नैराबाध्यं न शक्तौ अन्यथासिद्धत्वप्रयोजकम् । अपि चोद्भिदादिपदमवयवशक्त्या तरुगुल्मादौ प्रयुज्यमानमपि तस्य समुदायशक्त्या यागादौ

प्रयोगो न विरुद्ध्यते। तथैवाष्टमपदमवयवशक्त्या प्रारम्भसमाप्तिपर्यन्ताष्टमे प्रयुज्यमानमपि समुदायशक्त्या केवलपरिपूर्णाष्टमे प्रयुज्यमानं न विरुद्ध्यते। सा च समुदायशक्तिरनुपदोक्तप्रवचनाद्यन्यतमप्रयोजनप्रादुर्भूता विज्ञेया।

अर्थभिः प्रामाणिकप्रकाण्डागमिकानागमिकवचनयुक्तिधाराधरधाराभिरप्यनार्दीभवद्वादिहृदयं यदि स्वमन्तव्याग्रहकचवरपोट्टलिकां नैवोज्झिष्यति तदा वक्ष्यमाणापत्सरितोऽपि सुदुस्तरा भविष्यन्ति। तद्यथा–"पञ्चदशे–पञ्चदशवर्षपर्यायस्य चारणभावनेत्यध्ययनमुद्दिश्यते" "षोडशवर्षे तेजोनिसर्गो नामाध्ययनमुद्दिश्यते" "सप्तदशे वर्षे आशीविषभावना उद्दिश्यते" "दृष्टिविषभावना अष्टादशे वर्षे" सर्वत्रात्र "संख्यापूरणे डट्" (७–१–१५५) इत्यनेन सिद्धहेमशब्दानुशासनसूत्रेण संख्यापूरकडट्प्रत्ययविधानेऽपि, व्याकरणनियन्त्रणानियन्त्रितवादिहृदयकामितस्य का गतिर्भविष्यति, येन सर्वेषां संख्यापूरकप्रत्ययान्तशब्दानां परिपूर्णार्थताया वादिनापि प्रसह्य स्वीकारात्। एवं प्रत्याख्यानप्रस्तावेऽपि "छठभत्तं चउत्थभत्तं' इत्यादिपाठेष्वपि 'षट्कतिकतिपयात् थट्' (७–१–१६२) 'चतुरः' (७–१–१६३) इति सिद्धहेमशब्दानुशासनसूत्राभ्यां संख्यापूरणे एव थट्प्रत्ययस्य समागमनेन वादिवल्लभवर्त्मना षष्ठचतुर्थरूपपर्यन्तभक्तपरित्यागेन तत्तत्प्रत्याख्यानकरणापत्तेः, न चैवं, यतोऽत्रापि षष्ठचतुर्थयोः षट्चतुरर्थकत्वेनैव सार्थक्यसम्पत्तेः नियमात् षट्भक्तचतुर्भक्तपरित्यागेनैव तत्तत्प्रत्याख्यानकरणोपपत्तेः। एवमष्टमनवमैकादशद्वादशादिभक्तेष्वप्यनुपदोक्तरीत्या प्रत्याख्यानसम्पत्तिसार्थक्यनियमो द्रष्टव्यः। अत एतावदष्टमपदविचारणया प्रान्ते तदेव प्रकटीभवति यदुत "आदेसेण वा गब्भट्ठमस्स दिक्खा" इति वचनगर्भगर्भिताष्टमपदस्यापि अष्टा-

र्थकतैव समीचीनतालिकतिलकतामञ्चति । ततश्चैव "जम्मणओ अट्ठमवरिसे" इति पर्यन्तपदकलापमपि तद्विवरणात्मकतया वर्तते इति यदसकृत् प्रवेदितं तदेव निगमितमधुना ।

किञ्च स्वाभीष्टापादनबद्धकक्षेण वादिना श्रीमन्निशीथभाष्यचूर्णिश्रीपञ्चकल्पभाष्यचूर्णीनां बालविषयावान्तरभेदत्रयीसहितजघन्यमध्यमोत्कृष्टात्मिकभेदत्रयीज्ञापकपाठानुपन्यस्य प्रव्रज्याप्रदानजघन्यवय उद्दिश्य स्वप्रोक्तपक्षत्रय्यात्मकस्वाभीष्टं यत् समर्थितं तदपि न विद्वन्मनोमोदावहम्, यतः तत्तु वादिनाऽप्युक्तं–"अतः स्पष्टं निष्कर्षितुं पार्यते यदुत श्रीनिशीथभाष्यश्रीनिशीथचूर्णिश्रीपञ्चकल्पभाष्यैः सह श्रीपञ्चकल्पचूर्णिर्नानुसरति, किन्तु विवदते" इति, अत्र श्रीनिशीथभाष्यचूर्णिपञ्चकल्पभाष्यैः सह श्रीपञ्चकल्पचूर्णिविवादस्य निष्कर्षणेनापि तस्याशयो वादिना नोद्घाटितः किन्तु स्वमनोगर्भागारे एव रक्षितः, तस्य हेतुपरिज्ञाने स एव कुशलो, वयं तु तद्विवादाशयमाविष्कुर्महे, तद्यथा–

| बालः जन्मतः | उत्कृष्टः | मध्यमः | जघन्यः | |
|---|---|---|---|---|
| | ७–८ वर्षः | ५–६ वर्षः | १–४ वर्षः | इति निशीथभाष्ये |
| | ७–८ ,, | ५–६ ,, | १–४ ,, | इति निशीथचूर्णौ |
| | ७–८ ,, | ५–६ ,, | ३–४ ,, | इति पञ्चकल्पभाष्ये |
| | ६–७ ,, | ४–५ ,, | २–३ ,, | इति पञ्चकल्पचूर्णौ |

अत्रावलोकनेनैवोपर्युक्तविवादो विशदीभूयमानः सन् प्रव्रज्याप्रदानजघन्यवय उद्दिश्य मतद्वयमेवाविष्करोति न मतत्रयमित्याशयः । आद्यंतावत् जन्मतः सप्ताष्टवर्षात्मकोत्कृष्टबालं प्रवेदयन्तः श्रीनिशीथभाष्यचूर्णिपञ्चकल्पभाष्यकारमहर्षिमार्तण्डैः प्रव्रज्याप्रदानविधानरूपं जन्मतोऽष्टवर्षादनु सिद्धान्तमतमाविश्चक्रे । भूयो जन्मतः षट्सप्तवर्षात्मकोत्कृष्टबालं प्रज्ञापयन्तः श्रीपञ्चकल्पचूर्णिकारमहोदयैः 'आदेसेण वा गब्भट्ठमस्स दिक्खा' इति वचनप्रतिपादितं जन्मतः सपादसप्तवर्षस्य पुरुषस्य प्रव्रज्याविधानरूपं मतान्तरं प्रादुश्चक्रे । तस्मात् चतुर्णामप्येतेषां सत्रावलोकने षट्सप्ताष्टसंवत्सरात्मकमुत्कृष्टबालं स्वीकर्त्तुं दुर्मतिः नोदेति, यतो निशीथभाष्यादौ बालानां य उत्कृष्टादिनवभेदा भाषितास्ते न दीक्षानर्हत्वसूचकाः अपि त्वयोग्यवयसां बालानां प्रव्रज्याप्रदातुः प्रायश्चित्तसूचकाः प्रोक्ताः । निशीथभाष्यपञ्चकल्पभाष्यादौ जन्मत आरभ्याष्टौ वर्षाणि यावदीक्षानर्हो बालः, पञ्चकल्पचूर्णौ तु जन्मतः आरभ्य सप्तवर्षाणि यावद्बालः, स च दीक्षानर्ह इति बाले भेदद्वयीकथनेनापि मतद्वयमेव सिद्ध्यति, ततः तद्विषये वाद्यभीष्टपक्षत्रयीन्द्रजालवत् प्रसह्य नश्यतीति विवेकिभिः स्वयं कलनीयम् । एतन्मतद्वयमेव प्रारम्भप्रतिपादितश्रीनिशीथचूर्ण्यनुगामि ज्ञेयम् । श्रीपञ्चकल्पनिशीथभाष्यादावपि समर्थिताशयमेवातितमं निश्चलीकुर्वाते, न तु वादिकपोलकल्पितनूतनमतत्रयीम् । तच्च पञ्चकल्पभाष्यभाषितं–"तहि य पढमदसाए अट्ठमवरिसादि होति दिक्खा उ"–भाष्येऽत्रापि, श्रीनिशीथभाष्यस्थस्य 'अट्ठमवरिसादि' इत्यस्य पदप्रकरस्य बहुव्रीहिसमासाश्रयणेन श्रीनिशीथचूर्णिकृता "पढमदसाए अट्ठवरिसोवरि नवमदसमेसु दिक्खा" इत्यर्थकतायाः प्रतिपादितत्वेन, 'अट्ठमवरिसादि' इति पदप्रकरस्यार्थविचारप्रस्तावे नेत्रे निमील्य श्रीनिशीथचूर्णिकार एव सर्वशरण्यः । ततो 'अट्ठमवरिसादि' इत्यस्य

पदगणस्य वादित्रदनविधानाक्रान्ततत्पुरुषसमासाश्रयणं तु जन्मतः सपादषडब्दपुरुषस्य प्रव्रज्याप्रदानार्हत्वरूपनिजाननिर्गतनिश्चयसमर्थनलालसालिप्तमत एव बुद्धिमन्मनीषातिरस्कारयोग्यं बोद्धव्यम्, चूर्णिकृद्भगवद्भाषितापेक्षयाऽऽधुनिकाग्रहान्धतमसाक्रान्तस्वान्तभ्रान्तानां भाषितस्याप्रामाण्यप्रसङ्गाक्रान्तत्वादेव । एवं निशीथभाष्यवचनमपि समर्थिताशयसमर्थकं वेदितव्यमित्यपि कथनानपेक्षम्, यतश्चूर्णिकृद्भगवद्भाषितमेवात्र प्रबलं प्रमाणं धीमद्भिः ध्येयम् । "पढमदसाए अट्ठवरिसोवरि नवसदसमेसु दिक्खा आदेसेण वा गब्भट्ठमस्स दिक्खा–जम्मणओ अट्ठमवरिसे" इति चूर्णिपाठमुपन्यस्तवता वादिना अष्टमपदस्याष्टार्थकतायां विवादसंग्रामो निजकराभ्यां स्वीयनेत्रे निमील्य एवाकारि, यतः भाष्यस्याष्टमपदस्य चूर्णिकृत्कृताष्टार्थकताया निर्मलनेत्राभ्यां स्वयमेवावलोकयितुं पार्यते, वादिना किं तन्नावलोकितं, यद्वावलोकितमपि सत् किं तन्मनोमन्दिरे सुष्ठु न संगतं जातं, यद्वा सुष्ठु संगतं जातमपि किं गुप्तीकृतम् ? इति न ज्ञायते ! एतावता विचारसरण्या वाचकवृन्दैराकलयितुं शक्यते यदुत 'गर्भाष्टमरूपं जन्मतः सपादषट्संवत्सरमयं' साहसिकवादिवदनप्रादुर्भूतं तृतीयमतं सर्वत्र व्याहतत्वेन कुत्रापि स्थितिमनाप्नुवत् सर्वैरपि वारयितुं शक्यमिति प्रव्रज्याप्रदानविधानविषयविचारमधिकृत्य जन्माष्टगर्भाष्टमापरपर्यायजन्माष्टमरूपपक्षद्वय्येव प्रवचनप्रतिपादितप्रमाणपुरःसरं सिद्धान्तिता इति विदाङ्कुर्वन्तु विचक्षणविद्वद्वृन्दाः ।

जन्मतः सपादषड्वर्षस्य प्रव्रज्याभिमानी वादी–'अनुत्तरसुरस्यान्तरकालो नवाब्दप्रमाणो, जघन्येन नववर्षायुश्च सिद्ध्येत् न न्यूनजीविनः' इति च कथं संगमनीयः, तथाहि–कश्चिदनुत्तरसुराच्च्यूतो मनुजे समागतः, ततो जन्मतोऽष्टाब्दे दीक्षा,

वार्षिकपर्यायं विना नानुत्तरे, नापि च मुक्तौ गच्छति, ततो वर्षं यावत् संयमं प्रतिपाल्यानुत्तरसुरेपूत्पादः, यद्वा मुक्तौ गमनं स्यात्, ततः पादोनदशाब्दो जायते, उक्तं नवाब्दमन्तरं, तज्जन्माष्टपक्षे न संगच्छते' इति आक्षिपति। स एव प्रष्टव्यः 'त्वन्मते जन्मतः सपादषड्वर्षे दीक्षा, वर्षं यावत् संयमपालनं ततोऽनुत्तरसुरगमनं मुक्तिगमनं वा कथं स्यात्? वर्षस्य न्यूनत्वात्'। ननु मन्मते नवाब्दप्रमाणोऽनुत्तरसुरान्तरकालो मोक्षगमनकालश्च नास्तीति चेत्? इतरत्रापि तौल्यम्। सिद्धान्तपक्षे दोषारोपिणो भवतः का गतिर्भविष्यति? किञ्च भो वादिन्! सिद्धान्तपक्षस्तव सम्मतो न वा? सम्मतश्चेत् आरोपितदोषोद्धरणमेव कर्त्तव्यम्, कथं दोषारोपः क्रियते? असम्मतश्चेत् तत्र किं वीजं! वीजाभावश्चेत् त्वादृशेन वार्तयाप्यलम्। उक्तदोषावेव वीजमिति चेत्? तव मतेऽप्युक्तदोषौ स्यातामेव। परिपूर्णगर्भाष्टमे तु नोक्तदोषौ स्तः, सिद्धान्तपक्षे च न नवाब्दप्रमाणोऽनुत्तरसुरान्तरकालनियमः, 'वार्षिकपर्यायं विना नोदेति केवलज्ञान'मिति मते च जन्मतो नववर्षायुः सिद्ध्येत्, एवमत्रापि तौ दोषौ न स्त एव। तथा—"यद्यप्यष्टवर्षवयाः कश्चिद्दीक्षामवाप्नुयात्। तथापि तादृग्वयसः पर्यायं वार्षिकं विना ॥५८॥ नोदेति केवलज्ञानमवो युक्तमुदीरिता। पूर्वकोटी नवाब्दोना शुक्ललेश्या गुरुस्थितिः ॥५९॥" इति नियमोऽपि न सार्वत्रिकः, यतः कर्मप्रकृत्यादौ जन्मतोऽष्टवर्षानन्तरमेव क्षपकश्रेणीमारोहति। तथा चोक्तं तत्रैव—"मासपुहुत्तब्भहिए णपुंसगे सव्वसंकमणे"—वृत्तिः—"यो मासपृथक्त्वाभ्यधिकवर्षाष्टकेऽतिक्रान्ते क्षपणायोद्यतते तस्य नपुंसकवेदं क्षपयतश्चरमसंछोभे सर्वसंक्रमेण नपुंसकवेदस्योत्कृष्टः प्रदेशसंक्रमः" एवं "माससप्तकाभ्यधिके वर्षाष्टकेऽतिक्रान्ते लघु शीघ्रं क्षपणायोद्यतते तस्य पुरुषवेदं चरमसंछोभे संछुभत उत्कृष्टप्रदेशसंक्रमो भवति"

पुनस्तत्रैव--"योऽष्टवार्षिक एव सप्तमासाऽभ्यधिकः संयमं प्रतिपन्नः तत्प्रतिपत्त्यनन्तरं चान्तर्मुहूर्त्तेन क्षपकश्रेणिमारभते" इति, अनेनाष्टवर्षानन्तरमन्तर्मुहूर्तमात्रेणापि केवलज्ञानं ज्ञायते ।

ननु जन्मतः सपादषट्कवर्षस्य प्रव्रज्यानङ्गीकारे लोकप्रकाशोक्तं किञ्चित्समधिकाष्टवर्षोनपूर्वकोटिवर्षप्रमाणं केवलिनमाश्रित्य तृतीयं शुक्ललेश्याकालमानं कथं संगच्छेत इति चेत्? न, लोकप्रकाशे नववर्षोनपूर्वकोटिप्रमाणस्य किञ्चिन्न्यूननववर्षोनपूर्वकोटिप्रमाणस्य च शुक्ललेश्यायाः कालमानस्योक्तत्वेन तृतीयमतस्याभावात्। तथा च तद्ग्रन्थः--"शुक्ललेश्यास्थितिर्नॄणां जघन्यान्तर्मुहूर्त्तिकी। उत्कृष्टा नववर्षोना पूर्वकोटीप्रकीर्तिता ॥५७॥ यद्यप्यष्टवर्षवयाः कश्चिद्दीक्षामवाप्नुयात्। तथापि तादृग्वयसः पर्यायं वार्षिकं विना ॥५८॥ नोदेति केवलज्ञानमतो युक्तमुदीरिता। पूर्वकोटी नवाब्दोना शुक्ललेश्या गुरुस्थितिः ॥५८॥ इति। उत्तराध्ययनसूत्रवृत्तिप्रज्ञापनावृत्त्यभिप्रायः तथैव। संग्रहण्यामप्युक्तं "चरमा नराण पुण नववासूणा पुव्वकोडी वि" इति। संग्रहणीवृत्तौ प्रवचनसारोद्धारवृत्तौ च "नराणां पुनश्चरमा शुक्ललेश्या उत्कृष्टतः किञ्चिन्न्यूननववर्षोनपूर्वकोटिप्रमाणापि। इयं च पूर्वकोटेरुर्ध्वं संयमावाप्तेरभावात् पूर्वकोट्यायुषः किञ्चित्समधिकवर्षाष्टकादूर्ध्वमुत्पादितकेवलज्ञानस्य केवलिनोऽवसेया इत्युक्तम्। अत्र च पूर्वकोट्या नववर्षोनत्वं किञ्चिन्न्यूननववर्षोनत्वं किञ्चित्समधिकाष्टवर्षोनत्वमिति त्रयं मिथो यथा न विरुध्यते तथा बहुश्रुतेभ्यो भावनीयम्" इति। अत्र वाचकावतंसकैः श्रीमद्विनयविजयपादैः शुक्ललेश्यास्थितौ पूर्वकोट्या नववर्षोनत्वं किञ्चिन्न्यूननवर्षोनत्वं चेति पक्षद्वय्येवोपन्यस्ता, न पक्षत्रयी। किञ्चित्समधिकाष्टवर्षोना पूर्वकोटिप्रमाणास्थितिः शुक्ललेश्यायाः स्थितित्वेन नोक्ता किन्तु यदेव न्यूननववर्षोनत्वं तदेव समधिकाष्टव-

पौनत्वमिति पूर्ववाक्याभिप्रायेण निगदिता विभाव्यते, अन्यथा पूर्ववाक्यस्य विरोधः स्यात्, अत एव ग्रन्थकारै'र्बहुश्रुतेभ्यो भावनीय'मिति सूचितं, तेन यत्किञ्चिदेतत्।

वादेः भ्रान्तवचनालङ्काराणि–'कथयन्तु भो सज्जना! अस्मिन् केनापि मौलिधूननं शक्य' मित्यादीन्युन्मत्तप्रलापवदुपेक्षणीयानि, यतः कदाग्रहग्रथिलत्वेनैव वादिना प्रवचनादृष्टं तृतीयमतं स्वशास्त्रनिरपेक्षप्रवृत्तिरक्षणाय कपोलकल्पनयोत्पादितं, तच्च सर्वैः शास्त्रानुसारिभिः सुविहितगीतार्थपुङ्गवैः सुष्ठु तिरस्कृतं वर्तते इत्यलमतिविस्तरेण।

अत्र वादी विनम्रवाण्या वदति तथ्यम्–'स्वीकृता भवत्प्रतिपादिता सपादषड्वार्षिकस्य प्रव्रज्याप्रदानविषयस्य मन्मतस्याशास्त्रीयता शास्त्रीयन्यायपुरःसरेण। किन्तु मद्द्वितीयमतत्वेन सपादसप्तवार्षिकस्य प्रव्रज्याप्रदानं यद्भवद्भिर्गृहीतं तत्तु मदुपरि प्रसादं कृत्वैव गृहीतं विचार्यते मया, अन्यथा मया तु मन्दबुद्धिना मम द्वितीयमतसूत्रणेऽपि भित्तिर्विस्मृता, यतः "जम्मणओ अट्ठमवरिसे" इति वाक्येन द्वितीयमतं प्रजल्पता मया 'जन्मतः सप्तवर्षानन्तरमेवैकदिनाधिक्येन दीक्षा दीयत' इति प्रजल्पितम्। नन्वत्रापि कथं त्वया प्रमादो जनित इति चेत्? अष्टमार्थे सम्भ्रान्तचेतसैवं विदग्धम्। "गब्भट्ठमस्स दिक्खा–जम्मणओ अट्ठमवरिसे" इति चूर्णिकारभगवतो विवरणात्मकमेकवाक्यमपि मदुत्सूत्राचरणरक्षणाय मया दुर्बुद्ध्या द्विभेदेन विभक्तमेकस्य 'गर्भतः सप्तवर्षादनु' द्वितीयस्य 'जन्मतः सप्तवर्षादनु' इत्येवमर्थोऽकारि, 'गर्भतोऽष्टवर्षादनु–जन्मतः सपादसप्तवर्षादनु' इति यथार्थकरणे मद्वादस्य प्रसङ्ग एव न स्यात्। भवतामुत्तरपक्षविलोकनेन जन्मतः सप्तवर्षादन्वष्टमे वर्षे दीक्षाप्रदानरूपं मद्द्वितीयमतमपि सपादषड्वार्षिकस्य दीक्षाप्रदानरूपं मत्तृतीयमतमिव शास्त्रविरुद्धं निर्मूलमसत्यमेवास्तीति सुष्ठु ज्ञातं मया।'

वादिन एतादृशे संमूर्च्छिते द्वितीयमते पूर्वोक्तापत्सरितोऽशेषा आपतन्ति, नास्ति शङ्कालेशोऽप्यस्मिन् । "गब्भट्ठमस्स दिक्खा—जम्मणओ अट्ठमवरिसे" इति चूर्णिवाक्यमेकमेव विवरणात्मकं, न तु जन्मत एकदिनाधिकसप्तसपादषट्कात्मकपरस्परभिन्ने उच्छृङ्खले मतप्रतिपादके द्वे वाक्ये इति दर्शितमेवोपरितो निभाल्यम् ।

अनेन न केवलं वादिनो जन्मतः सपादषड्वार्षिकस्य प्रव्रज्याप्रतिपादनमपि तु जन्मतो दिनाधिकसप्तवार्षिकस्य प्रव्रज्याप्रतिपादनरूपद्वितीयमतमप्युत्सूत्रसूत्रणं मन्तव्यं मनीषिभिः । संक्षेपेणैवमुत्तरपक्षोऽत्र समाप्तः ।

प्रस्तुतं प्रस्तूयते । जिनकल्पिकस्योत्कृष्टतः देशोनपूर्वकोटिको यतिपर्यायः । एवं जघन्यतो विंशतिवर्षाण्युत्कृष्टतो देशोनपूर्वकोटिको जिनकल्पं प्रतिपद्यत इत्युक्तं पर्यायद्वारम् ॥

आगमद्वारेऽपूर्वश्रुताध्ययनं न कुर्वन्ति, पूर्वाधीतं तु श्रुतं विश्रोतसिकाक्षयहेतोरेकाग्रमनसः सम्यगनुस्मरन्तीत्युक्तमागमद्वारम् ॥

वेदद्वारे स्त्रीवर्जः पुरुषवेदे नपुंसकवेदे वा वर्त्तमानो जिनकल्पं प्रतिपद्यते। पूर्वप्रतिपन्नस्तु सवेदोऽवेदो वा भवति, अवेदी तु प्रतिपन्नोपशमश्रेणिको भवति न तु क्षपकश्रेणिको, जिनकल्पिकस्य तद्भवे केवलज्ञानस्य निषेधात्। तदुक्तम् बृहत्कल्पभाष्ये—"उवसमसेढीए खलु वेदे उवसामियं उ अवेदो। न उ खइए तज्जम्मे केवलपडिसेहभावाओ ॥१॥" शेषकालं तु सवेद इत्युक्तं वेदद्वारम् ॥

कल्पद्वारे कल्पः साधूनामाचारः, स च सामान्येन दशधा भवति, तद्यथा—आचेलक्यः, औद्देशिकः, शय्यातरः, राजपिण्डः, कृतिकर्म, महाव्रतानि, ज्येष्ठः, सप्रतिक्रमणः, मासकल्पः, पर्युषणाकल्पश्चेति । एष दशविधोऽपि सततासेवनेन प्रथ-

मान्तिमजिनपतिसाधूनामवस्थितकल्पः । तथा महाविदेहोत्पन्नजिनपतियतीनां द्वाविंशतिजिनपतियतीनां च चतुर्षु स्थानेषु सर्दैवावस्थितत्वेन षट्सु च कल्पेषु कादाचित्कावस्थानेन स्थितास्थितश्च कल्पः संभवति । तत्र स्थितकल्प आदावुच्यते-शय्यया वसत्या तरतीति शय्यातरो वसतिस्वामी, तस्य पिण्डोऽशनपानखादिमस्वादिमवस्त्रपात्रकम्बलरजोहरणसूचीपिप्पलकनखरदनकर्णशोधनरूपो द्वादशविधः सर्वजिनपतियतीनामकल्प्यः, तद्ग्रहणप्रसक्तौ गुरुदोषसद्भावात् । दोषाणां च गुरुत्वं वक्ष्यमाणकारणैर्बोध्यम् । कारणानि चामूनि-उपाश्रयपार्श्ववर्त्तिसागारिकाणां साधुगुणानुरागेण पारणकप्रथमालिकाद्यर्थं पुनः पुनः तद्गृहेषु प्रवेशेनानेषणीयाहारसंभवो मिष्टान्नपानादिलोभेन तत्कुलापरित्यागः कारणवशेन दूरगतस्यापि पुनरागमनं विशिष्टाहारोपधिलाभेन शरीरोपध्योरलाघवं 'येन च वसतिर्दत्ता तेनाहारादिकमपि देयमि'ति गृहिणां भयोत्पादकत्वं दानभयाच्च वसतेर्दौर्लभ्यं वसत्यभावे च भक्तपानशिष्यादिव्यवच्छेदश्चेत्यादिकारणैः शय्यातरपिण्डो जिनैः प्रतिषिद्धः । तत्पिण्डपरित्यागे तु 'अहो एते निःस्पृहशिरोमणयो दीयमानमपि न किमपि गृण्हन्ति, एतेषां च पूज्यप्रवराणां महात्मनां वसत्यादिदाने महाँल्लाभः' इति भावोत्पादनेन शय्यातरस्य श्रद्धाया वृद्धिः कृता प्रवचनस्य च गौरवं कृतं भवति । शय्यातरस्यापि तृणडगलभस्ममल्लकपीठफलकशय्यासंस्तारकलेपादिवस्तूनां ग्रहणं सोपधिकशिष्यप्रव्राजनं च भगवद्भिरनुज्ञातम् । कः शय्यातरो भवतीत्युच्यते-यस्य वसतौ सुप्ताः, प्राभातिकं प्रतिक्रमणं चान्यत्र कुर्वन्ति, तदा द्वावपि शय्यातरौ भवतः । यस्य वसतौ समस्तामपि रात्रिं धर्मध्यानेन जाग्रति, प्राभातिकं च प्रतिक्रमणमन्यत्र कुर्वन्ति, तदा मूलोपाश्रयस्वामी शय्यातरो न भवति । यस्य वसतौ सुप्ताः प्राभातिकं च प्रतिक्रमणं कृतं स शय्यातरो भवतीत्युक्तः शय्यातरः कल्पः ।

ज्येष्ठकल्पस्तु रत्नाधिकव्यवहारः स च मध्यमजिनपतियतीनां निरतिचारत्वेन प्रव्रज्यातः प्रथमचरमजिनपतियतीनामुपस्थापनात आरभ्य एवेति। सा उपस्थापना पुनः परीक्षापूर्वकं क्रियते। न केवलोपस्थापना सामायिकचारित्रमपि विना परीक्षां नैव दीयते, एषा समयस्थितिरग्रे वक्ष्यते। भवभीरुभिरेषः शास्त्रविधिरवश्यमनुसर्त्तव्यः सम्यगित्यस्मिन्न प्रश्नावकाशोऽपि।

ननु पितापुत्रमातापुत्रिकाप्रभृतीनां षड्जीवनिकायाध्ययनाधिगमेन युगपत् प्राप्तानामुपस्थापनायोग्यानां को विधिरिति-चेत्? पित्रादीनामेव पूर्वमुपस्थापना कार्या ततः पुत्रादीनाम्। अथ पुत्रादयो योग्यतां प्राप्ताः पित्रादीनां च स्तोकमन्तरं तर्हि पित्रादौ प्राप्ते सति युगपदेव पितापुत्रादय उपस्थापनीयाः, मा भूत् पुत्रादिभ्यो लघुकरणेन पित्रादीनामप्रीतिरुन्निष्क्रमणं वा। यदा महदन्तरं तदा पित्रादयः प्रज्ञापनीयाः—'भो महाभाग! सप्रज्ञोऽपि तव पुत्रोऽन्येभ्यो बहुभ्यो लघुर्भविष्यति, तव पुत्रे च ज्येष्ठे तवैव गौरवमतोऽस्य त्वया विघ्नं न विधेयं इत्येवं प्रज्ञाप्यमानो यदि मन्यते तदोपस्थापना कार्या। अथ प्रज्ञाप्यमानोऽपि यदि न मन्यते तदा यावदसौ न प्राप्नोति तावत्प्रतीक्षणीयम्। द्वौ राजानौ युगपदुपस्थाप्येते यदा तदा यथासन्नज्येष्ठता कार्या। तदुक्तं—"पितापुत्तमाइआणं समगं पत्ताण जिट्ठपितिपभिइ। थेवंतरे विलंबो पन्नवणाए उवठ्ठवणा ॥ १ ॥" इति। एतेन ये केचनाधुनिकाः स्वस्मिन् बहुश्रुतत्वमभिमन्यमाना युगपत्प्रव्रजितयोः पितापुत्रयोः पुत्रस्य ज्येष्ठत्वं कृतवन्तस्ते सूत्रोत्तीर्णमाचरितवन्त इति विज्ञेयं विबुधैरित्युक्तो ज्येष्ठकल्पः ॥

कृतिकर्मापि द्विविधमभ्युत्थानलक्षणं द्वादशावर्त्तादिरूपं च। एतद् द्विविधमपि साधुभिः साध्वीभिश्च यथापर्यायं विधेयम्। साध्वीभिस्तु 'पुरुषोत्तमो धर्म' इति कृत्वा सर्वे साधवो वन्दनीया न पर्यायाद्यपेक्षणीयम्। तदुक्तमुपदेशमाला-

यां—“वरिससयदिक्खिआए अज्जाए अज्जदिक्खिओ साहू। अभिगमणवंदणनमंसणेण विणएण सो पुज्जो ॥ १ ॥ धम्मो पुरिसप्पभवो पुरिसवरदेसिओ पुरिसजिट्ठो। लोए वि पहू पुरिसो किं पुण लोगुत्तमे धम्मे ॥ २ ॥” इत्युक्तः कृतिकर्मकल्पः ॥

व्रतानि पञ्च प्रथमचरमजिनपतियतीनां, मध्यमजिनयतीनामृजुप्राज्ञानां चापरिगृहिताया: स्त्रिया अभोग्यत्वेन तस्य परिग्रहेऽन्तर्भावाच्चत्वारि महाव्रतानि द्रष्टव्यानीत्युक्तो महाव्रतनामा कल्पः। एतानि चत्वारि स्थानानि सर्वेषामपि साधूनां नित्यमासेवनीयानीत्युक्तः स्थितकल्पः ॥

अथास्थितकल्प उच्यते—तत्राविद्यमानं चेलं वस्त्रं यस्यासावचेलकस्तद्भाव आचेलक्यं तद्योगात् धर्मोऽपि चारित्रलक्षण आचेलक्यः। सर्वेऽपि जिनपतयो यावद्देवेन्द्रोपनीतं देवदूष्यं विद्यते तावत् सचेला देवदूष्यापगमे त्वचेलाः। प्रथमान्तिमजिनपतिवर्जसर्वजिनपतियतीनामृजुप्राज्ञत्वेन वहुमूल्यविविधवर्णाद्युपेतवस्त्रपरिभोगानुज्ञायाः सचेलकत्वं केषाञ्चित्तु श्वेतमानोपेतादिवस्त्रधारित्वेनाचेलकत्वमपि। प्रथमान्तिमजिनपतियतीनां श्वेतमानोपेतजीर्णप्रायवस्त्रधारित्वेनाचेलकत्वमेव, न चैतदयुक्तं तथाविधविशिष्टनेपथ्याभावादचेलकत्वव्यवहारस्य सार्वजनीनत्वात्, नञः कुत्सितार्थत्वेऽपि युक्तियुक्तत्वाच्च। तदुक्तं—“जह जलमवगाहंतो वहुचेलो वि सिरवेढियकडिल्लो। भन्नइ नरो अचेलो तह मणुओ संत चेलो वि ॥ १ ॥ थोवजुण्णकुच्छिअचेलेहिं वि भण्णइ अचेलोत्ति। जह तंतुसालिअ लहुं दिसु पोत्तिं नग्गिआमोत्ति ॥ २ ॥” इत्याचेलक्यकल्पः ॥

तथोद्देशेन साधुसंकल्पेन निर्वृत्तमौद्देशिकमाधाकर्म, तच्च प्रथमान्तिमतीर्थकृत्तीर्थयोः यं कञ्चन मुनिमुद्दिश्य कृतमशनादिकं तत् सर्वेषामपि मुनीनामकल्प्यम्। मध्यमजिनतीर्थेषु तु यमुद्दिश्य कृतं तत् तस्यैवाकल्प्यं न शेषसाधूनामित्यौद्देशिककल्पः ॥

सप्रतिक्रमणधर्मस्तु प्रथमान्तिमजिनपतियतीनामृजुजडत्वेन वक्रजडत्वेन चातीचारो भवतु मा वा तथाप्युभयसन्ध्यं षडावश्यकं गमनागमनाद्यतिचारादिषु च नियमेनेर्यापथिकप्रतिक्रमणं कर्त्तव्यम्, उपकारकत्वात् । मध्यमजिनपतियतीनामृजुप्राज्ञत्वेन प्रायेणातिचार एव न सम्भवति। सम्भवे च तत्क्षण एव रोगचिकित्सोदाहरणेन प्रतिक्रमणमुक्तरूपं कुर्वन्ति । तथाहि जातमात्र एव रोगे चिकित्सा क्रियमाणा सुखावहा भवति, एवं तत्काल एवातिचारविशुद्धये विधीयमानं प्रतिक्रमणमपीत्युक्तः प्रतिक्रमणकल्पः ॥

राजपिण्डः–राजा तावदुदितोदितकुलप्रसूतो बद्धमुकुटोऽभिषिक्तः सेनापतिपुरोहितश्रेष्ठ्यमात्यसार्थवाहलक्षणैः पञ्चभिः सार्द्धं राज्यं भुञ्जानश्चक्रवर्त्त्यादिस्तस्य यः पिण्डोऽशनादिचतुष्कं वस्त्रं पात्रं कम्बलं रजोहरणमित्यष्टविधः कल्पकिरणावल्यां, प्रवचनसारोद्धारे तु रजोहरणस्थाने पादप्रोञ्छनकमुक्तम्, स च प्रथमान्तिमजिनयतीनां व्याघातादिदोषदुष्टत्वेन न कल्पते । मध्यमजिनयतीनां त्वृजुप्राज्ञत्वेन कल्पतेऽपि । तदुक्तं–"उदितादिगुणो राया अट्ठविहो तस्स होइ पिंडुत्ति । पुरिमचरिमाणमेसो वाघायाइहि पडीकुट्ठो ॥ १ ॥" व्याघातादयस्त्वेवं–"ईसरपभिइहिं तहिं वाघाओ खुद्दलोहुदाराणं । दंसणसंगो गरहा इअरेसि न अप्पमायाओ ॥ २ ॥" इति राजपिण्डकल्प उक्तः ॥

प्रथमचरमजिनपतियतीनां प्रतिबन्धादिदोषसंभवेन मासकल्पोऽवस्थितो द्रष्टव्यः । तदुक्तं–"पडिबन्धो लहुयत्तं न जणुवयारो न देसविन्नाणं । नाणाहारणमेए दोसा अविहारपक्खंमि ॥१॥" अथ कदाचित् दुर्भिक्षादिकालदोषसंयमाननुगुणत्वादिक्षेत्रदोषशरीराननुकूलभक्तलाभादिद्रव्यदोषग्लानत्वज्ञानहान्यादिभावदोषवशतो यद्यप्येष मासकल्पो न बहिर्वृत्त्या क्रियते तथाऽप्य-

यदयंभावेन भावतो वसतिसंस्तारकव्यत्यासादिभिर्विधेय एवेति । मध्यमजिनयतीनां त्वृजुप्रज्ञत्वेन मासकल्पो न नियतः, तेषामधिकावस्थानेऽपि पूर्वोक्तदोषासंभवात् । तदुक्तं—"दोसासइ मज्झिमा अच्छन्ति उ जाव पुव्वकोडी वि । विहरंति वासासु वि अकद्दमे पाणरहिए य ॥ १ ॥" इति मासकल्पः ॥

तथा परि सामस्त्येनैकत्रावगृहीतक्षेत्रमात्रे वसनं पर्युषणा । एवं व्युत्पन्नोऽपि पर्युषणाशब्दः क्वचिच्चातुर्मासकाद्यवगृहीतकालविशेषाभिधायकः, क्वचित् सांवत्सरिकप्रतिक्रमणाद्युपलक्षितपर्वदिनस्याप्यभिधायकः । स च सालम्बननिरालम्बनभेदात् द्विधा भवति । निरालम्बनोऽपि जघन्योत्कृष्टभेदात् द्विधा स्यात् । जघन्यस्तावत् सांवत्सरिकप्रतिक्रमणादारभ्य कार्त्तिकचातुर्मासिकप्रतिक्रमणं यावत् सप्ततिदिनमानः । उत्कृष्टस्तु चातुर्मासिकः । तदुक्तं—"चाउम्मासुक्कोसं सत्तरि राइंदिया जहन्नेणं" इति । सोऽपि गृहिज्ञाताज्ञाताभ्यां द्विविधः । गृहिज्ञातस्त्वनन्तरोदितः सप्ततिदिनमान एव, तदुक्तं—"इत्थ य अणभिग्गहिअं वीसइराइ सवीसमासो । तेण परमभिग्गहिअं गिहिणाअं कत्तिअं जाव ॥ १ ॥"; "समणे भगवं महावीरे वासाणं सवीसराइए मासे विइक्कंते वासावासं पज्जोसवेइ" इति श्रीकल्पसूत्रं; "समणे भगवं महावीरे वासाणं सवीसराइए मासे वइक्कंते सत्तरि राइंदिएहिं सेसेहिं वासावासं पज्जोसवेति" इति समवायाङ्गसूत्रं च तदेवावगमयति । अज्ञातस्तु पञ्चाशद्दिनमानः, आषाढचातुर्मासिकप्रतिक्रमणादारभ्य सांवत्सरिकप्रतिक्रमणं यावत् परं स्वामिगृहीतोऽपि पञ्चकवृद्ध्यावसेयः । तथाहि—आषाढसितदशमीस्थिताः साधवः पूर्णिमायां वयमत्र स्थिताः स्म इति स्वामिगृहीतं कुर्वन्ति । तदुक्तं पर्युषणाकल्पनिर्युक्तौ—"सुद्धदसमीठिआणं आसाढीपुण्णिमोसरणं" इति । पृच्छतां च गृहस्थानां पुरोऽधिकरणादि-

न च तत् कुर्वाणोऽप्यसौ प्रगुणीभवति प्रत्युत क्षपणकादौ वैद्ये नाग्न्यादिकं तद्वेषं कुर्वन् सर्वरसांश्च स्वेच्छया तद्वद् भुञ्जानस्तच्चरितानुष्ठायी सन्निपातस्येव म्रियते । तस्माद् वैद्योपदेशानुष्ठानमेव रोगिणो रोगापगमहेतुः । प्रस्तुतयोजनामाह–'तद्दे'त्यादि, तथा तेनैव प्रकारेण जीववैद्यस्यादेशं कुर्वाणस्तद्वेषचरिते अनाचरन्नपि कर्मरोगादपैति वियुज्यते न पुनस्तेषामादेशमकुर्वाणस्तन्नेपथ्यचरिते बिभ्राणोऽपि तस्माद् वियुज्यते, केवलं तद्योग्यतारहितत्वात्तन्नेपथ्यचरिताभ्यां प्रवर्तमान उन्मादादिभाजनमेव भवतीति ।" धर्मसंग्रहण्यां हरिभद्रसूरिपादा अपि–"ता एत्थ वेज्जणायं अवलंबिय संजमम्मि जइयव्वं । तल्लिंगधरणगाहो ण उ एगंतेण कायव्वो ॥ ११३१ ॥"

एवं श्रीशास्त्रवार्तासमुच्चये उपाध्यायपादा अपि भगवत्कृतस्य करणव्यामोहवतां प्रति सुष्ठूक्तवन्तः–"छद्मस्थावस्थायां भगवतोपदेश–शिष्यदीक्षा–गुरुवचनाद्यनुपग्रहाद्–दिग्वाससामपि तदनुपग्रहापत्त्या स्वतीर्थोच्छेदापत्तेः । तस्माच्चतुरातुरेण यथा वैद्योपदिष्टमेव क्रियते, न तु तत्कृतमनुक्रियते, व्याध्यनुच्छेदप्रसङ्गात् । तथा भव्येनापि धर्माधिकारिणा भगवदुक्त एव मार्गो यथाशक्त्याऽऽचरणीयः न तु तच्चरित्रमाचरणीयम्, चक्रवर्तिभोजनलुब्धविप्रवद् विपरीतप्रयोजनप्रसङ्गादिति विभावनीयम् ।"

अनेन स्पष्टं ज्ञायते यदुत ये साम्प्रतकालीनाः केचन दुर्विदग्धाः कृतानुकरणं प्रति कदाग्रहग्रथिलत्वमाचरन्ति ते विवसनैः सह स्वसमत्वं दर्शयन्ति । तान्प्रति पूज्यागमधराणामुपरोक्तोपदेशः सम्यगेव । तं विचारयित्वा ते स्वग्रथिलतामोचनं करिष्यन्तीत्याशास्महे तेषां शुभाय ।

ननु भाद्रपदचतुर्थीक्षये वृद्धौ वा कस्यां तिथौ पर्युषणा कर्त्तव्येति चेत् ? आदौ तिथेर्वृद्धौ क्षये च का तिथिराराध्यत्वेनोपादेयेत्युच्यते–द्वितीया पञ्चम्यष्टम्येकादशीचतुर्दशीतिथिक्षीणासु क्रमशः प्रतिपच्चतुर्थीसप्तमीत्रयोदशीषु तिथिषु

तपःपौषधब्रह्मचर्यादिकृत्यं करणीयम्, तस्यां तिथौ नियमेन क्षीणतिथिसम्भवात्, वृद्धौ तु द्वितीयातिथिराराध्यत्वेन सम्मता, यतो यदा प्राक्तने वासरे षष्टिघटिकामिता द्वितीयवासरे चैकादिघटिकामिता तिथिर्भवति तदा सा वृद्धतिथिरुच्यते। तदुक्तं धर्मसागरोपाध्यायैस्तत्त्वतरङ्गिण्याम्—"यदा प्राक्तना तिथिः प्राक्तने वासरे षष्टिघटिकामिता भवति तदनु चोत्तरातिथिरेकाद्यधिकघटिकामाना स्यात् तदानीं षष्टिघटिकामितो वारलक्षणो दिवसो गतोऽवशिष्यमाणाश्चैकादिघट्यो यास्ता अग्रेतनवासरलक्षणे दिने भवन्ति, अतो वृद्धिरुच्यते, न पुनस्ततः पृथग्भूता वर्धते, तथा च ता घट्यस्तस्या एव तिथेरवशिष्यमाणोंऽशः तदभावे च कथं पूर्णा तिथिरग्रवासरे इति वक्तुं युक्तं? न ह्यसंख्यातप्रदेशात्मकस्यात्मन एकस्यापि प्रदेशस्य बुद्ध्यापहारे तद्व्यतिरिक्ताशेषप्रदेशात्मकोऽप्यात्मा जीवसंज्ञां लभते तत्प्रक्षेपे तु लभते एवेति स्वयं किमिति नालोचयति"। परमाराध्यपादश्रीमदुमास्वातिवाचकप्रघोषोऽपि—"क्षये पूर्वा तिथिः कार्या वृद्धौ कार्या तथोत्तरा"। अनेन क्षये पूर्वा वृद्धावुत्तरा ग्राह्या, न तु क्षीणायां प्राक्तनप्राक्तनी, यथा पञ्चमीक्षये तृतीयायां, एवं वृद्धावपि नोत्तरोत्तरायां, यथा पञ्चमीवृद्धौ षष्ठीतिथौ, तत्र तद्गन्धस्याप्यभावादिति निष्टङ्कितम्। ननु पूर्णिमाक्षये तदाराधना कुत्र कर्त्तव्येति चेत्? चतुर्दश्यां, पूर्णिमायाः तत्र सम्भवात्। न च पूर्णिमाक्षये त्रयोदश्यां चतुर्दशी चतुर्दश्यां च पूर्णिमाराधनं कर्त्तव्यमिति वाच्यम्, सूर्योदये चतुर्दशीसत्वात्। तदुक्तं तत्त्वतरङ्गिण्याम्—"पूर्णमासीक्षये भवतामपि का गतिरिति चेत्? अहो विचारचातुरी! यतस्तत्र चतुर्दश्यां द्वयोरपि विद्यमानत्वेन तस्याऽप्याराधनं जातमेवेति"। किञ्च पूर्णिमाक्षये यदि त्रयोदश्यां चतुर्दशी चतुर्दश्यां च पूर्णिमा कर्त्तव्या स्यात् तदा श्रीमद्धीरसूरिपादानां "तत्तपः त्रयोदश्यां विस्मृतौ प्रतिपदीति" वक्तव्यं न स्यात्। तथा च हीरप्रश्ने—"पूर्णिमास्यां च त्रुटितायां त्रयोदशीचतुर्दश्योः क्रियते,

दोषसम्भवशङ्कया वयमत्र स्थिता न वेति नियमाभावमेव वदन्त्येष उत्सर्गः। तदुक्तं निशीथचूर्णौ दशमोद्देशके-"आसाढीपुण्णिमाए पज्जोसवेंति एस उस्सग्गो"। तथाविधक्षेत्रादिसामग्र्यभावे तु श्रावणकृष्णपञ्चम्यां पर्युषितव्यम्, तदभावे दशम्यां तदभावे पञ्चदश्यामेवं पञ्चकपञ्चकवृद्धिस्तावत्कर्त्तव्या यावत् भाद्रपदसितपञ्चमी। तदुक्तं पर्युषणाकल्पनिर्युक्तौ-"इत्थ य पणगं पणगं कारणिअं जा सवीसमासो" इति। तस्यां तु नियमतो गृहिज्ञातमेव पर्युषितव्यम्। एष अपवादः। तदुक्तं निशीथचूर्णौ-"सेसकालं पज्जोसविताणं अववाओत्ति"। नन्वेते पर्युषणा प्रकारा अधुना कथं न क्रियन्त इति चेत्? सङ्घादेशेन व्यवच्छिन्नत्वात्। तथाऽभिवर्द्धितवर्षे विंशत्यादिदिनैः क्रियमाणगृहिज्ञातावस्थानरूपपर्युषणाप्रकारस्यापि व्यवच्छिन्नत्वात् साम्प्रतं तदपि कर्तुमनुचितम्। पर्युषणापर्वं तु युगप्रधानश्रीमत्कालिकाचार्यादेशात् भाद्रशुक्लचतुर्थ्यामेव कार्यम्। तदुक्तं निशीथचूर्णौ-"सीसो पुच्छति इआणिं कहं चउत्थीए अपव्वे पज्जोसविज्जति? आयरिओ भणति-कारणिआ चउत्थी अज्जकालगायरिएण पवत्तिआ, एवं जुगप्पहाणेहिं कारणे चउत्थी पवत्तिआ सा चेवाणुमता सव्वसाहूणं" इति। कारणाभावं मत्वा पुनः भाद्रशुक्लपञ्चम्यां पर्युषणापर्वकारकाणां तु युगप्रधानाचरितसर्वसंघानुमताचरणाभङ्गेन "नो से कप्पइ तं रयणिं उवायणावित्तए" इति सूत्राज्ञालोपेनाज्ञाभङ्गादिदोषाणां प्रसङ्गः।

ननु तीर्थकरकृतस्य क्रियमाणत्वेन कथं भवदुक्तदोषप्रसङ्ग इति चेत्? न, जिनपत्याज्ञाया एव विधेयत्वेन प्रामाण्यात्। तत्कृतस्यापि क्रियमाणत्वे तु रजोहरणाद्युपकरणप्रतिक्रमणादिक्रियाणां व्यवच्छेदः स्यात्। तदुक्तं श्रीमद्धर्मसागरैः "न च तीर्थकृद्भिः पञ्चस्यादिदिवसेष्वेव पर्युषणादिकृतमस्माभिरपि तथैव क्रियमाणे को दोष इति वाच्यम्, तेषामाज्ञाया एवान्येषां विधेयतया प्रामा-

श्यात्, न च तत्कृतस्यापि, अन्यथा रजोहरणाद्युपकरणप्रतिक्रमणादिक्रियाणां विलोपापत्तेः, तीर्थकृतां तदसम्भवात्। तस्मादाज्ञाया एव विधेयतया प्रामाण्यं तदेवाभ्युपगन्तव्यम्, न पुनः तत्कृत्यमपि । कालिकसूरिवचोऽपि जिनाज्ञैव पञ्चविधाचारचरणशालित्वेन निशीथचूर्णिकादिभिः युगप्रधानत्वादिगुणविशेषितत्वात् तत्प्रवर्त्तितस्य तीर्थाभिमतत्वाच्च । तदकरणे च जिनाज्ञाभङ्ग इत्यभिनिवेशं मुक्त्वा सम्यग्विचार्यमिति" । किञ्च तत्कृतस्यापि करणे छद्मस्थावस्थायामाचार्यादीनां सर्वेषामप्युपदेशदानमपि न स्यात्, तीर्थकरैः छद्मस्थावस्थायामुपदेशादानात् । 'तत्कृतस्याकरणे तु चारित्रस्याप्यकरणत्वप्रसङ्ग' इति ग्रथिलत्वमपि मा प्रकटय, मुनीनां सर्वस्याप्यनुष्ठेयस्याज्ञान्तर्वर्त्तित्वादिति । ननु कृतस्याकरणे जिनकल्पिकाद्यनुष्ठानस्यानुमोदनीयत्वमपि न स्यात्, यतोऽनुमोदनीयमपि मार्गानुयायिनां तदेव भवति यदनुकरणीयमिति चेत् ? अत्र पृच्छामः–नन्वनुकरणीयमाज्ञान्तर्वर्त्ति आज्ञाबहिर्वर्त्ति वा ? द्वितीयश्चेत्? आज्ञाबहिष्कृतत्वेन जिनकल्पिकादिभिः कृतमपि नानुकरणीयम् । आद्यश्चेत् ? आज्ञाभ्यन्तर्वर्त्तित्वेनौदयिकस्य क्षयोपशमादिजन्यस्य वा सर्वस्याप्यनुकरणीयत्वेन न विरोधः । एवमावश्यकभाष्येऽप्याज्ञाया एव विधेयत्वमुक्तं नानुकरणीयस्य, तदुक्तं तत्र साक्षेपम् "अथ यथा गुरोरुपदेशः कर्त्तव्यस्तथा तद्वेषचरितेऽप्यवश्यमाचरणीये' तदयुक्तं, तदुपदेशानुष्ठानस्यैव कार्यसाधकत्वादिति दर्शयति–

रोगी जहोवएसं करेइ वेज्जस्स हो अरोगो य । न उ वेसं चरियं वा करेइ न य पउणइ कारिंतो ॥ २५८६ ॥ तह जिणवेज्जादेसं कुणमाणोऽवेइ कम्मरोगाओ । न उ तन्नेवत्थधरो न उ तेसिमाएस (तस्सादेस)मकरंतो ॥ २५८७ ॥"

व्याख्या–"इह यथा रोगी वैद्यस्योपदेशं करोति तत्करणमात्रेणैव च रोगाद्विमुच्यते न पुनरसौ तद्वेषं करोति नापि तच्चरितमाचरति

न च तत् कुर्वाणोऽप्यसौ प्रगुणीभवति प्रत्युत क्षपणकादौ वैद्ये नाग्न्यादिकं तद्वेषं कुर्वन् सर्वरसांश्च स्वेच्छया तद्वद् भुञ्जानस्तच्चरितानुष्ठायी सन्निपातस्येव म्रियते। तस्माद् वैद्योपदेशानुष्ठानमेव रोगिणो रोगापगमहेतुः। प्रस्तुतयोजनामाह–'तहे'त्यादि, तथा तेनैव प्रकारेण जीववैद्यस्यादेशं कुर्वाणस्तद्वेषचरिते अनाचरन्नपि कर्मरोगादपैति वियुज्यते न पुनस्तेषामादेशमकुर्वाणस्तन्नेपथ्यचरिते बिभ्राणोऽपि तस्माद् वियुज्यते, केवलं तद्योग्यतारहितत्वात्तन्नेपथ्यचरिताभ्यां प्रवर्तमान उन्मादादिभाजनमेव भवतीति।" धर्मसंग्रहण्यां हरिभद्रसूरिपादा अपि–"ता एत्थ वेज्जणायं अवलंबिय संजमम्मि जइयव्वं। तल्लिंगधरणगाहो ण उ एगंतेण कायव्वो॥ ११३१॥"

एवं श्रीशास्त्रवार्तासमुच्चये उपाध्यायपादा अपि भगवत्कृतस्य करणव्यामोहवतां प्रति सुष्ठूक्तवन्तः–"छद्मस्थावस्थायां भगवतोपदेश–शिष्यदीक्षा–गुरुवचनाद्यनुपग्रहाद्–दिग्वाससामपि तदनुपग्रहापत्त्या स्वतीर्थोच्छेदापत्तेः। तस्माच्चतुरातुरेण यथा वैद्योपदिष्टमेव क्रियते, न तु तत्कृतमनुक्रियते, व्याध्यनुच्छेदप्रसङ्गात्। तथा भव्येनापि धर्माधिकारिणा भगवदुक्त एव मार्गो यथाशक्त्याऽऽचरणीयः न तु तच्चरित्रमाचरणीयम्, चक्रवर्तिभोजनलुब्धविप्रवद् विपरीतप्रयोजनप्रसङ्गादिति विभावनीयम्।"

अनेन स्पष्टं ज्ञायते यदुत ये साम्प्रतकालीनाः केचन दुर्विदग्धाः कृतानुकरणं प्रति कदाग्रहग्रथिलत्वमाचरन्ति ते विवसनैः सह स्वसमत्वं दर्शयन्ति। तान्प्रति पूज्यागमधराणामुपरोक्तोपदेशः सम्यगेव। तं विचारयित्वा ते स्वग्रथिलतामोचनं करिष्यन्तीत्याशास्महे तेषां शुभाय।

ननु भाद्रपदचतुर्थीक्षये वृद्धौ वा कस्यां तिथौ पर्युषणा कर्त्तव्येति चेत्? आदौ तिथेर्वृद्धौ क्षये च का तिथिराराध्यत्वेनोपादेयेत्युच्यते–द्वितीया पञ्चम्यष्टम्येकादशीचतुर्दशीतिथिक्षीणासु क्रमशः प्रतिपच्चतुर्थीसप्तमीत्रयोदशीषु तिथिषु

तपःपौषधब्रह्मचर्यादिकृत्यं करणीयम्, तस्यां तिथौ नियमेन क्षीणतिथिसम्भवात्, वृद्धौ तु द्वितीयातिथिराराध्यत्वेन सम्मता, यतो यदा प्राक्तने वासरे षष्टिघटिकामिता द्वितीयवासरे चैकादिघटिकामिता तिथिर्भवति तदा सा वृद्धतिथिरुच्यते। तदुक्तं धर्मसागरोपाध्यायैस्तत्त्वतरङ्गिण्याम्–"यदा प्राक्तना तिथिः प्राक्तने वासरे षष्टिघटिकामिता भवति तदनु चोत्तरातिथिरेकाद्यधिकघटिकामाना स्यात् तदानीं षष्टिघटिकामितो वारलक्षणो दिवसो गतोऽवशिष्यमाणाश्चैकादिघट्यो यास्ता अग्रेतनवासरलक्षणे दिने भवन्ति, अतो वृद्धिरुच्यते, न पुनस्ततः पृथग्भूता वर्धते, तथा च ता घट्यस्तस्या एव तिथेरवशिष्यमाणोंऽशः तदभावे च कथं पूर्णा तिथिरग्रवासरे इति वक्तुं युक्तं ? न ह्यसंख्यातप्रदेशात्मकस्यात्मन एकस्यापि प्रदेशस्य बुद्ध्यापहारे तद्व्यतिरिक्ताशेषप्रदेशात्मकोऽप्यात्मा जीवसंज्ञां लभते तत्प्रक्षेपे तु लभते एवेति स्वयं किमिति नालोचयति"। परमाराध्यपादश्रीमदुमास्वातिवाचकप्रघोषोऽपि–"क्षये पूर्वा तिथिः कार्या वृद्धौ कार्या तथोत्तरा"। अनेन क्षये पूर्वा वृद्धावुत्तरा ग्राह्या, न तु क्षीणायां प्राक्तनप्राक्तनी, यथा पञ्चमीक्षये तृतीयायां, एवं वृद्धावपि नोत्तरोत्तरायां, यथा पञ्चमीवृद्धौ षष्ठीतिथौ, तत्र तद्गन्धस्याप्यभावादिति निष्टङ्कितम्। ननु पूर्णिमाक्षये तदाराधना कुत्र कर्त्तव्येति चेत् ? चतुर्दश्यां, पूर्णिमायाः तत्र सम्भवात्। न च पूर्णिमाक्षये त्रयोदश्यां चतुर्दशी चतुर्दश्यां च पूर्णिमाराधनं कर्त्तव्यमिति वाच्यम्, सूर्योदये चतुर्दशीसत्वात्। तदुक्तं तत्त्वतरङ्गिण्याम्–"पूर्णमासीक्षये भवतामपि का गतिरिति चेत् ? अहो विचारचातुरी ! यतस्तत्र चतुर्दश्यां द्वयोरपि विद्यमानत्वेन तस्याऽप्याराधनं जातमेवेति"। किञ्च पूर्णिमाक्षये यदि त्रयोदश्यां चतुर्दशी चतुर्दश्यां च पूर्णिमा कर्त्तव्या स्यात् तदा श्रीमद्धीरसूरिपादानां "तत्तपः त्रयोदश्यां विस्मृतौ प्रतिपदीति" वक्तव्यं न स्यात्। तथा च हीरप्रश्ने–"पूर्णिमास्यां च त्रुटितायां त्रयोदशीचतुर्दश्योः क्रियते,

त्रयोदश्यां विस्मृतौ तु प्रतिपद्यपीति";–न चोक्तमत्र पूर्णिमाक्षये त्रयोदश्याः क्षयः कर्त्तव्यः। पौषधविधिप्रकरणे सुबोधासमाचार्यां परमानन्दसूरिकृतायां च समाचार्यामपि–"जइ तंमि दिणे चउद्दसी तो पक्खियं चउम्मासिअं वा, अह न तो देवसियं"। तथा क्षये वृद्धौ चाराधनायां 'क्षये पूर्वा तिथिः वृद्धौ कार्या तथोत्तरा' इति नियमवत् 'सूर्योदये या तिथिः सा एवाराध्यत्वेन ग्राह्या नान्या, तथा चोदयगताष्टमी चतुर्दशी पञ्चमी भाद्रशुक्ला चतुर्थी चेत् सैव ग्राह्ये'ति नियमोऽपि दृढोऽस्ति। न च पर्वतिथिक्षयमन्तरेणायं नियम इति वाच्यम्, कल्याणकतिथिनवमीक्षये सप्तमीक्षयकरणप्रसङ्गापत्तेः। न चेष्टापत्तिः कर्तुं शक्यते, त्वयापि तदस्वीकारात्। ननु कल्याणकनवमीतिथ्याराधनासत्कतपजपब्रह्मचर्यपालनादिकं कुत्र कर्तव्यमिति चेत्? अष्टम्यां द्वयोराराधनं जातमेव, पूर्णमासीक्षये चतुर्दश्यामिव। एवं भाद्रपदपञ्चमीक्षये पूर्णिमाक्षये च ब्रह्मचर्यादिकं कुत्र पालनीयमिति प्रश्नस्यानवकाश एव। उदयतिथिपरावर्तने पुनः श्राद्धविधौ आज्ञाभङ्गादयोऽनेके दोषाः प्रतिपादिताः, तदुक्तं–"चाउम्मासि अ वरिसे पक्खिअपंचट्ठमीसु णायव्वा। ताओ तिहिओ जासिं उदेइ सूरो न अन्नाओ ॥ १ ॥ पूया पच्चक्खाणं पडिक्कमणं तह य नियमग्गहणं च। जीए उदेइ सूरो तीइ तिहिए उ कायव्वं ॥ २ ॥ उदयंमि जा तिहि सा पमाणमियरीइ कीरमाणीए। आणाभंगणवत्था मिच्छत्तं विराहणं पावे ॥ ३ ॥" इति। किञ्चान्यत्, भाद्रपदचतुर्थीक्षये तृतीयायां संवत्सरीकरणं युक्तं, तत्र चतुर्थीसद्भावात्, न तु पञ्चम्यां, तत्र तद्गन्धस्याप्यभावात्, करणे च 'क्षये पूर्वा तिथिः कार्या' इति नियमस्य भङ्गः स्यात्। ये चतुर्दशीपाते पूर्णिमायां पर्वेति मत्वा तत्रारोप्य चतुर्दशीं कुर्वन्ति तेऽपि भाद्रशुक्लचतुर्थीक्षये तृतीयायामेव संवत्सरीं कुर्वन्ति न पञ्चम्यामत एव तत्वतरङ्गिण्यामुपाध्यायश्रीधर्मसागरैस्तान् प्रति पञ्चमीकरणप्रसङ्गोऽभि-

हितः । तथा च तद्ग्रन्थः—"पर्युषणाचतुर्थ्याः क्षये पञ्चमीस्वीकारप्रसङ्गेन त्वं व्याकुलो भविष्यसीत्यपि ज्ञेयम्," अत्र वादिनं प्रति चतु-
र्थीपाते पञ्चमीकरणापत्तिः सूचिता न तु पञ्चमीक्षये तृतीयापातः सूचित इति धीमद्भिर्ध्येयम् । तथा करणे च "ताओ तिहिओ
जासि उदेइ सुरो न अन्नाओ" इति श्राद्धविध्युक्तस्य, "अथ तिथीनां वृद्धौ हानौ च का तिथिः स्वीकार्येत्यत्रोभयोः साधारणलक्षण-
मुत्तरार्द्धेनाह—'जा जंमि हु दिवसे समप्पइ सो पमाणं ति' यद्यस्मात् या तिथिर्यस्मिन्नादित्यादिलक्षणे दिवसे समाप्यते स एव दिवसो वार-
लक्षणः प्रमाणमिति तत्तिथीत्वेन स्वीकार्यः । अत्र 'हुः' एवकारार्थो द्रष्टव्यः । अत एव क्षये पूर्वातिथिर्ग्राह्या तस्मिन्नेव दिवसे द्वयोरपि समा-
प्तत्वेन तस्या अपि समाप्तत्वात्" इति तत्वतरङ्गिण्युक्तोभयसाधारणलक्षणस्य च व्याहतिप्रसङ्गः, श्राद्धविध्युक्ता आज्ञा-
भङ्गादयो दोषाश्च भवन्ति । जगद्गुरुश्रीहीरसूरिपादैरपि—"यदा पञ्चमीतिथिस्त्रुटिता भवति तदा तत्तपःपूर्वस्यां तिथौ क्रियत"
इत्येवोक्तं, न चोक्तं पञ्चमीपाते तृतीयायां चतुर्थी चतुर्थ्यां च पञ्चमीकरणमिति, अनेन पञ्चमीपाते तृतीयाकरणमपि
तादृशकरणशीलान्प्रति सूत्रोत्तीर्णं द्रष्टव्यम् । अतः चतुर्थीक्षये तृतीयायां चतुर्थी वृद्धौ द्वितीयचतुर्थ्यां पर्युषणा कर्त्तव्येति ।

अयं च द्विधापि निरालम्बनः स्थविरकल्पिकानामेव, जिनकल्पिकानां तु चतुर्मासिक एवेति । तदुक्तं—"चाउम्मासुक्कोसो
सत्तरिराइंदिआ जहन्नेणं । थेराणं जिणाणं पुण नियमा उक्कोसओ चेव ॥१॥" इति । सालम्बनस्तु विहितमासकल्पानां तत्रैव चातुर्मास-
कानन्तरमपि मार्गशीर्षमवस्थाने षण्णमासिको भवति । तदुक्तं कल्पनिर्युक्तौ निशीथभाष्ये च—"काउण मासकप्पं तत्थेव ठिआण
तीतमग्गसिरे । सालम्बणाण छम्मासिओ उ जेट्ठोग्गहो होइ ॥ १ ॥" इति ।

तत्र द्रव्यक्षेत्रकालभावस्थापना चैवं—द्रव्यतः तृणडगलभस्समल्लकपीठफलकशय्यासंस्तारकादीनि गृह्णन्ति, पटलपात्र-

वन्धचोलपट्टनिषद्यारजोहरणानि च द्विगुणानि स्वायत्तीकुर्वन्ति । तदुक्तं निशीथचूर्णौ—"भिक्खागो पडला पत्तबन्धो य तेसु दुगुणेसु अघेप्पंतेसु अ संजमविराहणा चोलपट्टे रयोहरणणिसेज्जो एए दुगुणो अघेप्पंते उल्लेसु निच्च भोगेण अजीरंतो गेलण्णं भवति, एत्थ आयविराहणा" इति । प्राग्गृहीतानां भसडगलादीनां परिष्ठापनं कुर्वन्ति । न्यूनोदरतां निष्कारणे विकृतिनवकपरिवर्जनमुच्चारादिमात्रकसंग्रहणं लोचकरणमभिनवोपकरणाग्रहणं च कुर्वन्ति । मङ्गलनिमित्तं पञ्चदिनानि यावत् पर्युषणाकल्पं कर्षयन्ति । भावितश्राद्धं पुराणं च मुक्त्वाऽन्यं न दीक्षयन्ति । तदुक्तं श्रीकल्पनिर्युक्तौ निशीथभाष्ये च— मोत्तुं पुराणभावितसड्ढे सचित्तसेसपडिसेहो"—चूर्णिः—"जो पुराणो भावियसड्ढो वा एते मुत्तुं सचित्ते सेसा ण पव्वाविज्जंति, अह पव्वावेंति सेहं सेहिं वा तो चउगुरुं आणातिया य दोसा वासासु पव्वाविते" ।

अत्र पुराणः प्रव्रज्यां परित्यज्य पुनः प्रव्रजितुं प्राप्तः प्रोच्यते । स च तावत् प्रथमोऽपवादविषयः, द्वितीयस्तु भावितश्राद्धशब्दवाच्या अतिश्रद्धालवो राजानोऽमात्याश्च ग्राह्याः, किरणावल्यादौ तथैवोक्तत्वात् भावितश्राद्धशब्दयोर्विशेषणविशेष्यभावान्वितत्वाच्च । न चात्र भावितशब्दस्य स्वतन्त्रविशेषणत्वात् श्राद्धशब्दस्य च पृथक् वर्तमानत्वात् त्रयोऽपवादविषया इति वाच्यम्, भावितशब्दस्य विशेषणत्वेन स्वतन्त्रेणोपस्थातुमशक्यत्वात्, कृतादिशब्दवदिति । भावितशब्दस्य विशेषणत्वेऽपि तस्य साकाङ्क्षत्वात् आक्षेपलब्धः मिथ्यादृष्टिविशेष्येण सहान्वयो भवतु अतोऽपि त्रितयात्मिकाऽपवादविषयताऽप्रतिहतेत्यपि न प्रलपितव्यम्, यतोऽहो तव वाक्चातुर्यं ! भावितशब्दस्य विशेषणत्वेन स्वीकुर्वाणोऽपि समीपवर्त्तिनमुपस्थितमपि श्राद्धं विशेष्यं विहाय स्वीयाकूतसिद्धये अनुपस्थितेनाक्षेपलब्धमिथ्यादृष्टिशब्देन सहान्वयः कर्त्तुं

प्रभावसि ? अन्यथा, नीलं घटमानयेतिवाक्यसन्दर्भेण नीलशब्दस्याक्षेपलब्धानुपस्थितपटशब्देन सहान्वयं कृत्वा नीलपटघटा-
नयनात्मकशाब्दबोधः कथं न भवेत्। अपि चाक्षेपो लक्षणा, सा च शक्यसम्बन्धरूपा एव, सा च केन शक्तपदेनाक्षिप्तमि-
ध्यादृष्टौ संबध्य निर्वोढुं शक्यत इति कथं कथिकतावसरे मुकीभवनादृते किं तव शरणं भविष्यति। न चात्र वर्तमानस्य
श्राद्धशब्दस्यैव शक्तस्य मिथ्यादृष्टौ संबध्य लक्षणा लक्षयितव्या इत्यपि कपोलकल्पना कल्पितव्या, श्रद्धाविशिष्टशक्तस्य
श्राद्धपदस्य श्रद्धाविहीने मिथ्यादृष्टौ को नाम संसर्गः तव प्रज्ञाप्रसूतः ? किञ्च लक्षणावीजमजानतोऽन्वयतात्पर्यानुपपत्त्य-
भावेऽपि लक्षणाशकटं कामचारेण प्रचालयतः तव मते लक्षणाकरणाकरणे नियमनं तव प्रज्ञापकर्षप्रकम्पमानं मस्तकं किं करि-
ष्यति ? गर्दभो गच्छतीति वाक्यात् 'मनुष्यो गमनानुकूलकृतिमान्' इत्यपि शाब्दबोधः कथं न भवेत् ? इत्यादिप्रश्नततितटि-
न्यः सुदुस्तरा भवेयुः। तस्मात् आकाङ्क्षापन्नो भावितशब्दः समुपस्थिताकाङ्क्षिणा श्राद्धशब्देन सहान्वयीभूय समर्पिते शाब्द-
बोधे द्वितयात्मिकैवापवादविषयतेति त्रितयात्मिकापवादविषयता दूरोत्सारिता द्रष्टव्या। न च वक्तव्यमुपसंहारे श्रावकशब्द-
स्यैव ग्रहणात्तस्य पृथगपवादविषयता, उपसंहारे भावितशब्दस्यानुक्तत्वेऽपि श्राद्धशब्दस्य स एव विशेषणविशिष्टोऽर्थो लभ्यते,
अन्यथा भाष्येण सह विरोधापत्तेः, अतस्तस्य पृथगपवादविषयता नैव वक्तुं शक्यते। ननु भावितश्राद्धस्यापवादविषयतायां
सत्यां कस्य निषेधविषयतेति चेत् ? अशेषसचित्तविषयकप्रतिषेधस्यात्र विधेयत्वेन विवक्षितत्वात् सचित्तावशिष्टे निषेध-
विषयता द्रष्टव्या। न चात्र सर्वस्यैव भावितश्राद्धस्यापवादविषयत्वे यस्य कस्यचित् साध्वाचारवासितश्राद्धस्य प्रव्र-
ज्याचितरणे न कोऽपि दोष इत्यारेकाप्यारेकणीया, श्रीदशाश्रुतस्कन्धचूर्णिकल्पसूत्रवृत्तिभिः सह विरोधापत्तेः, अधुना-

सचित्तादीनां च परिहारः, तत्र सचित्तद्रव्यं
कायामपि–"द्रव्यक्षेत्रकालभावस्थापना चैवं–द्रव्यस्थापना तृणडगलछारमल्लकादीनां परिभोगः सचित्तादीनां च परिहारः, तत्र सचित्तद्रव्यं
शैक्षो न प्रव्राज्यते अतिश्रद्धं राजानममात्यं च विना, अचित्तद्रव्यं च वस्त्रादि न गृह्यते, मिश्रद्रव्यं सोपधिकः शिष्यः"; कल्पदीपिकायां
च–"द्रव्यक्षेत्रकालभावस्थापना चैवं–द्रव्यस्थापना तृणडगलछारमल्लकादीनां परिभोगः सचित्तादीनां परिहारः । तत्र सचित्तद्रव्यं शिष्यो
न प्रव्राज्यते, अतिश्रद्धं राजानं राजामात्यं च विना, अचित्तद्रव्यं वस्त्रादि न गृह्यते, मिश्रद्रव्यं सोपधिकशैक्ष" इति सर्वत्रातिश्रद्धं
राजानं राजामात्यं च विना प्रतिषेध एव स्पष्टं विलोक्यते । श्रीशान्तिसागरोपाध्यायकृतकल्पकौमुद्यामप्येवमेवेति ।

एवमन्यगच्छीयाचार्यैरपि प्रतिषेध एव कृतः । तथा च जिनप्रभसूरिकृतसंदेहविषौषध्यां–"द्रव्यक्षेत्रकालभावस्थापना,
द्रव्यस्थापना तृणडगलक्षारमल्लकादीनां परिभोगः सचित्तादीनां च परिहारः, तत्र सचित्तद्रव्यं शिष्यो न प्रव्राज्यते, अतिश्रद्धं राजानं
राजामात्यादिकं वा विना, अचित्तद्रव्यं वस्त्रादि न गृह्यते, मिश्रद्रव्यं शैक्षः सोपधिकः"; लक्ष्मीवल्लभोपाध्यायकृतकल्पद्रुमकलिका-
यां–"यत्र वर्षाकाले चातुर्मासीं साधुस्तिष्ठति तत्र चतुरोऽवग्रहान् द्रव्यक्षेत्रकालभावरूपान् करोति । तत्र द्रव्यावग्रहस्य त्रयो भेदाः
सचित्ताचित्तमिश्ररूपाः । सचित्तावग्रहः सामान्यशिष्यशिष्यिण्यादिकं न दीक्षयति, पुनः कश्चित् संस्तारकः दीक्षां गृह्णाति, तथा पुनः
कश्चिच्छ्रद्धावान् राजामात्यादयो वा दीक्षां गृह्णन्ति, तदा तान् दीक्षयति । अचित्तद्रव्यावग्रहं वस्त्रपात्रादिकं न गृह्णाति, मिश्रद्रव्यावग्रहमुपधिस-
हितं शिष्यं न दीक्षयति, अयं त्रिविधो द्रव्यावग्रहः"; तथा कल्पलतायां–"द्रव्यादिस्थापना चैवं–द्रव्यस्थापनापीठफलकतृणडगलरक्षामल्लका-
दीनां परिभोगः सचित्तादीनां च परित्यागः, तत्र सचित्तः शिष्यो न प्रव्राज्यते, अचित्तं वस्त्रादि न गृह्यते, मिश्रः सोपधिकः शिष्यः, एवमा-
हारविकृतिसंस्तारकादिषु परिभोगपरिहारौ योज्यौ" । एवं ब्रह्मर्षिकृतश्रीदशाश्रुतस्कन्धवृत्तावपि–"द्रव्यक्षेत्रकालभावस्थापना चैवं–द्रव्य-

स्थापना तृणडगलक्षारमल्लकादीनां परिभोगः सचित्तादीनां परिहारः । तत्र सचित्तद्रव्यं शैक्षो न प्रव्राज्यते, अतिश्रद्धं राजानं राजामात्या-
दिकं विना, अचित्तद्रव्यं वस्त्रादिकं न गृह्यते, मिश्रद्रव्यं शैक्षः सोपधिकः । एवमाहारविकृतिसंस्तारकादिद्रव्येषु परिभोगपरिहारौ योज्यौ"।
एवं बहुषु शास्त्रेषु पूर्वमहर्षिभिर्वर्षाकाले प्रव्रज्याप्रदानस्य प्रतिषेध एव कृतः, न कुत्राप्यपवादं मुक्त्वा प्रव्रज्याप्रदानस्य
विधानं कृतम् । 'न च राजादावुत्सर्गः, तीर्थं यावत्तद्विधानस्य प्रतिपादितत्वादिति वाच्यम्' तीर्थप्रभावकाणां तादृक् श्रद्धा-
लूनां कादाचित्कत्वेनापवादविषयतानपगमात्, अत एव ग्रन्थकृद्भिः अतिश्रद्धं राज्ञः अमात्यस्य च विशेषणं कृतं विलोक्यते।
श्रीक्षमाविजयपादैस्तु कल्पसूत्रभाषान्तरेऽतिश्रद्धं राजानममात्यं वेति द्वयं विहायान्यः कश्चित् वर्षाकाले न प्रव्राजनीय' इति
स्पष्टमुल्लिखितम् । न चैतेऽगीतार्था इत्यहङ्कारान्धकारावृतलोचनेन वक्तव्यम्, त्वयापि गीतार्थत्वेन तेषां स्वीकारात्।
अनेन ये केचनाधुनिका अहंमन्याश्चातुर्मास्यां यस्य कस्यचित् प्रव्रज्याविधानं कुर्वन्ति तदपि तेषां सूत्रोत्तीर्णं द्रष्टव्यम्।
एतेन वक्ष्यमाणैश्च ये विरतिविलम्बदोषवादित्रमुद्घुष्य सामायिकचारित्रे परीक्षाया निषेधं कुर्वन्ति तेऽपि सुष्ठु शिक्षिता द्रष्ट-
व्याः, यतो जिनाज्ञानुवर्त्तिनां न विरतिविलम्बादयो दोषाः प्रत्युत जिनाज्ञाबाह्यवर्त्तिनां शिरसि ते पतिष्यन्ति। 'न च पञ्च-
कल्पचूर्णौ अपृष्ट्वा प्रव्रज्याप्रदाने प्रायश्चित्तमुक्तं न परीक्षाऽकरणे, तदुक्तं तत्रैव—"सेहट्ठवणाकप्पे अट्ठारसपुरिसाइयअनलो जो प-
व्वावेइ(सो) जाणओ अजाणओ य । (जाणओ) गीयत्थो अपुच्छिऊण य पव्वावेइ तस्स सट्ठाणपच्छित्तं अयाणओ गीयत्थो तस्स पव्वावितस्स
सत्तरतं तवो होइ" इति, एवं "पुच्छासुद्धे अट्टा" इति निशीथभाष्येऽपीति वाच्यम्, निशीथभाष्यादौ साधुचर्याकथनद्वारेण
परीक्षाद्वारस्य स्पष्टतयोक्तत्वात्। तथा च निशीथभाष्यं—"पुच्छा सुद्धे अट्टा वामे सामाइयं च तिक्खुत्तो। सयमेव उ कायव्वं सिक्खा

पर्यन्तसमागतप्रामाणिकप्रकाण्डपरम्पराविरोधाच्च। तस्मात् भावितश्राद्धशब्दे प्रवर्तमानाऽपवादविषयता अतिश्रद्धे राज्ञि अमात्ये चैव पर्यवसति। किञ्च सर्वेषां श्रावकाणां भावितमिथ्यादृष्टीनां च चातुर्मास्यां दीक्षाविधाने सुविहिताग्रणिश्रीदशाश्रुतस्कन्धचूर्णिकारमहर्षिभिः कृतं निषेधविधानं कथं संगच्छेत। तथा च तद्ग्रन्थः—"दव्वठ्ठवणा जाणगसरीरभवियसरीरवतिरितदव्वं च दव्वनिखेवो, जाणि दव्वाइं परिभुंजति जाणि य परिहरिज्जंति, परिभुंजंति तणडगलछारमल्लगादि, परिहरिज्जंति सचित्तादि-३, सचित्तो सेहो ण पव्वाविज्जति, अचित्तं वत्थादि ण घेप्पति पढमसमोसरणे, मीसो सेहो सोवधितो" इति। अत्र चूर्णिकृन्महर्षिभिरुत्सर्गतः प्रव्रज्याप्रदानस्य प्रतिषेध एवोक्तः। योग्यानां सामान्यतो भावितमिथ्यादृष्टीनां श्राद्धानां च प्रव्रज्याविधाने चतुर्मास्यां योग्यायोग्योभयप्रव्रज्याप्रदाननिषेधविषयकसुविहिताग्रणिसूरिपुरन्दरोक्तानि वक्ष्यमाणानि वाक्यान्यपि कथं संगच्छेयुः? तानि चामूनि—शैक्षाकल्पस्थापनाधिकारे श्रीजीतकल्पसूत्रवृत्तौ—"तत्राकल्पो द्विविधः—शिक्षकस्थापनाकल्पोऽकल्पस्थापनाकल्पश्च। तत्राद्यः—अनधीतपिण्डनिर्युक्त्यादिशास्त्रसाधुना आनीतमाहारादि साधुभ्यो न कल्पते। उक्तञ्च—"अणहीय खलु जेणं पिण्डेसण १ सेज्ज-२ वत्थ ३ पाएसा ४ तेणाणिआणि जइणो कप्पन्ति न पिण्डमाईणि ॥ १ ॥ उउबद्धम्मि न अनला वासावासेउ दोवि नो सेहा। दिक्खिज्जंती सेहठ्ठवणाकप्पो इमो होइ ॥ २ ॥" आद्या गतार्था। द्वितीयस्याश्चायमर्थः—ऋतुबद्धे शीतोष्णकालमासाष्टके अनला अयोग्या नपुंसकादयो न दीक्षार्हाः, 'वर्षाकाले तु दोवी'ति द्वावपि योग्यायोग्यौ शैक्षौ न कार्याविल्येषः शैक्षकस्थापनाकल्पाख्योऽकल्पः। द्वितीयश्चानेपणीयपिण्डशय्यावस्त्रपात्रलक्षणोऽकल्पः, उद्गमादिद्विचत्वारिंशद्दोषरहितस्यैव कल्प्यमानत्वात्"। जितकल्पसूत्रचूर्णिविषमपदवृत्तावप्येवमेवाशय इति। एवमेव सुविहिताग्रणिश्रीमद्धरिभद्रसूरिपादैरपि दशवैकालिकसूत्रवृत्तावुक्तं, तद्ग्रन्थः—"अकप्पो गिहिभायण-

मित्यादि, तत्राकल्पो द्विविधः, शैक्षकस्थापनाकल्पः अकल्पस्थापनाकल्पश्च, तत्र शैक्षकस्थापनाकल्पः अनधीतपिण्डनिर्युक्त्यादिनानीतमाहारादि न कल्पते इति । उक्तं च—"अणहीया खलु जेणं पिण्डेसणसेज्जवत्थपाएसा । तेणाणियाणि जतिणो कप्पन्ति ण पिण्डमाइणि ॥ १ ॥ उउवद्धंमि ण अणला वासावासे उ दोवि णो सेहा । दिक्खिज्जंती सेहट्ठवणाकप्पो इमो होइ ॥ २ ॥" इति । तथा दशवैकालिकचूर्णावपि—"उडुवद्धे अणला ण पव्वाविज्जंति वासासु सव्वेवि" इति । एवमेव तिलकाचार्यकृतदशवैकालिकवृत्तौ तदवचूर्यां चोभयोरपि योग्यायोग्ययोः प्रव्रज्याप्रदानं निषिद्धम् । प्रवचनसारोद्धारवृत्तावपि—"पज्जो इत्यादि परि सर्वथा, वसनमेकत्र निवासो, निरुक्तविधिना पर्युषणा, तद्रूपः कल्पः पर्युषणाकल्पः, न्यूनोदरताकरणं विकृतिनवकपरित्यागः पीठफलकादि संस्तारकादानं उच्चारादिमात्रकसंग्रहणं लोचकरणं शैक्षाप्रव्राजनं प्राग्गृहीतानां भस्मडगलकादीनां परित्यजनं इतरेषां ग्रहणं द्विगुणवर्षोपग्रहोपकरणधरणमभिनवोपकरणाग्रहणमिति ।" प्रवचनसारोद्धारसंस्तवकेऽपि प्रव्रज्याप्रदानप्रतिषेध एव कृतः । तथा दशाश्रुतस्कन्धचतुर्थाध्ययनवृत्तौ—"चतुर्मासकमध्ये एवं वृद्धसमाचारी दृश्यते—न्यूनोदरतादितपकरणं पर्युषणाकल्पकर्षणं विकृतिपरित्यागो विशेषकारणमन्तरा पीठफलकादिसंस्तारकादानमुच्चारादिमात्रकसंग्रहणं लोचकरणं शैक्षाप्रव्राजनं प्राग्गृहीतभस्मडगलादिपरित्यजनमन्येषां तु ग्रहणं द्विगुणवर्षोपग्रहोपकरणधारणमित्यादि" । एषु सर्वेषु प्रव्रज्यानिषेधस्यैव विधानं कृतम् । निशीथभाष्ये—"मुत्तुं पुराण भावितसड्ढे"—इति दर्शितापवादं मुक्त्वा शैक्षसचित्तपरित्यागस्यैव विधानं कृतं, एवं च कल्पसूत्रवृत्तिष्वपि सर्वत्र सापवादः प्रतिषेधः कृतः । तथा चोक्तं कल्पकिरणावल्यां—"द्रव्यक्षेत्रकालभावस्थापना—चैवं द्रव्यस्थापना तृणडगलछारमल्लकादीनां परिभोगः सचित्तादीनां च परिहारः । तत्र सचित्तद्रव्यं शैक्षो न प्रव्राज्यते, अतिश्रद्धं राजानं राजामात्यं वा विना, अचित्तद्रव्यं वस्त्रादि न गृह्यते, मिश्रद्रव्यं च सोपधिकः शैक्षः"; कल्पसुबोधि-

कायामपि–"द्रव्यक्षेत्रकालभावस्थापना चैवं–द्रव्यस्थापना तृणडगलछारमल्लकादीनां परिभोगः सचित्तादीनां च परिहारः, तत्र सचित्तद्रव्यं शैक्षो न प्रव्राज्यते अतिश्रद्धं राजानममात्यं च विना, अचित्तद्रव्यं च वस्त्रादि न गृह्यते, मिश्रद्रव्यं सोपधिकः शिष्यः"; कल्पदीपिकायां च–"द्रव्यक्षेत्रकालभावस्थापना चैवं–द्रव्यस्थापना तृणडगलछारमल्लकादीनां परिभोगः सचित्तादीनां परिहारः । तत्र सचित्तद्रव्यं शिष्यो न प्रव्राज्यते, अतिश्रद्धं राजानं राजामात्यं च विना, अचित्तद्रव्यं वस्त्रादि न गृह्यते, मिश्रद्रव्यं सोपधिकशैक्ष" इति सर्वत्रातिश्रद्धं राजानं राजामात्यं च विना प्रतिषेध एव स्पष्टं विलोक्यते । श्रीशान्तिसागरोपाध्यायकृतकल्पकौमुद्यामप्येवमेवेति ।

एवमन्यगच्छीयाचार्यैरपि प्रतिषेध एव कृतः । तथा च जिनप्रभसूरिकृतसंदेहविषौषध्यां–"द्रव्यक्षेत्रकालभावस्थापना, द्रव्यस्थापना तृणडगलक्षारमल्लकादीनां परिभोगः सचित्तादीनां च परिहारः, तत्र सचित्तद्रव्यं शिष्यो न प्रव्राज्यते, अतिश्रद्धं राजानं राजामात्यादिकं वा विना, अचित्तद्रव्यं वस्त्रादि न गृह्यते, मिश्रद्रव्यं शैक्षः सोपधिकः"; लक्ष्मीवल्लभोपाध्यायकृतकल्पद्रुमकलिकायां–"यत्र वर्षाकाले चातुर्मासीं साधुस्तिष्ठति तत्र चतुरोऽवग्रहान् द्रव्यक्षेत्रकालभावरूपान् करोति । तत्र द्रव्यावग्रहस्य त्रयो भेदाः सचित्ताचित्तमिश्ररूपाः । सचित्तावग्रहः सामान्यशिष्यशिष्यिण्यादिकं न दीक्षयति, पुनः कश्चित् संस्तारकः दीक्षां गृह्णाति, तथा पुनः कश्चिच्छ्रद्धावान् राजामात्यादयो वा दीक्षां गृह्णन्ति, तदा तान् दीक्षयति । अचित्तद्रव्यावग्रहं वस्त्रपात्रादिकं न गृह्णाति, मिश्रद्रव्यावग्रहमुपधिसहितं शिष्यं न दीक्षयति, अयं त्रिविधो द्रव्यावग्रहः"; तथा कल्पलतायां–"द्रव्यादिस्थापना चैवं–द्रव्यस्थापनापीठफलकतृणडगलरक्षामल्लकादीनां परिभोगः सचित्तादीनां च परित्यागः, तत्र सचित्तः शिष्यो न प्रव्राज्यते, अचित्तं वस्त्रादि न गृह्यते, मिश्रः सोपधिकः शिष्यः, एवमाहारविकृतिसंस्तारकादिषु परिभोगपरिहारौ योज्यौ"। एवं ब्रह्मर्षिकृतश्रीदशाश्रुतस्कन्धवृत्तावपि–"द्रव्यक्षेत्रकालभावस्थापना चैवं–द्रव्य-

स्थापना तृणडगलक्षारमल्लकादीनां परिभोगः सचित्तादीनां परिहारः । तत्र सचित्तद्रव्यं शैक्षो न प्रव्राज्यते, अतिश्रद्धं राजानं राजामात्या-
दिकं विना, अचित्तद्रव्यं वस्त्रादिकं न गृह्यते, मिश्रद्रव्यं शैक्षः सोपधिकः । एवमाहारविकृतिसंस्तारकादिद्रव्येषु परिभोगपरिहारौ योज्यौ"।

एवं बहुषु शास्त्रेषु पूर्वमहर्षिभिर्वर्षाकाले प्रव्रज्याप्रदानस्य प्रतिषेध एव कृतः, न कुत्राप्यपवादं मुक्त्वा प्रव्रज्याप्रदानस्य विधानं कृतम् । 'न च राजादावुत्सर्गः, तीर्थं यावत्तद्विधानस्य प्रतिपादितत्वादिति वाच्यम्' तीर्थप्रभावकाणां तादृक् श्रद्धालूनां कादाचित्कत्वेनापवादविषयतानपगमात्, अत एव ग्रन्थकृद्भिः अतिश्रद्धं राज्ञः अमात्यस्य च विशेषणं कृतं विलोक्यते । श्रीक्षमाविजयपादैस्तु कल्पसूत्रभाषान्तरे'ऽतिश्रद्धं राजानममात्यं वेति द्वयं विहायान्यः कश्चित् वर्षाकाले न प्रव्राजनीय' इति स्पष्टमुल्लिखितम् । न चैतेऽगीतार्था इत्यहङ्कारान्धकारावृतलोचनेन वक्तव्यम्, त्वयापि गीतार्थत्वेन तेषां स्वीकारात् । अनेन ये केचनाधुनिका अर्हंमन्याश्चातुर्मास्यां यस्य कस्यचित् प्रव्रज्याविधानं कुर्वन्ति तदपि तेषां सूत्रोत्तीर्णं द्रष्टव्यम् ।

एतेन वक्ष्यमाणैश्च ये विरतिविलम्बदोषवादित्रमुद्घुष्य सामायिकचारित्रे परीक्षाया निषेधं कुर्वन्ति तेऽपि सुष्ठु शिक्षिता द्रष्टव्याः, यतो जिनाज्ञानुवर्त्तिनां न विरतिविलम्बादयो दोषाः प्रत्युत जिनाज्ञाबाह्यवर्त्तिनां शिरसि ते पतिष्यन्ति । 'न च पञ्चकल्पचूर्णौ अपृष्ट्वा प्रव्रज्याप्रदाने प्रायश्चित्तमुक्तं न परीक्षाऽकरणे, तदुक्तं तत्रैव—"सेहट्ठवणाकप्पे अट्ठारसपुरिसाइयअनलो जो पव्वावेइ(सो) जाणओ अजाणओ य । (जाणओ) गीयत्थो अपुच्छिऊण य पव्वावेइ तस्स सट्ठाणपच्छित्तं अयाणओ गीयत्थो तस्स पव्वावितस्स सत्तरत्तं तवो होइ" इति, एवं "पुच्छासुद्धे अट्ठा" इति निशीथभाष्येऽपीति वाच्यम्, निशीथभाष्यादौ साधुचर्याकथनद्वारेण परीक्षाद्वारस्य स्पष्टतयोक्तत्वात् । तथा च निशीथभाष्यं—"पुच्छा सुद्धे अट्ठा वामे सामाइयं च तिक्खुत्तो । सयमेव उ कायव्वं सिक्खा

धारणं वाए हरिए जह पुढविए तसेसुं च। एमेव गोअरगए होइ परिच्छा उ काएहिं ॥ ६६५ ॥ "जइ परिहरई संमं चोएइ व घाडिअं तह्या (या) जोग्गो। होइ उवट्ठावणाए तीए वि विही इमो होइ ॥ ६६६ ॥" वृत्तिः—"कथयित्वा कायव्रतानि 'इअ' एवमुक्तेन प्रकारेण 'तेसु' कायव्रतेषु नवरमभिगतेष्वेव नानभिगतेषु 'गीतेने'ति गीतार्थेन साधुना परीक्षयेत् 'सम्यग्' असम्भ्रान्तः सन् 'एतेषु स्थानेषु' वक्ष्यमाणेषु इति गाथार्थः ॥ ६६३ ॥ उच्चारादि अस्थण्डिले व्युत्सृजति, तत्परीक्षार्थं गीतार्थः स्थानादि वा पृथिव्यां करोति, स्थानं कायोत्सर्गः, आदिशब्दान्निषीदनादिपरिग्रहः, नद्यादावुदकसमीपे उच्चाराद्येव व्युत्सृजति, तथा साग्नौ निक्षिप्ततेजसि स्थण्डिलादौ उच्चाराद्येव करोतीति गाथार्थः ॥ ६६४ ॥ तथा—व्यञ्जनाभिधारणं वाते करोति, हरिते यथा पृथिव्यां, उच्चाराद्येव व्युत्सृजति, त्रसेषु च द्वीन्द्रियादिषु यथा पृथिव्यामिति, एवमेव यथासंभवं गोचरगते शिक्षके परीक्षा, कायैः रजःसंस्पृष्टग्रहणादिनेति गाथार्थः ॥ ६६५ ॥ यदि परिहरति सम्यक् स्वतः चोदयति वा 'घाटिकं' द्वितीयं अयुक्तमेतदित्येवं तथा (दा) योग्यो भवत्युपस्थापनाया इतरथा भजना, 'तस्याश्च' उपस्थापनायाः विधिरयं भवति वक्ष्यमाण इति गाथार्थः ॥६६६॥" **एवमुपस्थापनायाः परीक्षाविधिर्विभिन्न एवोक्तः। धर्मबिन्द्वादावपि सामायिकचरित्रात्पूर्वं सकालमाना परीक्षा कथिता विज्ञेया। विशेषनिश्चयार्थं श्रीप्रतिमापञ्चाशकोल्लेखमपि विचारय, येन 'प्रवचनविधिना सामायिकचारित्रात्पूर्वं परीक्षा किदृशी कर्त्तव्येति' तव भ्रान्तिरपि दूरीभविष्यति। तथा च तद्ग्रन्थः**—"एत्तो चिय पुच्छादिसु हंदि विसुद्धस्स सति पयत्तेणं। दायव्वा गीतेणं भणियमिणं सव्वदंसीहिं ॥ ४६ ॥" **व्याख्या**—"एत्तो चिय त्ति—यत एतत्प्रकारमन्तरेणापि उचितगुणस्य प्रव्रज्या प्रतिमाकर्तुरिव यथोक्ता भवति अत एव कारणात् पृच्छादिषु पृच्छाकथनापरीक्षासु, तत्र पृच्छा—"कोसि तुमं कत्तो वा पव्वयसि किं वा निमित्तंति" एवमादिरूपा, कथना पुनः प्रविव्रजिषोः प्रव्रज्यास्वरूपकथनं, यथा—"जह चेव मोक्खफ-

एया आणा आराहिया जिणिंदाणं । संसारदुःखफलया तह चेव विराहिया होइ ॥" त्ति, परीक्षा तु षण्मासादिकालमाना विनयादिभि-र्योग्यतानिरूपणा, एतेषु पदेषु, इंदीत्युपप्रदर्शने, विशुद्धस्य निर्दोषतां गतस्य, सकृत्सदा, प्रयत्नेनादरेण, दातव्या देया, प्रव्रज्येति प्रकृतं, गीतेन पदैकदेशे पदसमुदायोपचारात् गीतार्थेन सूत्रार्थविदा, नान्येनेति, भणितमुक्तं, इदमेतत्, सर्वदर्शिभिः केवलिभिः, इति गाथार्थः॥४६॥" श्रीनिशीथचूर्णिना संहेतान्सर्वानपि संगतिं कुर्वतः सामायिकचारित्रात् पूर्वं सकालमानायाः परीक्षायाः स्वीकारे न कापि बाधा । ये तस्या अपलापं कुर्वन्ति ते शास्त्राज्ञां नैव जानन्तीति ।

एवं ये विरतिविलम्बदोषं पुरस्कृत्य प्रशस्तमुहूर्त्तादिकमवगणय्य प्रशस्तद्रव्यादिषु दीक्षाप्रदानं कुर्वन्ति तेऽपि जिनाज्ञा-बहिर्वर्तिनो द्रष्टव्याः, "दव्वादी अपसत्थे मोत्तु पसत्थेसु फासुगाहारं । लग्गाति व तुरंते गुरुअणुकूले वऽहाजायं" इत्यादिना निशीथ-भाष्ये प्रशस्तद्रव्यलग्नमुहूर्त्तादीनां विहितत्वात् । प्रशस्तद्रव्यादीनां कर्मणामुदये क्षयोपशमादौ च हेतुत्वेन जिनाभिहित-त्वेन चावश्यमेव तेऽवलोकनीयाः । तदुक्तं-"एसा जिणाणमाणा खित्ताईआ य कम्मुणो होंति । उदयाइकारणं जं तम्हा एएसु जइ-अव्वं ॥ ११४ ॥" वृत्तिः-"एषा जिनानामाज्ञा यदुतोक्तलक्षणेष्वेव क्षेत्रादिषु दातव्येति, क्षेत्रादयश्च कर्म्मणो भवन्ति उदयादिकारणं 'यद्' यस्मात्, यत उक्तम्-"उदयक्खयखओवसमोवसमा जं च कम्मुणो भणिया । दव्वं खित्तं कालं भवं च भावं च संपप्प ॥१॥" यस्मादेवं तस्मात् क्षेत्रादिषु एतेषु यतितव्यं, शुद्धेषु यत्नः कार्यः इति गाथार्थः ॥ ११४ ॥" इति ।

तथा ये विरतिविलम्बदोषं पुरस्कृत्य शिवभूतिं दृष्टान्तीकृत्य च रजन्यामपि प्रव्रज्याप्रदानं प्रजल्पन्ति तेऽपि मृषावादिन एव, यतः शिवभूतेः प्रव्रज्या गुरुभिर्न प्रदत्ता परं तेन स्वयं लुञ्चिते शिरसि तु तल्लिङ्गं प्रदत्तं, तदुक्तमुत्तराध्ययनवृत्तौ-

य तहिं पयत्ताणं ॥१॥ गोयरमचित्तभोयणं सज्झायण्हाणभूमिसेज्जादी। अब्भुवगयथिरहत्थो गुरू जहण्णेण तिण्णट्टा ॥२॥ दव्वादी अप्पसत्थे मोत्तु पसत्थेसु फासुगाहारं। लग्गाति व तुरंते गुरुअणुकूले वऽहाजायं ॥३॥" चूर्णिः—"जो च उवट्ठिओवि पव्वज्जाए सो पुच्छिज्जति। कोसि तुमं! किं पव्वयसि! किंच ते वेरग्गं! एवं पुच्छितो जति अणलो ण भवति तो सुद्धो पव्वज्जाए कप्पणिज्जो। ताहे से इमा साहुचरिया कहिज्जति—'गोयर' गाहा। गोयरोत्ति दिणे दिणे भिक्खं हिंडियव्वं। जत्थ जं लब्भति तं अचित्तं घेत्तव्वं तं पि एसणादिसुद्धं। आणियंपि बालवुड्ढसेहादिएहिं स संविभागेण भोत्तव्वं। निच्चं सज्झायपरेण होयव्वं। सदा अण्हाणगं। उउवद्धे सया भूमिसयणं वासासु फलगादिएसु सोत्तव्वं। अट्ठारससीलंगसहस्सा धारेयव्वा। लोयादिया किलेसा अणेगे कायव्वा। एयं सव्वं जति अब्भुवगच्छति तो पव्वावेयव्वो। एसा पव्वावणिज्जपरिक्खा। पव्वावणा भणिया। इयाणिं मुण्डावणा। सोहणे दिवसे चेतियाण पुरओ पव्वावणिज्जं अप्पणो वामगपासे ठवित्ता चेइए वंदित्ता परिहियचोलपट्टस्स रयहरणं देन्ति। ताहे 'अट्ठे'त्ति, अस्य व्याख्या—जो थिरहत्थो आयरितो तिन्नि अट्ठातो गेण्हति। समत्थो वा सव्वलोयं करेति। असति आयरियस्स थिरहत्थस्स अन्नो पव्वावेंति। थिरस्स लोयं करणं सामइयं च इमेरिसे ट्ठाणे कज्जति 'दव्वादी' गाधा। अट्ठिमादी अप्पसत्थदव्वा, ऊसरणादी अप्पसत्थं खेत्तं, रिक्ततिहिमादी अप्पसत्थो कालो, विट्ठिमादी अप्पसत्था भावा, एते अप्पसत्थे मोत्तुं पसत्थेसु दव्वादिएसु पव्वाविज्जति। तस्स गुरुणो य अणुकूलेसु तारावल(लेसु)चन्द्रबलेसु वा। जाव य दव्वादिया पसत्था न लब्भंति ताव फासुगाहारं धरेंति। सन्ताणगभया वा तुरंतो पसत्थलग्गबलेण पव्वाविज्जति। उभयसाहगे अलब्भमाणे गुरुअणुकूले पव्वाविज्जंति। 'अहजातेणं'ति सणिसेज्जं रयोहरणं मुहपोत्तिया चोलपट्टा य एयं अहाजातं" इति। न च निशीथभाष्यादौ परीक्षाकालमानस्यानुक्तत्वेन परीक्षाकालः कुतः समागत इति वाच्यम्, श्रीमद्धरिभद्रसूरिपादैः पञ्चवस्तुके पृथक्त्वेन सकालमानस्य परीक्षाद्वारस्य

प्रतिपादनात् । तथा च तद्ग्रन्थः—"पुच्छ कहणा परिच्छा सामाइअमाइसुत्तदाणं च । चिइवंदणाइआइ विहीए सम्मं पयच्छिज्जा ॥११५॥'
अत्र परीक्षाद्वारस्य पृथक् प्रतिपादनं दृश्यते । पृच्छाद्वारमधिकृत्य ग्रन्थकारो वक्ति—"धम्मकहाअक्खित्तं पव्वज्जाअभिमुहं ति पुच्छिज्जा ।
को कत्थ तुमं सुंदर पव्वयसि च किं निमित्तं ति ॥११६॥ कुलपुत्तो तगराए असुहभवक्खयनिमित्तमेवेह । पव्वामि अहं भंते इइ गेज्झो भयण
सेसेसु॥११७॥" कथनाद्वारमधिकृत्याह—"साहिज्जा दुरणुचरं कापुरिसाणं सुसाहुचरिअं ति । आरंभनियत्ताण य इह परभविए सुहविवागे
॥११८॥ जह चेव उ मोक्खफला आणा आराहिआ जिणिंदाणं । संसारदुक्खफलया तह चेव विराहिआ होइ ॥११९॥ जह वाहिओ अ
किरियं पवज्जिउं सेवई अपत्थं तु । अपवण्णगाउ अहियं सिग्घं च स पावइ विणासं ॥१२०॥ एमेव भावकिरिअं पवज्जिउं कम्मवाहिख-
यट्ठेऊ । पच्छा अपत्थसेवी अहियं कम्मं समज्जिणइ ॥ १२१ ॥" परीक्षाद्वारमधिकृत्य च कालमानमपि कथयति ग्रन्थकारः—"अ-
ब्भुवगयं पि संतं पुणो परिक्खिज्जपवयणविहीए । छम्मासं जाऽऽसज्ज व पत्तं अद्धाए अप्पबहुं ॥१२२॥" अनेन सामायिकचारित्रात्पूर्व-
मपि परीक्षाया विधानं स्पष्टतया विलोक्यत एव । न च षाण्मासिकी परीक्षोपस्थापनाया इति वाच्यम्, अनन्तरासु गाथासु
आलापकेन सामायिकसूत्रस्य तत्प्रदानविधेश्च प्रतिपादितत्वात् । तदुक्तं—"सोभणदिणंमि विहिणा दिज्जा आलावगेण सुविसुद्धं । सामा-
इआइसुत्तं पत्तं नाऊण जं जोग्गं ॥१२३॥ तत्तो अ जहा विभवं पूअं स करिज्ज वीयरागाणं । साहूण य उवउत्तो एअं च विहिं गुरू कुणइ
॥१२४॥ चिइवंदणरयहरणं अट्ठा सामाइयस्स उस्सग्गो सामाइयतिगकड्ढण पयाहिणं चेव तिक्खुत्तो ॥१२५॥" इति । अपि चोपस्थापनार्हस्य
परीक्षाविधिः पृथगुक्तः, तथा चोक्तं पञ्चवस्तुके—"कहिऊणं कायवए इअ तेसुं नवरमभिगएसुं तु । गीएण परिच्छिज्जा सम्मं एएसु
ठाणेसु ॥ ६६३ ॥ उच्चाराइ अथंडिल वोसिरइ ठाणाइ वावि पुढवीए । नइमाइदगसमीवे सागणि निक्खित्ततेउम्मि ॥ ६६४ ॥ वियणाभि-

धारणं वाए हरिए जह पुढविए तसेसुं च। एमेव गोअरगए होइ परिच्छा उ काएहिं ॥ ६६५ ॥ "जइ परिहरई संमं चोएइ व घाडिअं तह्ना (या) जोग्गो । होइ उवट्ठावणाए तीए वि विही इमो होइ ॥ ६६६ ॥" वृत्तिः—"कथयित्वा कायव्रतानि 'इअ' एवमुक्तेन प्रकारेण 'तेसु' कायव्रतेषु नवरमभिगतेष्वेव नानभिगतेषु 'गीतेने'ति गीतार्थेन साधुना परीक्षयेत् 'सम्यग्' असम्भ्रान्तः सन् 'एतेषु स्थानेषु' वक्ष्यमाणेषु इति गाथार्थः ॥ ६६३ ॥ उच्चारादि अस्थण्डिले व्युत्सृजति, तत्परीक्षार्थं गीतार्थः स्थानादि वा पृथिव्यां करोति, स्थानं कायोत्सर्गः, आदिशब्दान्निषीदनादिपरिग्रहः, नद्यादावुदकसमीपे उच्चाराद्येव व्युत्सृजति, तथा साग्नौ निक्षिप्ततेजसि स्थण्डिलादौ उच्चाराद्येव करोतीति गाथार्थः ॥ ६६४ ॥ तथा—व्यञ्जनाभिधारणं वाते करोति, हरिते यथा पृथिव्यां, उच्चाराद्येव व्युत्सृजति, त्रसेषु च द्वीन्द्रियादिषु यथा पृथिव्यामिति, एवमेव यथासंभवं गोचरगते शिक्षके परीक्षा, कायैः रजःसंस्पृष्टग्रहणादिनेति गाथार्थः ॥ ६६५ ॥ यदि परिहरति सम्यक् स्वतः चोदयति वा 'घाटिकं' द्वितीयं अयुक्तमेतदित्येवं तथा (दा) योग्यो भवत्युपस्थापनाया इतरथा भजना, 'तस्याश्च' उपस्थापनायाः विधिरयं भवति वक्ष्यमाण इति गाथार्थः ॥६६६॥" **एवमुपस्थापनायाः परीक्षाविधिर्विभिन्न एवोक्तः। धर्मबिन्द्वादावपि सामायिकचरित्रात्पूर्वं सकालमाना परीक्षा कथिता विज्ञेया। विशेषनिश्चयार्थं श्रीप्रतिमापञ्चाशकोल्लेखमपि विचारय, येन 'प्रवचनविधिना सामायिकचारित्रात्पूर्वं परीक्षा किदृशी कर्त्तव्येति' तव भ्रान्तिरपि दूरीभविष्यति। तथा च तद्ग्रन्थः—**"एत्तो चिय पुच्छादिसु हंदि विशुद्धस्स सति पयत्तेणं । दायवा गीतेणं भणियमिणं सव्वदंसीहिं ॥ ४६ ॥" **व्याख्या**—"एत्तो चिय त्ति—यत एतत्प्रकारमन्तरेणापि उचितगुणस्य प्रव्रज्या प्रतिमाकर्तुरिव यथोक्ता भवति अत एव कारणात् पृच्छादिषु पृच्छाकथनापरीक्षासु, तत्र पृच्छा—"कोसि तुमं कत्तो वा पव्वयसि किं वा निमित्तंति" एवमादिरूपा, कथना पुनः प्रविव्रजिषोः प्रव्रज्यास्वरूपकथनं, यथा—"जह चेव मोक्खफ-

एया आणा आराहिया जिणिंदाणं । संसारदुःखफलया तह चेव विराहिया होइ ॥" त्ति, परीक्षा तु षण्मासादिकालमाना विनयादिभि-र्योग्यतानिरूपणा, एतेपु पदेपु, इदंदीत्युपप्रदर्शने, विशुद्धस्य निर्दोषतां गतस्य, सकृत्सदा, प्रयत्नेनादरेण, दातव्या देया, प्रव्रज्येति प्रकृतं, गीतेन पदैकदेशे पदसमुदायोपचारात् गीतार्थेन सूत्रार्थविदा, नान्येनेति, भणितमुक्तं, इदमेतत्, सर्वदर्शिभिः केवलिभिः; इति गाथार्थः॥४६॥" श्रीनिशीथचूर्णिना संहतान्सर्वानपि संगतिं कुर्वतः सामायिकचारित्रात् पूर्वं सकालमानायाः परीक्षायाः स्वीकारे न कापि बाधा । ये तस्या अपलापं कुर्वन्ति ते शास्त्राज्ञां नैव जानन्तीति ।

एवं ये विरतिविलम्बदोषं पुरस्कृत्य प्रशस्तमुहूर्त्तादिकमवगणय्य प्रशस्तद्रव्यादिषु दीक्षाप्रदानं कुर्वन्ति तेऽपि जिनाज्ञा-बहिर्वर्तिनो द्रष्टव्याः, "दव्वादी अपसत्थे मोत्तु पसत्थेसु फासुगाहारं । लग्गाति व तुरंते गुरुअणुकूले वऽहाजायं" इत्यादिना निशीथ-भाष्ये प्रशस्तद्रव्यलग्नमुहूर्त्तादीनां विहितत्वात् । प्रशस्तद्रव्यादीनां कर्मणामुदये क्षयोपशमादौ च हेतुत्वेन जिनाभिहित-त्वेन चावश्यमेव तेऽवलोकनीयाः । तदुक्तं—"एसा जिणाणमाणा खित्ताईआ य कम्मुणो होंति । उदयाइकारणं जं तम्हा एएसु जइ-अव्वं ॥ ११४ ॥" वृत्तिः—"एषा जिनानामाज्ञा यदुतोक्तलक्षणेष्वेव क्षेत्रादिषु दातव्येति, क्षेत्रादयश्च कर्म्मणो भवन्ति उदयादिकारणं 'यद्' यस्मात्, यत उक्तम्—"उदयक्खयखओवसमोवसमा जं च कम्मुणो भणिया । दव्वं खित्तं कालं भवं च भावं च संपप्प ॥१॥" यस्मादेवं तस्मात् क्षेत्रादिषु एतेषु यतितव्यं, शुद्धेषु यत्नः कार्यः इति गाथार्थः ॥ ११४ ॥" इति ।

तथा ये विरतिविलम्बदोषं पुरस्कृत्य शिवभूतिं दृष्टान्तीकृत्य च रजन्यामपि प्रव्रज्याप्रदानं प्रजल्पन्ति तेऽपि मृषावादिन एव, यतः शिवभूतेः प्रव्रज्या गुरुभिर्न प्रदत्ता परं तेन स्वयं लुञ्चिते शिरसि तु तल्लिङ्गं प्रदत्तं, तदुक्तमुत्तराध्ययनवृत्तौ—

विशुद्धिस्थानमित्युक्तमभिग्रहद्वारम् ॥ प्रव्राजनद्वारे मुण्डापनद्वारे च न चासावन्यं प्रव्राज-
न्ति, तत्पालनमेवास्य परमं विशुद्धिस्थानमित्युक्तमभिग्रहद्वारम् ॥ प्रव्रजनशीलं कञ्चन सत्त्वं ज्ञात्वोपदेशं पुनः प्रयच्छति, संविग्नगीतार्थसा-
यति मुण्डापयति वा, कल्पस्थितिरियमिति कृत्वा, प्रव्रजनशीलं कञ्चन सत्त्वं ज्ञात्वोपदेशं पुनः प्रयच्छति, सर्वजघन्यं चतु-
धूनां पार्श्वे प्रहिणोतीत्युक्ते प्रव्राजनमुण्डापनद्वारे ॥ प्रायश्चित्तद्वारे मनसापि सूक्ष्ममतीचारमापन्नस्यास्य सर्वजघन्यं चतु-
गुरुकं प्रायश्चित्तं भवतीत्युक्तं प्रायश्चित्तद्वारम् ॥ कारणद्वारे तेषां भगवतां ज्ञानादिकं न किञ्चिदालम्बनं विद्यते, अत एव
न कदाचनापि द्वितीयं पदमासेवेरन्नित्युक्तं कारणद्वारम् ॥ निष्प्रतिकर्मद्वारेऽमी भगवन्तः अक्षिमलादिकमपि नापनयन्ति
निष्प्रतिकर्मशरीरत्वादित्युक्तं निष्प्रतिकर्मद्वारम् ॥ भिक्षापन्थद्वारे समाचारीद्वारगतं भिक्षाद्वारमिव तृतीयायां पौरुष्या-
माहारविहारादि शेषासु पौरुषीषु प्रायः कायोत्सर्गेणासनं विज्ञेयमित्युक्तं भिक्षापन्थद्वारम् । क्षीणजङ्घाबले तु विहारमकुर्व-
न्नपि कमपि दोषं नापद्यते, एकत्रैव क्षेत्रे स्वकल्पस्थितिं परिपालयतीत्युक्तमष्टमं मौलं स्थितिनाम द्वारम् ॥ तदुक्तौ चोक्तो
जिनकल्पः, तदुक्तौ च यावत्कथिकपरिहारविशुद्धिकं चारित्रमुक्तं, तदेवमुक्तं परिहारविशुद्धिकं चारित्रम् ॥

तथा सूक्ष्मः सम्परायः किट्टिकृतलोभकषायोदयरूपो यस्मिन् तत्सूक्ष्मसम्परायाख्यं चारित्रं भवति, तदपि द्विधा–विशुद्ध्य-
मानकं संक्लिश्यमानकं च । तत्राद्यं क्षपकोपशमश्रेणिमारोहतो, द्वितीयं तूपशमश्रेणीतः प्रच्यवमानस्य भवतीत्युक्तं सूक्ष्मसम्परा-
यचारित्रम् ॥ ख्यातं प्रसिद्धं यच्चारित्रमासेव्य सुविहिताः मोक्षस्थानं वव्रजुः व्रजन्ति व्रजिष्यन्ति चेति सर्वज्ञत्वादिगुणग-
णोपेतानां प्रवरपुरुषाणां प्रसिद्धत्वात् यथाख्यातचारित्रं ज्ञेयम् ॥ एवं संयममार्गणायां सामायिकादीनि चारित्राण्युक्तानि ॥

तथा सर्वसावद्ययोगस्य देशे एकादिव्रतविषये स्थूलसावद्ययोगादौ विरमणं विरतिः यस्मिन् चारित्रे तद्देशविरतिचारित्रं,

तस्य व्रतानि संक्षेपतो निदर्श्यन्ते—पञ्चाणुव्रतानि, त्रीणि गुणव्रतानि, चत्वारि शिक्षापदव्रतानीति द्वादश व्रतानि। तत्राणूनि
लघूनि महाव्रतापेक्षया व्रतानि नियतरूपाणि अणुव्रतानि, यद्वा अणोः मुनेरपेक्षया लघोर्लघुगुणस्थानवर्तिनो व्रतानि अणुव्रतानि
प्रमत्तगुणस्थानापेक्षया देशविरतिगुणस्थानं लघ्विति। अथवा महाव्रतप्ररूपणापेक्षया पश्चात्प्ररूपणीयत्वेनानुपश्चाद्व्रतान्य-
नुव्रतानि। पूर्वं हि महाव्रतानि प्ररूप्यन्ते, ततस्तत्प्रतिपत्त्यसमर्थस्यानुव्रतानि प्ररूप्यन्त, तदुक्तम्—"जइधम्मस्सऽसमत्थे जुज्जइ
तद्देसणंपि साहूणं" इति। तानि स्थूलहिंसादिविरतिरूपाणि पञ्च भवन्ति। तत्र स्थूला मिथ्यादृष्टीनामपि हिंसात्वेन प्रसिद्धा न तु
पृथिव्यादिविषया सूक्ष्मा, तस्याः परिहर्तुमशक्यत्वात्, यद्वा स्थूलानां द्वीन्द्रियादित्रसानां हिंसा स्थूलहिंसा तस्या विरतिर्नि-
वृत्तिः स्थूलहिंसाविरतिरादिशब्दात्स्थूलमृषावादादत्तादानाब्रह्मपरिग्रहाणामपि विरतिर्वाच्या। अणुव्रतानां गुणायोपकाराय
व्रतानि गुणव्रतानि गुणव्रतप्रतिपत्तिमन्तरेणाणुव्रतानां तथाविधविशुद्धभावादत एवाणुव्रतानां परिपालनाय भावनाभू-
तानि गुणव्रतान्यभिधीयन्ते। तानि च त्रीणि भवन्ति। तद्यथा—दिग्विरमणव्रतमुपभोगपरिभोगपरिमाणव्रतमनर्थदण्डवि-
रमणव्रतमिति। शिक्षणं शिक्षाऽभ्यासस्तस्मै तस्या वा पदानि स्थानानि तान्येव व्रतानि शिक्षापदव्रतानि। तानि च चत्वारि
भवन्ति, तद्यथा—सामायिकम्, देशावकाशिकम्, पौषधोपवासोऽतिथिसंविभागश्चेति। गुणव्रतानां प्रायेण यावत्कालभावि-
त्वात् शिक्षापदव्रतानां स्वल्पकालिकत्वाच्च तयोर्भेदः। "सामायिकदेशावकाशिके प्रतिदिवसानुष्ठेये पुनःपुनरुच्चारणीये, पौषधोपवा-
सातिथिसंविभागौ तु प्रतिनियतदिवसानुष्ठेयौ न प्रतिदिवसाचरणीया"विति विवेक आवश्यकवृत्तिकृतः।

तत्र निरपराधानां त्रसजन्तूनामपेक्षां विनाऽस्थिदन्तचर्ममांसाद्यर्थं जन्तुं हन्मीति संकल्पपूर्वकं प्राणव्यपरोपणरूपां

"ततस्तत्र प्रविश्यार्यकृष्णाचार्यान् प्रणम्य तान्। मां प्रव्राजयेत्यूचे ते तु प्राव्राजयन्न तम् ॥ १ ॥ स्वयमेव ततस्तेन लुञ्चिते स्वीयमस्तके। गुरवो ददिरे तस्मै लिङ्गधर्मध्वजादिकम् ॥ २ ॥" इति। एवमुक्ता सप्रपञ्चा द्रव्यस्थापना।

क्षेत्रस्थापना चोपाश्रयात् परितः सर्वास्वपि दिक्षु सार्द्धक्रोशद्वयात् परतः गमनं न कुर्वन्ति। गमनागमनेन च सक्रोशयोजनावग्रहो भवति। तदुक्तं श्रीकल्पसूत्रे—"वासावासं पज्जोसवियाणं कप्पइ निग्गंथाणं वा निग्गंथीण वा सव्वओ समंता सक्कोसजोयणं ओग्गहं ओगिण्हित्ताणं चिट्ठिउं अहालंदमवि ओग्गहे ॥ ९ ॥" वृत्तिः—"वासावासमित्यादितः अहालंदमवि ओग्गहेत्ति पर्यन्तम्, तत्र वासावासं पर्युषितानां स्थितानां निर्ग्रन्थानां निर्ग्रन्थीनां वा सर्वतः चतसृषु दिक्षु विदिक्षु च सक्रोशं योजनमवग्रहमवगृह्य अथालंदमपीति अथेत्ययं निपातः लन्दमिति कालस्याख्या ततो लन्दमपि स्तोककालमप्यवग्रहे स्थातुं कल्पते न बहिर्लन्दकालमपि स्थातुं कल्पते, तत्र यावत्कालेनोदकार्द्रः करः शुष्यति तावान् कालो जघन्यं लन्दमुत्कृष्टं पञ्चाहोरात्रास्तयोरन्तरे मध्यं यथा रेफप्रकृतिरप्यरेफप्रकृतिरपीति, एवं लन्दमप्यवग्रहे स्थातुं कल्पते, अलन्दमपि यावत् षण्मासानेकत्रावग्रहे स्थातुं कल्पते, ऊर्ध्वाधोमध्यग्रामान् विना चतसृषु दिक्षु गजेन्द्रपदाद्रेर्मेखलाग्रामस्थितानां तु षट्सु दिक्षु उपाश्रयात् सार्द्धक्रोशद्वयं गमागमेन पञ्चक्रोशावग्रहः। यच्चानन्तरं विदिक्षु इत्युक्तं तत् व्यावहारिकविदिगपेक्षयाऽवगन्तव्यम्, यतो भवन्ति हि ग्रामा मूलग्रामादाग्नेय्यादिविदिक्षु, नैश्चयिकविदिक्षु चैकप्रदेशात्मकत्वान्न गमनागमनसम्भवः, अटवीजलादिना व्याघाते तु त्रिदिक्को द्विदिक्क एकदिक्को वाऽवग्रहो भाव्यः ॥ ९ ॥" इति। अनेन स्पष्टं विज्ञायते यदवग्रह उपाश्रयादेव गण्यते न ग्रामान्नगराद्वा। ये च साम्प्रतकालीनाः केचन नगरात् सार्द्धक्रोशद्वयमवग्रहं मत्वोपाश्रयात् द्वित्र्यादियोजनवर्त्तिन्यपि ग्रामे यतीनां निष्कारणं गमनं कारयन्ति, करणे बाधकाभावं च प्रतिपादयन्ति, तदपि

तेषां सूत्रोत्तीर्णं मन्तव्यम् । ग्लानवैद्यौषधादौ च कारणे चत्वारि पञ्च वा योजनानि गमनमनुज्ञातं निशीथभाष्यादौ । इत्युक्ता क्षेत्रस्थापना । कालस्थापना चत्वारो मासास्तत्र कल्पन्ते इति कालस्थापना । भावस्थापना च क्रोधादीनां विवेक ईर्याभाषादिसमितिषु चोपयोग इति भावस्थापना । एवमुक्तो दशविधः कल्पः ।

तत्र स्थितकल्पे प्रथमान्तिमतीर्थकृत्तीर्थेऽस्थितकल्पे महाविदेहोत्पन्नतीर्थकृततीर्थे द्वाविंशतिजिनतीर्थे च जिनकल्पिको भवतीत्युक्तं कल्पद्वारम् ॥

लिङ्गद्वारे प्रथमतो जिनकल्पं प्रतिपद्यमानो द्रव्यभावलिङ्गयुक्तो भवति, क्षीणे चौराद्यपहृते वा द्रव्यलिङ्गः कदाचित् न भवत्यपि, भावलिङ्गयुक्तस्तु सदैव भवतीत्युक्तं लिङ्गद्वारम् ॥ लेश्याद्वारे जिनकल्पं प्रतिपद्यमानाः तैजस्यादिकासु शुभासु लेश्यासु वर्त्तन्ते, पूर्वप्रतिपन्नास्तु सर्वासु भवेयुः, केवलं नातिसंक्लिष्टासु नापि चिरकालमित्युक्तं लेश्याद्वारम् ॥ ध्यानद्वारे प्रवर्द्धमानेन धर्म्मध्यानेनामी भगवन्तः कल्पं प्रतिपद्यन्ते, पूर्वप्रतिपन्नास्तु कर्मवैचित्र्यबलादार्त्तादिध्यानेष्वपि वर्तेरन् तथापि कुशलपरिणामस्योद्दामत्वेनास्य भगवतो रौद्रार्त्तभावः प्रायः निरनुबन्धो भवतीत्युक्तं ध्यानद्वारम् ॥ गणद्वारे प्रतिपद्यमानतामङ्गीकृत्योत्कृष्टतः शतपृथक्त्वमेकस्मिन् समयेऽमीषां भगवतां प्राप्यते । पूर्वप्रतिपन्नास्तूत्कृष्टतः पञ्चदशस्वपि कर्मभूमिषु सहस्रपृथक्त्वप्रमाणा भवन्ति, जघन्यतोऽप्येतावन्त एव नवरमुत्कृष्टतो जघन्यपदं लघुतरं द्रष्टव्यमित्युक्तं गणनाद्वारम् ॥ अभिग्रहद्वारे ऋज्वीगतिप्रत्यागतिकादयो गोचरचर्याविशेषा इत्वरकालिका अभिग्रहा अस्य भगवतो न भवन्ति, जिनकल्प एव यावत्कथिकस्तस्याभिग्रहस्तत्र च प्रतिनियता निरपवादाश्च गोचरादयो भव-

न्ति, तत्पालनमेवास्य परमं विशुद्धिस्थानमित्युक्तमभिग्रहद्वारम् ॥ प्रव्राजनद्वारे मुण्डापनद्वारे च न चासावन्यं प्रव्राजयति मुण्डापयति वा, कल्पस्थितिरियमिति कृत्वा, प्रव्रजनशीलं कञ्चन सत्त्वं ज्ञात्वोपदेशं पुनः प्रयच्छति, संविग्नगीतार्थसाधूनां पार्श्वे प्रहिणोतीत्युक्ते प्रव्राजनमुण्डापनद्वारे ॥ प्रायश्चित्तद्वारे मनसापि सूक्ष्ममतीचारमापन्नस्यास्य सर्वजघन्यं चतुर्गुरुकं प्रायश्चित्तं भवतीत्युक्तं प्रायश्चित्तद्वरम् ॥ कारणद्वारे तेषां भगवतां ज्ञानादिकं न किञ्चिदालम्बनं विद्यते, अत एव न कदाचनापि द्वितीयं पदमासेवेरन्नित्युक्तं कारणद्वारम् ॥ निष्प्रतिकर्मद्वारेऽमी भगवन्तः अक्षिमलादिकमपि नापनयन्ति निष्प्रतिकर्मशरीरत्वादित्युक्तं निष्प्रतिकर्मद्वारम् ॥ भिक्षापन्थद्वारे समाचारीद्वारगतं भिक्षाद्वारमिव तृतीयायां पौरुष्यामाहारविहारादि शेषासु पौरुषीषु प्रायः कायोत्सर्गेणासनं विज्ञेयमित्युक्तं भिक्षापन्थद्वारम् । क्षीणजङ्घाबले तु विहारमकुर्वन्नपि कमपि दोषं नापद्यते, एकत्रैव क्षेत्रे स्वकल्पस्थितिं परिपालयतीत्युक्तमष्टमं मौलं स्थितिनाम द्वारम् ॥ तदुक्तौ चोक्तो जिनकल्पः, तदुक्तौ च यावत्कथिकपरिहारविशुद्धिकं चारित्रमुक्तं, तदेवमुक्तं परिहारविशुद्धिकं चारित्रम् ॥

तथा सूक्ष्मः सम्परायः किट्टिकृतलोभकषायोदयरूपो यस्मिन् तत्सूक्ष्मसम्परायाख्यं चारित्रं भवति, तदपि द्विधा—विशुद्ध्यमानकं संक्लिश्यमानकं च । तत्राद्यं क्षपकोपशमश्रेणिमारोहतो, द्वितीयं तूपशमश्रेणीतः प्रच्यवमानस्य भवतीत्युक्तं सूक्ष्मसम्परायचारित्रम् ॥ ख्यातं प्रसिद्धं यच्चारित्रमासेव्य सुविहिताः मोक्षस्थानं वव्रजुः व्रजन्ति व्रजिष्यन्ति चेति सर्वज्ञत्वादिगुणगणोपेतानां प्रवरपुरुषाणां प्रसिद्धत्वात् यथाख्यातचारित्रं ज्ञेयम् ॥ एवं संयममार्गणायां सामायिकादीनि चारित्राण्युक्तानि ॥

तथा सर्वसावद्ययोगस्य देशे एकादिव्रतविषये स्थूलसावद्ययोगादौ विरमणं विरतिः यस्मिन् चारित्रे तद्देशविरतिचारित्रं,

चत्वारि शिक्षापदव्रतानीति द्वादश व्रतानि । तत्राणूनि
तस्य व्रतानि संक्षेपतो निदर्श्यन्ते—पञ्चाणुव्रतानि, त्रीणि गुणव्रतानि, लघोर्लघुगुणस्थानवर्तिनो व्रतानि अणुव्रतानि
लघूनि महाव्रतापेक्षया व्रतानि नियतरूपाणि अणुव्रतानि, यद्वा अणोः मुनेरपेक्षया पश्चात्प्ररूपणीयत्वेनानुपश्चाद्व्रतान्य-
प्रमत्तगुणस्थानापेक्षया देशविरतिगुणस्थानं लघ्विति । अथवा महाव्रतप्ररूपणापेक्षया "जइधम्मस्सऽसमत्थे जुज्जइ
नुव्रतानि । पूर्वं हि महाव्रतानि प्ररूप्यन्ते, ततस्तत्प्रतिपत्त्यसमर्थस्यानुव्रतानि प्ररूप्यन्त, तदुक्तम्—
तद्देसणंपि साहूणं" इति । तानि स्थूलहिंसादिविरतिरूपाणि पञ्च भवन्ति । तत्र स्थूला मिथ्यादृष्टीनामपि हिंसात्वेन प्रसिद्धा न तु
पृथिव्यादिविषया सूक्ष्मा, तस्याः परिहर्तुमशक्यत्वात्, यद्वा स्थूलानां द्वीन्द्रियादित्रसानां हिंसा स्थूलहिंसा तस्या विरतिर्नि-
वृत्तिः स्थूलहिंसाविरतिरादिशब्दात्स्थूलमृषावादादत्तादानाब्रह्मपरिग्रहाणामपि विरतिर्वाच्या । अणुव्रतानां गुणायोपकाराय
व्रतानि गुणव्रतानि गुणव्रतप्रतिपत्तिमन्तरेणाणुव्रतानां तथाविधविशुद्ध्यभावादत एवाणुव्रतानां परिपालनाय भावनाभू-
तानि गुणव्रतान्यभिधीयन्ते । तानि च त्रीणि भवन्ति । तद्यथा—दिग्विरमणव्रतमुपभोगपरिभोगपरिमाणव्रतमनर्थदण्डवि-
रमणव्रतमिति । शिक्षणं शिक्षाऽभ्यासस्तस्मै तस्या वा पदानि स्थानानि तान्येव व्रतानि शिक्षापदव्रतानि । तानि च चत्वारि
भवन्ति, तद्यथा—सामायिकम्, देशावकाशिकम्, पौषधोपवासोऽतिथिसंविभागश्चेति । गुणव्रतानां प्रायेण यावत्कालभावि-
त्वात् शिक्षापदव्रतानां स्वल्पकालिकत्वाच्च तयोर्भेदः । "सामायिकदेशावकाशिके प्रतिदिवसानुष्ठेये पुनःपुनरुच्चारणीये, पौषधोपवा-
सातिथिसंविभागौ तु प्रतिनियतदिवसानुष्ठेयौ न प्रतिदिवसाचरणीया"विति विवेक आवश्यकवृत्तिकृतः ।

तत्र निरपराधानां त्रसजन्तूनामपेक्षां विनाऽस्थिदन्तचर्ममांसाद्यर्थं जन्तुं हन्मीति संकल्पपूर्वकं प्राणव्यपरोपणरूपां

हिंसां प्रत्याख्यातीति प्रथममणुव्रतम् । निरपराधानां वधस्य प्रत्याख्याने सापराधस्य वधे न नियम इति व्यज्यते । त्रसग्रहणेन त्वेकेन्द्रियविषयायाः हिंसायाः प्रत्याख्याने आत्मनः सर्वथाऽसामर्थ्यमाचष्टे । संकल्पग्रहणेनानुबन्धहिंसायाः वर्जनमुक्तमारम्भजायाः हिंसायाः सर्वथा वर्जनेऽशक्यतां तत्र यतनाकरणं च ध्वनितम्, अत एव श्रावकेण त्रसादिरहितं सङ्खारकसत्थापनादिविधिना निश्छिद्रदृढवस्त्रगलितं परिमितं पानीयं व्यापार्यमेधांसि च कीटैरनिघर्षितानि शुष्काणि घनानि नव्यानि सम्यक् शोधितान्येव परिमितानि च व्यापार्याणि, न तु कीटजग्धार्द्रशुषिरजीर्णानीति । तथा जन्तुभिरसंसक्तानि धान्यपक्वान्नसुखाशिकास्वादिमपत्रपुष्पफलानि सम्यक् शोधितान्येव व्यापार्याणि, अन्यथा निर्दयत्वादिना सम्यक्त्वलक्षणान्तर्गतानुकम्पायाः अभावप्रसक्तेः । तदुक्तम्–"परिसुद्धजलग्गहणं दारु अ धन्नाइआण य तहेव । गहिआण य परिभोगो विहीइ तसरक्खणट्ठाए ॥ १ ॥" इति । निरपराधसंकल्पनिरपेक्षरूपविशेषणत्रयेण प्रायः श्रावकस्य सपादविशोपकपरिमितजीवदयात्मकं प्रथमाणुव्रतमिति । तदुक्तम्–"जीवा थूला सुहुमा संकप्पारम्भओ भवे दुविहा । सावराहनिरवराहा साविक्खा चेव निरविक्खा ॥ १ ॥" अस्या व्याख्या–"प्राणिवधो द्विविधः स्थूलसूक्ष्मजीवविषयभेदात् । तत्र स्थूला द्वीन्द्रियादयः, सूक्ष्माश्चात्रैकेन्द्रियाः पृथिव्यादयः पञ्चापि बादराः, न तु सूक्ष्मनामकर्मोदयवर्तिनः सर्वलोकव्यापिनः, तेषां वधाभावात्, स्वयमायुःक्षयेणैव मरणात्, अत्र च साधूनां द्विविधादपि वधान्निवृत्तत्वात् विंशतिर्विंशोपका जीवदया, गृहस्थानां तु स्थूलप्राणिवधान्निवृत्तिर्न तु सूक्ष्मवधात्, पृथ्वीजलादिषु सततमारम्भप्रवृत्तत्वादिति दश विशोपकरूपमर्द्धं गतम् । स्थूलप्राणिवधोऽपि द्विधा सङ्कल्पज आरम्भजश्च, तत्र सङ्कल्पान्मारयाम्येनमिति मनःसङ्कल्परूपाद्यो जायते तस्माद्गृही निवृत्तो न त्वारम्भजात्, कृष्याद्यारम्भे द्वीन्द्रियादिव्यापादनसंभ-

वात्, अन्यथा च शरीरकुटुम्बनिर्वाहाद्यभावात्, एवं पुनरर्द्धं गतं जाताः पञ्च विशोपकाः । सङ्कल्पजोऽपि द्विधा सापराधविषयो निरपराधविषयश्च, तत्र निरपराधविषयान्निवृत्तिः । सापराधे तु गुरुलाघवचिन्तनं, यथा गुरुरपराधो लघुर्वा इति । एवं पुनरर्धे गते सार्धौ द्वौ विशोपकौ जातौ । निरपराधोऽपि द्विधा सापेक्षो निरपेक्षश्च, तत्र निरपेक्षान्निवृत्तिर्न तु सापेक्षात्, निरपराधेऽपि वाह्यमानमहिषवृषहयादौ पाठादिप्रमत्तपुत्रादौ च सापेक्षतया वधबन्धादिकरणात्, ततः पुनरर्द्धे गते सपादविशोपकः स्थित इति"। 'ननु सुकृतिनां श्राद्धादीनां वधकरणं व्याधिपीडितानामन्धपङ्ग्वादीनां च वधान्निवृत्तिः न युक्ता, परिणामासुन्दरत्वात् । तथाहि–आपातकटुकमपि परिणामसुन्दरं यत्तत्परेषां विधेयम्, यथा व्याध्यपगमायौषधम् । परिणामसुन्दरं च व्याधिपीडितानां दरिद्रपङ्ग्वादीनामतिपीडितानां च कीटादीनां व्यापादनम् । तच्च परोपकारैकनिष्ठैः शीवमार्गानुगैः तेषां संसारचक्रपरिभ्रमणनिमित्तकपापकर्म्मक्षपणार्थमवश्यं कर्त्तव्यम् । ते च ततस्तीव्रतरवेदनादुक्खमनुभवन्तः प्राग्बद्धं पापमुदीर्योदीर्य क्षपयन्ति, न पुना रौद्रध्यानोपगताः नूतनं प्रचुरतरं पापमुपार्जयन्ति । ननु नोपार्जयन्तीत्यत्र किं प्रमाणमिति चेत्? भवन्मतानुसारेण नारकस्वरूपोपदर्शकं वाक्यमेव प्रमाणम् । तथाहि–आद्यासु तिसृषु पृथिवीषु ताडनभेदनोत्कर्त्तनसूल्यारोपणाद्यनेकप्रकारैः परमाधार्म्मिकासुरैरुपहन्यमाना अन्यासु तिसृषु परस्परोदीरिततीव्रवेदनामनुभवन्तो रौद्रध्यानोपगता अपि नारकाः प्राग्बद्धमेव पापकर्म्म क्षपयन्ति, न पुनः नूतनमधिकतरमुपार्जयन्ति, यतो नारका मृत्वाऽनन्तरं नारकत्वेन नोत्पद्यन्ते, किञ्च तीव्रसङ्क्लेशवशादेव दुःखिनो जीवाः रौद्रध्यानोपगताः प्राग्बद्धं प्रभूततरं पापं क्षपयन्ति, तीव्रसङ्क्लेशाभावे तु परमाधार्म्मिका अपि तेषां पापकर्म्म क्षपयितुं न समर्था इति । व्यापादका रौद्रध्यानोपजनयन्तोऽपि

व्यापाद्यमानानामुपकारका एव भवन्तीत्युपकारसंभवेऽपि ये तद्व्यापादनमुपेक्षन्ते निषेधयन्ति वा ते महापापकारिणः। ये तु प्राग्बद्धं पुण्यविपाकमनुभवन्ति ते न व्यापादनीयास्तेषां सुखानुभववियोगेनोपकारासंभवात्। न च परोपकारैकनिष्ठाः परेषामपकारार्थं प्रवर्तन्त परिणामासुन्दरत्वादिति चेत्?' अत्रोच्यते–परोपकारोऽपि स एव विधेयो य आत्मन उपकारको भवति, न च जीववधजन्योपकृतिना भवन्तं कमप्युपकारं पश्यामो, यतो जीववधे क उपकारः? किं पुण्यबन्धः कर्म्मक्षयो वा? न प्रथमः पक्षः क्षेमङ्करः, एतेषां पुण्यबन्धविघ्नकरत्वात्। यदि ते न व्यापादिताः भवेयुस्तर्हि भवन्मतेन बहून् दुःखितान् जीवान् व्यापाद्य प्रभूतं पुण्यमुपार्जयेयुः, व्यापादितास्तु ते परवधेऽप्रसक्ताः कथं पुण्यमुपार्जयेयुः। न च पुण्यान्तरायकृतः पुण्यमुपार्जयन्ति, विरोधात्, अन्यथा सर्वस्यापि पुण्यबन्धप्रसक्तेरिति। एतेन–'परिणामसुन्दरं च व्याधिपीडितानां दरिद्रान्धपङ्ग्वादीनामतिपीडितानां कीटादीनां च व्यापादनमित्यादिकं' यदुक्तं तत्प्रत्युक्तं द्रष्टव्यं, पुण्योपार्जनान्तरायकरणेन परिणामसुन्दरत्वायोगादिति न पुण्यबन्धपक्षः शोभावहः। नापि कर्म्मक्षयपक्षो हितावहो यतस्तत्कर्म किं सहेतुकमुताहेतुकम्? सहेतुकमपि किमज्ञानजन्यमुताहिंसाजन्यं वधजन्यं वा? अज्ञानजन्यं चेत्? हिंसातस्तस्य निवृत्तिर्न स्यात्। यो हि यन्निमित्तो दोषः स तत्प्रतिपक्षस्यासेवनेनैव निवर्तते, यथा हिमजनितशीतमनलसेवनेन, अज्ञानप्रतिपक्षं तु सम्यग्ज्ञानं न तु हिंसेति हिंसातोऽज्ञानजन्यं कर्म्म कथं निवर्तते? नाप्यहिंसाजन्यं कर्म्म, अहिंसकत्वाविशेषेण मुक्तात्मनामपि कर्म्मबन्धप्रसक्तेः। वधजन्यं कर्म्मेति चेत्? वधात्तस्य कथं निवृत्तिः, नहि यद्यस्मात् प्रादुर्भवति, स तस्मादेव निवृत्तिं याति, विरोधात्, यथाऽजीर्णप्रभवो रोगो मुहुरजीर्णकरणात् न निवर्तते,

श्यमानः समुपलभ्यते तद्वत् नारका अपि परमाधार्म्मिकासुरोदीरितदुक्खाः परस्परोदीरितदुक्खा वा तीव्रवेदनामनुभवन्तः संमूढचेतसो नातीव संक्लिश्यमानाः सदैव द्रष्टव्याः । तस्मात्तथाविधसंक्लेशाभावात् नारकाणां नाभिनवप्रभूतपापोपचयः । 'ननु सम्मोहोऽपि महोपकारी, यतः सम्मोहवशात् तीव्रवेदनामनुभवन्तोऽपि परत्रापि संक्लिश्यमानाः न भवन्ति, प्राग्बद्धं पापं तु क्षपयन्तीति सम्मोहो महोपकारी, स च हिंस्रव्यापारात् जायते, तत एव हिंसका अपि महोपकारिण इति चेत् ?' न, हिंसकानां परपीडोत्पादनतः संक्लेशाधिक्येन पापबन्धप्रसक्तेः । न खलु पापबन्धं प्रति परपीडामन्तरेणान्यत् कारणमुत्पश्यामः, यदि स्यात्तर्हि मुक्तात्मनामपि पापबन्धप्रसङ्गस्तेषां परपीडाकरत्वाविशेषात् । ततः कथमिव प्रेक्षावन्तो मनसापि परपीडामुत्पादयितुमुत्सहेरन्निति । एवं च परिणामासुन्दरत्वाभावेन व्याधिपीडितानामन्धपङ्ग्वादीनां वधान्निवृत्तिः सुकृतिभिः श्राद्धादिभिः कर्त्तव्यैवेति स्थितम् ।

अत्र शास्त्रवार्त्तासमुच्चयवृत्तितो हिंसालक्षणमुच्यते—"प्रमादयोगेन प्राणव्यपरोपणं हिंसा' इति परमर्षिप्रणीतमेव हिंसालक्षणं सम्यक् । अत्र च प्रमादयोगः—यतनाऽभावः, यतना च जीवरक्षानुकूलो व्यापारः, तत्त्वं च जीवमरणव्यापारविघटकत्वम्, युगमाने क्षेत्रे सम्यग् नेत्रव्यापाररूपेर्यासमित्यादिना जीवमरणजनकचरणव्यापारादेरनिष्टसाधनत्वेन निवर्त्तनादिति बोध्यम् । न च 'मरणानुकूलव्यापारेण' इत्येवास्तु, किमधिकेन ? इति वाच्यम्, अप्रमत्तहिंसायामतिव्याप्तेः । न चैवमप्यनाभोगविघटनेनाप्रमत्तहिंसाया हिंसात्वापत्तिः, शक्यविघटनत्वस्य व्यापारविशेषणत्वात् । न चैवमप्यतशनादावतिव्याप्तिः, परजीवग्रहणे चात्महिंसायामव्याप्तिरिति वाच्यम्, शुभसंकल्पपूर्वकत्वस्य मरणव्यापारविशेषणत्वात् । न चैवं याज्ञिकानामपि क्रत्वङ्गहिंसायां शुभसंकल्पात् न दोष इति वाच्यम्, विधिजन्यमोक्षे-

च्छाया एव शुभसंकल्पपरेन ग्रहणात् । अत एव राज्यादिनिदानार्थमनशनमप्यात्महिंसां वदन्ति ताश्विकाः । द्रव्यभावोभयहिंसालक्षणं
चैतत्" इति । प्राणिवधो हि त्रिचत्वारिंशदधिकशतद्वयविधो भवति । पृथ्वीजलतेजोवायुवनस्पतिद्वित्रिचतुष्पञ्चेन्द्रियैः
मनोवाक्कायगुणितैः सप्तविंशतिधा भवति । करणकारणानुमितिभिस्ताडित एकाशीतिविधः, कालत्रिकैस्ताडितस्तूक्तप्रकार-
स्त्रिचत्वारिंशदधिकशतद्वयविधः प्राणिवधो भवति । तदुक्तम्—"भूजलजलणानिलवणतिबिचउपंचिदिएहिं नव जीवा । मण-
वयणकायगुणिया हवंति ते सत्तवीसत्ति ॥ १ ॥ इक्कासीई ते करणकारणाणुमइताडिआ होइ । ते चिअ तिकालगुणिआ दुन्नि सया
हुंति तेआला ॥ २ ॥" इति । श्रावकाणां च प्रायेण तेषां मध्ये त्रैकालिकमनोवाक्कायकरणकद्वित्रिचतुष्पञ्चेन्द्रियविषयकहिं-
साकरणकारणस्यैव प्रत्याख्यानसंभवः । एतद्व्रतस्य फलं चैवमाहुः—"जं आरुग्गमुदग्गमपडिहयं आणेसरत्तं फुडं, रूवं अप्पडि-
रूवमुज्जलतरा कित्ती धणं जुव्वणं । दीहं आउ अवंचणो परिअणो पुत्ता सुपुण्णासया, तं सव्वं सचराचरंपि वि जए नूणं दयाए फलं ॥१॥"
इति । हिंसायाः फलं तु पङ्गुताकुणिताकुष्टादिमहारोगेष्टवियोगशोकाल्पायुर्दुःखदौर्गत्यादीनीति । तदुक्तम्—"पाणिवहे वट्टन्ता
भमन्ति भीमासु गब्भवसहीसुं । संसारमंडलगया नरयतिरिक्खासु जोणीसुं ॥ १ ॥" इत्युक्तं प्रथमाणुव्रतम् ।

द्वितीयव्रतं तु कन्यालीकं गवालीकं भूम्यालीकं न्यासनिह्नवः कूटसाक्ष्यं चेति पञ्चविधस्थूलमृषावादेभ्यो विरतिः । तत्र
कन्याविषयमलीकं कन्यालीकं द्वेषादिकारणेन सुशीलामपि कन्यां दुःशीलेयं दुःशीलां च सुशीलेयं विषकन्यां चाविषक-
न्येयमविषकन्यां च विषकन्येयमित्यादिकं वदतः कन्यालीकं भवति । इदं सर्वस्यापि कुमारादिद्विपदविषयस्योपलक्षणम् ।
गवालीकं—बहुक्षीरामल्पक्षीरामल्पक्षीरां बहुक्षीरामित्यादि वदतः, इदमपि सर्वचतुष्पदस्योपलक्षणम् । भूम्यालीकं—स्वसत्कां

इति । तत्र स्वाम्यदत्तं स्वामिना दत्तं कनकादिकम्, जीवादत्तं यत् स्वकीयमपि सचित्तफलादिकमचित्तीकरणं तज्जीवैः स्वप्राणानर्पणात्, तीर्थकरादत्तं साधूनामाधाकर्म्मादि श्रावकाणां प्रासुकमनन्तकायाभक्ष्यादिकं तीर्थपतिभिरननुज्ञातत्वात्, गुर्वदत्तं सर्वदोषविप्रमुक्तमप्याहारं गुरूननिमन्त्र्य यत् स्वयं भुज्यते । अत्र स्वाम्यदत्तेनाधिकारः । तदपि द्विविधम्, स्थूलं सूक्ष्मं च । दुष्टाशयेन चौर्यबुद्ध्या गृहीतं क्षेत्रखलादावेकमपि फलं स्थूलादत्तादानं भवति । तद्विपरीतं स्वामिनमननुज्ञाप्य तृणलोष्ठादिकं सूक्ष्मादत्तादानम् । तत्र श्रावकैः यतना कर्त्तव्येति, स्थूलात्तु निवृत्तिः । तदुक्तमागमे—"थूलगादत्तादाणं समणोवासओ पच्चक्खाइ, से अ अदत्तादाणे दुविहे पण्णत्ते—तं जहा सचित्तादत्तादाणे अचित्तादत्तादाणे अ" इति । एतद्व्रतस्य फलं चात्र सर्वजनविश्वाससाधुवादसमृद्धिवृद्धिस्थैर्यैश्वर्यादीनि परलोके च स्वर्गादि । यदुक्तम्—"खित्ते खले अरण्णे, दिआ य राओ व सत्थघाए वा । अत्थो से न विणस्सइ अचोरिआए फलं एअं ॥ १ ॥ गामागरनगराणं दोणमुहं मडंबपट्टणाणं च । सुइरं हवंति सामी अचोरिआए फलं एअं ॥ २ ॥" इति । एतद्व्रताननुपालने मालिन्योत्पादने वा दौर्भाग्यदास्याङ्गच्छेददारिद्र्यराजनिग्रहायशःकीर्त्तिकुटुम्बविराधनादिकं फलं भवति । तदुक्तम्—"इह चेव खरारोहण गरिहा धिक्कार मरणपज्जंतं । दुक्खं तक्करपुरिसा लहंति नरयं परभवंमी ॥ १ ॥ नरयाओ उव्वट्टा केवट्टा कुंटमंटबहिरंधा । चोरिक्कवसणनिहया, हुंति नरा भवसहस्सेसुं ॥ २ ॥" इति प्रतिपादितं तृतीयमणुव्रतम् ।

अथ चतुर्थाणुव्रतमुच्यते—तत्र मैथुनं द्विविधम्, सूक्ष्मं स्थूलं च । कामोदयेनेन्द्रियाणामीषद्विकारः सूक्ष्मं मैथुनम् । तिर्यग्मनुष्यदेवस्त्रीणां मनोवाक्कायैः यः संभोगस्तत्स्थूलं मैथुनम् । यद्वा मैथुनविरतिरूपं ब्रह्मचर्यं द्विविधं भवति, तद्यथा सर्वतः

देशतश्च । तत्र सर्वतो मनोवाक्कायैः कृतकारितानुमितिभिरौदारिकवैक्रियस्त्रीणां सङ्गत्यागरूपं ब्रह्मचर्यमष्टादशधा भवति ।
तदुक्तं योगशास्त्रे कलिकालसर्वज्ञश्रीमद्धेमचन्द्रसूरिपादैः—"दिव्यौदारिककायानां कृतानुमितकारितैः । मनोवाक्कायतस्त्यागो
ब्रह्माष्टादशधा मतम् ॥" इति । तद्भिन्नं देशतो ब्रह्मचर्यम् । तत्रोपासकः सर्वथाऽशक्तौ स्वदारसन्तोषरूपं परदारपरिवर्जनरूपं
वा देशतो ब्रह्मचर्यं प्रतिपद्यते । तथा च सूत्रम्—"परदारगमणं समणोवासओ पच्चक्खाइ सदारसंतोसं व पडिवज्जइ, से अ
परदारगमणे दुविहे पण्णत्ते, ओरालियपरदारगमणे य वेउव्विअपरदारगमणे य" इति । येन परदारपरिवर्जनं कृतं स यास्वेव परदा-
रशब्दः प्रवर्तते ताभ्य एव निवर्तते, न तु गणिकादिभ्यः । येन तु स्वदारसन्तोषरूपं व्रतं गृहीतं स स्वकीयदारभिन्नाभ्यः
सर्वाभ्यो निवर्तते । तदुक्तं धर्मसङ्ग्रहवृत्तौ—" तत्र च परदारगमनं प्रत्याख्याता यास्वेव परदारशब्दः प्रवर्तते ताभ्य एव निवर्त्तते,
न तु साधारणाङ्गनादिभ्यः, स्वदारसन्तुष्टस्त्वेकानेकस्वदारव्यतिरिक्ताभ्यः सर्वाभ्य एवेति विवेकः" । तथाऽपरिगृहिताः देव्यः तिरश्च्यश्च
गणिकाकल्पा एव तथापि परजातीयभोग्यत्वात् परदारास्वेवान्तर्भावः । तदुक्तं धर्म्मसङ्ग्रहवृत्तौ—"यद्यप्यपरिगृहीता देव्य-
स्तिरश्च्यः काश्चित्सङ्ग्रहीतुः परिणेतुश्च कस्यचिदभावाद्वेश्याकल्पा एव भवन्ति, तथापि प्रायः परजातीयभोग्यत्वात् परदारा एव ता इति
वर्जनीया" इति । दारशब्दोपलक्षणात् स्त्रियं प्रति स्वपतिव्यतिरिक्तसर्वपुरुषवर्जनमपि द्रष्टव्यमिति ।

'ननु प्रेक्षावतां मैथुनान्निवृत्तिर्न युक्ता, स्वपरोपकारौत्सुक्यनिवृत्तिशुभध्याननियमनिष्फलत्वातिप्रसङ्गभावात् । तदुक्त-
म्—"केई भणंति पावा इत्थीणासेवणं न दोसाय । सवरोवगारभावादुस्सुगविणिवित्तितो चेव ॥९५६॥ तत्तो सुहज्झाणातो पासवणुच्चारखे-
लणाणेणं । नियमस्स निप्फलता अतिप्पसंगाउ अवि य गुणो ॥९५७॥" इति । उक्तहेतुपञ्चकमेव स्पष्टयामः, तथाहि—मोहाग्निसम्प्रदीप्तां

रामामात्मानं च कामज्वालाज्वलितं रामासेवनारूपजलेन विध्याप्य सुखभावसम्पादनकृतस्वपरोपकारः कथं दोषाय भवति, अपि न भवत्येव, प्रत्युत पुण्याय, तथा चागमे लोकेऽपि च 'परोपकारैकनिष्ठैः पुण्याय स्वपरोपकारः कर्त्तव्य' इति सुप्रसिद्धम्। एवमौत्सुक्यमपि चारित्रविघ्नकरत्वेन पापरूपमेव तच्चावश्यं निवर्तनीयम्, न स्त्रीसेवां विना निवर्तते, अतस्तत्सेवनमपि चारित्ररक्षणायालम्। तथा स्त्रीसेवातः शुभध्यानमपि भवति, तथाहि—स्त्रीसेवायां कृतायां सत्यामात्मनो बीभत्सदर्शनादिना वैराग्यं भवति, ततः शुभध्यानम्, तस्मात् प्रश्रवणादिवत् स्त्रीसेवा प्रेक्षावद्भिरवश्यं कर्त्तव्या। तथा स्त्रीसेवनप्रतिषेधोऽपि न फलभाग्भवति, कस्यचित् पीडाभावात्। पीडाभावेपि नियमश्चेत्? चारित्रमिव स्त्रीसेवनमपि कर्त्तव्यमिति नियमोऽपि कर्त्तव्यतामापद्येत, पीडाभावत्वाविशेषादिति। एवमतिप्रसङ्गोऽपि यतो यथादेहस्थितिकत्वेन प्रश्रवणादयः कर्त्तव्याः भवन्ति, तद्वत् स्त्रीसेवनमपि कर्त्तव्यं स्यात्, अन्यथा स्त्रीसेवननियमवत् प्रश्रवणादिकमपि न कर्त्तव्यमिति नियमोऽपि कर्त्तव्यतामापद्येत। ननु प्रश्रवणादीनां नियमे कृते शरीरस्य पीडा भवतीति चेत्? अन्यत्रापि सा समाना, ततः प्रश्रवणादिवत् स्त्रीसेवाया अपि नियमो न कर्त्तव्यः। किञ्च स्त्रीसेवननियमे सत्यौत्सुक्यानिवृत्तेस्तद्विषया महती गृद्धीरुपजायते, तत आर्त्तध्यानादयो भवन्तीति सर्वजनप्रसिद्धम्, तस्माद्वेदे उदिते सति रागाद्यभावेन प्रश्रवणादिक्रियावत् स्त्रीसेवनमपि कर्त्तव्यमिति चेत्?" अत्रोच्यते—निर्वाणार्थिभिः मैथुनं परिवर्जनीयम्, स्वपरोभयपापजनकत्वात्, न चोभयपापजनकत्वमसिद्धमिति वाच्यम्, मैथुने सेव्यमाने उभयोरप्यतीव पापमिति सर्वागमसिद्धत्वात्, तत्सेव्यमाने उभयपापजनकपरमाभिष्वङ्गभावस्य जनसमूहस्यानुभवसिद्धत्वाच्च, अत एव स्वपरोपकारकत्वमप्यसिद्धम्। न चोभयसुखजनकत्वेन स्वपरोपकारकत्वसिद्धि-

रिति वाच्यम्, सुखस्यैवासिद्धत्वात् । तथाहि—यथा पामागृहीतस्य पुंसः कण्डूयनं तत्कालसुखाभासजनकमपि परमार्थतो दुःखजनकमेव, एवं मोहवशात् कामुकस्य दुःखरूपमपि सुरतसुखं सुखत्वेन प्रतिभासते । किञ्च मैथुने उभयोरपि विषयवृद्धिरुपजायते, ततो मैथुनसेवावृद्धिस्ततो वीर्यहानिस्ततः शरीरविनाशः परलोके च सुगतिरूपशरीरस्य विनाश इति । तथा स्त्रीसेवा न कर्त्तव्या, दृढतररागप्रसङ्गात् । न चायमसिद्धो हेतुः, यतो मैथुनसेवमानानामधिकतररागादयः प्रादुर्भवन्तस्तद्विरक्तानां महात्मनां च प्रतनुका भवन्तोऽवलोक्यन्ते, तस्मात्तत्सेवातो दृढतररागभावो निश्चीयते । एवं तत्सेवातः औत्सुक्यभावस्य विनिर्वृत्तिरपि न जायते, किन्त्वतुलं चारित्रघ्नमौत्सुक्यमुपजायते । या च तत्सेवात औत्सुक्यविनिर्वृत्तिरुपजायते, सापि न सुन्दरा, यतो लोकेऽपि या सम्यग्ज्ञानपूर्विका विनिर्वृत्तिरुपजायते सैव सुन्दरत्वेनाभिमता, नेतरा, यथाऽपथ्यवस्तुयोगेन कुष्ठिनोऽपथ्यवस्तुविषयमौत्सुक्यं विनिवर्त्तमानमपि न तस्य कल्याणकरम्, एवं स्त्रीसेवाविषयमौत्सुक्यमपि तत्सेवया निवर्त्तमानं न भद्रङ्करम् । तथा स्त्रीप्रतिसेवनं परिहर्त्तव्यं ज्वलनेन्धनप्रक्षेपनाधिकतरतद्गतरूपचिन्तादिव्यापृतत्वेन शुभध्यानाभावात् । न च स्त्रीलुब्धकस्य शुभध्यानं भवति, विवेकमूलत्वात्तस्य । एतेन—'प्रश्रवणादिपरिष्ठापनमिव स्त्रीसेवनमपि प्रेक्षावद्भिः कर्त्तव्य' मित्यपास्तम् । ननु चिकित्सातो रोगस्येवौत्सुक्यस्यापि स्त्रीप्रतिसेवातो निवृत्तिः कार्या । तदुक्तम्—"सव्वत्थ संजमं संजमाउ अप्पाणमेव रक्खेज्जा । मुच्चइ अइवायाओ पुणो विसोही न याविरई ॥" नो चेत् व्याध्यपगमार्थं चिकित्साऽपि कर्त्तुं न योग्या, तत्करणे षड्जीवनिकायवधसंभवात् । ननूत्सर्गतो मुनीनां चिकित्साकरणमप्ययोग्यं केवलमपवादपदेन दीर्घकालं यावत् संयमपरिपालनार्थमसहमानस्य चार्त्तध्यानपरिहारार्थमनुज्ञातमिति चेत् तर्हि द्वितीय-

पदेन स्त्रीप्रतिसेवनमप्यनुज्ञातं स्यात्, विशेषाभावादिति चेत् ? अत्रोच्यते–तदेव जिनैरनुज्ञातं यदपवादपदेनापि सेव्यमानमनुष्ठानं रागादिहेतुकं न भवति, यथा चिरकालभाविसंयममीहमानानां रोगिणां चिकित्साकरणम्। ननु चिकित्साकरणं कथं रागादिनिबन्धनं न भवतीतिचेत् ? यतो मुनयः संयमरक्षणपरायणाः सर्वसत्त्वेषु मैत्रीं भावयन्तो मनुजभवादिसामग्र्या देवानामपि दुर्लभत्वं परिभावयन्तोऽरक्तद्विष्टाः सन्तः चिकित्सां कारयितुमुत्सहन्ते, तस्मात्तेषां द्वितीयपदेन चिकित्साकरणमनुज्ञातं चारित्रपरिणामस्य विनाशासंभवात्। रागादिप्रवृत्तिनिबन्धनमनुष्ठानं तु चारित्रपरिणामस्य नाशकत्वेन नानुज्ञातं यथा स्त्रीप्रतिसेवनम्। तदुक्तम्–"चरणपरिणामवीयं जं न विनासेइ कज्जमाणं पि। तमणुट्ठाणं सम्मं अववायपद मुणेयव्वं ॥१॥" इति। तथा स्त्री न सेवनीया नियमतस्तत्सेवने प्राणिवधसद्भावात्। न चायमसिद्धो हेतुरिति वाच्यम्, यतः स्त्रीणां योनिः जीवसंसक्ता गणधरदेवैः प्रज्ञप्ता, ते च जीवा रूतपूर्णायां नालिकायां संतप्तायःशलाकाप्रक्षिप्तायां यथा रूतं भस्मीभूतं भवति एवं स्त्रीपुंसंयोगे सति सर्वे जीवा विनाशं यान्ति, तथा चागमः–"मेहुणं भन्ते सेवमाणस्स केरिसेए असंजमे कज्जइ ? गोयमा ! से जहा नामए केइ पुरिसे एगं महं रूयनालियं वा बूरनालियं वा तत्तेणं कणगेणं सममभिधंसेज्जा एरिसेणं गोयमा ! मेहुणं सेवमाणस्स असंजमे कज्जइ" इति। श्रीमद्धरिभद्रसूरिपादैः सम्बोधप्रकरणेऽपि–इत्थीसंभोगे समगं तेसिं जीवाणं हुन्ति उद्दवणं। रुयगनालियाजोगप्पओगदिट्ठंतसब्भावा ॥ १ ॥" इति। ते च गर्भजा नवलक्षा असंख्येया द्वीन्द्रियाः समूर्च्छिमाश्च भवन्ति। तदुक्तम्–"इत्थीणं जोणिमज्झे गब्भगया चेव हुंति नवलक्खा। इक्को दो व तिन्नि व लक्खपहुत्तं च उक्कोसं ॥ १ ॥ इत्थीण जोणिमज्झे हवंति बेइन्दियअसंखाय। उप्पज्जंति चयंति य समुच्छिमा जे ते असंखा ॥ २ ॥" इति। महानिशीथद्वितीयाध्ययने तु समूर्च्छिम

पञ्चेन्द्रिया नवलक्षा उक्ताः, तथा च तद्ग्रन्थः—"जासिं च णं अभिलसिउं कामे पुरिसे तज्जोणिं संमुच्छिमपंचेंदियाणं एगपसंगेणं चेव णवन्हं सयसहस्साणं नियमाउ उद्दवे भवेज्जा" इति। प्राणिवधश्च सर्वशास्त्रकारैः प्रतिषिद्धः, प्राणिरक्षाकरत्वेन सावद्यायाः स्त्रीप्रतिसेवाया नियमोऽपि फलजनक एव, दीक्षादिभावनायास्तु नियमो न युक्तः निरवद्यत्वात्। एतेन नियमस्य निष्फलत्वसमर्थने यदुक्तं तत्सर्वं निरस्तं द्रष्टव्यम्। तथाऽतिप्रसङ्गोऽपि न, यतो रागादिप्रवृत्तिमन्तरेण प्रवर्त्तमानस्य शुक्रनिसर्गस्य प्रश्रवणादीनामिव न निवृत्तिः क्रियते, किन्तु रागादिप्रवृत्तिनिबन्धनस्य शुक्रनिसर्गस्यैव, अत एव रागादिप्रवृत्तिमन्तरेण स्वापादौ शुक्रनिसर्गेऽपि न व्रतभङ्ग उपदर्शितः। तस्मात् तत्प्रतिषेधे प्रश्रवणादिदृष्टान्तोऽप्यनुपपन्नो विषमत्वात्। देहपीडा तु स्त्रीसेवानिवृत्तानां महात्मनां न भवत्येव। तदुक्तम्—"इह नो सुहासयाओ सुओवउत्तस्स मुणियतत्तस्स। बंभंमि होइ पीडा संवेगाओ य भिक्खुस्स ॥ १ ॥" इति। प्रबलमोहोदयात् कस्यचित् पीडाभावेऽपि स्त्रीप्रतिसेवानिवृत्तिः कर्त्तव्यैव प्रागुक्तदोषप्रसङ्गादित्यलं प्रसङ्गेन।

साम्प्रतमेतद्व्रतप्रतिपत्तिस्तु वृद्धपरम्परया प्रथमाद्यणुव्रतवत् द्विविधत्रिविधभेदेन न दृश्यते, किन्तु विशेषतो मानुषमेकविधैकविधेन तैरश्चमेकविधत्रिविधेन दिव्यं द्विविधत्रिविधेनेति। तथा च व्रतोच्चारणालापकः—"अहन्नं भंते! तुम्हाणं समीवे ओरालिअवेउव्विअभेअं स्थूलगं मेहुणं पच्चक्खामि जावज्जीवाए, तत्थ दिव्वं दुविहं तिविहेणं तेरिच्छं एगविहं तिविहेणं मणुअं अहागहिअभंगेण तस्स भंते पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि" इति। ननु व्रतालापके मानुषं यथागृहीतभङ्गेनेत्येवोक्तम्, नैकविधैकविधेनेति चेत्? सत्यम्, धर्म्मसङ्ग्रहवृत्तौ तथोक्तत्वान्न दोषः। तथा च तद्ग्रन्थः—"इदानीमेतद्व्रतप्रतिपत्तिर्वृद्धपरम्परया प्रायो

न सामान्यतोऽन्यचतुरणुव्रतवत् द्विविधत्रिविधेन भेदेन दृश्यते किन्तु विशेषतो मानुषमेकविधैकविधेन तैरश्चमेकविधत्रिविधेन दिव्यं च द्विविधत्रिविधेन" इति । एतद्व्रतफलं च धम्मसङ्गहवृत्तावेवमुक्तम्—" जो देइ कणयकोडिं अहवा कारेइ कणयजिणभवणं । तस्स न तत्तिअपुण्णं जत्तिअ बंभव्वए धरिए ॥ १ ॥ देवदाणवगंधव्वा, जक्खरक्खसकिन्नरा । बंभयारिं नमंसंति दुक्करं जे करिंति तं ॥ २ ॥ आणाईसरिअं वा, इड्ढी रज्जं च कामभोगा य । कित्ती बलं च सग्गो आसन्ना सिद्धि बम्भाओ ॥३॥ कलिकारओ वि जणमारओ वि सावज्जजोगनिरओ वि । जं नारओ वि सिज्झइ तं खलु सीलस्स माहप्पं ॥४॥" इति । गृहस्थानां स्वदारसन्तोषे परदारवर्जने च ब्रह्मचारित्वमेव सुदर्शनादीनामिव मन्तव्यम् । परदारगमने तु वधबन्धादयो भवन्ति । तदुक्तम्—"वहबन्धणउब्बंधणनासिंदिअच्छेअधणखयाइआ । परदारओ उ बहुआ कयत्थणाओ इह भवे वि ॥ १ ॥ परलोए सिं बलितिक्खकंटगालिंगणाइबहुरूवं । नरयंमि दुहं दुसहं परदाररया लहंति नरा ॥ २ ॥ छिंन्निंदिआ नपुंसा दुरूवदोहग्गिणो भगंदरिणो । रंडकुरंडा वंज्झा निंदुअविसकन्न हुंति दुस्सीला ॥ ३ ॥" तथा—"भक्खणे देवदव्वस्स परित्थगमणेण य । सत्तमं नरयं जंति सत्तवारा उ गोयमा ॥ ४ ॥" इति । आवश्यकचूर्णावपि—"चउत्थे अणुव्वए सामण्णेण अणिअत्तस्स दोसा—मातरमपि गच्छेज्जा विदियं धूयाए वि समं वसेज्जा" इत्यादि । "णियत्तस्स इह लोए परलोए गुणा इह लोए कत्थे कुलपुत्तगाणि सङ्घाणि" इत्यादि । "परलोए पहाणपुरिसत्तं देवत्ते पहाणाउ अच्छराओ मणुअत्ते पहाणाओ माणुसीओ विउला य पंचलक्खणा भोगा पिअसंपओगा य आसण्णासिद्धिगमणं च" । इत्युक्तं चतुर्थमणुव्रतम् ।

अथ पञ्चममणुव्रतमुच्यते—परिग्रहविरतिर्द्विधा सर्वतो देशतश्च । तत्र सर्वभावेषु सर्वथा मूर्च्छायाः परित्यागः सर्वतः परिग्रहविरतिर्भवति, सा च मुनीनामेव भवति, न गृहस्थानाम् । देशतस्तु धनधान्यक्षेत्रवास्तुरूप्यसुवर्णकुपदद्विपदचतुष्पदरूपनवविध-

परिग्रहेच्छायाः सर्वत्यागाशक्तेन श्रावकेण परिमाणमियत्ता कर्त्तव्या। तथा चागमः–"अपरिमिअपरिग्गहं समणोवासओ पच्चक्खाइ इच्छापरिमाणं उवसंपज्जइ, से अ परिग्गहे दुविहे पण्णत्ते, तंजहा–सचित्तपरिग्गहे अचित्तपरिग्गहे अ" इति। ननु स्वल्पद्रव्ये सति द्रव्यसहस्रलक्षादिनियमप्रतिपत्त्या मूर्च्छाया वृद्धिरेव कृता भवति, नेच्छाया हानिः, येन गुणः स्यादिति चेत्? मैवम्, इच्छाया वृद्धिः गृहस्थानां सदैव विद्यमाना, तदुक्तमुत्तराध्ययनसूत्रे शक्रं प्रति नमिराजर्षिणा–"सुवण्णरूप्पस्स य पव्वया भवे, सिया हु केलाससमा असंखया। नरस्स लुद्धस्स न तेहि किंचि, इच्छा हु आगाससमा अणंतया ॥ १ ॥" इति। एवमिच्छाया अनन्तत्वेनेयत्ताकरणं महते गुणाय भवति। तदुक्तम्–"जह जह अप्पो लोहो जह जह अप्पपरिग्गहारंभो। तह तह सुहं पवत्तइ धम्मस्स होइ संसिद्धी ॥ १ ॥" इति। इच्छानिरोधं कृत्वा सन्तोषे यतितव्यम्, सन्तोषमूलत्वात् सुखस्य। तदुक्तम्–"आरोग्गसारिअं माणुसत्तणं सच्चसारिओ धम्मो। विज्जा निच्छियसारा सुहाइं संतोससाराइं ॥ १ ॥" इति। ननु भद्रबाहुस्वामिपादैर्दशवैकालिकनिर्युक्तौ परिग्रहस्य चतुष्षष्टिः भेदा उक्ता इति चेत्? सत्यम्, परं चतुष्षष्टीनामत्रैवान्तर्भावात् न दोषः। तथाहि–सामान्येन धान्यरत्नस्थावरद्विपदचतुष्पदकुप्यभेदात् षड्विधः परिग्रहः। धान्यानि रत्नानि च चतुर्विंशतिः। स्थावरं क्षेत्रगृहारामादिभेदात्त्रिधा। द्विपदं शकटदासादिभेदेन द्विविधम्। तदुक्तम्–"भूमी घरा य तरुगणतिविहं पुण थावरं मुणेअव्वं। चक्कारबद्धमाणुसदुविहं पुण होइ दुपयं तु ॥ १ ॥" इति। चतुष्पदं दशधा। नानाविधमपि कुप्यमेकविधमेव। तदुक्तम्–"नाणाविहोवगरणं णेगविहं कुप्पलक्खणं होइ। एसो अत्थो भणिओ छविह चउसट्ठिभेओ उ ॥ १ ॥" इति। परिग्रहभेदानां तु स्वरूपं ग्रन्थान्तरादवलोकनीयमिति–एतद्व्रतफलं त्वत्र सन्तोषसौख्यलक्ष्मीस्थैर्यजनप्रशंसादि। परत्र नरामरसमृद्धिसि-

द्ध्यादि । लोभाभिभूतत्वेनैतद्व्रतास्वीकारे विराधनायां वेह दुःखदारिद्रतादासत्वदौर्भाग्यादि, परत्र नरकादि । तदुक्तमाराध्यपादैः श्रीमद्भिर्देवेन्द्रसूरिभिः कर्मविपाके–"बंधइ तिरयाउ महारंभपरिग्गहरओ रुद्दो" इति । आगमेऽपि–"महारंभयाए महापरिग्गहयाए कुणिमाहारेणं पंचेन्दियवहेणं जीवा नेरइयाउअं अज्जइ" इति । लोभाभिभूतो ह्युत्तरोत्तराशाकदर्थितो दुःखमेवानुभवति । मूर्च्छयैव परिग्रहो नान्यथा । तदुक्तम्–"अपरिग्रह एव भवेद्वस्त्राभरणाद्यलङ्कृतोऽपि पुमान् । ममकारविरहितः सति ममकारे सङ्गवान्नग्नः ॥ १ " तथागमेपि–"जं पि वत्थं च पायं वा कंबलं पायपुंछणं । तं पि संजमलज्जट्ठा धरंति परिहरंति अ ॥ १ ॥ न सो परिग्गहो वुत्तो नायपुत्तेण ताइणा । मुच्छापरिग्गहो वुत्तो इइ वुत्तं महेसिणा ॥ २ ॥" इति । तेन सर्वमूर्च्छापरित्यागाशक्तेन मूर्च्छानियमनार्थमेतदणुव्रतं त्ववश्यमेव स्वीकरणीयमित्युक्तं पञ्चममणुव्रतमिति ।

अथ प्रथमं गुणव्रतमुच्यते ऊर्ध्वाधस्तिर्यगाशासु गमननियमो 'यथैतावती दिग् पूर्वेणावगाहनीया एतावती दक्षिणेनेत्यादि' कर्त्तव्यः । एतद्व्रतस्वीकारे त्ववग्रहीतक्षेत्राद्बहिः त्रसस्थावरजीवानामभयदानप्रदत्तं लोभाम्भोधिनियन्त्रणादिलाभश्च भवति । अनङ्गीकारे त्वारम्भपरिग्रहरक्तत्वेनाविरतो यत्र याति यत्र भुङ्क्ते स्वपिति व्यापारं वा कुरुते तत्र तत्र तप्तायोगोलक इव जीवोपमर्दनं करोति । शरीरेण सर्वत्र गमनाभावेऽप्यविरतिनिबन्धनबन्धस्तु निरन्तरं भवत्येव । तदुक्तम्–"फारफुलिंगभासुरअयगोलयसन्निहो इमो निच्चं । अविरयपावो जीवो दहइ समंता समत्तजिए ॥१॥ जइ वि अ न जाइ सव्वत्थ कोइ देहेण माणवो एत्थं । अविरइपच्चयबंधो तहावि निच्चो भवे तस्स ॥२॥" अन्यत्रापि–"तत्तायगोलकप्पो पमत्तजीवोऽणिवारिअप्पसरो । सव्वत्थ किं न कुज्जा पावं तक्कारणाणुगओ ॥१॥" इति । ननु मुनीनामेतद्व्रतं कथं न भवतीति चेत् ? मैवम्, मुनीनां यत्र कुत्रापि गमने निर्जरैव,

समितिगुप्तिप्रधानव्रतशालित्वात्तेषामिति । तदुक्तं योगशास्त्रवृत्तौ—"तदेतद्यावज्जीवं वा सद्व्रतं गृहमेधिनाम् । चतुर्मासादिनियमाद्यथवा स्वल्पकालिकम् ॥ १ ॥ सदा सामायिकस्थानां यतीनां तु यतात्मनाम् । न दिशि क्वचन स्यातां विरत्यविरती इमे ॥ २ ॥ चारणानां हि गमनं यदूर्ध्वं मेरुमूर्द्धनि । तिर्यग् रुचकशैले च नैषां दिग्विरतिस्ततः ॥ ३ ॥" इत्युक्तं प्रथमं गुणव्रतम् ।

अथ द्वितीयगुणव्रतमुच्यते—सकृद्भुज्यत इति भोगः आहारपुष्पताम्बूलविलेपनोद्वर्तनस्नपनादि, पुनः पुनः भुज्यत इत्युपभोगो वनितावस्त्रालङ्कारगृहशयनासनवाहनादि । तदुक्तम्—"सइ भुज्जइ भोगो सो पुण आहारपुप्फमाईओ । उवभोगो उ पुण पुण उवभुज्जइ भवणवणिआइ ॥१॥" इति । भोगश्चोपभोगश्चेति भोगोपभोगौ तयोः भोगोपभोगयोः स्वशक्त्यनुसारेण परिमाणकरणं भोगोपभोगपरिमाणनामकं द्वितीयं गुणव्रतं भवति । आवश्यके तूपभोगपरिभोगनामकं द्वितीयं गुणव्रतमभिहितम् । तथा च तत्सूत्रम्—"उवभोगपरिभोगवए दुविहे पण्णत्ते, तंजहा—भोयणतो कम्मतो अ" एतद्वृत्तिर्यथा—"उपभुज्यत इत्युपभोगः उपशब्दः सकृदर्थे वर्तते, सकृद्भोग उपभोगः अशनपानादेः, अथवाऽन्तर्भोग उपभोग आहारादेः, उपशब्दोऽत्रान्तर्वचनः । परिभुज्यत इति परिभोगः परिशब्दोऽसकृद्वृत्तौ वर्तते, पुनः पुनर्भोगः परिभोगो वस्त्रादेः, बहिर्भोगो वा परिभोगो वसनालङ्कारादेः, अत्र परिशब्दो बहिर्वाचक इति । एतद्विषयं व्रतमुपभोगपरिभोगव्रतम् । तथा च प्रकृते निपातानामनेकार्थत्वादुपभोगशब्दः परिभोगार्थस्तस्समभिव्याहारेण च भोगशब्दस्योपभोगे निरूढलक्षणेति न कश्चिद्विरोध इति ध्येयम् । इदं च द्विविधं भोजनतः कर्म्मतश्च, उपभोगपरिभोगयोरासेवाविषययोर्वस्तुविशेषयोस्तदुपार्जनोपायभूतकर्म्मणां चोपचारादुपभोगादिशब्दवाच्यानां व्रतमुपभोगपरिभोगव्रतमिति व्युत्पत्तेः" इत्युपाध्यायश्रीमन्मानविजयगणयो धर्म्मसङ्ग्रहवृत्तौ । भोजनमाश्रित्योत्सर्गतो निरवद्यभोजनं श्रावकेण कर्त्तव्यम् । तदभावे सचित्तभोजनं परि-

हर्त्तव्यम्, तत्राप्यशक्तौ बहु सावद्यमद्यमांसानन्तकायादीन् वर्जयता प्रत्येकमिश्रसचित्तादीनां परिमाणं तु कर्त्तव्यमेव। तदुक्तम्—"निरवज्जाहारेणं १ निज्जीवेणं २ परित्तमिसेणं ३। अत्ताणुसंधणपरा सुसावगा एरिसा हुंति ॥१॥" महोत्सवादिकारणमन्तरेण मनोविकारासक्तिलोकापवादजनकवेषाभरणवाहनादिकमपि श्रावको वर्जयेत्। तदुक्तम्—"अइरोसो अइतोसो अइहालो दुज्जणेहिं संवासा। अइउब्भडो अ वेसो पंच वि गुरुअं पि लहुअंति ॥ १ ॥" इति। तथाऽतिमलिनातिस्थूलह्रस्वसच्छिद्रवस्त्रादिपरिधानेऽपि लोकेऽपवादः स्यात् यथा मम्मणश्रेष्ठिवदयं कर्पणः न सम्यग् भुङ्क्ते न वा चीवराणि परिदधातीत्यादि। अतः स्ववित्तवयःकुलनिवासस्थानानुरूपं वेषं कुर्यात्। उचितवेषादौ च प्रमाणनैयत्यं कार्यम्। एवं दन्तधावनाभ्यङ्गतैलोद्वर्तनमज्जनवस्त्रविलेपनाभरणपुष्पफलधूपासनशयनभवनौदनसूपस्नेहशाकपेयखाद्याद्यशनपानखादिमस्वादिमादेः सर्वथा त्यक्तुमशक्तस्य व्यक्तप्रमाणं कार्यं शेषं तु त्याज्यम्। कर्माश्रित्यापि मुख्यतो निरवद्यकर्मप्रवृत्तिमता श्रावकेण भवितव्यम्। तदशक्तौ विवेकिजनेऽतिनिन्द्यसावद्यक्रयविक्रयादि कर्म वर्जनीयम्। शेषाणां कर्म्मणां प्रमाणं कर्त्तव्यम्। तदुक्तम्—"रंधणखंडणपीसणदलणं पयणं एवमाईणं। निच्चपरिमाणकरणं अविरइबंधो जओ गरुओ ॥ १ ॥" आवश्यकचूर्णावपि—"इह चेयं समाचारी—भोअणयो सावगो उस्सग्गेण फासुगं आहारं आहरेज्जा तस्सासति अफासुगमपि सचित्तवज्जं तस्स असति अणंतकायबहुबीयगाणि परिहरिअव्वाणि। इमं च अण्णं भोअणओ परिहरइ—असणे अणंतकायं अल्लगमूलगाइ मंसं च, पाणे मंसरसमज्जाइ, खाइमे उदुंबरिकाउंबरवडपिप्पलपिलुंखुमादि, सादिमे मधुमादि। अचित्तं च आहरेअव्वं। जदा किर ण होज्ज अचित्तो तो उस्सग्गेण भत्तं पच्चक्खाइ, ण तरइ ताहे अपवाएण सच्चित्तं अणंतकायबहुबीअगवज्जं। कम्मओवि अकम्मा ण तरइ जीविउं ताहे अच्चंतसावज्जाणि परिहरिज्जति" इति। इदं

श्रतं भोक्तुं योग्येषु परिमाणकरणेन वर्जनयोग्येषु वर्जनेन च भवतीति। द्वाविंशतिसङ्ख्याकान्यभक्ष्याणि धर्म्मसङ्ग्रहगतश्लोकत्रयेणोच्यन्ते—"चतुर्विकृतयो निन्द्या, उदुम्बरकपञ्चकम्। हिमं विषं च करका मृज्जाती रात्रिभोजनम् ॥ १ ॥ बहुबीजा ज्ञातफले सन्धानानन्तकायिके। वृन्ताकं चलितरसं तुच्छं पुष्पफलादि च ॥ २ ॥ आमगोरससंपृक्तद्विदलं चेति वर्जयेत्। द्वाविंशतिमभक्ष्याणि जैनधर्म्माधिवासितः ॥ ३ ॥" इति। विस्तरार्थिना धर्म्मसङ्ग्रहवृत्तिर्द्रष्टव्या। उक्तं द्वितीयं गुणव्रतम्।

अथ तृतीयमुच्यते—तत्र शरीरक्षेत्रवास्तुधनधान्यपरिजनादिपरिग्रहस्तद्विषयोऽर्थः, दण्ड्यते पापकर्म्मणा लुप्यते येन स दण्डो भूतोपमर्दः, अर्थाय दण्डोऽर्थदण्डः, नार्थदण्डोऽनर्थदण्डः निष्कारणभूतोपमर्दनलक्षणो दण्डस्तस्य त्यागः, इयं भावना—यः स्वस्वीयस्वजनादिनिमित्तं विधीयमानो भूतोपमर्दः सोऽर्थदण्डः सप्रयोजन इति यावत्, प्रयोजनं च येन विना गार्हस्थ्यं प्रतिपालयितुं न शक्यते सोऽर्थदण्डः विपरीतस्त्वनर्थदण्ड इति। तदुक्तम्—"जं इंदियसयणाई पडुच्च पावं करेज्ज सो होई। अत्थे दंडो इत्तो अन्नो उ अणत्थदंडोत्ति ॥१॥" इति। अनर्थदण्डभेदस्तु चत्वारः अपध्यानपापकर्म्मोपदेशहिंसकार्पणप्रमादाचरणभेदात्। तदुक्तम्—"अणत्थदंडे चउव्विहे पण्णत्ते तं जहा—अवज्झाणायरिए पमायायरिए हिंसप्पदाणे पावकम्मोवएसे अ" इति। तत्राप्रशस्तं यत् ध्यानं स्थिराध्यवसायलक्षणं तदपध्यानमार्त्तरौद्रभेदाद्द्विविधम्। तत्र ऋतं दुःखं तत्र भवमार्त्तं यदि वा अर्त्तिः पीडा यातनं च तत्र भवमार्त्तम्, रोदयति परानिति रुद्रो दुःखहेतुस्तेन कृतं तस्य वा कर्म्म रौद्रम्। एतत्परिमाणमन्तर्मुहूर्त्तम्। तदुक्तं श्रीहेमसूरिपादैः—"वैरिघातो नरेन्द्रत्वं पुरघाताग्निदीपने। खेचरत्वाद्यपध्यानं मुहूर्त्तात्परतस्त्यजेत् ॥१॥" इति। तथा पातयति नरकादाविति पापं तत्प्रधानं तद्धेतुभूतं वा कर्म्म पापकर्म्म तस्योपदेशः तत्प्रवर्त्तकवाक्यं पापकर्म्मोपदेशः, यथा क्षेत्रं

कृष, वृषवृन्दं दमय, हयान् षण्डय, कथय शत्रून्, यन्त्रं वाहय, शस्त्रं सज्ज, वर्षाकालः प्रत्यासीदति, दीयतां वल्लरेष्वग्निः, सज्जीक्रियतां दलकलादि, अतिक्रामति वापकालो, भृताः केदाराः गाह्यतां सार्द्धदिनत्रयमध्ये, उप्यन्तां च व्रीहयः, जातावस्था कन्यका विवाह्यतां शीघ्रं, प्रत्यासीदन्ति प्रवहणपूरणदिवसाः प्रगुणीक्रियतां प्रवहणानीत्यादि सर्वोऽपि पापोपदेशः उत्सर्गतस्तु श्रावकेण त्याज्यः। अपवादेन तु दाक्षिण्यादिविषये यतना कार्या। तदुक्तं योगशास्त्रे—"वृषभान् दमय क्षेत्रं कृष षण्डय वाजिनः। दाक्षिण्याविषये पापोपदेशोऽयं न कल्पते ॥ १ ॥" इति। हिंसन्तीति हिंसकाः हिंसोपकरणानि आयुधानलविषादयस्तेषां परस्मै समर्पणमुत्सर्गतः श्रावकेण सर्वथा त्याज्यमेव, दाक्षिण्याद्यपवादतस्तु यतना कार्या। तदुक्तं योगशास्त्रे—"यन्त्रलाङ्गलशस्त्राग्निमुशलोलूखलादिकम्। दाक्षिण्याविषये हिंस्रं नार्पयेत् करुणापरः ॥ १ ॥" इति। प्रमादेन प्रमादस्य वा चरणं प्रमादाचरणमिति। तच्च पञ्चविधम्, मद्यविषयकषायनिद्राविकथाभेदात्। तदुक्तं—"मज्जं विसयकसाया णिद्दा विकहा य पंचमी भणिया" इति। प्रमादस्वरूपं च योगशास्त्रे एवम्—"कुतूहलाद्गीतनृत्यनाटकादिनिरीक्षणम्। कामशास्त्रप्रसक्तिश्च द्यूतमद्यादिसेवनम् ॥ १ ॥ जलक्रीडान्दोलनादिविनोदो जन्तुयोधनम्। रिपोः सुतादिना वैरं भक्तस्त्रीदेशराट्कथा ॥ २ ॥ रोगमार्गश्रमौ मुक्त्वा स्वापश्च सकलां निशाम्। एवमादि परिहरेत् प्रमादाचरणं सुधीः ॥ ३ ॥" वृत्तिः—"कुतूहलात् कौतुकाद्धेतोर्गीतस्य नृत्यस्य आदिशब्दात् प्रकरणादेर्निरीक्षणं तेन तेनेन्द्रियेण यथोचितं विषयीकरणम्। कुतूहलग्रहणाज्जिनयात्रादौ प्रासङ्गिकनिरीक्षणे च न प्रमादाचरणम्। तथा कामशास्त्रे वात्स्यायनादिकृते प्रसक्तिः पुनः पुनः परिशीलनम्, तथा द्यूतमक्षकादिभिः क्रीडनम्, मद्यं सुरा, आदिशब्दान्मृगयादि, तेषां सेवनं परिशीलनम् ॥१॥ तथा जलक्रीडा तडागजलयन्त्रादिषु मज्जनोन्मज्जनशृङ्गिकाच्छोटनादिरूपा, आन्दोलनं वृक्षशाखादौ दोला-

खेलनं आदिशब्दात् पुस्पावचयादि, तथा जन्तूनां कुक्कुटादीनां योधनं परस्परेणाभ्याहननम्, तथा रिपोः शत्रोः सम्बन्धिना पुत्रपौत्रादिना वैरमयमर्यो येन तावत्कथञ्चिदायातं वैरं तच्चः परिहर्तुं न शक्नोति तस्यापि पुत्रपौत्रादिना यद्वैरं तत्प्रमादाचरणम्। तथा भक्तकथा यथा इदं चेदं च मांसपाकमाषमोदकादि साधु भोज्यं साध्वनेन भुज्यते, अहमपि या इदं भोक्ष्ये इत्यादिरूपा। तथा स्त्रीकथा स्त्रीणां नेपथ्याङ्गहारहावभावादिवर्णनरूपा 'कर्णाटी सुरतोपचारचतुरा लाटी विदग्धप्रिया' इत्यादिरूपा वा। तथा देशकथा यथा दक्षिणापथः प्रचुरान्नपानः, पूर्वदेशो विचित्रवस्तुगुडखण्डशालिमद्यादिप्रधानः, उत्तरापथे शूराः पुरुषा जविनो वाजिनो गोधूमप्रधानानि धान्यानि सुलभं कुङ्कुमं मधुराणि द्राक्षादाडिमकपित्थादीनि, पश्चिमदेशे सुखस्पर्शानि च वस्त्राणि सुलभा इक्षवः शीतं वारीत्येवमादि। राड्कथा राजकथा यथा शूरोऽस्मदीयो राजा मघनक्षेडागजपतिर्गौडः अश्वपतिस्तुरुष्क इत्यादि। एवं प्रतिकूला अपि भक्तादिकथा वाच्या ॥ २ ॥ तथा रोगो ज्वरादिः, मार्गश्रमो मार्गखेदः तौ मुक्त्वा सकलां निशां स्वापो निद्रा। रोगमार्गश्रमयोस्तु न प्रमादाचरणम्। एवमादि पूर्वोक्तस्वरूपं प्रमादाचरणं परिहरेत् मुनीः श्रमणोपासकः। प्रमादाचरितं च—"मज्जं विसय कसाया निद्दा विगहा य पञ्चमी भणिया। एए पञ्च पमाया जीवं पाडेन्ति संसारे॥" इति पञ्चविधस्य प्रमादस्य प्रपञ्चः॥ ३ ॥" देशविशेषे प्रमादपरिहारमाह—"विलासहासनिष्ठ्यूतनिद्राकलहदुष्कथाः। जिनेन्द्रभवनस्यान्तराहारं च चतुर्विधम् ॥" वृत्तिः—"जिनेन्द्रभवनस्यान्तरित्यादित आरभ्य सम्बध्यते, तेन जिनेन्द्रभवनस्य मध्ये विलासं कामचेष्टां हासं कहकहध्वानं हसनं निष्ठ्यूतं निष्ठीवनं, निद्रां स्वापं कलहं राटीं, दुष्कथां चौरपारदारिकादिकां चतुर्विधमाहारम् अशनपानखादस्वाद्यस्वरूपं परिहरेदिति पूर्वतः सम्बन्धनीयम्।" तथाऽऽज्यतैलजलपयसादिभाजनानामालस्यादिनानाच्छादनम्, सत्यपि मार्गे वनस्पत्यादीनामुपर्यशोधितमार्गे वा गमनम्। अनालोचितस्थाने हस्तप्रक्षेपणादि, निर्जीवस्थाने सत्यपि सचित्तस्योपरि

स्थितिकरणं वस्त्रादिस्थापनं वा। सेवालकुन्थुकीटिकाद्याक्रान्तभुव्यवश्रवणादेः त्यजनम्, अप्रमार्ज्य कपाटार्गलादेः पिधानमुद्घाटनं वा, निष्प्रयोजनं पत्रपुष्पादित्रोटनमृत्खटीवार्णिकादिमर्दनवह्न्युद्दीपनगवादिघातदानशस्त्रव्यापारणनिष्ठुरमर्मभाषणहास्यनिन्दाकरणादि रात्रौ दिवा वाऽयतनया स्नानकेशग्रथनखण्डनदलनभूखननमृदादिमर्दनलेपनवस्त्रधापनजलगालनादि च प्रमादाचरणम्। श्लेष्मादीनां व्युत्सर्गेऽस्थगनाद्ययतनापि प्रमादाचरणम्, मुहूर्त्तानन्तरं तत्र संमूर्च्छिममनुष्यसंमूर्च्छनतद्विराधनादिमहादोषसंभवात्। एवं विड्मूत्रादेश्चाव्युत्सर्जनमपि बोध्यम्। तथाऽधिकरणभूतस्य शस्त्रादेरव्युत्सर्जनं महादोषजनकं, भगवत्यां च्युतधनुरादिजीवानामपि पञ्चक्रियाभिधानात्। स्वकार्ये कृतेऽपि प्रज्वलदिन्धनादेरविध्यापनमपि दोषजनकं भवति, धूमध्वजविध्यापनापेक्षया प्रज्वलज्ज्वलनेऽधिकतरजीवविराधनायाः प्रतिपादनात्। तदुक्तं विवाहप्रज्ञप्त्याम्—"जे णं पुरिसे अगणिकायं निव्वावेइ सेणं पुरिसे अप्पकम्मतराए चेव" इति। प्रदीपचुल्हकादीनामस्थगनं चुल्लकस्योपरि चन्द्रोदयाप्रदानमशोधितेन्धनधान्यजलादिव्यापारणमपि जीवविराधनाहेतुः प्रमादाचरणम्। एष चतुर्विधोऽप्यनर्थदण्डोऽनर्थहेतुर्निरर्थकश्च भवति। नह्यपध्यानात् काप्यर्थसिद्धिः प्रत्युत चित्तोद्वेगवपुःक्षीणताशून्यताघोरदुष्कर्मबन्धदुर्गत्याद्यनर्था एव। अत एवाशक्यपरिहारं वा कदाचिदपध्यानं स्यात् तथापि सद्य एव तत् परिहारार्थं यतनया मनोनिग्रहः कर्त्तव्यः। तदुक्तम्—"अणवट्ठिअं मणो जस्स ज्झायइ बहुआइं अट्टमट्टाइं। तं चिंतिअं च न लहइ संचिणइ अ पावकम्माइं ॥ १ ॥ वयकायविरहिआण वि कम्माणं चित्तमित्तविहिआणं। अइघोरं होइ फलं तंदुलमच्छुव्व जीवाणं ॥ २ ॥ साहूणसावगाण धम्मो जो कोइ वित्थरो भणिओ। सो मणनिग्गहसारो जं फलसिद्धी तओ भणिया ॥ ३ ॥" इति। स्वजनादावन्यथानिर्वाहादर्शनेन पापोपदेशहिंस्र-

प्रदाने दुःशक्यपरिहारे अप्यन्येषां तु पापाद्यनर्थफले एव भवतः । तदुक्तं लौकिकैरपि—"न ग्राह्याणि न देयानि पञ्च द्रव्याणि पण्डितैः । अग्निर्विषं तथा शस्त्रं मद्यं मांसं च पञ्चमम् ॥ १ ॥" इति । प्रमादाचरणेऽपि मुधैवायतनादिनिमित्तो हिंसादिदोषः, यतः श्रावकाणामारम्भादौ यतनापि कर्म्मक्षयजननी भवति, तदुक्तम्—"तुल्ले वि उअरभरणे मूढअमूढाण अंतरं पिच्छ । एगाणं नरयदुक्खं अन्नेसिं सासयं सुक्खं ॥" यतनां विना प्रवृत्तौ तु सर्वत्रानर्थदण्ड एव । अत एव श्रावकेण सर्वत्र व्यापारेषु सदयत्वेन सर्वशक्त्या यतनायां यतनीयम् । निरर्थकपापे त्वधिककर्म्मबन्धादिदोषः । तदुक्तम्—"जयणा य धम्मजणणी जयणा धम्मस्स पालणी चेव । तव्वुड्ढिकरी जयणा एगंतसुहावहा जयणा ॥१॥ अट्ठेण तं न बन्धइ जमणट्ठेणं तु थोवबहुभावा । अट्ठे कालाईआ निआमगा न उ अणट्ठाए ॥ २ ॥" इति । अतश्चतुर्विधोऽप्यनर्थदण्डः त्याज्य एवेत्युक्तमनर्थदण्डविरमणव्रतम् । उक्तानि गुणव्रतानि ।

अथ प्रथमं सामायिकाख्यं शिक्षापदव्रतमुच्यते—दुर्ध्यानविमुक्तः सावद्यकर्म्मरहितो मुहूर्त्तं यावत् सामायिकं करोति । तत्र समस्य रागद्वेषविमुक्तस्य सत आयो ज्ञानादीनां लाभः प्रशमसुखरूपः समानां वा मोक्षसाधनं प्रति सदृशसामर्थ्यानां ज्ञानदर्शनचारित्राणामायो लाभः समायः समाय एव सामायिकम् । तदुक्तमनुयोगद्वारसूत्रे—"जो समो सव्वभूएसु तसेसु य थावरेसु अ । तस्स सामाइयं होइ इइ केवलिभासिअं ॥१॥" इति । सामायिकस्थः श्रावकोऽपि यतितुल्यो भवति । तदुक्तम्—"सामाइयंमि उ कए समणो इव सावओ हवइ जम्हा । एएणं कारणेणं बहुसो सामाइयं कुज्जा ॥ १ ॥" इति । अत एव सामायिकस्थश्रावकस्यापि देवपूजादौ नाधिकारः । भावस्तवार्थं द्रव्यस्तवः, भावस्तवं च सामायिके सति प्राप्तमेव । तदुक्तम्—"दव्वथओ भावथओ दव्वथओ बहुगुणोत्ति बुद्धि सिआ । अनिउणजणवयणमिणं छज्जीवहिअं जिणा विंति ॥ १ ॥" इति । आवश्यकसूत्र-

मपि-"सामाइअं नाम सावज्जजोगपरिवज्जणं णिरवज्जजोगपडिसेवणं च" इति । सामायिकविधिस्तु योगशास्त्रवृत्तिपञ्चाशक-चूर्ण्यावश्यकचूर्ण्यादावुक्तो ज्ञातव्यः । सामायिकं व्रतं श्रावकेण प्रतिदिवसं कर्त्तव्यम्, बहुनिर्ज्जराफलत्वात् । तदुक्त-म्-"दिवसे दिवसे लक्खं देइ सुवण्णस्स खंडिअं एगो । इअरो पुण सामाइअं करेइ न पहुप्पए तस्स ॥ १ ॥ तिव्वतवं तवमाणो जं न वि निट्ठवेइ जम्मकोडीहिं । तं समभाविअचित्तो खवेइ कम्मं खणद्धेणं ॥ २ ॥ जे के वि गया मोक्खं जे वि अ गच्छंति जे गमि-स्संति । ते सव्वे सामाइअमाहप्पेणं मुणेअव्वा ॥ ३ ॥" तथा-'हूयते न तप्यते न दीयते वा न किञ्चन । अहोऽमूल्यक्रीतीयं साम्यमा-त्रेण निर्वृत्तिः ॥ १ ॥" इति । अन्यदपि फलम्-"सामाइअं कुणंतो समभावं सावओ अ घडिअदुगं । आउं सुरेसु बंधइ इत्तिअमि-त्ताइं पलिआइं ॥ १ ॥ बाणवइ कोडीओ लक्खं गुणसट्ठि सहस्सपणवीसं । नवसयपणवीसाए सतिहा अडभाग पलिअस्स ॥ २ ॥" अङ्कतोऽपि ९२५९२५९२५ $\frac{3}{8}$ इत्युक्तं सामायिकाख्यं प्रथमं शिक्षापदव्रतम् ॥

द्वितीयं शिक्षापदव्रतमुच्यते-दिग्व्रते पूर्वादिषु दशदिक्षु यावज्जीवं संवत्सरं चतुर्मासीं वा यत्परिमाणं कृतं तस्य गृह-शय्यास्थानादेः परतो निषेधरूपं सङ्कोचनं मुहूर्त्तप्रहरदिनाहोरात्रादि यावत् करोति । तदुक्तम्-"एगमुहुत्तं दिवसं राईपंचा-हमेव पक्खं वा । वयमिह धारेइ दढं जावइअं उच्छेहकालं ॥१॥" तद्देशावकाशिकं देशे दिग्व्रतगृहीतप्रमाणस्य विभागे अवकाशः-अवस्थानं देशावकाशः, सोऽत्रास्तीति देशावकाशिकम् । तथा चागमः-"दिसिवयगहिअस्स दिसापरिमाणस्स पइदिणपरिमाणक-रणं देसावगासिअं" इति । अणुव्रतादिसङ्क्षेपकरणस्याप्युपलक्षणम्, एतेषामपि सङ्क्षेपस्यावश्यं कर्त्तव्यत्वात् । सर्वव्रतसंक्षेपकरणरू-पमिदं व्रतं मन्तव्यम्, न केवलं दिग्व्रतसंक्षेपरूपमन्यथा प्रतिव्रतसंक्षेपणस्य भिन्नव्रतत्वे द्वादशव्रतानीति संख्याव्याघाता-

पत्तेः। अत्र केचिदाहुः 'दिग्व्रतसंक्षेप एव देशावकाशिकं तदतिचाराणां दिग्व्रतानुसारितयैवोपलम्भात्'। अत्रोच्यते–यथोपलक्षणतया शेषव्रतसंक्षेपकरणमपि देशावकाशिकमुच्यते, तथोपलक्षणतयैव तदतिचारा अपि तदनुसारिणो द्रष्टव्याः। अथवा प्राणातिपातादिसंक्षेपकरणेषु वन्धादय एवातिचारा घटन्ते, दिग्व्रतसंक्षेपे तु संक्षिप्तत्वात् क्षेत्रस्य शब्दानुपातादयोऽपि स्युरिति भेदेन दर्शिताः, न च सर्वेषु व्रतभेदेषु विशतोऽतिचारा दर्शनीयाः, रात्रिभोजनदिग्व्रतभेदेषु तेषामदर्शितत्वादिति। सर्वव्रतसंक्षेपरूपत्वेनास्य व्रतस्य प्रत्यहं पालनाय पूर्वं सप्तमव्रते ये यावज्जीवं गृहीताश्चतुर्दशनियमास्तानेव प्रातः संक्षिप्य गृह्णन्ति संकोचयन्ति च सायं प्रत्याख्यानप्रान्ते श्रावकः। "देसावगसिअं उवभोगपरिभोगं पच्चक्खामि" इत्यादिना गुरुसमक्षं तद्व्रतं प्रतिपद्यते, तदुक्तम्–"देसावगासिअं पुणदिसि परिमाणस्स निच्चसंखेवो। अहवा सव्ववयाणं संखेवो पइदिणं जो उ ॥१॥" इति। स्वापाद्यवसरे च विशेषतः सर्वव्रतसंक्षेपरूपमिदं ग्रन्थिसहितादिना स्वीकार्यम्। तदुक्तम्–"पाणिवहमुसादत्तं मेहुणदिणलाभणत्थदंडं च। अंगीकयं च मुत्तं सव्वं उवभोगपरिभोगं ॥ १ ॥ गिहमज्झ मोत्तूणं दिसिगमणं मुत्तु मसगजूआई। वयकाएहिं न करे न कारवे गंठिसहिएणं ॥ २ ॥" इति। यथा कश्चिन्मान्त्रिकः सर्वाङ्गव्याप्तं विषधरविषं स्वमन्त्रप्रयोगेण दंश एवानयति, एवं धार्म्मिकश्रावकेणापि सर्वसावद्यव्यापारं संक्षेप्याधिकृतदेशमात्रे आनीयते, तत्संक्षेपे च कर्मणामपि संक्षेपः कृतः स्यात्। ततः क्रमेण निर्वाणप्राप्तिरिति। उक्तं द्वितीयं शिक्षापदव्रतम्।

अथ तृतीयं पोषधाख्यं शिक्षापदव्रतमुच्यते–तत्र धर्म्मस्य पुष्टिं धत्ते करोतीति पोषधः पर्वदिनानुष्ठानं स एव व्रतं पोषधव्रतम्। पोषधोपवास इत्यप्युच्यते, तथाहि–पोषध उक्तनिर्वचनोऽवश्यमष्टमीचतुर्दशीपूर्णिमाऽमावस्यालक्षणपर्वदिना-

नुष्ठेयो व्रतविशेषः, तेनोपवसनम्–अवस्थानं पोषधोपवासः, अथवा पोषधः अष्टम्यादिपर्वदिवसः, उपेति सह उपावृत्तदोषस्य सतो गुणैराहारपरिहारादिरूपैर्वासः उपवासः । तदुक्तम्–"उपावृत्तस्य दोषेभ्यः सम्यग्वासो गुणैः सह । उपवासः स विज्ञेयो न शरीरविशोषणम् ॥ १ ॥" इति । पोषधेषूपवासः पोषधोपवासः आवश्यकवृत्तावित्थं व्याख्यातत्वात् । तथाहि–"इह पोषधशब्दो रूढ्या पर्वसु वर्तते, पर्वाणि चाष्टम्यादितिथयः, पूर्णात् पर्वधर्म्मोपदेशहेतुत्वादित्यर्थः, पोषधेपूपवसनं पोषधोपवासः, नियमविशेषाभिधानं चेदमिति" व्युत्पत्तिमात्रमेतत् । प्रवृत्तिनिमित्तस्त्वाहारशरीरसत्काराब्रह्मसावद्यकर्म्मपरित्यागात् चतुर्विधो भवति । तथा चागमः–"पोसहोववासे चउव्विहे पण्णत्ते, तं जहा–आहारपोसहे सरीरसक्कारपोसहे बंभचेरपोसहे अव्वावारपोसहे" श्रीमदभयदेवसूरिपादैरपि समवायाङ्गवृत्तावेवमेव व्याख्यातत्वादिति । तत्रैकैकोऽपि देशसर्वभेदेन द्विविधः । देशत आहारपोषधः विवक्षितविकृतेरविकृतेराचाम्लस्य वा सकृदेव द्विरेव वा भोजनम् । सर्वतः चतुर्विधस्याप्याहारस्याहोरात्रं यावत् प्रत्याख्यानम् । शरीरसत्कारपोषधोऽपि द्विविधो देशसर्वभेदात् । देशत एकतरस्य शरीरसत्कारस्याकरणम् । सर्वतः स्नानोद्वर्त्तनवर्णकविलेपनपुष्पगन्धविशिष्टवस्त्राभरणकस्य सर्वस्यापि शरीरसत्कारस्याकरणम् । ब्रह्मचर्यपोषधोऽपि द्विविधो देशसर्वभेदात् । देशतः दिवैव रात्रावेव वा सकृदेव द्विरेव वाऽब्रह्मासेवनम् । सर्वतोऽहोरात्रं यावत् ब्रह्मचर्यपरिपालनम् । अव्यापारोऽपि देशसर्वभेदाद्विविधः । देशतोऽव्यापारपोषधः कस्याप्येकतरस्य कुव्यापारस्य वर्जनम् । सर्वतस्तु सर्वेषां कृषिसेवावाणिज्यगृहकर्म्मणां परित्यागः । देशतः कुव्यापारनिषेधे सामायिकं करोति न वा । सर्वतः कुव्यापारनिषेधे तु नियमेन सामायिकं करोति, अन्यथा तत्फलेन वञ्च्यते । सर्वतः पोषधव्रतं चैत्यगृहे वा साधुमूले

त्रा गृहे वा पोषधशालायां वा त्यक्तमणिसुवर्णाद्यलङ्कारो व्यपगतमालाविलेपनवर्णकः परिहृतप्रहरणः प्रतिपद्यते कृते च तत्र पठति पुस्तकं वा वाचयति, धर्म्मध्यानं वा ध्यायति, यथा—एतान् साधुगुणानहं मन्दभाग्यो न समर्थो धारयितुमिति । "इह च यद्याहारशरीरसत्कारब्रह्मचर्यपोषधवद्व्यापारपोषधमप्यन्यत्रानाभोगेनेत्याद्याकारोच्चारणपूर्वकं प्रतिपद्यते तदा सामायिकमपि सार्थकं भवति, स्थूलत्वात्पोषधप्रत्याख्यानस्य, सूक्ष्मत्वाच्च सामायिकस्येति । तथा पोषधवतापि सावद्या व्यापारा न कार्या एव । ततः सामायिकमकुर्वंस्तल्लाभात् भ्रश्यतीति । यदि पुनः समाचारीविशेषात् सामायिकमिव द्विविधत्रिविधेनेत्येवं पोषधं प्रतिपद्यते तदा सामायिकार्थस्य पोषधेनैव गतत्वान्न सामायिकमत्यन्तफलवत्, यदि परं पौषधसामायिकलक्षणं व्रतद्वयं प्रतिपन्नं मयेति भावात् फलवत्" इत्यभयदेवसूरिपादाः पञ्चाशकवृत्तौ । योगशास्त्रवृत्तौ धर्म्मसंग्रहवृत्तौ चाप्येवमेवेति । एतेषां चाहारादिपदानां चतुर्णां देशसर्वविशेषितानामेकद्व्यादिसंयोगजा भङ्गा अशीतिः भवन्ति । तद्यथा—तत्रासंयोगजा अष्टौ चत्वारो देशतश्चत्वारः सर्वतः । द्विसंयोगजाश्चतुर्विंशतिः भवन्ति तद्यथा देशतः आहारः देशतः शरीरसत्कारः १, देशतः आहारः सर्वतः शरीरसत्कारः २, देशतः आहारः देशतोऽब्रह्म ३, देशतः अहारः सर्वतोऽब्रह्म ४, देशतः आहारः देशतो व्यापारः ५, देशतः आहारः सर्वतो व्यापारः ६, सर्वत आहारो देशतः शरीरसत्कारः ७, सर्वत आहारः सर्वतः शरीरसत्कारः ८, सर्वत अहारो देशतोऽब्रह्म ९, सर्वत आहारः सर्वतोऽब्रह्म १०, सर्वत आहारो देशतो व्यापारः ११, सर्वत आहारः सर्वतो व्यापारः १२, देशतः शरीरसत्कारः देशतोऽब्रह्म १३, देशतः शरीरसत्कारः सर्वतोऽब्रह्म १४, देशतः शरीरसत्कारो देशतो व्यापारः १५, देशतः शरीरसत्कारः सर्वतो व्यापारः १६, सर्वतः शरीरसत्कारः देशतोऽब्रह्म १७, सर्वतः

शरीरसत्कारः सर्वतोऽब्रह्म १८, सर्वतः शरीरसत्कारः देशतो व्यापारः १९, सर्वतः शरीरसत्कारः सर्वतो व्यापारः २०, देशतोऽब्रह्म देशतो व्यापारः २१, देशतोऽब्रह्म सर्वतो व्यापारः २२, सर्वतोऽब्रह्म देशतो व्यापारः २३, सर्वतोऽब्रह्म सर्वतो व्यापारः २४, इति द्विकसंयोगजा चतुर्विंशतिः । त्रिकसंयोगा भङ्गा द्वात्रिंशद्भवन्ति । तत्र देशतः आहारः देशतः शरीरसत्कारः देशतोऽब्रह्म १, देशतः आहारः देशतः शरीरसत्कारः सर्वतोऽब्रह्म २, देशतः आहारः देशतः शरीरसत्कारः देशतो व्यापारः ३, देशतः आहारो देशतः शरीरसत्कारः सर्वतो व्यापारः ४, देशतः आहारः सर्वतः शरीरसत्कारः देशतोऽब्रह्म ५, देशत आहारः सर्वतः शरीरसत्कारः सर्वतोऽब्रह्म ६, देशत आहारः सर्वतः शरीरसत्कारः देशतो व्यापारः ७, देशतो आहारः सर्वतः शरीरसत्कारः सर्वतो व्यापारः ८, सर्वत आहारः देशतः शरीरसत्कारः देशतोऽब्रह्म ९, सर्वत आहारो देशतः शरीरसत्कारः सर्वतोऽब्रह्म १०, सर्वत आहारो देशतः शरीरसत्कारो देशतो व्यापारः ११, सर्वत आहारो देशतः शरीरसत्कारः सर्वतो व्यापारः १२, सर्वत आहारः सर्वतः शरीरसत्कारः देशतोऽब्रह्म १३, सर्वत आहारः सर्वतः शरीरसत्कारः सर्वतोऽब्रह्म १४, सर्वत आहारः सर्वतः शरीसत्कारः देशतो व्यापारः १५, सर्वत आहारः सर्वतः शरीरसत्कारः सर्वतो व्यापारः १६, देशतः आहरो देशतोऽब्रह्म देशतो व्यापारः १७, देशत आहारः देशतोऽब्रह्म सर्वतो व्यापारः १८, देशत आहारः सर्वतोऽब्रह्म देशतो व्यापारः १९, देशत आहारः सर्वतोऽब्रह्म सर्वतो व्यापारः २०, सर्वत आहारः देशतोऽब्रह्म देशतो व्यापारः २१, सर्वत आहारः देशतोऽब्रह्म सर्वतो व्यापारः २२, सर्वत आहारः सर्वतोऽब्रह्म देशतो व्यापारः २३, सर्वत आहारः सर्वतोऽब्रह्म सर्वतो व्यापारः २४, देशतः शरीरसत्कारः देशतोऽब्रह्म देशतो व्यापारः २५, देशतः शरीरस-

त्कारो देशतोऽब्रह्म सर्वतो व्यापारः २६, देशतः शरीरसत्कारः सर्वतोऽब्रह्म देशतो व्यापारः २७, देशतः शरीरसत्कारः सर्वतोऽब्रह्म सर्वतो व्यापारः २८, सर्वतः शरीरसत्कारो देशतोऽब्रह्म देशतो व्यापारः २९, सर्वतः शरीरसत्कारो देशतोऽब्रह्म सर्वतो व्यापारः ३०, सर्वतः शरीरसत्कारः सर्वतोऽब्रह्म देशतो व्यापारः ३१, सर्वतः शरीरसत्कारः सर्वतोऽब्रह्म सर्वतो व्यापारः ३२, इति त्रिसंयोगा द्वात्रिंशद्भङ्गाः । षोडश चतुःसंयोगाः भवन्ति। तत्र देशत आहारो देशतः शरीरसत्कारो देशतोऽब्रह्म देशतो व्यापारः १, देशत आहारः देशतः शरीरसत्कारः देशतोऽब्रह्म सर्वतो व्यापारः २, देशत आहारो देशतः शरीरसत्कारः सर्वतोऽब्रह्म देशतो व्यापारः ३, देशत आहारः देशतः शरीरसत्कारः सर्वतोऽब्रह्म सर्वतो व्यापारः ४, देशत आहारः सर्वतः शरीरसत्कारो देशतोऽब्रह्म देशतो व्यापारः ५, देशत आहारः सर्वतः शरीरसत्कारो देशतोऽब्रह्म सर्वतो व्यापारः ६, देशत आहारः सर्वतः शरीरसत्कारः सर्वतोऽब्रह्म देशतो व्यापारः ७, देशत आहारः सर्वतः शरीरसत्कारः सर्वतोऽब्रह्म सर्वतो व्यापारः ८, सर्वत आहारो देशतः शरीरसत्कारो देशतोऽब्रह्म देशतो व्यापारः ९, सर्वत आहारो देशतः शरीरसत्कारो देशतोऽब्रह्म देशतो व्यापारः १०, सर्वत आहारो देशतः शरीरसत्कारः सर्वतोऽब्रह्म देशतो व्यापारः ११, सर्वत आहारो देशतः शरीरसत्कारः सर्वतोऽब्रह्म सर्वतो व्यापारः १२, सर्वत आहारः सर्वतः शरीरसत्कारः देशतोऽब्रह्म देशतो व्यापारः १३, सर्वत आहारः सर्वतः शरीरसत्कारो देशतोऽब्रह्म सर्वतो व्यापारः १४, सर्वत आहारः सर्वतः शरीरसत्कारः सर्वतोऽब्रह्म देशतो व्यापारः १५, सर्वत आहारः सर्वतः शरीरसत्कारः सर्वतोऽब्रह्म सर्वतो व्यापारः १६ इति चतुःसंयोगाः षोडश भवन्ति । एतेषां मध्ये सम्प्रति समाचारीविशेषेण सुविहितपूर्वाचार्यपरम्परयाऽऽहारपोषध एव देशसर्वभेदेन द्विधापि क्रियते, सामायिकेन सह निरव-

द्याहारस्य विरोधादर्शनात् सर्वसामायिकवता यतिनोपधानतपोवाहिना च श्रावकेणाऽप्याहारग्रहणदर्शनात्। शेषास्तु त्रयोऽपि पोषधाः सर्वत एवोच्चार्यन्ते, समायिकेन सह देशतस्तेषां विरोधात्। यतः सामायिके "सावज्जं जोगं पच्चक्खामी"त्युच्चार्यते शरीरसत्कारादित्रये तु प्रायेण सावद्ययोगः स्यादेव। निरवद्यशरीरसत्कारव्यापारावपि सामायिके निषिद्धावेव, विभूषादिलोभनिमित्तत्वात्। तदुक्तमभयदेवसूरिपादैः पञ्चाशकवृत्तौ—"स च किल सामायिकं कुर्वन् मुकुटं कुण्डले नाममुद्रां चापनयति; पुष्पताम्बूलप्रावारादिकं च व्युत्सृजति" इति। शक्त्यभावे धर्मानुष्ठाननिर्वाहार्थं यतिरिव सामायिकवतोऽपि श्रावकस्याहारस्यानुज्ञा। तदुक्तमावश्यकचूर्णौ पोषधव्रताधिकारे—"तं सत्तिओ करिज्जा तवो अ जं वण्णिओ समासेणं। देसावगासिएणं जुत्तो सामाइएणं वा ॥ १ ॥" पोषधमाश्रित्य निशीथभाष्येऽप्युक्तम्—"उद्दिट्ठं कडंपि सो भुंजे" तच्चूर्णौ च—"जं च उद्दिट्ठकडं तं कडसामाइओ वि भुंजे" इति। इदं च पोषधसहितसामायिकवतः संभाव्यते, न केवलसामायिकवतः, तस्य मुहूर्त्तमात्रप्रमाणत्वेन पूर्वाचार्यपरम्परादिना आहारग्रहणस्याक्रियमाणत्वात्। श्रावकप्रतिक्रमसूत्रचूर्णावपि—"जइ देसओ आहारपोसहिओ तो भत्तपाणस्स गुरुसक्खिअं पारयित्ता आवस्सिअं करित्ता ईरिआसमिइए गंतुं घरं इरियावहिअं पडिक्कमइ, आगमणालोअणं च करेइ, चेइए वंदेइ तओ संडासयं पमज्जित्ता पाउंछणे निसीअइ, भायणं पमज्जइ, जहोचिए अ भायणे परिवेसिए पंचमंगलमुच्चारेइ सरेइ पच्चक्खाणं, तओ वयणं पमज्जित्ता—"असुरसुरं अचवचवं अदुअमविलंबिअं अपरिसाडिं। मणवयणकायगुत्तो भुंजइ साहु व्व उवउत्तो ॥ १ ॥ जायमायाए भुच्चा फासुअजलेण मुहसुद्धिं काउं नवकारसरणेण उट्ठाइ देवे वंदइ वंदणयं दाउं संवरणं काऊण पुणो वि पोसहसालाए गंतुं सज्झायंतो चिट्ठइ" इत्यादिपाठतः सामायिकेऽपि यथोक्तविधिना भोजनकरणमागमानुमतं ज्ञायते। पोषध-

ग्रहणपालनपारणविधिस्तु ग्रन्थान्तरादवलोकनीय इति । अत्र 'पर्वचतुष्टयी'ति तस्यामवश्यकर्त्तव्यताकप्रदर्शनार्थमुक्ता, न तु 'तस्यामेवे'ति नियमप्रदर्शनायेति । "सव्वेसु कालपव्वेसु पसत्थो जिणमए तहा जोगो । अट्ठमिचउद्दसीसुं निअमेण हविज्ज पोसहिओ ॥१॥" इत्यावश्यकचूर्ण्यादौ दर्शनादिति । एतद्व्रतफलं त्वेवमुक्तम्—"कंचणमणिसोवाणं थंभसहस्सुसिअं सुवण्णतलं । जो कारिज्ज जिणहरं तओ वि तवसंजमो अहिओ ॥१॥" इत्युक्तं तृतीयं शिक्षाव्रतम् ।

अथ चतुर्थं शिक्षाव्रतमुच्यते तिथिपर्वादिसकललौकिकव्यवहारपरिवर्जको भोजनकालोपस्थायी भिक्षुविशेषोऽतिथिः । तदुक्तम्—"तिथिपर्वोत्सवाः सर्वे त्यक्ता येन महात्मना । अतिथिं तं विजानीयात् शेषमभ्यागतं विदुः ॥१॥" इति श्रावकस्य साधुरेवातिथिः, तस्य गुरुत्वभक्त्याऽऽहारवस्त्रकम्बलपात्रवसतिपीठफलकशय्यासंस्तारकादीनामाधाकर्म्मादिद्विचत्वारिंशद्दोषविरहितो विशिष्टो भागो विभागो दानरूपोऽतिथिसंविभागस्तद्रूपं व्रतमतिथिसंविभागव्रतम् । न्यायोपार्जितानां प्रासुकैषणीयानां कल्पनीयानां देशकालश्रद्धासत्कारक्रमपूर्वकमाहारादीनामात्मानुग्रहबुद्ध्या मुनिभ्यः प्रदानमित्यर्थः । तदुक्तम्—"नायागयाणं कप्पणिज्जाणं अन्नपाणाईणं दव्वाणं देसकालसद्धासक्कारकमजुअं पराए भत्तीए आयाणुग्गहबुद्धीए संजयाण दाणं अतिहिसंविभागो" इति । श्रीहेमचन्द्रसूरिपादा अपि—"प्रायः शुद्धैस्त्रिविधविधिना प्रासुकैरेषणीयैः, कल्पप्रायैः स्वयमुपहितैर्वस्तुभिः पानकाद्यैः । काले प्राप्तान् सदनमसमश्रद्धया साधुवर्गान्, धन्याः केचित्परमविहिता हन्त सन्मानयन्ति ॥ १ ॥ अशनमखिलं खाद्यं स्वाद्यं भवेदथ पानकं, यतिजनहितं वस्त्रं पात्रं सकम्बलप्रोञ्छनम् । वसतिफलकप्रख्यं मुख्यं चारित्रविवर्धनम्, निजकमनसः प्रीत्याधायि प्रदेयमुपासकैः ॥ २ ॥" तथा यदतिथिभ्यो दत्तं तदेवातिथिसंविभागव्रती भुङ्क्ते । तदुक्तम्—"साहूणं कप्पणिज्जं जं न वि दिन्नं कहिं चि किंचि तहिं । धीरा

जहुत्तकारी सुसावगा तं न भुंजन्ति ॥ ३ ॥" इति । **तथा स्वशक्त्यनुसारेण शुद्धं स्तोकमपि वस्त्रादिकं मुनिभ्यो दद्यात् । तदुक्तं**— "वसही सयणासणभत्तपाणभेसज्जवत्थपायाई । जइ वि न पज्जत्तधणो थोवो वि हु थोवयं दिज्जा ॥ १ ॥" इति । **तथा साधुभ्यो वस्त्रपात्र-पीठकल्पकादिदानं नानागमिकम्, विवाहप्रज्ञप्त्यामुक्तत्वात्, तथा च तत्सूत्रम्**—"समणे निग्गंथे फासुयएसणिज्जेणं असणपा-णखाइमसाइमेणं वत्थपडिग्गहकम्बलपायपुंछणेणं पीठफलगसिज्जासंथारएणं पडिलाभमाणे विहरति" इति । **अस्मिन्विषये वृद्धोक्ता समाचारी पञ्चाशकवृत्तितोऽत्र लिख्यते**—"श्रावकेण पोषधं पारयता नियमात् साधुभ्यो दत्त्वा पारयितव्यमन्यदा पुनरनियमो दत्त्वा वा पारयति पारयित्वा वा ददाति । तस्मात्पूर्वं साधुभ्यो दत्त्वा पश्चात् पारयितव्यम् । कथं ? यदा देशकालो भवति तदात्मनो विभूषां कृत्वा साधूंस्तत्प्रतिश्रयं गत्वा निमन्त्रयन्ते 'भिक्षां गृह्णीत' इति । 'साधूनां का प्रतिपत्तिः'—उच्यते—तदैकपटलकमन्यो मुखा-नन्तकमपरो भाजनं प्रत्युपेक्षते, मा अन्तरायदोषाः स्थापनादोषा वा भवन्तु । स च यदि प्रथमायां पौरुष्यां निमन्त्रयते, अस्ति च नमस्कार-सहितप्रत्याख्यानी ततस्तद्गृह्यते । अथ नास्त्यसौ तदा न गृह्यते यतस्तद्वोढव्यं भवति । यदि पुनर्घनं लगेत्तदा गृह्यते संस्थाप्यते च । यो वोद्घात-पौरुष्यां पारयति पारणकवानन्यो वा तस्मै तद्दीयते, पश्चात्तेन श्रावकेण समं संघाटको व्रजति, एको न वर्तते प्रेषयितुम्, साधू पुरतः श्रावकस्तु मार्गतो गच्छति । ततोऽसौ गृहं नीत्वा तावासनेनोपनिमन्त्रयते । यदि निवेशेते तदा लष्टम् । अथ न निवशेते तथापि विनयः प्रयुक्तो भवत्विति । ततोऽसौ भक्तं पानं च स्वयमेव ददाति, अथवा भाजनं धारयति, अथवा स्थित एवास्ते यावद्दत्तं । साधू अपि सावशेषं गृह्णीतः पश्चा-त्कर्म्मपरिहरणार्थम् । ततो दत्वा वन्दित्वा च विसर्जयत्यनुगच्छति च कतिचित्पदानि । ततः स्वयं भुङ्क्ते । यच्च किल साधुभ्यो न दत्तं तच्छ्रा-वकेण न भोक्तव्यम् । यदि पुनस्तत्र ग्रामादौ साधवो न सन्ति तदा भोजनवेलायां दिगवलोकनं करोति, विशुद्धभावेन च चिन्तयति—यदि

साधवोऽभविष्यंस्तदा निस्तारितोऽहमभविष्यमिति"। उमास्वातिवाचकस्तु श्रावकप्रज्ञप्तौ अतिथिशब्देन चतुर्विधः सङ्घ आह, तद्ग्रन्थः—"अतिथिसंविभागो नाम अतिथयः—साधवः साध्व्यः श्रावकाः श्राविकाश्च, एतेषु गृहमुपागतेषु भक्त्याऽभ्युत्थानासनपादप्रमार्जननमस्कारादिभिरर्चयित्वा यथाविभवशक्ति अन्नपानवस्त्रौषधालयादिप्रदानेन संविभागः कार्यः" इति । एतद्व्रताराधनार्थं प्रतिदिवसं श्रावकेण—"फासुएणं एसणिज्जेणं असणपाणखाइमसाइमेणं वत्थपडिग्गह कंबलपायपुंछणेणं पीढफलगसिज्जासंथारेणं ओसहभेसज्जेणं भयवं अणुग्गहो कायव्वो" इत्यादिना गुरूणां निमन्त्रणा कार्या । एतद्व्रतफलं तु दिव्यभोगसमृद्धिसाम्राज्यतीर्थकृत्पदादिश्रीशालिभद्रधनासार्थवाहादीनामिव, पारम्पर्येण तु निर्वाणमिति । उक्तं चतुर्थं शिक्षाव्रतम् । तदभिधाने चोक्तानि द्वादश व्रतानि ॥

प्रागुक्तानि च व्रतानि निरतिचारतया पालितानि सुकृताय भवन्ति, अत एवातिचारा अपि हेयतया ज्ञातव्या भवन्ति, ते च प्रतिव्रतं पञ्च पञ्च भवन्ति । 'नन्वतिचाराः सर्वविरतावेव भवन्ति न देशविरतौ, संज्वलनकषायोदयजन्यत्वात्तेषाम् । तथा चागमः—"सव्वेऽवि अ अइआरा संजलणाणं तु उदयओ हुंति । मूलछिज्जं पुण होइ वारसण्हं कसायाणं ॥ १ ॥" संज्वलनकषायोदयस्तु सर्वविरतानामेव, सम्यग्दृष्टीनामप्रत्याख्यानावरणोदयः देशविरतानां प्रत्याख्यानकषायोदयश्चेति सम्यक्त्वे देशविरतौ च नातिचारसंभवः, अल्पीयस्त्वात्तद्विरतेः कुन्थुशरीरे व्रणाद्यसंभववत् । तथाहि—प्रथमाणुव्रते स्थूलं संकल्पं निरपराधं द्विविधं त्रिविधेनेत्यादिविकल्पैर्विशेषितत्वेनातिसूक्ष्मतां गते देशाभावेन न देशविराधकरूपा अतिचाराः स्युः, किन्तु सर्वनाश एव, महाव्रतेषु तु संभवन्त्यतिचाराः महत्त्वादेव, हस्तिशरीरे व्रणपट्टबन्धादिवदिति चेत् ?' तन्न युक्तम्, उपासकदशादिषु प्रतिव्रतमतिचारपञ्चकाभिधानात् । ननु भङ्गा एव ते न त्वतिचारा इति चेत् ? न, भङ्गात् भेदे-

नातिचारस्यागमे संमतत्वात् । यच्चोक्तं संज्वलनकषायोदयजन्यत्वं तेषां तत् 'सव्वेऽवि अइआरा' इत्यनेन सर्वविरतिमाश्रित्योक्तं न तु सम्यक्त्वदेशविरती, सर्वविरतौ संज्वलनानामुदये अतिचाराः भवन्ति शेषोदये तु मूलच्छेद्यमेव स्यात्, एवं च न देशविरतावतिचाराभाव इति तद्गाथार्थः । यदप्यधिकृतगाथापश्चार्द्धं प्रकारान्तरेण व्याख्यायते, यथा—'मूलच्छेदः सर्वविरतेस्तृतीयानामुदये, देशविरतेः द्वितीयानां, सम्यक्त्वस्य प्रथमानामिति' तेनापि देशविरतादौ नातिचाराभावस्तथाहि—यथा संज्वलनोदये सर्वविरतिरवाप्यते तत्रातिचाराश्च भवन्ति एवं प्रत्याख्यानावरणोदये देशविरतिस्तदतिचाराश्च, अप्रत्याख्यानावरणोदये सम्यक्त्वं तदतिचाराश्च भवन्तु, न्यायस्य समानत्वात् । विचित्रो ह्युदयः कषायाणां, ततोऽसौ गुणलाभस्याप्रतिवन्धकस्तदतिचाराणां च निमित्तं भवति, संज्वलनकषायोदयवदिति । अन्ये तु—सम्यक्त्वदेशविरत्यतिचाराः क्रमेण प्रथमद्वितीयकषायोदयात् भवन्ति, विचित्रो हि तदुदयो देशतः सर्वतश्च विराधनाया हेतुर्भवतीति । कुन्थुदृष्टान्तोऽप्यसंगत एव, दृष्टान्तान्तरबाधितत्वात् । तथाहि—हस्तिनोऽतिलघुर्मनुष्यस्तस्य च व्रणादि संभवत्येवेति । नन्वाद्यद्वादशकषायाणां सर्वघातित्वेनाभिधानात् तदुदये कथं सम्यक्त्वादीनां भङ्ग एव न स्यादिति चेत्? न, सर्वविरत्यपेक्षयैव शतकचूर्णौ सर्वघातित्वेन व्याख्यातत्वात्, न तु सम्यक्त्वाद्यपेक्षमिति । तथा च तद्ग्रन्थः—"भगवया पणीयं पंचमहव्वयमइअं अट्ठारससीलंगसहस्सकलियं चारित्तं घायंतित्ति सव्वघाइणो" इति । तदेवं देशविरतौ नातिचाराभाव इति । प्रथमाणुव्रते अमी पञ्चातिचाराः—प्रबलकोपोदयात् रज्ज्वादिना गोमहिष्यादीन् बध्नाति, स बन्धाभिधः प्रथमोऽतिचारः । विनयग्रहणार्थं तु स्वपुत्रादीनामपि बन्धः क्रियते, तत्र नातिचारः । तथा प्रबलकोपोदयात् छविच्छेदः क्रियते, स छविच्छेदाभिधो द्वितीयोऽतिचा-

र:। तत्र छविः शरीरं त्वग्वा तस्याः छेदः कोपात् द्वैधीकरणम्–कर्णनासिकागलकम्बललाङ्गूलादिकर्त्तनम्, तेन पादव-
ल्मीकोपहतपादस्य पुत्रादेः कोपमन्तरेण तत्करणेऽपि न दोषः। तथा गोरासभमनुष्यादेः स्कन्धे पृष्ठे शिरसि वा वोढुम-
शक्यस्याधिकभारस्य वहनायाधिरोपणम्। स तृतीयोऽधिकभाराधिरोपणाभिधोऽतिचारः। अत्रापि कोपात् लोभाद्वेति
वक्तव्यम्। प्रबलकोपोदयात् चतुष्पदादीनां लकुटादिना ताडनं चतुर्थः प्रहाराभिधोऽतिचारः। तथा क्रोधात् भक्तपा-
नादेः निषेधः पञ्चमोऽतिचारः। अत्रावश्यकचूर्ण्याद्युक्तो विधिः–वन्धो द्विपदानां चतुष्पदानां वा स्यात्, सोऽपि
सार्थकोऽनर्थको वा, तत्रानर्थकस्तावद् विधातुं न युज्यते, सार्थकः पुनरसौ द्विविधः–सापेक्षो निरपेक्षश्च, सापेक्षो यः
शिथिलेन दामग्रन्थिना प्रदीपनादिषु मोचयितुं छेत्तुं वा शक्यते, निरपेक्षो यो निश्चलमत्यर्थं च वध्यते। एवं तावत्
चतुष्पदानां द्विपदानामपि दासदासीचौरपाठादिप्रमत्तपुत्रादीनां यदि वन्धः क्रियते तदा शिथिलवन्धेन तथा ते
वन्धनीया रक्षणीयाश्च यथाग्निभयादिषु न विनश्यन्ति। तथा द्विपदचतुष्पदाः श्रावकेण त एव गृहीतव्या येऽवद्धा
आसते। छविच्छदोऽपि तथैव, नवरं निरपेक्षो यो हस्तपादकर्णनासिकादि निर्दयं छिद्यते, सापेक्षः पुनः गण्डं वा
अरुर्वा छिद्याद्वा दहेद्वेति। तथाऽधिकभारोऽपि नारोपितव्यः। पूर्वमेव हि या द्विपदादिवाहनेन जीविका सा श्रावकेण
मोक्तव्या, अथान्यासौ न भवेत् तदा द्विपदो यं भारं स्वयमुत्क्षिपति अवतारयति च तं वाह्यते, चतुष्पदस्य तु यथोचि-
तभारः किञ्चिदूनः क्रियते, हलशकटादिभ्यः पुनरुचितवेलायामसौ मुच्यत इति। प्रहारोऽपि तथैव, नवरं निरपेक्षः
.४० प्रहारो निर्दयताडना, सापेक्षैः पुनः श्रावकेणादित एव भीतपर्षदा भवितव्यम्, यदि पुनः कोऽपि न करोति विनयं तदा

तं मर्माणि मुक्त्वा लत्तया दवरकेण वा सकृद् द्विर्वा ताडयेदिति । तथा अन्नपानादिरोधोऽपि न कस्यापि कर्त्तव्यस्तीक्ष्णबुभुक्षितो ह्येवं सति म्रियते, स्वभोजनवेलायां तु ज्वरितादीन् विना नियमत एवान्यान् विधृतान् भोजयित्वा स्वयं भुञ्जीत । अन्नादिरोधोऽपि सार्थकानर्थकभेदो बन्धवत् द्रष्टव्यः, नवरं सापेक्षो रोगचिकित्सार्थं स्यात्, अपराधकारिणि च वाचैव वदेद्–अद्य ते न दास्ये भोजनादि, शान्तिनिमित्तं चोपवासादि कारयेत् । किं बहुना ? मूलगुणस्याहिंसालक्षणस्यातिचारो यथा न भवति तथा यतनया वर्तनीयम् । ननु हिंसैव श्रावकेण प्रत्याख्याता, न तु बन्धादयोऽतिचाराः ततस्तत्करणेऽपि को दोषः, हिंसाविरतेरखण्डितत्वात् । बन्धादयोऽपि प्रत्याख्याता इति स्वीकारे च तत्करणे भङ्ग एव, विरतिखण्डनात् । किञ्च बन्धादीनां प्रत्याख्येयत्वे व्रतेयत्ता विशीर्येत, प्रतिव्रतमतिचारव्रतानामाधिक्यादिति । एवं च बन्धादीनामतिचारता न दोषायेति चेत् ? सत्यम्, हिंसैव प्रत्याख्याता न बन्धादयः, केवलं तत्प्रत्याख्यानेऽर्थतः तेऽपि प्रत्याख्याता द्रष्टव्याः, हिंसोपायत्वात्तेषाम्, तेन नैते करणीया इति । ननु तर्हि बन्धादिकरणे व्रतभङ्ग एव भवति, कथमतिचारतेति चेत् ? सत्यम्, व्रतं द्विविधमन्तर्वृत्त्या वहिर्वृत्त्या च, तत्र न मारयामीति विकल्पाभावेन प्रबलकोपाद्यावेशात् परप्राणप्रहाणमविगणयन् बन्धादौ प्रवर्त्तते, न च हिंसा भवति, तदा निर्दयताविरत्यनपेक्षप्रवृत्तत्वेनान्तर्वृत्त्या व्रतस्य भङ्गः वहिर्वृत्त्या हिंसाया अभावेन व्रतपालनमिति देशस्य भङ्गात् देशस्य पालनात् बन्धादीनामतिचारव्यपदेशो न विरुध्यत इति । तदुक्तम्–"न मारयामीति कृतव्रतस्य विनैव मृत्युं क इहातिचारः । निगद्यते यः कुपितो वधादीन् करोत्यसौ स्यान्नियमानपेक्षः ॥ १ ॥ मृत्योरभावान्नियमोऽस्ति तस्य, कोपाद्दयाहीनतया तु भग्नः । देशस्य भङ्गादनुपालनाच्च पूज्या अतीचारमुदाहरन्ति ॥ २॥" न च व्रतेयत्ता विशीर्येत, विशुद्धाहिंसासद्भावे

हि वन्धादीनामभाव एव । ततः स्थितमेतत् वन्धादयोऽतिचारा एवेति । यद्वाऽनाभोगसहसाकारादिनाऽतिक्रमादिना वा सर्वत्रातिचारता वोध्या । तत्रानाभोगोऽसावधानता सहसाकारोऽविमृश्यकारिता । तदुक्तम्–"पुव्वं अपासिऊणं छूढे पायंमि जं पुणो पासे । न य तरइ नियत्तेउं पायं सहसाकरणमेअं ॥ १ ॥" अतिक्रमादीनां स्वरूपं चैवम्–हिंसादौ केनापि निमन्त्रणे कृतेऽप्रतिषेधादतिक्रमः, गमनादिव्यापारे तु व्यतिक्रमः, क्रोधात् वधवन्धादौ त्वतिचारः, हिंसादौ त्वनाचारः । वन्धाद्युपलक्षणात् कोपादिना मन्त्रतन्त्रौषधप्रयोगादयोऽन्येऽप्यतिचारतयात्र व्रतेऽवगन्तव्याः ॥

सहसाभ्याख्यानमिथ्योपदेशगुह्यभाषणकूटलेखविश्वस्तमन्त्रभेदाख्याः पञ्च सत्यव्रतेऽतीचारा ज्ञातव्या भवन्ति । तत्र सहसा–अनालोच्य अभ्याख्यानं–असद्दोषाध्यारोपणम्, यथा त्वं चौरः पारदारिको वेत्यादि । अन्ये तु सहसाऽभ्याख्यानस्थाने रहस्याभ्याख्यानं पठन्ति, तत्र रह एकान्तस्तत्र भवं रहस्यं रहस्येनाभ्याख्यानमभिशंसनमसदध्यारोपणं रहस्याभ्याख्यानं, यथा वृद्धां स्त्रीं प्रति कथयति–तव भर्त्ता तरुण्यामासक्तः, तरुणीं प्रति च कथयति–तव भर्त्ता प्रौढचेष्टितायां मध्यमवयसि प्रसक्तः, 'तथा खरकामो मृदुकाम' इति वा परिहसति, तथा स्त्रीयमभ्याख्याति भर्त्तुः पुरतः यथा–पत्नी ते कथयति–एवमयं मां रहसि कामगर्दभः खलीकरोति, अथवा दम्पत्योरन्यस्य वा पुंसः स्त्रिया वा येन रागप्रकर्ष उत्पद्यते तेन तादृशा रहस्येनानेकप्रकारेणाभिशंसनं हास्यक्रीडादिना करोति । अभिनिवेशेन करणे तु व्रतभङ्ग एव स्यात् असदभ्याख्यानस्य प्रत्याख्यातत्वादिति । तदुक्तम्–"सहसब्भक्खाणाई जाणंतो जइ करेज्ज तो भंगो । जइ पुणणाभोगाईहिंतो तो होइ अइयारो ॥ १ ॥" इति । एवं चानाभोगादिना परोपघातं वचनं ब्रुवतः संक्लेशाभावेन व्रतानपेक्षत्वाभावात् न भङ्गः,

परोपघातहेतुत्वाच्च भङ्ग इति भङ्गाभङ्गरूपः प्रथमोऽतिचारः ॥ मिथ्योपदेशः–असत्योपदेशः, प्रतिपन्नसत्यव्रतस्य हि परपीडाकरं वचनमसत्यमेव, ततः प्रमादात् परपीडाकरोपदेशोऽतिचारो यथा–वाह्यतां बलिवर्दखरोष्ट्रादयो हन्यतां दस्यवः शत्रवो वा इति । यद्वा यथावस्थितोऽर्थो यथार्थस्तस्योपदेशः साधीयान्, विपरीतस्त्वयथार्थोपदेशो यथा–परेण सन्देहापन्नेन पृष्टे न सुष्ठूत्तरकथनं, द्वयोर्विवादेऽन्यतरवञ्चनोपायशिक्षणं, सम्यगज्ञातमन्त्रौषध्याद्युपदेशनं, निकृतिप्रधानशास्त्राध्यापनादि वा सर्वं मृषोपदेशः । यद्यपि विवाहे स्वयं परेण वाऽन्यतराभिसन्धानोपायोपदेशो न मृषा वादयामीति व्रतिनस्तु भङ्ग एव, मृषां न वदामीति व्रतिनस्तु न भङ्गः, तथापि तस्य सहसाकारानाभोगाभ्यामतिक्रमादिभिर्वा मृषावादे परप्रवर्त्तनमतिचारः । यद्वा व्रतसंरक्षणबुद्ध्या परवृत्तान्तकथनद्वारेण मृषोपदेशं प्रयच्छतः व्रतसापेक्षत्वादतिचारः मृषावादे प्रवर्तनात् भङ्ग इति भङ्गाभङ्गरूपो द्वितीयोऽतिचारः ॥ तथा गुह्यं गूहनीयं न सर्वस्मै यत् कथनीयं राजादिकार्यसम्बन्धं तस्यानधिकृतेनैवाकारेङ्गितादिभिः ज्ञात्वाऽन्यस्मै प्रकाशनं गुह्यभाषणं यथैते हीदमिदं राजविरुद्धादिकं मन्त्रयन्ते, यद्वा गुह्यभाषणं पैशुन्यं यथा द्वयोः प्रीतौ सत्यामेकस्याकारादिनोपलभ्याभिप्रायमितरस्य तथा कथयति यथा प्रीतिः विनश्यतीति तृतीयोऽतिचारः ॥ तथा कूटलेखस्य–असत्यलेखस्य करणमन्यस्वरूपाक्षरमुद्राकरणमेतच्च यद्यपि कायेनासत्यां वाचां न वदामीत्यस्य न वदामि न वादयामीत्यस्य वा व्रतस्य भङ्ग एव तथापि सहसाकारानाभोगादिना अतिक्रमादिना वातिचारः । यद्वाऽसत्यभाषणं मया प्रत्याख्यातमिदं पुनः लेखनमिति भावनया व्रतसापेक्षस्यातिचार एवेति । तथा विश्वस्तानां कलत्र-

पुत्रमित्राणां मन्त्रो-मन्त्रणं, तस्य भेदप्रकाशनं, तस्यानुवादरूपत्वेन सत्यत्वात् यद्यपि नातिचारता घटते तथापि मन्त्रितार्थप्रकाशनलज्जादितो मित्रकलत्रादेर्मरणादिसंभवेन परमार्थतोऽसत्यत्वात् कथञ्चिद्भङ्गरूपत्वेनातिचारतैवेति ॥

तृतीयव्रतस्य स्तेनानुज्ञा-तदानीतादान-विरुद्धराज्यगमन-प्रतिरूपक्रिया-मानान्यत्वरूपाः पञ्चातिचारा भवन्ति । तत्र स्तेनास्तस्करास्तेषामनुज्ञा-हरत यूयमिति हरणक्रियायां प्रेरणा, यद्वा स्तेनानां कुशिकाकर्तरिकाघर्घरिकादीनामुपकरणानामर्पणं विक्रयणं वा स्तेनानुज्ञा । अत्र च यद्यपि चौर्यं न करोमि न कारयामीत्येवं प्रतिपन्नव्रतस्य भङ्ग एव तथापि 'किमद्य कल्ये यूयं निर्व्यापाराः? युष्मदानीतो मोषस्य यदि विक्रायको नास्ति तदानीमहं विक्रेष्ये यदि वा भक्तादि नास्ति तदाऽहं तद्ददामि' इत्येवं वचनैः चौरान् व्यापरयतः स्वकल्पनया तद्व्यापारं परिहरतः व्रतसापेक्षस्यासावतिचारः । तथा तदानीतं-स्थानान्तरात् चौरैरानीतं किञ्चित् कुङ्कुमादि महार्घ्यं रत्नादिकं काणक्रयेण मुधिकया वा तत् प्रच्छन्नं गृह्णंश्चौरो भवति, चौर्यकरणाद्व्रतभङ्गः, वाणिज्यमेव मया क्रियते न चौरिकेत्यध्यवसायेन व्रतसापेक्षत्वान्न तद्भङ्ग इति भङ्गाभङ्गरूपोऽतिचारः ॥ तथा विरुद्धराज्ये-वैरिराज्ये राज्ञाननुज्ञाते वाणिज्यार्थं गमनं विरुद्धराज्यगमनमुपलक्षणात् राजनिषिद्धदन्तलोहोपलादिवस्तुग्रहणमप्यतिचारः । यद्यप्यत्र स्वस्वामिनाननुज्ञातस्य 'सामिजीवादत्तं तित्थयरेण तहेव गुरुहिं' इत्यदत्तादानलक्षणयोगेन तत्कारिणां च चौर्यदण्डयोगेनादत्तादानरूपत्वात् व्रतभङ्ग एव, तथापि विरुद्धराज्यं लङ्घनं कुर्वता मया वाणिज्यमेव कृतं न चौर्यमिति भावनया व्रतसापेक्षत्वाल्लोके च चौरोऽयमितिव्यपदेशाभावादित्यतिचारः ॥ तथा प्रतिरूपं-विक्रेयवस्तुनः सदृशं, तत्र व्रीहीणां पलञ्ज्यभिधं धान्यं घृतस्य वसा तैलं वा तैलस्य मुत्रं कुङ्कुमस्य कृत्रिमकुङ्कुमं कुसुम्भादि वा मञ्जिष्टादेश्चि-

त्रकादि जात्यकर्पूरमणिमौक्तिकसुवर्णरूप्यादीनां कृत्रिमकर्पूरमणिमौक्तिकसुवर्णरूप्यादिकं प्रक्षिप्य तत्तद्विक्रीणीते । यद्वापहृतानां गवादीनां सविषाणानामग्निपक्ककालिङ्गीफलस्वेदादिना शृङ्गाण्यधोमुखानि प्रगुणानि तिर्यग्वलितानि वा यथारुचि विधायान्यविधत्वमिव तेषामापाद्य सुखेन धारणविक्रयादि करोतीति प्रतिरूपव्यवहाराभिधोऽतिचारः ॥ तथा मीयतेऽनेनेति मानं–कुडवादि पलादि हस्तादि सेतिकादि, तस्यान्यत्वं–न्यूनाधिकत्वं हीनमानेन ददाति अधिकमानेन च गृह्णाति । तदुक्तम्–"लौल्येन किञ्चित् कलया च किञ्चिन्मापेन किञ्चित्तुलया च किञ्चित् । किञ्चिच्च किञ्चिच्च समाहरन्तः प्रत्यक्षचौरा वणिजो भवन्ति ॥ १ ॥ अधीते यत्किञ्चित्तदपि मुषितुं ग्राहकजनम्, मृदु ब्रूते यद्वा तदपि विवशीकर्तुमपरम् । प्रदत्ते यत्किञ्चित्तदपि समादातुमधिकं, प्रपञ्चोऽयं वृत्तेरहह ! गहनः कोऽपि वणिजाम् ॥ २ ॥" इत्येवंविधा वणिग्वृत्तिः श्रावकाणां न युज्यते इति मानान्यत्वरूपोऽतिचारः ॥ प्रतिरूपक्रिया मानान्यत्वं च परव्यपदेशेन परधनग्रहणरूपत्वात् भङ्ग एव, केवलं खात्रखननादिकमेव चौर्यं प्रसिद्धं मया तु वणिक्कलैव कृतेति भावनया व्रतसापेक्षत्वादतिचारः । यद्वा पञ्चाप्यमी व्यक्तचौर्यरूपा एव, केवलं सहसाकारादिनाऽतिक्रमादिना वा प्रकारेण विधीयमानाऽतिचारतया व्यपदिश्यन्ते । राजसेवकादीनामपि आद्ययोः द्वयोः स्पष्ट एव सम्भवः । द्विड्राज्यगमनं तु यदा सामन्तादिः कश्चित् स्वस्वामिनो वृत्तिमुपजीवति तद्विरुद्धस्य च सहायो भवति तदा तस्यातिचारो भवति । मानविप्लवः प्रतिरूपक्रिया च यदा राजा भण्डागारे मानान्यत्वं द्रव्याणां विनिमयं च कारयति तदा राज्ञोऽप्यतिचारो भवति ॥

अपरिगृहीतेत्वरात्तागमनपरविवाहकरणानङ्गक्रीडातीव्ररागरूपाः पञ्चातिचाराः ब्रह्मचर्यव्रते भवन्ति । तत्र अपरिगृहीता

वेश्या स्वैरिणी प्रोषितभर्तृका कुलाङ्गना वाऽनाथा, तस्यां गमनमासेवनम्। अयं चानाभोगादिना अतिक्रमादिना वाऽपरिगृहीतादिरूपोऽतिचारः। तथा–इत्वरी प्रतिपुरुषमयनशीला वेश्या सा चासावायत्ता च किञ्चित्कालं भाटिकाप्रदानादिना संगृहीता तस्यां गमनमासेवनम्। इयं चात्र भावना–भाटिकादानेनाल्पकालं स्वकलत्रीकृत्य वेश्यां सेवमानस्य स्वमतिकल्पनया स्वदारत्वेन मन्यमानस्य व्रतसापेक्षत्वात् न भङ्गः, वस्तुतस्तु स्वल्पकालपरिगृहीतत्वेनान्यकलत्रत्वात् भङ्ग इति भङ्गाभङ्गरूप इत्वरात्तागमोऽतिचारः। इमौ चातिचारौ स्वदारसन्तोषिण एव, न तु परदारवर्जकस्य, इत्वरात्तायाः वेश्यात्वेन अपरिगृहीतायास्त्वनाथात्वेनापरदारात्वात्। शेषास्तूभयोरपि। इदमेव सूत्रानुपाति। तदुक्तम् श्रीमद्धरिभद्रसूरिपादैः–"सदारसंतोसस्स पंच अइआरा जाणिअव्वा न समायरिअव्वा" इति। अन्ये तु–स्वदारसन्तोषवतः इत्वरात्तागमनमतिचारः, तत्र भावना कृतैव, परस्त्रीवर्जकस्य त्वपरिगृहीतागमनमतिचारः, अपरिगृहीता वेश्या तां यदा गृहीतान्यसक्तभाटिकामभिगच्छति तदा परदारगमनजन्यदोषसंभवात् कथञ्चित्परदारत्वाच्च भङ्गत्वेन वेश्यात्वाच्चाभङ्गत्वेन भङ्गाभङ्गरूपोऽतिचारः, एवं वदन्ति॥ तथा परेषां स्वस्वापत्यभिन्नानां कन्याफललिप्सया स्नेहसम्बन्धादिना वा विवाहनं विवाहकरणं परिणयनविधानम्। इदं च स्वदारसन्तोषवता स्वकलत्रादन्यत्र परदारवर्जकेन च स्वकलत्रवेश्याभ्यामन्यत्र मनोवाक्कायैः मैथुनं न कार्यं न च कारणीयमिति व्रतं यदा प्रतिपन्नं भवति तदा परविवाहकरणं मैथुनकारणमर्थतः प्रतिषिद्धमेव भवति, तद्व्रती तु मन्यते–विवाह एव मया विधीयते न मैथुनं कार्यते इति व्रतसापेक्षत्वेनातिचारः। सम्यग्दृष्टेरव्युत्पन्नावस्थायां मिथ्यादृष्टेस्तु भद्रकत्वावस्थायामनुग्रहार्थं व्रतादाने कन्याफललिप्सा भवति। ननु परविवाहवत् स्वापत्यविवाहकरणेऽपि समान एव दोषः स्यादिति

चेत् ? सत्यं, परं यदि स्वकन्याया विवाहो न कार्यते तदा स्वच्छन्दचारिणी स्यात् ततश्च शासनोपघातः स्यात्। कृतोद्वाहा तु पतिनियन्त्रितत्वेन न तथा स्यात्। तदुक्तम् परैरपि—"पिता रक्षति कौमारे भर्त्ता रक्षति यौवने। पुत्रस्तु स्थविरे भावे न स्त्री स्वातन्त्र्यमर्हति ॥१॥" इति। यस्तु कृष्णस्य चेटकराजस्य च स्वापत्येष्वपि विवाहनियमः श्रूयते स चिन्तकान्तरसद्भावे द्रष्टव्यः। अन्ये तु—विशिष्टसन्तोषाभावात् स्वयं परस्य—कलत्रान्तरस्य विवाहकरणं—परविवाहकरणमयं स्वदारसन्तोषवतोऽतिचारः ब्रुवन्ति॥ तथाऽनङ्गः—कामः, स च वेदोदयात् पुंसः स्त्रीपुंनपुंसकेषु सेवनेच्छा हस्तकर्मादीच्छा वा स्त्रियोऽपि योषिन्नपुंसकपुरुषसेवनेच्छा हस्तकर्मादीच्छा वा नपुंसकस्य नपुंसकस्त्रीपुरुषसेवनेच्छा हस्तकर्मादीच्छा वा, एषोऽनङ्गः नान्यः कश्चित्, तेन तस्मिन् वा क्रीडनमनङ्गक्रीडनम्। यद्वा आहार्यैः काष्ठपुस्तफलमृत्तिकाचर्मादिघटितप्रजननैः स्वलिङ्गेन कृतकृत्योऽपि योषितामवाच्यदेशं भूयो भूयः कुश्नाति, केशाकर्षणप्रहारदानदन्तनखकदर्थनादिप्रकारेण मोहनीयकर्मावेशात्तथा क्रीडति यथा बलवान् रागः प्रसूयते, यद्वा अङ्गं देहावयवो मैथुनापेक्षया योनिर्मेहनं च तद्भिन्नान्यनङ्गानि कुचकक्षोरुवदनादीनि तेषु क्रीडनमनङ्गक्रीडनम्। तथा कामे तीव्ररागः—परित्यक्तान्यसकलव्यापारस्य तदध्यवसायता, योषामुखकक्षोपस्थानान्तरेष्ववितृप्ततया प्रक्षिप्य प्रजननं महतीं वेलां निश्चलो मृत इवास्ते, चटक इव चटकायां मुहुर्मुहुर्योषायामारोहति, जातबलक्षयश्च कामवृद्धिकारीण्यौषधानि वा करोति, एष सर्वोऽपि तीव्ररागः। श्रावको हि पापभीरुतया ब्रह्मचर्यं चिकीर्षुरपि वेदोदयासहिष्णुतया स्वदारसन्तोषादि प्रतिपद्यते। मैथुनमात्रेण वेदोपशान्तिसम्भवादधिकं कामविस्तारं स्वयोषायामप्यनङ्गक्रीडातीव्ररागादिकं सर्वं परिहरति, नहि तत्करणे कश्चिद्गुणः प्रत्युत बलक्षयाद्यनर्थः। यतः—"कम्पः स्वेदः श्रमो मूर्च्छा भ्रमिर्ग्लानि-

शैलक्षयः । राजयक्ष्मादयश्चापि कामात्यासक्तिजा रुजः ॥ १ ॥" इति । प्रतिषिद्धाचरणाद्भङ्गो नियमाबाधाच्चाभङ्ग इत्येतावतिचारौ । अन्ये त्वन्यथातिचारद्वयमपि भावयन्ति–स हि स्वदारसन्तोषी मैथुनमेव मया प्रत्याख्यातमिति स्वकल्पनया वेश्यादौ तत् परिहरति नालिङ्गनादि, परदारविवर्जकोऽपि परदारेषु मैथुनं परिहरति नालिङ्गनादि, इति कथञ्चिद्व्रतसापेक्षत्वादतिचारौ ॥ एवं स्वदारसन्तोषिणः पञ्चातिचाराः परदारवर्जकस्य तूत्तरे त्रय एवेति स्थितम् । एवं स्त्रिया अपि स्वपुरुषसन्तोषस्यैव भावात्त्रय एवातिचाराः भवन्ति, यद्वाऽनाभोगादिना परपुरुषं ब्रह्मचारिणं स्वपतिं वाऽभिसरन्त्याः प्रथमोऽतिचारः । यदा तु स्वपतिर्वारकदिने सपत्न्या परिगृहीतो भवति तदा सपत्नीवारकं विलुप्य तं भुञ्जानाया द्वितीयोऽप्यतिचारः । एवं योषितोऽपि पञ्चातिचारा भवन्ति । अन्ये तु अन्यथा भावयन्ति, यथा–"परदारवज्जिणो पंच हुन्ति तिन्नि उ सदारसन्तुट्ठे । इत्थीइ तिन्नि पंच व भंगविगप्पेहिं नायव्वा ॥ १ ॥" अत्र परदारवर्जिनः पञ्च स्वदारसन्तोषिणस्तु त्रय उक्ताः । यद्वा स्वदारसन्तोषिणोऽप्यत्रैवं पञ्च भाव्यन्ते–स्वयं भाटीप्रदानादित्वरकालं स्वीकृतायां वेश्यायां स्वदारबुद्ध्या गमनमित्वरात्तगमनं, तथा च सति स्वदारसन्तोषिणोऽपि द्वितीयोऽतिचारः, अनाभोगादिना अतिक्रमादिना वा प्रथमोऽप्यतिचार इति पञ्चातिचाराः स्वदारसन्तोषिणोऽपि भवन्ति । तदुक्तम्–"सदारसंतोसिस्स इमे पंच अइआरा जाणिअव्वा न समायरिअव्वा" इति ॥

धनधान्यप्रमाणातिक्रमक्षेत्रवास्तुप्रमाणातिक्रमरूप्यसुवर्णप्रमाणातिक्रमकुप्यप्रमाणातिक्रमद्विपदचतुष्पदप्रमाणातिक्रमरूपाः पञ्चमेऽणुव्रते पञ्चातिचारा भवन्ति । तत्र धनधान्यस्य स्वीकृतप्रमाणात् कलान्तरादिनाधिकीभूतस्याधमर्णादिभिः देयस्याग्रेतनधनधान्यविक्रयं यावत्तद्गृहे एव स्थापनेन समर्घलभ्यस्य च सत्यङ्कारादिना स्वीकारेण स्थूलमूढकादिबन्धनेन वा

धनधान्यप्रमाणातिक्रमाभिधः प्रथमोऽतिचारः ॥ तथा क्षेत्रं–धान्योत्पत्तिस्थानं, तच्च सेतुकेतुतदुभयात्मकं त्रिधा भवति । तत्रारघट्टादिजलनिष्पाद्यधान्यं सेतुक्षेत्रमुच्यते । मेघजलनिष्पाद्यधान्यं केतुक्षेत्रम् । उभयजलनिष्पाद्यसस्यमुभयक्षेत्रम् । वास्तु–गृहग्रामादि, तत्र गृहं त्रिधा–खातोच्छ्रितखातोच्छ्रितभेदात् । तत्र खातं भूमिगृहादि, उच्छ्रितं प्रासादादि, खातोच्छ्रितं भूमिगृहस्योपरि गृहादिसन्निवेशः । तयोः क्षेत्रवस्तुनोरेकादिपरिमाणे कृतेऽधिकाभिलाषादासन्नक्षेत्रं गृहं वा गृहीत्वा व्रतस्य भङ्गभयात् पूर्वेण सहैकत्वकरणार्थं वृत्तिभित्त्याद्यपनयने क्षेत्रवास्तुप्रमाणातिक्रमो द्वितीयोऽतिचारः ॥ तथा रूप्यं रजतं घटितमघटितं चानेकप्रकारं भाजनादि । एवं सुवर्णमपि वाच्यम् । रूप्यं च सुवर्णं च रूप्यसुवर्णे, तयोः कृतप्रमाणादधिके पुत्रीपुत्रादिभ्यः प्रदानेन रूप्यसुवर्णप्रमाणातिक्रमरूपस्तृतीयोऽतिचारः ॥ तथा कुप्यं–रूप्यसुवर्णव्यतिरिक्तं कांस्यलोहताम्रत्रपुपित्तलसीसकमृद्भाण्डवंशकाष्ठहलशकटशस्त्रमञ्चकमञ्चिकामसूरकादिगृहोपस्कररूपं, तस्य संख्यादिप्रमाणाधिक्ये स्थालकच्चोलकादीनां नियमितसंख्याकरणार्थं स्थूलत्वादिविधापनेन कुप्यप्रमाणातिक्रमरूपश्चतुर्थोऽतिचारः ॥ तथा द्विपदं पत्नीकर्म्मकरकर्मकरीप्रभृति हंसमयूरकुर्कुटशुकसारिकाचकोरपारापतप्रभृति च चतुष्पदं गोमहिष्योष्ट्राजैडकाश्वाश्वतरघोटकगर्दभगजा इति दशविधः । तदुक्तम्–"गावी महिसी उट्टी अय एलग आस आसतरगा य । घोडग गद्दह हत्थी चउप्पयं होइ दसहा उ ॥ १ ॥" द्विपदचतुष्पदयोः गर्भस्य बहिरदृश्यत्वादगणने द्विपदचतुष्पदप्रमाणातिक्रमरूपः पञ्चमोऽतिचारः । यद्वा धनधान्यक्षेत्रवास्तुरूप्यसुवर्णकुप्यद्विपदचतुष्पदानां चातुर्मासिकादिनियमसमाप्त्याद्यवसरेऽहमेतल्लास्याम्यतो नान्यस्य देयमित्युक्त्या परनिश्रया स्थापनादिनातिचारा भाव्याः ॥ विवेकिना श्रावकेणावश्यमेव प्रथमतः मुख्य-

वृत्त्या धनधान्यादिनवविधपरिग्रहस्य कियत्संक्षेपणरूपं परिमाणं कर्त्तव्यम् । तदशक्ताविच्छापरिमाणं नियमेन विधेयम्, तन्नियमस्य यथा स्वाभिप्रायं प्रतिपत्तिसंभवेन सर्वेषां सुकरत्वात् । यतः—"अक्षज्ञानविवेकनिर्मलधियः कुर्वन्त्यहो दुष्करं, यन्मुञ्चन्त्युपभोगभाञ्ज्यपि धनान्येकान्ततो निःस्पृहाः । न प्राप्तानि पुरा न सम्प्रति न च प्राप्तौ दृढप्रत्ययो, वाञ्छामात्रपरिग्रहाण्यपि परं त्यक्तुं न तानि क्षमाः ॥ १ ॥" ये त्वेतादृशपरिमाणं न कुर्वन्ति ते गृहे सुखेन निर्वाहेऽपि भूरितरधनार्जनाशयाऽनेकक्लेशान्निरन्तरमनुभवन्तो दृश्यन्ते, तदुक्तम्—"ये दुर्गामटवीमटन्ति विकटं क्रामन्ति देशान्तरम्, गाहन्ते गहनं समुद्रमतनुक्लेशां कृषिं कुर्वते । सेवन्ते कृपणं पतिं गजघटासंघट्टदुःसंचरम्, सर्पन्ति प्रसभं धनान्धितधियस्तल्लोभविस्फूर्जितम् ॥ १ ॥ नीचस्यापि चिरं चटूनि रचयन्त्यायान्ति नीचैर्नतिं, शत्रोरप्यगुणात्मनोऽपि विदधत्युच्चैर्गुणोत्कीर्त्तनम् । निर्वेदं न विदन्ति किञ्चिदकृतज्ञस्यापि सेवाकृते, कष्टं किं न मनस्विनोऽपि मनुजाः कुर्वन्ति वित्तार्थिनः ॥ २ ॥" एवमभिलषितधनसत्त्वेऽपि तद्रक्षाप्रतिष्ठाप्राप्त्यभीष्टस्त्रीसंयोगकामितकामभोगाद्याशया तत्प्राप्तावपि पुत्राद्युत्पत्त्याशया तदुत्पत्तावपि तज्जीवनसद्गुणाध्यारोपणप्रतिष्ठाप्रापणसुकन्यापाणिग्रहणतत्पुत्रसन्तत्याद्याशया तद्भावेऽप्यधिकाधिकाधिपत्याद्याशया च प्राक्कृतसुकृतैरभिमतसर्वाङ्गीणसंयोगसुखे लब्धेऽपि तद्वियोगरोगजरामरणादिचिन्तयार्त्ताः इच्छावन्तः सर्वदा दुःखिन एव भवन्ति । तदुक्तम्—"ईप्सितधनाप्तिरक्षाप्रतिष्ठितस्त्रीसुताधिपत्यादिम् । स्वस्य सुतादेश्चेच्छुः सुखनिर्वाहेऽपि नैव सुखी ॥१॥" चक्रवर्त्यादीनामपि भूरितरधनवत्त्वेऽपि स्वल्पमेव तेषां स्वभोग्यं शेषं तु परोपभोग्यमेव, केवलं चिन्ताद्याकुलत्वात्तुच्छमूर्च्छादिनात्रामुत्रापि दुःखहेतुः । तदुक्तम्—"गोशतादपि गोः क्षीरं मानं मूढशतादपि । मन्दिरे मञ्चकस्थानं शेषः परपरिग्रहः ॥ १ ॥ द्वे वाससी प्रवरयोषिदपायशुद्धा, शय्यासनं करिवरस्तुरगो रथो वा । काले

भिषग्नियमिताशनपानमात्राः, राज्ञः पारक्यमिव सर्वमवेहि शेषम् ॥१॥" इति । यथा यथा लोभो हीयते तथा तथा सुखं वर्द्धते । तदुक्तम्—"जह २ अप्पो लोहो जह २ अप्पो परिग्गहारंभो । तह २ सुहं पवड्ढइ धम्मस्स य होइ संसिद्धी ॥ १ ॥" तस्मादिच्छाप्रसरं निरुध्य सन्तोषपोषायैव यतितव्यं, सुखस्य सन्तोषमूलत्वात् । भणितं च—"आरोग्गसारिअं माणुसत्तणं सच्चसारिओ धम्मो। विज्जा निच्छयसारा सुहाइं संतोससाराइं ॥ १ ॥ यदि यत्रैव तत्रैव यथैव च तथैव च। रतिं त्वं चित्त ! बध्नासि नासि सुखस्य भाजनम् ॥१॥" ततः सन्तोषसेतुबन्धेन लोभाम्भोनिधिमुद्वेलतया प्रसरन्तं विनिवार्य स्वीकार्यमेतद्व्रतं यथाशक्ति सम्यक् प्रतिपाल्यं च, प्रत्यहं तत्संक्षेपणादिना पुनः पुनः स्वनियमस्मरणं यथाऽवसरसंभवं कर्त्तव्यम् । यदि स्वीकृतपरिमाणादधिकं धनादिकं जायते तदा तत्सर्वं धर्मव्यये एव नियोज्यम्, न व्यवसायभागादौ, एवं च कृते न कश्चिदेतद्व्रतस्यातिचार इति ॥ उक्ताः पञ्चाणुव्रतानां पञ्चविंशतिरतिचाराः ।

अथ गुणव्रतानामुच्यन्ते । तत्र प्रथमगुणव्रतस्य दिक्परिमाणस्य पञ्चातिचाराः भवन्ति। तत्र स्मृत्यन्तर्धानाभिधानातिचारः। स्मृतेर्योजनशतादिरूपाया दिक्परिमाणविषयाया अतिव्याकुलत्वप्रमादित्वमत्यपाटवत्वादिनाऽन्तर्धानं भ्रंशः । तथाहि—केनचित् पुरुषेण पूर्वस्यां दिशि योजनशतरूपं दिक्परिमाणं कृतमासीत्, गमनकाले च स्पष्टतया न स्मरति, किं शतयोजनं रक्षितमुत पञ्चाशद्योजनम्। तस्य पञ्चाशद्योजनातिक्रामतोऽतिचारः । शतयोजनमतिक्रामतो भङ्गः, सापेक्षत्वात् निरपेक्षत्वाच्चेति प्रथमोऽतिचारः ॥ एवमूर्ध्वाधस्तिर्यग्दिक्ष्वपि अन्ये त्रयोऽतिचाराज्ञेयाः । तासु यो भागो नियमितस्तद्भागलङ्घनमनाभोगादिनातिक्रमादिना वा कुर्वत एते अतिचारा भवन्ति, अन्यथा तु भङ्ग एव । यस्तु न करोमि न कारयामीति वा नियमं

करोति स विवक्षितक्षेत्रात् परतः स्वयं गमनेन परतो वा नयनानयनाभ्यां दिक्परिमाणातिक्रमं परिहरति, तदन्यस्य तु तथा-
विधप्रत्याख्यानाभावात् परेण नयनानयनयोर्न दोष इत्युक्तास्त्रयोऽतिचाराः। एवं गताश्चत्वारोऽतिचाराः॥ तथा क्षेत्रवृद्धिः—
यथा केनापि पूर्वापरदिशोः प्रत्येकं योजनशतं गमनपरिमाणं रक्षितमुत्पन्ने च प्रयोजने एकस्यां दिशि तु नवतिं योजनानि
व्यवस्थाप्यान्यस्यां दिशि तु दशोत्तरशतं स्वकल्पनया करोति, शतद्वययोजनस्याव्याहतत्वाददतिचारः। यदि वाऽनाभो-
गात् क्षेत्रमतिक्रान्तं ज्ञातं चेत् तदैव निवर्तितव्यम्, नाग्रे गन्तव्यम्, अन्योऽपि न प्रेषणीयः। अथानाज्ञया कोऽपि गतो
भवेत् तदा यत् तेन लब्धं स्वयं वा विस्मृतितो गतेन लब्धं तत्परिहर्त्तव्यम्। उक्ताः प्रथमगुणव्रतस्यातिचाराः॥

अथ द्वितीयगुणव्रतस्यातिचारा उच्यन्ते। अनाभोगादिनातिक्रमादिना वा कृतसचित्तपरिहारकस्य कृतसचित्तपरि-
माणस्य वा निवृत्तिविषयीकृतसचित्तलवणादिभक्षणप्रवृत्तौ प्रथमः सचित्तातिचारः॥ सचेतनवृक्षादिना सम्बद्धो गुन्दादीन्
पक्काम्रफलानि वा सचित्तान्तर्बीजं पक्वखर्जूरादिफलं सचित्ताहारवर्जकस्य कृतसचित्ताहारपरिमाणस्य वानाभोगादिना भक्षयतः
सावद्याहारप्रवृत्तत्वात् सचित्तप्रतिबद्धाभिधो द्वितीयोऽतिचारः, यद्वा बीजं सचेतनत्वात्त्यक्ष्यामि कटाहं तु भक्षयिष्यामि तस्या-
चेतनत्वादिति बुद्ध्या पक्वराजादन्यादिफलं मुखे प्रक्षिपतः सचित्तवर्जकस्य सचित्तप्रतिबद्धाहाराभिधो द्वितीयोऽतिचारः॥
तथा सचित्ततिलमिश्रयवधानादिरूपमाहारमाहरयतोऽर्द्धपरिणतजलादिकं पीवतश्च यद्वा संभवत्सचित्तावयवस्यापक्वकणिकादेः
पिष्टत्वादिनाऽचेतनमिति बुद्ध्या भक्षयतः सचित्तमिश्राहाररूपस्तृतीयोऽतिचारः॥ तथाऽभिषवः सुरासौवीरकादिर्मांसप्रका-
रखण्डादिर्वा सुरामध्वाद्यभिस्यन्दिवृष्यद्रव्योपयोगो वाऽयमपि सावद्याहारवर्जकस्यानाभोगादिनाऽभिषवाभिधश्चतुर्थोऽति-

चारः ॥ तथाऽर्धस्विन्नपृथुकतन्दुलयवगोधूमस्थूलमण्डककङ्कुकफलादिरैहिकप्रत्यवायकारी यावता चांशेन सचेतनस्तावता तमुपहन्ति, पृथुकादेर्दुष्पक्कतया संभवत्सचेतनावयवत्वात्, पक्कत्वेनाचेतन इति बुद्ध्या भुञ्जानस्य दुष्पक्काभिधानः पञ्चमोऽतिचारः ॥ श्राद्धप्रतिक्रमणसूत्रे त्वपक्काहारं तुच्छौषधिभक्षणं चातिचारत्वेनोक्तं, एवं च तत्सूत्रम्—"सच्चित्ते पडिबद्धे अप्पोलिदुप्पोलिअं च आहारे । तुच्छोसहिभक्खणया पडिक्कमे देसिअं सव्वं ॥१॥" इति । कलिकालसर्वज्ञश्रीमद्धेमचन्द्रसूरिपादास्तु—"केचित् त्वपक्काहारमप्यतिचारत्वेन वर्णयन्ति । अपक्कं चाग्न्यादिना यदसंस्कृतम् । एष च सचित्ताहारे प्रथमातिचारेऽन्तर्भवति । तुच्छौषधिभक्षणमपि केचिदतिचारमाहुः । तुच्छौषधयश्च मुद्गादिकोमलशिम्बारूपास्ताश्च यदि सचित्तास्तदा सचित्तातिचार एवान्तर्भवन्ति, अथाऽग्निपक्कादिना अचित्तास्तर्हि को दोषः ?" इति । श्राद्धप्रतिक्रमणसूत्रवृत्तौ तु "आह—ननु यद्येताः सचेतनास्तर्हि तद्भक्षणं प्रथमातिचारान्न विशिष्यते, अथाचेतनास्तर्हि का नामातिचारता ? सत्यं, किन्तु योऽत्यन्तसावद्यभीरुतया सचित्तं प्रत्याख्याति तेनाचित्ता अप्येता न भक्षणीयाः, लौल्यमात्रनिमित्तत्वात्, नहि बहूनामपि तासां भक्षणे विशिष्य कापि तृप्तिरुपजायते, विराधना च महती, अत एव द्वाविंशत्यभक्ष्यमध्ये तुच्छफलशब्देनैता अपि प्राग्व्याख्यातास्तस्मादेतासां भक्षणे वस्तुत एतद्व्रतविराधनारूपोऽतिचारः" इति । एवमुपलक्षणत्वाद्रात्रिभोजनमद्यमांसादिपरिहारमचित्तवस्त्रादिपरिमाणनैयत्यं चाश्रित्यानाभोगादिनातिक्रमादिना वा स्वधिया स्वयमभ्यूह्याः । एते भोजनाश्रिताः पञ्चातिचाराः भोगोपभोगपरिमाणगता ज्ञातव्याः ॥

खरकर्माश्रित्य पञ्चदशातिचाराः ज्ञातव्या भवन्ति । तत्र खरं कठोरं प्राणिबाधकं कोट्टपालनगुप्तिपालनादिरूपं यत्कर्म तत्खरकर्म । ननु भोगोपभोगव्रते कर्माश्रित्यातिचाराः कथमुच्यन्ते इति चेत् ? कारणे कार्योपचारात् । तथाहि—भोगो-

पभोगसाधनं यद्द्रव्यं तदुपार्जनाय यत्कर्म—व्यापारस्तदपि भोगोपभोगशब्देनोच्यमानो न विरुध्यत इति। ते चामी—अङ्गारजीविका वनजीविका शकटकर्म भाटककर्म स्फोटककर्म दन्तवाणिज्यं लाक्षावाणिज्यं रसवाणिज्यं केशवाणिज्यं विषवाणिज्यं यन्त्रपीलनकर्म निर्लाञ्छनकर्मासतीपोषणं दवदानं सरःशोषणमिति । तत्राङ्गारकर्म—काष्ठदाहेन नव्याङ्गारकरणमेवं भ्राष्ट्रकरणेष्टकादिपाककुम्भकारलोहकारसुवर्णकारकृत्यान्यप्यङ्गारकर्म, तेन यज्जीवनं तदङ्गारजीविकैवमग्रेऽपि भावनीयम् ॥ छिन्नाछिन्नवनपत्रपुष्पफलकन्दमूलतृणकाष्ठकम्बावंशादिविक्रयो वनकर्त्तनादिकरणं कणपेषणं च वनकर्म ॥ शकटशकटाङ्गघटनखेटनविक्रयादि शाकटिककर्म ॥ शकटवृषभकरभमहिषखरवेसराश्वादेर्भाटकग्रहणेन भारवाहनं भाटककर्म ॥ कूपाद्यर्थं भूखननहलखेटनपाषाणखननादि स्फोटकर्म। प्रतिक्रमणसूत्रवृत्तौ तु कणानां दलनपेषणादिस्फोटकर्मत्वेन प्रतिपादितम् ॥ तथाऽऽकरे दन्तिदन्तघुकादिनखहंसादिरोमचर्मचमरशृङ्गशङ्खशुक्तिकस्तूरिकादिवाणिज्यार्थं त्रसाङ्गग्रहणं दन्तवाणिज्यम्। अनाकरे तु दन्तादीनां ग्रहणे विक्रये वा न दन्तवाणिज्यरूपो दोषः ॥ लाक्षाधातकीनीलीमनःशिलाहरितालवज्रलेपतुवरिपटवासटङ्कणसावूक्षारादिविक्रयो लाक्षावाणिज्यम् ॥ मधुमद्यमांसम्रक्षणदुग्धदधिघृततैलादिविक्रयो रसवाणिज्यम् ॥ दासादिनृणां गवाश्वादितिरश्चां च विक्रयः केशवाणिज्यम् ॥ विषशस्त्रकुशीकुद्दालादिलोहहलादिविक्रयो विषवाणिज्यम् ॥ शिलोदूखलमुशलघरट्टारहट्टटङ्कनादिविक्रयस्तिलेक्षुसर्षपैरण्डफलालस्यादिपीडनदलनतैलविधानजलयन्त्रवाहनादिना यन्त्रपीडनकर्म। योगशास्त्रे अरघट्टादियन्त्रविक्रयोऽपि विषवाणिज्यतयोक्तः ॥ तथा गोमहिषादीनां नासावेधः, गव्यश्वादीनामङ्ककरणं वर्धितकीकरणं च, करभादीनां पृष्टगालनं, गवां कर्णकर्तनम्, एतेषु जन्तुबाधा

सुव्यक्तैवेति निर्लाञ्छनकर्म ॥ सारिकाशुकमार्जाराश्वकुर्कुटकलापिनां दास्याश्च वित्तार्थं पोषणमसंयतीपोषणमिति ॥ तथा तृणादिदहननिमित्तं चित्रभानोः दानं दवदानं । तच्च व्यसनात् वनचराणामिव, पुण्यबुद्ध्या वा यथा–'दवा मे देयाः मरणकाले इयन्तो मम श्रेयोऽर्थं धर्मदीपोत्सवाः करणीयाः,' अथवा तृणदाहे सति नवतृणाङ्कुरोद्भेदात् गावश्चरन्तीति, क्षेत्रे वा सस्यसम्पत्तिवृद्ध्यर्थमग्निप्रज्वालनम्, अत्रानेकजीवानां वध इति दवकर्म ॥ तथा सरसः शोषः सरःशोषः, सरोग्रहणमुपलक्षणं, तेन सर्वेषां जलाशयानां सिन्धुह्रदतडागवापीकूपादीनां जलादिशोषणं सरःशोषणकर्म उच्यते । ततो धान्यवपनार्थं सारणीकर्मणि न सरःशोषदोष इत्युक्तानि पञ्चदश कर्मादानानि । दिङ्मात्रमेतत्, तेनैवंविधान्यन्यान्यपि बहूनि सावद्यकर्माणि सन्ति, नास्ति पुनस्तेषां परिगणनमिति । अनाभोगादिनाङ्गारकर्मादयः क्रियमाणा अतिचारा उपेत्य क्रियमाणास्तु भङ्गा एवेति कलिकालसर्वज्ञहेमचन्द्रसूरिपादाः । स्मृत्यन्तर्धानादयो यथासंभवं सर्वव्रतेष्वतिचारा द्रष्टव्याः । उक्ता भोगोपभोगव्रतस्य विंशतिसंख्याका अतिचाराः ॥

अथानर्थदण्डविरतिव्रतस्य पञ्चातिचारा भवन्ति, तद्यथा–संयुक्ताधिकरणत्वोपभोगातिरिक्तत्वमौखर्यकौत्कुच्यकन्दर्परूपा इति । तत्राधिक्रियते दुर्गतावात्माऽनेनेत्यधिकरणमुदूखलादि, तत्संयुक्तं–उदूखलेन मुशलं हलेन फालः शकटेन युगं धनुषा शराः, एवमेकैकमधिकरणमधिकरणान्तरसंयुक्तं संयुक्ताधिकरणं, तस्य भावस्तत्त्वम् । इह च श्रावकेण संयुक्ताधिकरणं न करणीयम् । करणे च कश्चित् संयुक्तमधिकरणमाददीत । वियुक्तकरणतायां तु सुखेन परः प्रतिषेधयितुं शक्यते । एतच्च हिंस्रप्रदानरूपस्यानर्थदण्डस्य प्रथमोऽतिचारः ॥ तथोक्तरूपस्योपभोगस्यातिरिक्तत्वमतिरेकः–सा उपभोगा-

तिरिक्तता । अयं प्रमादाचरितस्यातिचारः । इह स्नानपानभोजनचन्दनकुङ्कुमकस्तूरिकावस्त्राभरणादीनामतिरिक्तानामा-
रम्भोऽनर्थदण्डः । अत्रापि वृद्धसम्प्रदायः—स्नानार्थं तडागादिषु गन्तुकामः श्राद्धः यदि अतिरिक्तानि वहूनि तैलामलका-
नि गृह्णाति तदा तल्लौल्येनान्ये वहवः तडागादौ स्नानार्थं गच्छन्ति । ततश्च पूतरकाप्कायादिवधोऽधिकः स्यात्, न
चैवं कल्पते, ततः को विधिः—स्नानेच्छुना श्रावकेण मुख्यवृत्त्या स्वगृह एव स्नातव्यम्, तदभावे तु स्वगृह एव तैलाम-
लकैः शिरो घर्षित्वा तानि सर्वाणि शाटयित्वा तडागादीनां तटे निविष्टोऽञ्जलिभिः स्नाति । तथा येषु पुष्पादिषु संसक्तिः
सम्भवति तानि सर्वाणि परिहरति, एवं सर्वत्र वाच्यमिति द्वितीयोऽतिचारः ॥ तथा मुखमस्यास्तीति मुखरोऽनालोचित-
भाषी—वाचाटः तस्य भावो मौखर्य्यं—धार्ष्ट्यप्रायमसभ्यासम्बद्धवहुप्रलापित्वम्, अयं च पापोपदेशस्यातिचारः, मौखर्य्ये
सति पापोपदेशस्य सम्भवादिति तृतीयः ॥ तथा कुदिति कुत्सायां निपातः कुत्—कुत्सितं, कुचति—भ्रूनयनौष्ठनासाकरचरण-
मुखविकारैः सङ्कुचतीति कुत्कुचः तस्य भावः कौत्कुच्यम्, अनेकप्रकारा भाण्डविडम्बनप्रकारा इत्यर्थः । अथवा कौकुच्या-
मिति पाठे कुत्सितः कुचः कुकुचः संकोचादिक्रियाभाक् तद्भावः कौकुच्यम्, अत्र येन परः हसति स्वस्य वा लाघवमाप-
द्यते तादृशं वक्तुं चेष्टितुं वा न कल्पते प्रमादात्तथाचरणे चातिचार इति चतुर्थः॥ तथा कन्दर्पः कामस्तद्धेतुः तत्प्रधानो वा
वाक्प्रयोगोऽपि कन्दर्पः, इह च समाचारी—श्रावकेण न तादृशं वक्तव्यं येन स्वस्य परस्य वा कामोद्रेको भवतीति । अय-
मपि प्रमादात्तदाचरणेऽतिचार इति पञ्चमः ॥ उक्ता अनर्थदण्डविरतिव्रतस्य पञ्चातिचाराः । एवमुक्ता गुणव्रतातिचाराः ॥
अथ शिक्षाव्रतातिचारावसरस्तत्रापि प्रथमं सामायिकव्रतस्य पञ्चातिचारा उच्यन्ते, ते चामी—कायदुष्प्रणिधानं वाग्दु-

ष्प्रणिधानं मनोदुष्प्रणिधानमनादरः स्मृत्यनुपस्थापनं चेति । तत्र शरीरावयवानां पाणिपादादीनामनिभृततयावस्थापनं कायदुष्प्रणिधानम् । वर्णसंस्काराभावोऽर्थानवगमश्चापल्यं च वाग् दुष्प्रणिधानम् । क्रोधलोभद्रोहाभिमानेर्ष्यादयः कार्यव्यासङ्गसम्भ्रमश्च मनोदुष्प्रणिधानम् । तदुक्तम्—"अणविक्खिअपमज्जियथण्डिल्ले ठाणमाइ सेवंतो । हिंसाभावेवि न सो कडसामाइओ पमायाओ ॥ १ ॥ कडसामाइओ पुव्विं बुद्धीए पेहिऊण भासिज्जा । सइ निरवज्जं वयणं अन्नह सामाइयं न हवे ॥ २ ॥ सामाइयं तु काउं घरचिन्तं जो अ चिन्तए सड्ढो । अट्टवसट्टोवगओ निरत्थयं तस्स सामाइयं ॥ ३ ॥" इति मनोदुष्प्रणिधानादित्रयोऽतिचाराः ॥ तथाऽनादरोऽनुत्साहः—प्रतिनियतवेलायां सामायिकस्याकरणं यथाकथञ्चिद्वा करणं प्रबलप्रमादादिदोषात् करणानन्तरमेव वा पारणं च, यदाहुः—"काऊण तक्खणं चिअ पारेइ करेइ वा जहिच्छाए । अणवट्ठियसामाइयं अणायराओ न तं सुद्धं ॥ १ ॥" इति चतुर्थः ॥ तथा स्मृतौ—स्मरणे सामायिकस्यानुपस्थापनं स्मृत्यनुपस्थापनं—सामायिकं मया कर्त्तव्यं न वा, सामायिकं मया कृतं न कृतं वा, प्रबलप्रमादाद्यदा न स्मरति तदातिचारः, मोक्षसाधनानुष्ठानस्य स्मृतिमूलकत्वात् । तदुक्तम्—"न सरइ पमायजुत्तो जो सामाइयं कया य कायव्वं । कयमकयं वा तस्स हु कयं पि विहलं तयं नेयं ॥१॥" इति पञ्चमः ॥ नन्वत्र निष्फलत्वप्रतिपादनेन कायदुष्प्रणिधानादौ सामायिकस्याभाव एव प्रतिपादितः, तत एते भङ्गरूपा एव नातिचाराः, तेषां मनाग्मालिन्यरूपत्वादिति चेत् ? न, अनाभोगतोऽतिचाररूपत्वात्तेषाम् । ननु द्विविधं त्रिविधेन सावद्ययोगप्रत्याख्यानं सामायिकं, कायदुष्प्रणिधानादौ प्रत्याख्यानभङ्गात् सामायिकाभाव एव, तद्भङ्गजनितं च प्रायश्चित्तं विधेयं स्यात्, मनोदुष्प्रणिधानं चाशक्यपरिहारं मनसोऽनवस्थितत्वादतः सामायिकप्रतिपत्तेः सकाशात्तदप्रतिपत्तिरेव श्रेयसी, तदुक्तम्—"अविधिकृताद्वरमकृतमिति" चेत् ?

नैवम्, यतः सामायिकं द्विविधं त्रिविधेन प्रतिपन्नम्, तत्र च मनसा वाचा कायेन सावद्यं न करोमि न कारयामीति षट् प्रत्याख्यानानि, एष्वेकतरप्रत्याख्यानभङ्गेऽपि शेषसद्भावान्मिथ्यादुष्कृतेन मनोदुष्प्रणिधानमात्रशुद्धेश्च सद्भावात् न सामायिकस्यात्यन्ताभावः। सर्वविरतिसामायिकेऽपि च तथाभ्युपगतम्, यतो गुप्तिभङ्गे मिथ्यादुष्कृतं प्रायश्चित्तमुक्तम्। किञ्च सातिचारादप्यनुष्ठानादभ्यासतः कालेन निरतिचारमनुष्ठानं भवति। तदुक्तमन्यैरपि—"अभ्यासो हि कर्मणां कौशलमावहति, न हि सकृन्निपातमात्रेणोदबिन्दुरपि ग्रावणि निम्नतामादधाति"॥ किञ्चाविधिकृतादकृतं वरमिति न युक्तम्, असूयावचनत्वादस्य, तदुक्तम्—'अविहिकया वरमकयं असूयवयणं भणंति समयन्नू। पायच्छित्तं जम्हा अकए गुरुअं कए लहुअं॥१॥" केचित्तु सामायिकं पौषधशालायामेकाकिनैव कर्त्तव्यं, न वहुभिः, 'एगे अबीए' इति वचनप्रामाण्यादित्याहुः, नायमेकान्तो वचनान्तरस्यापि श्रवणात्। व्यवहारभाष्येऽप्युक्तम्—"रायसुयाइ पञ्च वि पोसहसालाइ संमिआ" इति कृतं प्रसङ्गेन। एवमुक्ताः सामायिकव्रतस्य पञ्चातिचाराः॥

दिग्व्रतविशेष एव देशावकाशिकव्रतम्। इयांस्तु विशेषः—दिग्व्रतं यावज्जीवं संवत्सरं चातुर्मासिकपरिमाणं वा, देशावकाशिकं तु दिवसप्रहरमुहूर्त्तादिपरिमाणं भवति, तस्य च पञ्चातिचाराः, तद्यथा—प्रेष्यप्रयोगानयने पुद्गलक्षेपणं शब्दरूपानुपातौ चेति। तत्र प्रेष्यस्य दासादेः स्वाभिग्रहितक्षेत्रात् वहिः व्यापारणं प्रेष्यप्रयोगः, स्वयं गमने हि व्रतभङ्गः स्यादिति बुद्ध्या प्रेष्यप्रयोगः। गमनागमनादिव्यापारजनितप्राण्युपमर्दो मा भूदिति बुद्ध्या देशावकाशिकव्रतस्य ग्रहणं करोति। स तु स्वयमकृतोऽन्येन कारित इति न कश्चित् फले विशेषः। प्रत्युत स्वयं गमने ईर्यापथविशुद्धेर्गुणः परस्य पुनरनिपुणत्वेनेर्यासमित्यभावे दोष इति प्रथमोऽतिचारः॥ तथा विवक्षितक्षेत्रात् वहिः स्थितस्य सचित्तादिद्रव्यजातस्य दासादिना विवक्षितक्षेत्रे

आनयनं द्वितीयः, स्वयं गमने व्रतभङ्गः । परेण त्वानयने न व्रतभङ्ग इति बुध्या प्रेष्येणानयनमित्यतिचारः ॥ तथा विवक्षितदेशावग्रहे सति कार्यार्थी परतो गमननिषेधात् परेषां बोधाय लोष्ठादीन् प्रतिक्षिपति तदा लोष्ठादिपातसमनन्तरमेव ते तत्समीपमनुधावन्ति, ततश्च तान् व्यापारयतः स्वयमनुपमर्दकस्य पुद्गलप्रक्षेपरूपस्तृतीयोऽतिचारो भवति ॥ तथा कृतस्वगृहादिवर्त्तिप्राकारादिव्यवच्छिन्नभूप्रदेशाभिग्रहः समुत्पन्ने प्रयोजने स्वयं तत्रागमनात् वर्त्तिप्राकारादिनिकटीभूय तथा कासितादि शब्दं करोति यथाऽऽह्वानीयः तच्छ्रुत्वा शीघ्रं तत्समीपमागच्छतीति शब्दानुपाताभिधश्च चतुर्थोऽतिचारः ॥ एवं समुत्पन्ने प्रयोजने शब्दमनुच्चारयन् आह्वयनीयानां दृष्टौ स्वीयं रूपमनुपातयति, तद्दर्शनाच्च ते तत्समीपमागच्छन्तीति रूपानुपाताभिधः पञ्चमोऽतिचारः ॥ अत्रायमाशयः–विवक्षितक्षेत्रात् बहिःस्थितं कञ्चन नरं व्रतभङ्गभयादाह्वातुमशक्नुवन् यदा स्वकीयशब्दश्रवणरूपदर्शनव्याजेन तमाकारयति तदा व्रतसापेक्षत्वाच्छब्दानुपातिरूपानुपाती अतिचारौ भवतः । आद्यातिचारद्वयमव्युत्पन्नबुद्धित्वेन सहसाकारादिना वा अन्त्यत्रयं तु मायावितयाऽतिचारतां याति । अत्र दिग्व्रतसंक्षेपकरणवत् व्रतान्तराणामपि संक्षेपकरणं देशावकाशिकव्रतमिति वृद्धाः । ननु दिग्व्रतकरणस्यैवातिचाराः सर्वत्रोक्ताः न व्रतान्तरसंक्षेपकरणस्य तत्कथं व्रतान्तरसंक्षेपकरणं देशावकाशिकमिति चेत् ? अत्रोच्यते–प्राणातिपातादिविरमणव्रतान्तरसंक्षेपकरणेषु ते एव बन्धवधादयोऽतिचाराः, दिग्व्रतसंक्षेपकरणे तु क्षेत्रस्य संक्षिप्तत्वात् प्रेष्यप्रयोगाद्यतिचाराणां भिन्नातिचारत्वसम्भवाच्च दिग्व्रतसंक्षेपकरणस्यैव देशावकाशिकत्वं साक्षादुक्तमिति ॥

अथ पौषधव्रतविषयकपञ्चातिचारा उच्यन्ते–तत्र पौषधव्रतिना स्थण्डिलादिकं चक्षुषाऽवेक्ष्य प्रमार्ज्य चोच्चारप्रस्रवण-

खेलसिंघाणकादीनामुत्सर्गः कार्यः । अथानवेक्ष्याप्रमृज्य चोत्सर्गं करोति तदा पौपधव्रतमतिचरतीति प्रथमोऽतिचारः ॥ तथा यष्टिपीठफलकादीनामवेक्ष्य प्रमार्ज्य च ग्रहणं मोक्षणं च व्रतिना कार्यम् । यदि तदनवेक्ष्याप्रमार्ज्य च ग्रहणं मोक्षणं च करोति तदा द्वितीयोऽतिचारः । तथा संस्तीर्यते यत् प्रतिपन्नपोपधव्रतेन दर्भकुशकम्बलिकादिवस्त्रं स संस्तारकः, स चावेक्ष्य प्रमार्ज्य च कर्त्तव्यः। अनवेक्ष्याप्रमार्ज्य करणे च तृतीयोऽतिचारः । इह चानवेक्षणेन दुरवेक्षणमप्रमार्जनेन च दुष्प्रमार्जनमपि द्रष्टव्यम्, कुत्सितार्थस्यापि नञो दर्शनात्, यथा न ब्राह्मणोऽब्राह्मणः । तदुक्तम्—"अप्पडिलेहिअदुप्पडिलेहिअसिज्जासंथारए, अप्पमज्जिअदुप्पमज्जिअसिज्जासंथारए, अप्पडिलेहिअदुप्पडिलेहिअउच्चारपासवणभूमीए, अप्पमज्जिअदुप्पमज्जिअउच्चारपासवणभूमीए" इति । तथाऽनादरः—पौपधव्रतप्रतिपत्तिकर्त्तव्यतायां चतुर्थोऽतिचारः ॥ तथा पौपधविषयकस्मृत्यनुपस्थापनमिति पञ्चमोऽतिचारः ॥ अयं च विधिः सर्वतः पौपधे न देशतः पौपध इत्युक्ताः पौपधव्रतविषयकपञ्चातिचाराः ॥

अथातिथिसंविभागव्रतविषयकपञ्चातिचारा उच्यन्ते—तत्र देयवस्तून्यदानबुद्ध्या सचित्तवस्तुनि निक्षिपति, जानाति चायं तुच्छमतिः यत् सचित्ते निक्षिप्तं मुनयो न गृह्णन्ति, देयं चोपस्थाप्यते, न चाददते साधवः, लाभोऽयं ममेति प्रथमोऽतिचारः ॥ तथाविधयैव बुद्ध्या सचित्तवस्तुना पिधत्ते इति द्वितीयोऽतिचारः ॥ तथा साधूनामुचितभिक्षाकालं लङ्घयित्वा अनागतं वा भुङ्क्ते पौपधव्रतीति तृतीयोऽतिचारः । तथा मार्गितः सन् कुप्यति, सदपि मार्गितं न ददाति, यद्वाऽनेन द्रमकेन मार्गितेन दत्तं किमहं ततोऽपि हीन इति मात्सर्याद्ददातीति चतुर्थोऽतिचारः ॥ तथाऽदेयबुद्ध्या गुडखण्डादिद्रव्यं परकीयमेतदिति व्यवहरति, देयबुद्ध्या तु परकीयमपि स्वकीयत्वेन व्यपदिशतीति पञ्चमोऽव्यपदेशाभि-

धोऽतिचारः ॥ सर्वत्रानाभोगादिनातिचरन्ति तदाऽतिचारा अन्यथा तु भङ्गा इत्युक्तानि द्वादश व्रतानि तदतिचाराश्च । तदुक्तौ चोक्तं देशविरतिचारित्रम् ॥

तथा विरतं विरतिः सावद्ययोगप्रत्याख्यानं, तन्न जानाति, नाभ्युपगच्छति, न तत्पालनाय यतते, इति त्रयाणां पदानामष्टौ भङ्गाः । तत्र प्रथमेषु चतुर्षु भङ्गेषु नियमात् मिथ्यादृष्टिरज्ञानित्वात् शेषेषु त्रिषु नियमात् सम्यग्दृष्टिः ज्ञानित्वादिति सप्तसु भङ्गेषु नास्य व्रतमस्तीत्यविरतः । अयं च संयममार्गणायां प्रतिपक्षत्वेन गृहीत इत्युक्ता सप्तधा संयममार्गणा ॥

अथ दर्शनमार्गणोच्यते । "दंसण"त्ति दृश्यते—विलोक्यते वस्त्वनेनेति दर्शनं, दृष्टिर्वा दर्शनं—सामान्यविशेषात्मके वस्तुनि सामान्यबोधो, यथा—वनमिदम् । दर्शनमिदमुपचारनयेन वाच्यम् । विशुद्धनयस्त्वेतदनाकारज्ञानस्वरूपं साकारबोधात्प्राग्भवदवश्यं स्वीकरोति, अन्यथा त्विदं किञ्चिदित्येवंरूपोऽव्यक्तबोधो न स्याद्, यद्यनाकारमन्तरेणापि साकारबोधस्यात्तदा समयमात्रेण चम्पकाशोकादिविशेषवित् स्यात् । तदुक्तं तत्त्वार्थवृत्तौ—औपचारिकनयश्च ज्ञानप्रकारमेव दर्शनमिच्छति, शुद्धनयः पुनरनाकारमेव दर्शनमाकारवच्च विज्ञानं, आकारश्च विशेषनिर्देशो भावस्य पर्यायतः प्रोक्तः, स च दर्शनसमनन्तरमेव संपद्यते, अन्तर्मुहूर्त्तकालभावित्वात्, आकारपरिज्ञानाच्च प्रागालोचनमवश्यमभ्युपेयम्, अन्यथा प्रथमत एवमपश्यतः किमितीदमिति कुतोऽव्यक्तबोधनं स्यात् ? यदि चालोचनमन्तरेणाकारपरिज्ञानोत्पाद एव पुंसः स्यात् तथा सत्येकसमयमात्रेण स्तम्भकुम्भादीन् विशेषान् गृह्णीयात्" इति । तच्चतुर्धा—चक्षुरचक्षुरवधिकेवलदर्शनभेदादिति । तत्र चक्षुषा दर्शनं सामान्यधर्मावबोधलक्षणं चक्षुर्दर्शनम् । चक्षुर्वर्जशेषेन्द्रियैः सामान्यधर्म्मावबोधलक्षणं दर्शनमचक्षुर्दर्शनम् । तदुक्तं तत्त्वार्थवृत्तौ—"चक्षुर्दर्शनमित्यादि—चक्षुषा दर्शनम्—उपलब्धिस्सामान्यार्थ-

ग्रहणं स्कन्धावारोपयोगवत्तदहर्जातदारकनयनोपलब्धिवद्वा व्युत्पन्नस्यापि, अचक्षुर्दर्शनं—शेषेन्द्रियैः श्रोत्रादिभिः सामान्यार्थग्रहण" मिति । अवधिज्ञानिनामवध्युपयोगे सामान्यावबोधनमवधिदर्शनमेवं विभङ्गेऽप्यवधिदर्शनमागमे स्वीकृतम्, न तु विभङ्गदर्शनं भिन्नमनाकारत्वाविशेषात् । कार्मग्रन्थिकास्तु—'यद्यपि साकारेतरभेदेन विभङ्गज्ञानावधिदर्शने पृथक् स्तः, तथापि मिथ्यारूपत्वेन विभङ्गात् न सम्यग्वस्तुनिश्चयः, अनाकाररूपत्वेनावधिदर्शनादपि न सम्यग्वस्तुनिश्चयः, ततः किं पृथग्विवक्षितेन दर्शनेनेति' वदन्ति । अत्र च विशदीकृतं श्रीमलयगिरिपादैः प्रज्ञापनावृत्तावेवम्—"अथ विभङ्गावस्थायामवधिदर्शनं कर्मप्रकृत्यादिषु प्रतिषिद्धं ततः कथमिह विभङ्गे तद्भाव्यते ? नैष दोषः, सूत्रे विभङ्गेऽप्यवधिदर्शनस्य प्रतिपादितत्वात्, तथाह्ययं सूत्राभिप्रायः—विशेषविषयं विभङ्गज्ञानं सामान्यविषयमवधिदर्शनं, यथा सम्यग्दृष्टेः विशेषविषयमवधिज्ञानं सामान्यविषयमवधिदर्शनमुच्यते, केवलं विभङ्गज्ञानिनोऽप्यवधिदर्शनं, अनाकारमात्रत्वेनाविशिष्टत्वात् अवधिज्ञानिनोऽवधिदर्शनतुल्यमिति तदप्यवधिदर्शनमुच्यते, न विभङ्गदर्शनमिति" । उक्तं च विशेषणवत्यां जिनभद्रगणिक्षमाश्रमणपूज्यपादैरपि—"सुत्ते विभंगस्स वि परूवियं ओहिदंसणं बहुसो । कीस पुणो पडिसिद्धं कम्मपयडीपगयंमि ॥ १ ॥ विभंगे वि दरिसणं सामण्णविसेसविसयओ सुत्ते । तं चऽविसिट्ठमणागारमेत्तं तोऽवहि विभंगाणं ॥ २ ॥ कम्मप्पयडीमयं पुण सागारेयरविसेसभावम्मि । न विभंगनाणदंसणविसेसणमणिच्छितत्तणओ ॥ ३ ॥" इति । तत्त्वार्थवृत्तिकृतापि विभङ्गज्ञानेऽवधिदर्शनं नाङ्गीकृतं, तथा च तद्ग्रन्थः—"अवधिदृगावरणक्षयोपशमाद्विशेषग्रहणविमुखमवधिदर्शनमित्युच्यते, नियमतस्तु तत्सम्यग्दृष्टिस्वामिक" मिति ॥ मनःपर्यवज्ञानमदर्शनं, तदुक्तम्—"मनःपर्यायज्ञानं मनोमात्रद्रव्यग्राहकमेवादर्शनपूर्वकं च, अवधिज्ञानं तु किञ्चिन्मनोव्यतिरिक्तद्रव्यग्राहकं किञ्चिच्चोभयग्राहकं दर्शनपूर्वकं च" इति । भूतभवद्भाविवस्तुसामान्यग्रा-

हकं केवलदर्शनमुच्यते। छद्मस्थानामादौ दर्शनं ततो ज्ञानं, केवलिनां त्वादौ ज्ञानं ततो दर्शनं, तदुक्तम्—"सव्वन्नूणं सव्वदरिसीणं" इति। चक्षुर्दर्शनिनः चक्षुर्दर्शनं जघन्येनान्तर्मुहूर्त्तं भवति, तथाहि—कश्चित्त्रीन्द्रियश्चतुरिन्द्रियादिपूत्पद्य तत्र चान्तर्मुहूर्त्तमुपित्वा भूयोऽपि त्रीन्द्रियादिषु मध्ये समुत्पद्यते इति। उत्कृष्टतस्तु सातिरेकं सागरोपमसहस्रं, तच्च चतुरिन्द्रियतिर्यक्पञ्चेन्द्रियनैरयिकादिभवभ्रमणेनावसातव्यम्। अचक्षुर्दर्शनिनरचक्षुर्दर्शनकालोऽनाद्यपर्यवसानोऽभव्यमाश्रित्य वाच्यः, भव्यमाश्रित्य त्वनादिसपर्यवसानो भवति। अवधिदर्शनस्य जघन्येन समयः, कश्चित्तिर्यङ्मनुष्यो वा तथाविधाध्यवसायादवधिदर्शनमुत्पाद्यानन्तरसमये यदि कालं करोति तदाऽवधिदर्शनं प्रतिपतति, तदाश्रित्य चावधिदर्शनस्य समयता भवति। उत्कृष्टश्चावधिदर्शनस्य सातिरेकद्विपट्षष्टिसागरोपमप्रमितः कालो भवति, तथाहि—कश्चित्तिर्यङ्मनुष्यो वा विभङ्गज्ञानी अप्रतिपतितविभङ्गज्ञान एवर्जुगत्या सप्तमपृथिव्यामुत्कृष्टस्थितिको नैरयिको जातस्तत्र चोद्वर्त्तनाप्रत्यासत्तिकाले सम्यक्त्वं प्रतिपद्यते, ततः पुनः परिभ्रष्टस्ततोऽप्रतिपतितविभङ्गाऽवक्रगत्या पूर्वकोट्यायुष्केषु पञ्चाक्षतिर्यक्षूत्पन्नः पुनः तत्राप्यप्रतिपतितविभङ्गो मृत्वोत्कृष्टस्थितिकनैरयिकेषु सप्तमपृथिव्यामृजुगत्योत्पन्नस्तत्र चोद्वर्तनाप्रत्यासत्तौ च सम्यक्त्वं प्राप्तः पुनः परिभ्रष्टश्च्युत्वा पूर्वकोट्यायुष्केषु पञ्चाक्षतिर्यक्ष्वप्रतिपतितविभङ्गोऽवक्रगत्योत्पन्नः, एवमेका पट्षष्टिः सागरोपमाणामभूत्। सर्वत्र च तिर्यक्षूत्पद्यमानोऽविग्रहेणोत्पद्यते, तिर्यङ्मनुजेषु विग्रहे विभङ्गस्य निषेधात्। तथा चोक्तम्—"विभंगनाणी पंचिंदियतिरिक्खजोणिया मणूसा आहरगा णो अणाहारगा" इति। नन्वपान्तराले सम्यक्त्वप्रतिपादनं कथं कृतमिति चेत्? उच्यते, उत्कृष्टतोऽपि विभङ्गस्य स्थितिः देशोनपूर्वकोट्यभ्यधिकत्रयस्त्रिंशत्सागरोप-

मप्रमिता भवति, तथा चोक्तं प्रज्ञापनायां—" विभंगणाणी जहन्नेणं एगं समयं उक्कोसेणं तेत्तीसं सागरोवमाइं देसूणाए पुव्वको-
डीए अब्भहियाइं" इति । तत एतावन्तं कालमविच्छेदेन विभङ्गस्याप्राप्यमाणत्वादन्तः सम्यक्त्वप्रतिपत्तिरुक्ता । ततोऽप्र-
तिपतितविभङ्ग एव मनुजेषूत्पन्नस्तत्र सम्यक्त्वं प्राप्य संयमं च पालयित्वा द्वौ वारौ विजयादिषूत्पद्यमानस्य द्वितीया षट्-
षष्टिः सागरोपमाणां सम्यग्दृष्टेर्भवति । एवमवधिदर्शनस्य द्वे षट्षष्टी सागरोपमाणां भवतः । अन्ये तु व्याचक्षते—किं सप्त-
मनरकपृथिवीनिवासिनारककल्पनया ? सामान्येनैव नारकतिर्यङ्नरामरभवेषु पर्यटतः खल्ववधिविभङ्गौ एतावन्तं कालं
भवतस्तत ऊर्ध्वमपवर्ग इति । केवलदर्शनस्य साद्यपर्यवसाना स्थितिरित्युक्ता चतुर्धा दर्शनमार्गणेति ॥

लेश्यामार्गणा विव्रियते—"लेस" त्ति, लिश्यते श्लिष्यते कर्मणा सहाऽनयेति लेश्या कृष्णादिद्रव्यसाचिव्यादात्मनः परिणाम-
विशेषः । तदुक्तम्—"कृष्णादिद्रव्यसाचिव्यात् परिणामो य आत्मनः । स्फटिकस्येव तत्रायं लेश्याशब्दः प्रवर्त्तते ॥१॥" योगसद्भावे लेश्या-
सद्भावः योगाभावे च लेश्याऽभावः ततो योगेन सहान्वयव्यतिरेकदर्शनात् योगनिमित्ता लेश्येति प्रज्ञापनावृत्त्यभिप्रायः ।
तत्रापि सा योगान्तर्गतद्रव्यरूपा वाच्या, न योगनिमित्तकर्मद्रव्यरूपा, योगनिमित्तघात्यघातिकर्मद्रव्यविकल्पाभ्यां यथाक्रमं
सयोगिकेवलिन्ययोगिकेवलिन्यसद्भावसद्भावप्रसक्तितस्तस्याः प्रज्ञापनावृत्तौ निरासात्, एवं योगान्तर्गतानां द्रव्याणां कषायो-
दयोपबृंहणसामर्थ्यमनुभागहेतुत्वं ज्ञेयं न स्थितिबन्धहेतुत्वं, तथा चाह—"तत्र प्रदेशबन्धो योगात्तदनुभवनं कषायवशात् । स्थितिपाक-
विशेषस्तस्य भवति लेश्याविशेषेण ॥१॥" अत्र वाचकवरविरचितप्रशमरत्या सह विरोधो मा भूत्तदर्थं 'स्थितिपाको' नामानुभाग
इति समाधानं । कर्मनिस्यन्दपक्षस्य च खण्डनं प्रज्ञापनावृत्तौ मलयगिरिपादैः कृतम् । तथा च तद्ग्रन्थः—"योगनिमित्तता-

यामपि विकल्पद्वयमवतरति—किं योगान्तर्गतद्रव्यरूपा योगनिमित्तकर्म्मद्रव्यरूपा वा ? तत्र न तावद्योगनिमित्तकर्म्मद्रव्यरूपा, विकल्पद्व-
यानतिक्रमात्, तथाहि—योगनिमित्तकर्म्मद्रव्यरूपा सती घातिकर्म्मद्रव्यरूपा अघातिकर्म्मद्रव्यरूपा वा ? न तावद् घातिकर्म्मद्रव्यरूपा,
तेषामभावेऽपि सयोगिकेवलिनि लेश्यायाः सद्भावात्, नापि अघातिकर्म्मरूपा, तत् सद्भावेऽपि अयोगिकेवलिनि लेश्याया अभावात्,
ततः पारिशेष्यात् योगान्तर्गतद्रव्यरूपा प्रत्येया, तानि च योगान्तर्गतानि द्रव्याणि यावत्कषायास्तावत्तेषामप्युदयोपबृंहकाणि भवन्ति, दृष्टं
च योगान्तर्गतानां द्रव्याणां कषायोदयोपबृंहणसामर्थ्यं, यथा पित्तद्रव्यस्य, तथाहि—पित्तप्रकोपविशेषादुपलक्ष्यते महान् प्रवर्द्धमानः कोपः,
अन्यच्च बाह्यान्यपि द्रव्याणि कर्म्मणामुदयक्षयोपशमादिहेतव उपलभ्यन्ते, यथा—ब्राह्यौषधिर्ज्ञानावरणक्षयोपशमस्य सुरापानं ज्ञानाव-
रणोदयस्य, कथमन्यथा युक्तायुक्तविवेकविकलतोपजायते, दधिभोजनं निद्रारूपदर्शनावरणोदयस्य, तत्किं योगद्रव्याणि न भवन्ति ?, तेन
यः स्थितिपाकविशेषो लेश्यावशादुपगीयते शास्त्रान्तरे स सम्यगुपपन्नः, यतः स्थितिपाको नामानुभाग उच्यते, तस्य निमित्तं कषायोद-
यान्तर्गतकृष्णादिलेश्यापरिणामाः, ते च परमार्थतः कषायस्वरूपा एव, तदन्तर्गतत्वात्, केवलं योगान्तर्गतद्रव्यसहकारिकारणभेदवैचि-
त्र्याभ्यां ते कृष्णादिभेदैर्भिन्नाः तारतम्यभेदेन विचित्राश्चोपजायन्ते, तेन यद् भगवता कर्मप्रकृतिकृता शिवशर्म्माचार्येण शतकाख्ये ग्रन्थेऽ-
भिहितं "ठिइअणुभागं कसायओ कुणइ" इति तदपि समीचीनमेव, कृष्णादिलेश्यापरिणामानामपि कषायोदयान्तर्गतानां कषायरूपत्वात्,
तेन यदुच्यते कैश्चिद्—योगपरिणामत्वे लेश्यानां "जोगा पयडिपएसं ठिइअणुभागं कसायओ कुणइ" इति वचनात् प्रकृतिप्रदेशबन्धहे-
तुत्वमेव स्यान्न कर्म्मस्थितिहेतुत्वमिति, तदपि न समीचीनं, यथोक्तभावार्थापरिज्ञानात्, अपि च—न लेश्याः स्थितिहेतवः, किंतु कषा-
याः, लेश्यास्तु कषायोदयान्तर्गताः अनुभागहेतवः, अत एव च 'स्थितिपाकविशेषस्तस्य भवति लेश्याविशेषेण' इत्यत्रानुभागप्रतिपत्त्यर्थं

पाकग्रहणं, एतच्च सुनिश्चितं कर्म्मप्रकृतिटीकादिषु, ततः सिद्धान्तपरिज्ञानमपि न सम्यक् तेषामस्ति, यदप्युक्तम्—'कर्म्मनिस्यन्दो लेश्या, निस्यन्दरूपत्वे हि यावत् कषायोदयः तावन्निस्यन्दस्यापि सद्भावात् कर्म्मस्थितिहेतुत्वमपि युज्यते एव', इत्यादि, तदप्यश्लीलं, लेश्यानामनुभागबन्धहेतुतया स्थितिबन्धहेतुत्वायोगात्, अन्यच्च—कर्म्मनिस्यन्दः किं कर्म्मकल्क उत कर्म्मसारः । न तावत्कर्म्मकल्कः, तस्यासारतयोत्कृष्टानुभागबन्धहेतुत्वानुपपत्तिप्रसक्तेः, कल्को हि असारो भवति असारश्च कथमुत्कृष्टानुभागबन्धहेतुः ?, अथ चोत्कृष्टानुभागबन्धहेतवोऽपि लेश्या भवन्ति, अथ कर्म्मसार इति पक्षस्तर्हि कस्य कर्म्मणः सार इति वाच्यं ?, यथायोगमष्टानामपीति चेत् अष्टानामपि कर्म्मणां शास्त्रे विपाका वर्ण्यन्ते, न च कस्यापि कर्म्मणो लेश्यारूपो विपाक उपदर्शितः, ततः कथं कर्म्मसारपक्षमङ्गीकुर्म्महे ? तस्मात् पूर्वोक्त एव पक्षः श्रेयानित्यङ्गीकर्त्तव्यः, तस्य हरिभद्रसूरिप्रभृतिभिरपि तत्र तत्र प्रदेशे अङ्गीकृतत्वादिति" । **मनोयोगपरिणामश्च लेश्येति तत्त्वार्थवृत्तिकृदाशयः । तदुक्तम्**—"लिश्यन्त इति लेश्याः मनोयोगावष्टम्भजनितपरिणामः आत्मना सह लिश्यते एकीभवतीत्यर्थः"। **गोम्मटसारे** "जोगपउत्ती लेस्सा कसायउदयाणुरंजिया होई" **इति नेमिचन्द्रोऽपि । उत्तराध्ययनवृहद्वृत्तिकारेणापि लेश्यायाः योगपरिणामत्वं शरीरनामकर्मद्रव्याणि कर्मद्रव्यलेश्येति प्रज्ञापनावृत्त्यनुसारेणोक्त्वा तदनन्तरं** 'कर्मनिस्यन्दो लेश्या' **इति गुरूणामभिप्रायो दर्शितः । तैस्तु योगपरिणाममपाकृत्य कर्मस्थितिहेतुत्वमुक्तम् । तद्ग्रन्थश्चायम्**—"इह च कर्मद्रव्यलेश्येति सामान्याभिधानेऽपि शरीरनामकर्मद्रव्याण्येव कर्मद्रव्यलेश्या, यदुक्तं प्रज्ञापनावृत्तिकृता—"योगपरिणामो लेश्या, कथं पुनर्योगपरिणामो लेश्या? यस्मात्सयोगिकेवली शुक्ललेश्यापरिणामेन विहृत्यान्तर्मुहूर्त्ते शेषे योगनिरोधं करोति, ततोऽयोगित्वमलेश्यत्वं च प्राप्नोति, अतोऽवगम्यते—योगपरिणामो लेश्येति, स पुनर्योगः शरीरनामकर्मपरिणतिविशेषः, यस्मादुक्तं—"कर्म हि कार्म-

णस्य कार्यमन्येषां च शरीराणां(कारण)" मिति, तस्मादौदारिकादिशरीरयुक्तस्यात्मनो वीर्यपरिणतिविशेषः काययोगः, तथौदारिकवैक्रियाहारकशरीरव्यापाराहृतवाग्द्रव्यसमूहसाचिव्याज्जीवव्यापारो यः स वाग्योगः, तथौदारिकादिशरीरव्यापाराहृतमनोद्रव्यसमूहसाचिव्याज्जीवव्यापारो यः स मनोयोग इति, ततो यथैव कायादिकरणयुक्तस्यात्मनो वीर्यपरिणतिर्योग उच्यते तथैव लेश्याऽपीति" । गुरवस्तु व्याचक्षते–कर्मनिष्यन्दो लेश्या, यतः कर्मस्थितिहेतवो लेश्याः, यथोक्तम्–"ताः कृष्णनीलकापोततेजसीपद्मशुक्लनामानः । श्लेष इव वर्णबन्धस्य कर्मबन्धस्थितिविधात्र्यः ॥ १ ॥" इति, योगपरिणामत्वे तु लेश्यानां "योगापयडिपएसं ठिइआणुभागं कसायओ कुणति"त्ति वचनात्प्रकृतिप्रदेशबन्धहेतुत्वमेव स्यात् न तु कर्मस्थितिहेतुत्वं, कर्मनिष्यन्दरूपत्वे तु यावत्कषायोदयस्तावत्तन्निष्यन्दस्यापि सद्भावात्कर्मस्थितिहेतुत्वमपि युज्यत एव, अत एवोपशान्तक्षीणमोहयोः कर्मबन्धसद्भावेऽपि न स्थितिसम्भवः, यदुक्तम्–"तं पढमसमये बद्धं बीयसमये वेइयं ततियसमए निज्जिण्णं"ति, आह–यदि कर्मनिष्यन्दो लेश्या तदा समुच्छिन्नक्रियं शुक्लध्यानं ध्यायतः कर्मचतुष्टयसद्भावे तन्निष्यन्दसम्भवेन कथं न लेश्यासद्भावः ? उच्यते, नायं नियमो यदुत निष्यन्दवतो निष्यन्देन सदा भाव्यं, कदाचिन्निष्यन्दवत्स्वपि वस्तुषु तथाविधावस्थायां तदभावदर्शनात्, यच्चोक्तम्–अयोगिनो योगपरिणामाभावे लेश्यापरिणामाभाव इति निश्चिनुमः–'योगपरिणाम एव लेश्ये'ति, तदप्यसाधकं, यतो रश्म्यादयः सूर्याद्यभावे न भवन्ति, न च ते तद्रूपा एव, यत उक्तम्–"यच्च चन्द्रप्रभाद्यत्र, ज्ञातं तज्ज्ञातमात्रकम्, प्रभा पुद्गलरूपा यत्तद्धर्मा नोपपद्यते ॥१॥" इति । न्यायाचार्यैस्तु गुरुपक्षोऽन्यव्यपदेशेन व्याख्यातः, तत्र–'तन्मते च केवलिनां द्रव्यलेश्या चिन्त्यैवे'–त्युक्तं । अतोऽवसीयते तेषां योगपरिणामो लेश्येत्यभिप्रायः । लोकप्रकाशेऽप्ययमेवाशयः । तदुक्तम्–"द्रव्याण्येतानि योगान्तर्गतानीति विचिन्त्यताम् । सयोगित्वे तु लेश्यानामन्वयव्यतिरेकतः ॥ १ ॥" इति । एतन्मतमाश्रित्यैव सयो-

गिकेवलिनि मनुजगतिशुक्ललेश्याऽसिद्धत्वरूपास्त्रयः औदयिकभावाः प्रवचनोक्ताः संगच्छन्ते । “लेश्याः कृष्णादिभेदा अशु-
भाः शुभाश्च कषाययोगपरिणामविशेषसमुत्थाः” इति प्रथमाङ्गवृत्तौ । कर्मस्थितिविधातृत्वं च लेश्यानामुत्तराध्ययनबृहद्वृ-
त्तावुक्तम् । तद्ग्रन्थः—“कर्मलेश्यानां कर्मस्थितिविधातृतत्तद्विशिष्टपुद्गलरूपाणाम्” । एवं भावविजयकृतोत्तराध्ययनवृत्तावपि
कर्मस्थितिविधातृत्वमुक्तम् । तथैव तत्त्वार्थवृत्तौ लेश्यायाः कर्मबन्धस्थितिविधातृत्वं स्वीकृतमिति । तद्ग्रन्थः—“भावलेश्यास्तु कृ-
ष्णादिवर्णद्रव्यावष्टम्भजनिताः परिणामाः कर्मबन्धस्थितेर्विधातारः” इति । केचित्तु ‘कर्म्माष्टकोदयादसिद्धत्वं तत्रान्तर्भूताश्च लेश्याः,’
इति वदन्ति । तदुक्तम् तत्त्वार्थवृत्तौ—“अपरे तु मन्यन्ते कर्माष्टकोदयादसिद्धत्व एव लेश्या ग्राह्याः” इति । अन्ये त्वाहुः—‘कार्म्म-
णशरीरवत्पृथगेव कर्माष्टकात्कर्मवर्गणानिष्पन्नानि कर्मलेश्याद्रव्याणि” इति, तत्त्वं पुनः केवलिनो विदन्ति । तत्र द्रव्यलेश्या कृष्णा-
दिद्रव्यमात्रं तदवष्टम्भजनितपरिणामविशेषो भावलेश्येति । अत्र कश्चिदाह—‘कृष्णादिद्रव्यरूपा लेश्या बाह्यवर्णरूपा वाच्या,
अन्यथा सप्तमावनौ सम्यक्त्वस्य, सुराधमे सङ्गमे त्रिभुवनगुरोरुपसर्गकर्तृत्वस्य, भावपरावृत्तितः पुनः देवनारकाणां लेश्याप-
द्कस्योक्तेश्चानुपपत्तिप्रसङ्ग’ इति । अत्रोच्यते—लेश्याशब्दः शुभाशुभपरिणामविशेषे वर्त्तते, तस्य च परिणामविशेषस्योत्पादकानि
कृष्णादिद्रव्याणि जन्तूनां सदा सन्निहितानि सन्ति, एतैश्च कृष्णादिद्रव्यैर्जीवस्य ये परिणामविशेषा जन्यन्ते मुख्यतया ते
एव लेश्याशब्देनोच्यन्ते, गौणवृत्त्या पुनः कारणे कार्योपचारलक्षणया एतान्यपि कृष्णादिरूपाणि द्रव्याणि लेश्याशब्देन
व्यपदिश्यन्ते, ततश्च नारकाणां देवानां च याः सूत्रोक्ता लेश्यास्ता द्रव्यलेश्या द्रष्टव्याः । तदुक्तम्—“सुरनारयाण ताओ
दव्वलेसा अवट्ठिआ भणिआ” इति । तत्तल्लेश्याद्रव्याणि च देवनारकाणां सर्वदैवावस्थितोदयानि कृष्णादिरूपाणि शरीरनाम-

कर्मद्रव्याणि द्रष्टव्यानीति तात्पर्यम्, न पुनर्बाह्यवर्णरूपाः। तानि च लेश्याद्रव्याणि तिर्यङ्मनुजानां भवसंक्रान्तौ शेषकालं चान्यलेश्याद्रव्योपधाने विशुद्धवस्त्रमिव मञ्जिष्ठादिरागयोगे सर्वथा स्वरूपत्यागात्तद्रूपेणैव परिणमन्ते, अन्यथैतल्लेश्यायाः पल्योपमत्रयस्थितेरपि सम्भवादुत्कर्षतोऽप्यन्तर्मुहूर्त्तमागमोक्तं विरुध्येत। देवनारकलेश्याद्रव्याणां तु तदन्यलेश्याद्रव्यसम्पर्के तदाकारमात्रं तत्प्रतिविम्बमात्रं वा जायते न पुनः स्वस्वरूपत्यागेन तद्रूपता। ननु यद्येवं तर्ह्यवस्थितागन्तुकलेश्याद्रव्यजन्यपरिणामद्वयस्यैककालं सद्भावः प्रसज्यते, न च युगपत्परस्परविरुद्धपरिणामसत्ता समयेऽभ्युपगम्यते युक्त्या वा संगच्छत इति चेत्? सत्यम्, यान्यागन्तुकलेश्याद्रव्याणि कदाचिदुदयमागच्छन्ति तैरवस्थितलेश्याद्रव्याणि प्रतिहतसामर्थ्यानि तथाविधीयन्ते यथा स्वजन्यं परिणामं जनयितुं न शक्नुवन्ति, ततश्चागन्तुकलेश्याद्रव्योदयकाले तज्जन्य एवैकः परिणामः संभवति, कुतः परिणामद्वयसद्भावः। ननु तर्हि नारकदेवानां यावस्थितकृष्णादिलेश्या प्रोक्ता सा विरुध्यते, आगन्तुकलेश्याद्रव्योदयकाले तत्प्रतिघातात्, नैतदेवमिति चेत्, आगन्तुकलेश्याद्रव्योदयकालेऽवस्थितलेश्याद्रव्याणि तदाकारमात्रमेव प्रतिपद्यन्ते, न पुनः सर्वथा स्वरूपं परित्यज्य रूपान्तरं येनावस्थितोदयत्वं विरुध्येत। अत एव सप्तमावनौ कृष्णलेश्यातेजोलेश्याद्रव्याणि सम्प्राप्य तदाकारमात्रेण तत्प्रतिविम्बमात्रेण वा समन्विता भवति, तदा च साक्षात् तेजोलेश्यादिद्रव्यसाचिव्ये इव कृष्णलेश्याद्रव्ययोगेऽपि शुभपरिणामो नारकस्य जायते जपोपरक्तस्फटिकस्य रक्ततावत्, तत्परिणामे चास्य सम्यक्त्वावाप्तिरविरुद्धेति। एवं तेजोलेश्यावतः सङ्गमस्याकारमात्रादिना कृष्णलेश्यासंभवात् त्रिभुवनगुरोरुपसर्गकर्तृत्वमपि नानुपपन्नम्, अत एवोक्तं—"भावपरावत्तीए पुण एएसिं हुंति छल्लेसा"

इति । "यथोच्यते 'पुव्वपडिवन्नओ पुण अन्नयरीए उ लेस्साए'त्ति तत्कृष्णादिद्रव्यरूपां द्रव्यलेश्यामङ्गीकृत्य, न तु कृष्णादिद्रव्यसाचिव्यजनितात्मपरिणामरूपां भावलेश्याम्" इति व्याख्याप्रज्ञप्तिवृत्तावभयदेवसूरिपादाः । किञ्च बाह्यवर्णत्वे भगवत्यां प्रज्ञापनायां च वर्णसूत्रं लेश्यासूत्रं च कथं पृथगुक्तं, वर्णसूत्रेणैव लेश्यायाः गतार्थत्वात् । तथा भवनपत्यादीनां लेश्योक्तिः वर्णोक्तिश्च या संग्रहण्यादावुक्ता सा निरर्थकतामापद्येत । एतेन "वण्णोदयेण जणिदो सरीरवण्णो उ दव्वदो लेस्सा । सा सोढा किण्हादी अणेगभेयो सभेयेण ॥ १ ॥" वृत्तिः—"वर्णनामकर्मोदयजनितशरीरवर्णस्तु द्रव्यलेश्या भवति, सा च षोढा—षट्प्रकाराः कृष्णादयः स्वस्वभेदैरनेकभेदाः स्युः" ॥ "छप्पयणीलकवोदसुहेमंवुजसंखसण्णिहा वण्णे । संखेज्जासंखेज्जाणंतवियप्पा य पत्तेयं ॥ २ ॥" वृत्तिः—"कृष्णादिलेश्या वर्णे षट्पद—नीलरत्न—कपोत—सुहेम—अंबुज—शङ्खसन्निभा भवन्ति । पुनस्ता इन्द्रियव्यक्तिभिः प्रत्येकं संख्याताः, स्कन्धभेदेनासंख्याताः, परमाणुभेदेनानन्तानन्ताश्च भवन्ति" ॥ "णिरया किण्हा कप्पा भावाणुगया हुन्ति सुरणरतिरिये । उत्तरदेहे छक्कं भोगे रविचंदहरिवण्णा ॥ ३ ॥" वृत्तिः—"नारकाः सर्वे कृष्णा एव, कल्पजाः सर्वे स्वस्वभावलेश्यानुगा एव, भवनत्रयदेवाः मनुष्यास्तिर्यञ्चो देवविकुर्वणदेहाश्च सर्वे षड्वर्णाः, उत्तममध्यमजघन्यभोगभूमिजनरतिर्यञ्चः क्रमशः रविचन्द्रहरिद्वर्णा एव" ॥ "बादरआऊतेऊसुक्का तेऊ य वाउकायाणं । गोमुत्तमुग्गवण्णा कमसो अव्वत्तवण्णो य ॥ ४ ॥" वृत्तिः—"बादराप्तेजस्कायिकौ क्रमेण शुक्लपीतवर्णावेव, वातकायिकेषु घनोदधिवातघनवातशरीराणि क्रमेण गोमूत्रमुद्गवर्णानि तनुवातशरीराणि अव्यक्तवर्णानि" ॥ "सव्वेसिं सुहुमाणं कावोदा सव्वविग्गहे सुक्का । सव्वो मिस्सो देहो कवोदवण्णो हवे णियमा ॥ ५ ॥" वृत्तिः—"सर्वसूक्ष्मजीवदेहाः कपोतवर्णा एव, सर्वे जीवा विग्रहगतौ शुक्लवर्णा एव, सर्वे जीवाः स्वस्वपर्याप्तिप्रारम्भ प्रथमसमयाच्छरीरपर्याप्तिनिष्पत्तिपर्यन्तं कपो-

तवर्णा एव नियमेने"ति **नेमिचन्द्रोक्तिरपि निरस्ता । न चैतत्सर्वं स्वधिया परिभाषितम्, मलयगिरिपादैः संग्रहणीवृत्तौ तथैवोक्तत्वात् । तद्ग्रन्थः**—"अत्र केचिद्व्याचक्षते—तथा च यथैता नारकाणां प्रागुक्ताश्च सुराणां बाह्यवर्णरूपाः किल द्रव्यलेश्याऽवगन्तव्याः, अन्यथाधःसप्तमनरकपृथिवीवासिनां नारकाणां या सम्यग्दर्शनावाप्तिरभिधीयते ग्रन्थान्तरेषु, सा न युक्तिमियर्ति, यस्मादुपरितनीष्वेव तेजोलेश्याप्रभृतिषु तिसृषु लेश्यासु सम्यक्त्वाप्तिर्भवति, नाद्यासु तिसृषु लेश्यासु । तथा चोक्तमावश्यके—"सम्मत्तस्स उ तिसु, उवरिमासु पडिवज्जमाणओ होइ । पुव्वपडिवन्नओ पुण, अण्णयरीए उ लेसाए ॥१॥" उपरितन्यश्च तेजोलेश्याप्रभृतयो लेश्याः सप्तमनरकपृथिवीनारकाणां न विद्यन्ते, कृष्णलेश्याया एव तेषां प्रतिपादितत्वादिति । तथा सौधर्मे तेजोलेश्यैव केवला प्राग्व्यावर्णिता । अथ च सङ्गमकादीनां भुवनगुरुतीर्थकरात्यन्तोपसर्गकारिणां सा न घटां प्राञ्चति, तत्सद्भावे प्रशस्तपरिणामोपपत्तितो भुवनगुरुतीर्थकरोपसर्गकारित्वानुपपत्तेः । अन्यच्च प्रदेशान्तरे एवमुच्यते—"देवाण नारयाण य दव्वलेसा हवंति एआओ । भावपरावत्तीए पुणो सुरनेइआण छ लेसा ॥ १ ॥" ततः "काउ नीला किण्हा, लेसाओ तिन्नि हुंति नरएसु" इत्यादिरूपो यो नियमः स नियमाद्विरुध्यते । तस्मादेता नारकाणां प्राक्तन्यश्च सुराणां बाह्यवर्णरूपा एव द्रव्यलेश्याः प्रतिपत्तव्या इति, तदेतत्सर्वमप्ययुक्तं, यतो यत्तावदुक्तमधः सप्तमनरकपृथिवीवासिनां नारकाणां वा सम्यग्दर्शनावाप्तिरभिधीयत इत्यादि, तदेतदागमापरिज्ञानविजृम्भितं, यत उक्तमेवमागमे प्रज्ञापनादौ—"से नूणं भंते ! किण्हलेसा नीललेसं पप्प नो तारूवत्ताए, नो तावण्णत्ताए, नो तागंधत्ताए, नो तारसत्ताए, नो ताफासत्ताए भुज्जो भुज्जो परिणमइ ? हंता गोयमा ! किण्हलेसा नीललेसं पप्प नो तारूवत्ताए, नो तावण्णत्ताए, नो तागंधत्ताए, नो तारसत्ताए, नो ताफासत्ताए भुज्जो भुज्जो परिणमइ, से केणठ्ठेणं भंते एवं वुचइ—किण्हलेसा नीललेसं पप्प नो तारूवत्ताए जाव परिणमेइ ? गोयमा ! आगारभावमायाए वा से सि-

आ पलिभागमायाए वा से सिया, किण्हलेसा णं सा, नो खलु सा नीललेसा, तत्थ गया उस्सक्कइ । से एएणट्ठेणं गोयमा ! एवं वुच्चइ—किण्हलेसा नीललेसं पप्प नो तारूवत्ताए जाव परिणमइ त्ति"। अस्य सूत्रस्यायमर्थः—सेशब्दोऽथशब्दार्थः स चेह प्रश्नेऽवगन्तव्यः, भदंतेति भगवतो वर्धमानस्वामिन आमंत्रणं, नूनं निश्चितमेतद् यथा कृष्णलेश्या—कृष्णलेश्याद्रव्याणि नीललेश्यां—नीललेश्यासंबन्धिद्रव्यवृन्दं प्राप्य न तद्रूपतया—न नीललेश्याद्रव्यरूपतया, एतदेव व्याचष्टे—न तद्वर्णतया न नीललेश्याद्रव्यवर्णतया, न तद्गन्धतया—न नीललेश्याद्रव्यगन्धतया, न तद्रसतया—न नीललेश्याद्रव्यरसतया, न तत्स्पर्शतया—न नीललेश्याद्रव्यस्पर्शतया भूयो भूयः परिणमते । किमुक्तं भवति ? ये नीललेश्याद्रव्याणां वर्णगन्धरसस्पर्शास्ते कृष्णलेश्याद्रव्यसंपर्केऽपि कृष्णलेश्याद्रव्याणां न परिणमन्त इति । अत्रार्थे भगवन्निर्वचनं—"हंता गोयमेत्यादि" । पुनस्ताद्रूप्यापरिणमने कारणजिज्ञासायां प्रश्नसूत्रं—"से केणट्ठेणं भंते ? एवं वुच्चइ" इत्यादि । अत्र निर्वचनं—"गोयमा ! आगारभावमायाए वा से सिया पलिभागमायाए वा से सिया इति"आकार उल्लेखमात्रं, आकारश्चासौ भावश्चाकारभावः, आकारभाव एवाकारभावमात्रा, मात्राशब्दस्यावधारणात्मकत्वादत्राकारभावव्यतिरिक्तप्रतिविम्बादिधर्मान्तरव्यवच्छेदः, तयाऽऽकारभावमात्रया स्यादसौ कृष्णलेश्या नीललेश्या, न तु साक्षान्नीललेश्यास्वरूपप्रतिपत्तित इति । तथा प्रतिरूपो भागः प्रतिभागः प्रतिविम्बमित्यर्थः, प्रतिभाग एव प्रतिभागमात्रा, अत्र मात्राशब्दः प्रतिभागव्यतिरिक्तसाक्षात्तत्स्वरूपतापत्तिरूपधर्मान्तरप्रतिषेधवाचकः, तया प्रतिभागमात्रया । वाशब्दः पक्षान्तरसूचने । स्यादसौ कृष्णलेश्या नीललेश्या, न तु तत्स्वरूपापत्त्या । किमुक्तं भवति ? यथा वैडूर्यादिमणिषु कृष्णसूत्रे नीलसूत्रे लोहितसूत्रे हारिद्रसूत्रे शुक्लसूत्रे वा प्रोतेषु कृष्णादिसूत्रसंपर्कतो वैडूर्यादिमणीनामस्पष्टं किञ्चित्तदाकारभावमात्रं भवति । यदि वा स्फटिकोपलस्य जपाकुसुमादिसन्निधानतः स्पष्टं जपाकुसुमादिप्रतिविम्बमात्रं, न तूभयत्रापि तद्रूपतापत्तिः । तथा कृष्णलेश्याद्रव्यनिकुरम्बो

नीललेश्याद्रव्यसमूहं प्राप्य कदाचिदस्पष्टं तदाकारभावमात्रं प्रतिपद्यते, कदाचित् स्पष्टं प्रतिविम्बमात्रं, न पुनस्तानि कृष्णलेश्याद्रव्याणि सर्वथा नीललेश्याद्रव्यरूपतां प्रतिपद्यन्ते। तथा चाह–"किण्हलेसा णं सा नो खलु नीललेसा"। सा स्वरूपतः कृष्णलेश्यैव यथा वैडूर्यादिमणयः कृष्णादिसूत्रसंपर्केऽपि वैडूर्यादिमणय एव, यथा वा स्फटिकोपलो जपाकुसुमादिसंनिधानेऽपि स्फटिकोपल एव। नो खलु नीललेश्या–नैव नीललेश्या। केवलं तत्र गता तत्रस्था–स्वरूपस्थैव सतीत्यर्थ उत्सर्पति–नीललेश्यादिकं लेश्यान्तरं प्राप्य तदाकारभावं तत्प्रतिविम्बभावमात्रं वा समासादयति, न पुनस्तद्रूपतां प्रतिपद्यत इति। तथा "से णूणं भंते नीललेसा काउलेसं पप्प नो तारूवत्ताए जाव नीललेसा णं सा नो खलु काउलेसा तत्थ गया उस्सक्कइ उसक्कइ वा"। इदमपि सूत्रं प्राग्वद्व्याख्येयं। नवरं "तत्थ गया उस्सक्कइ त्ति"–तत्र तस्मिन् स्वकीयस्वरूपे गता स्थिता सत्युत्ष्वष्कत उत्सर्पति कापोतलेश्यासंबन्धिनमाकारभावं प्रतिविम्बमात्रं वा प्रतिपद्यत इत्यर्थः, न पुनस्तद्रूपतामासादयति। "उसक्कइ व" इति–सैव नीललेश्या कृष्णलेश्यां प्राप्यावष्वष्कते अवसर्पति कृष्णलेश्यासंबन्धिनमाकारभावं प्रतिविम्बमात्रं वा समासादयति, न तु तद्रूपतां प्रतिपद्यते। इह नीललेश्यातः कृष्णलेश्या वर्णगन्धरसस्पर्शैरतिनिकृष्टतरा, ततस्तत्संबन्धिनमाकारभावं प्रतिबिम्बं वा समासादयतीत्यवष्वष्कत इत्युच्यते। तथा "से णूणं भंते! काउलेसा तेउलेसं पप्प, तथा तेउलेसा पम्हलेसं पप्प, पम्हलेसा सुक्कलेसं पप्प" इत्यादयोऽपि सूत्रालापका भावार्थमधिकृत्य प्राग्वदवगन्तव्याः। यथा च कृष्णलेश्याया नीललेश्यां प्रत्यालापक उक्तस्तथा कापोतलेश्यां प्रति द्रष्टव्यः। ये तु कृष्णलेश्यायास्तेजोलेश्यादिकं प्रत्यालापकास्ते प्रकृतोपयोगिन इत्युपदर्श्यन्ते–"किण्णलेसा णं भंते! तेउलेसं पप्प नो तारूवत्ताए, नो तावण्णत्ताए, नो तागंधत्ताए, नो तारसत्ताए, नो ताफासत्ताए, भुज्जो भुज्जो परिणमइ? हंता गोयमा! किण्हलेसा तेउलेसं पप्प नो तारूवत्ताए जाव भुज्जो भुज्जो परिणमइ। से केणट्ठेणं भंते! एवं वुच्चइ–किण्हलेसा

तेउलेसं पप्प नो तारूवत्ताए जाव परिणमइ ?, गोयमा ? आगारभावमायाए वा से सिया पलिभागमायाए वा से सिया, किण्हलेसा णं सा, नो खलु सा तेउलेसा तत्थ गया उस्सक्कइ" । अस्यार्थः प्राग्वदवसेयः । एवं कृष्णलेश्यायाः पद्मलेश्यां प्रति शुक्ललेश्यां च प्रत्यालापकौ द्रष्टव्यौ । ततो यदा सप्तमनरकपृथिव्यामपि कृष्णलेश्या तेजोलेश्याद्रव्याणि प्राप्य तदाकारभावमात्रान्विता भवति तत्प्रतिबिम्बमात्रान्विता वा, तदा कृष्णादिद्रव्यसाचिव्येऽप्युपधानोपरक्तस्फटिकसन्निधाने स्फटिकस्येवान्याकार एव साक्षादुत्कलितस्वरूपः तेजोलेश्याद्रव्यसाचिव्य इव शुभः परिणामो जीवस्योपजायते, ततस्तथाविधशुभतेजोलेश्यापरिणामापन्नस्य सतस्तस्य सप्तमपृथिवीवासिनो नारकस्य सम्यग्दर्शनावाप्तिरुद्भवन्ती न विरोधभाग्भवति । नन्वेवमपि सप्तमनरकपृथिव्यामपि परमार्थतस्तेजोलेश्यासंभव उक्तः, स चाधिकृतसूत्रे नोपदर्शित इति तदवस्थमेवासमञ्जसम् । तदेतदसत्, सम्यग्भावार्थापरिज्ञानात् । सप्तमनरकपृथिव्यां हि नारकस्य सदैव सन्निहितस्वद्रव्यतया सदावस्थायिनी कृष्णलेश्या, या तु तेजोलेश्या साऽऽकारभावमात्रादिना प्रकारेण कदाचिदेव भवति, न च भूयांसं कालमवतिष्ठते, न च तदापि कृष्णलेश्या द्रव्याणि स्वं स्वरूपं त्यजन्ति, ततोऽधिकृतसूत्रे कृष्णलेश्यैव सप्तमनरकपृथिव्यामुक्ता, न तेजोलेश्यादिका लेश्या, एवं सर्वत्रापि भावनीयम् । अत एव सङ्गमकादीनामप्याकारभावमात्रादिना प्रकारेण कृष्णलेश्यासंभवादुपपद्यते भुवनगुरुमपि तीर्थंकरमधिकृत्योपसर्गकर्तृत्वमिति न काचिदनुपपत्तिः । यदपि चोक्तं—"देवाण नारयाण य" इत्यादि, तदपि यथोक्तन्यायेन सङ्गतमेव । तथाहि—यद्यप्याकारभावमात्रेण प्रतिबिम्बभावमात्रेण वाऽन्यलेश्योपनिपातस्तथाप्यधिकृतसूत्रोपात्तलेश्यागतानि द्रव्याणि स्वस्वरूपं न परित्यजन्ति, भूयश्चान्यलेश्याविगमे ता एवाधिकृतसूत्रोपात्ता लेश्याः प्रवर्त्तन्ते । तत इत्थं प्रायः सदावस्थायित्वादन्यलेश्यान्तरोपनिपातेऽपि स्वद्रव्यरूपतापरित्यागासंभवादधिकृतसूत्रोपात्ता लेश्या द्रव्यलेश्या इत्युक्ताः, न पुनरेतावता बाह्यवर्णरूपाः । अपि चेमा एवा-

धिकृतसूत्रोपात्ता लेश्या नारकाणां भगवत्यां प्रज्ञापनादिषु चाभिधीयन्ते, तद्यद्येता बाह्यवर्णरूपा भवेयुस्तर्हि यद्भगवत्यादिषु वर्णप्रतिपादकं सूत्रमभिधाय लेश्याप्रतिपादकं सूत्रमेवमुक्तं, यथा—"नेरइआ णं भंते ! सव्वे समवण्णा ? गोयमा ! नो इणट्ठे समट्ठे । से केणट्ठेणं भंते ! एवं वुच्चइ ? गोयमा ! नेरइया दुविहा पन्नत्ता, तंजहा पुव्वोववण्णगा पच्छोववण्णगा य । तत्थ णं जे ते पुव्वोववण्णगा ते णं विसुद्धवण्णतरागा, जे ते पच्छोववण्णगा ते णं अविसुद्धवण्णतरागा, से एएणट्ठेणं गोयमा ! एवं वुच्चइ नो नेरइआ सव्वे समवण्णा । नेरइया णं भंते ! सव्वे समलेसा ? गोयमा ! णो इणट्ठे समट्ठे । से केणट्ठेणं भंते ! एवं वुच्चइ ? गोयमा ! नेरइया दुविहा पन्नत्ता, तं जहा—पुव्वोववण्णगा पच्छोववण्णगा य । तत्थ णं जे ते पुव्वोववण्णगा ते णं विसुद्धलेसतरागा, जे ते पच्छोववण्णगा ते णं अविसुद्धलेसतरागा । से एएणट्ठेणं गोयमा ! एवं वुच्चइ नो नेरइया सव्वे समलेसा इति" तद्विरुध्येत, वर्णानामेव लेश्यात्वाभ्युपगमात्, तेषां च पूर्वसूत्रेणैव प्रतिपादितत्वादिति । या अपि भावपरावृत्त्या सुरनारकाणां षडपि लेश्या उक्तास्ता अप्यस्मदुक्तेनैवाकारभावमात्रादिना प्रकारेण घटन्ते नान्यथेति न कश्चिद्दोषः । यदपि चोक्तं—"किण्हा नीला काऊ लेसाओ हुंति तिन्नि नरएसु" इति नियमश्च विरुध्यत इति तदप्यशोभनं, अधिकृतनियमस्यावस्थितलेश्यापेक्षत्वात् । किञ्च यदि बाह्यवर्णरूपा एताः सुरनारकाणां द्रव्यलेश्याः स्युः, तर्हि "किण्हा नीला काऊ तेऊ लेसा य भवणवंतरिया" इत्यादिना भवनपतीनामाद्यलेश्याचतुष्टयमभिधाय पुनः "काला असुरकुमारा" इत्यादि बाह्यवर्णाभिधानं निरर्थकतां यायादिति कृतं प्रसङ्गेन" । किञ्च लेश्यायाः बाह्यवर्णरूपत्वे देवनारकजिगमिषूणां तिर्यग्नराणामन्तिमेऽन्तर्मुहूर्त्ते देवनारकसम्बन्धिशरीराभावेनागामिभवसम्बन्धिलेश्याया अभावप्रसङ्गः स्यात् । एवं तिर्यग्नरेषूत्पन्नानां देवनारकाणां प्रथमेऽन्तर्मुहूर्त्ते तद्भवसम्बन्धिशरीराभावेन गतभवसम्बन्धिलेश्याया अप्यभावप्रसङ्गः स्यात् । न च वक्तव्यं यस्मिन्समये यस्य यत्र भव उत्पत्तिस्तस्य तस्मिन्स-

मये तद्भवसम्बन्धिनी लेश्या भवत्विति, श्रुतकेवलिभद्रबाहुस्वामिभिर्निषेधात्, तदुक्तं–"लेसाहिं सव्वाहिं पढमे समयंमि परिणयाहिं तु । न हु कस्सइ उववाओ परभवे होइ जीवस्स ॥ १ ॥ लेसाहिं सव्वाहिं चरमे समयंमि परिणयाहिं तु । न हु कस्सइ उववाओ परभवे होइ जीवस्स ॥ २ ॥ अंतमुहुत्तंमि गए अंतमुहुत्तंमि सेसए चेव । लेसाहिं परिणयाहिं जीवा वच्चंति परलोअं ॥३॥" इति । लेश्यायाः शरीरनामकर्मद्रव्यरूपत्वे तु न कापि बाधा, तत्र तस्य भावात् । "इह च लेश्याशब्देन भावलेश्या ग्राह्याः, बाह्यद्रव्यलेश्या तु वर्णद्वारेणैवोक्ता" इत्यभयदेवसूरिपादाः भगवतिवृत्तौ, तत्त्वं पुनः तद्विदो विदन्तीति । सा च कृष्णनीलकापोततेजःपद्मशुक्लभेदात् षोढा भवति । तत्र कृष्णवर्णद्रव्यसम्बन्धादुपजायमानोऽविशुद्धपरिणामः कृष्णलेश्या, तदुक्तं प्रज्ञापनायां–"जल्लेसाइं दव्वाइं आदिअंति तल्लेसे परिणामे भवति" इति । एवं नीलवर्णद्रव्यावष्टम्भादुपजायमानः परिणामो नीललेश्या, नीललोहितवर्णद्वययोगिद्रव्यावष्टम्भादुपजायमानः परिणामः कापोतलेश्या, लोहितवर्णद्रव्यावष्टम्भादुपजायमानः परिणामस्तेजोलेश्या, पीतवर्णद्रव्यावष्टम्भादुपजायमानः परिणामः पद्मलेश्या, शुक्लवर्णद्रव्यावष्टम्भात् शुक्ललेश्या, वर्णाशुद्ध्यपेक्षया भावाशुद्धिस्तच्छुद्ध्यपेक्षया तच्छुद्धिरिति । लेश्यानां वर्णादिस्वरूपं स्थितिः जम्बूवृक्षफलभक्षकग्रामघातकपुरुषदृष्टान्तौ च लोकप्रकाशतो लिख्येते–

"अञ्जनाञ्जनजीमूतमदभ्रमरसन्निभा । कोकिलाकलमीकल्पा कृष्णलेश्या स्ववर्णतः ॥१॥ पिच्छतः शुकचाषाणां केकिकापोतकण्ठतः । नीलाश्मचमकतो नीला नीललेश्या स्ववर्णतः ॥ २ ॥ जैत्रा खदिरसाराणामतसीपुष्पसोदरा । कापोतलेश्या वर्णे वृन्ताककुसुमौघजित् ॥ ३ ॥ शशरागनवादित्यसन्ध्यागुञ्जार्धतोऽधिका । तेजोलेश्या स्ववर्णेन विद्रुमाङ्कुरजित्वरी ॥ ४ ॥ सुवर्णयूथिकास्वर्णकर्णिकारौघचम्पकान् । परा-

भवन्ती वर्णेन पद्मलेश्या प्रकीर्त्तिता ॥ ५ ॥ गोक्षीरदधिडिण्डीरपिण्डादधिकपाण्डुरा । वर्णतः शरदभ्राणां शुक्ललेश्याऽभिभाविनी ॥ ६ ॥ किराततिक्तत्रपुषीकटुतुम्बीफलानि च । त्वचः फलानि निम्बानां कृष्णलेश्या रसैर्जयेत् ॥ ७ ॥ पिप्पलीशृङ्गवेराणि मरीचानि च राजिकाम् । हस्तिपिप्पलिकां जेतुं नीललेश्या रसैः प्रभुः ॥८॥ आमानि मातुलिङ्गानि कपित्थबदराणि च । फणसामलकानीष्टे रसैर्जेतुं तृतीयिका ॥ ९ ॥ वर्णगन्धरसापन्नपक्काम्रादिसमुद्भवान् । रसानधिकमाधुर्यात्तुर्याऽधिकुरुते रसैः ॥ १० ॥ द्राक्षाखर्जूरमाध्वीकवारुणीनामनेकधा । चन्द्रप्रभादिसीधूनां जयिनी पञ्चमी रसैः ॥ ११ ॥ शर्करागुडमत्स्यण्डीखण्डाखण्डादिकानि च । माधुर्यधुर्यवस्तूनि शुक्ला विजयते रसैः॥ १२ ॥ आद्यास्तिस्रोऽतिदुर्गन्धा अप्रशस्ता मलीमसाः । स्पर्शतः शीतरूक्षाश्च संक्लिष्टा दुर्गतिप्रदाः ॥ १३ ॥ अन्त्यास्तिस्रोऽतिसौगन्ध्याः प्रशस्ता अतिनिर्मलाः । स्निग्धोष्णाः स्पर्शगुणतोऽसंक्लिष्टाः सुगतिप्रदाः ॥ १४ ॥

"बहुधाऽऽसां परीणामस्त्रिधा वा नवधा भवेत् । सप्तविंशतिधा चैकाशीतिधा त्रिगुणस्तथा ॥ १ ॥ जघन्यमध्यमोत्कृष्टभेदतस्त्रिविधो भवेत् । प्रत्येकमेषां स्वस्थानतारतम्यविचिन्तया ॥ २ ॥ भवेन्नवविधस्तेषामपि भेदविवक्षया । सप्तविंशतिधा मुख्योऽप्येवं भेदैस्त्रिभिस्त्रिभिः ॥ ३ ॥ तथा चाहुः प्रज्ञापनायां—"कण्हलेसा णं भंते ! कतिविहं परिणामं परिणमति ? गोयमा ! तिविहं वा णवविहं वा सत्तावि सतिविहं वा एक्कासीतिविहं वा तेआलदुसयविहं वा बहुं वा बहुविहं वा परिणामं परिणमति" । लेश्यापरिणामस्यादिमान्त्ययोर्नाङ्गिनां मृतिः क्षणयोः । अन्तर्मुहूर्त्तकेऽन्त्ये शेषे वाऽऽद्ये गते सा स्यात् ॥ १ ॥ तत्राप्यन्तर्मुहूर्त्तेऽन्त्ये शेषे नारकनाकिनः । म्रियन्ते नरतिर्यञ्चश्चाद्येऽतीत इति स्थितिः ॥ २ ॥

"कृष्णायाः स्थितिरुत्कृष्टा त्रयस्त्रिंशत्पयोधयः । प्राच्याग्र्यभवसंबन्ध्यन्तर्मुहूर्त्तद्वयाधिका ॥ १ ॥ पल्यासंख्येयभागाढ्या नीलायाः सा

किञ्चिन्न्यूननववर्षोनपूर्वकोटिप्रमाणापि, इयं च पूर्वकोटेरूर्ध्वं संयमावाप्तेरभावात्पूर्वकोट्यायुषः किञ्चित्समधिकवर्षाष्टकादूर्ध्वमुत्पादित-केवलज्ञानस्य केवलिनोऽवसेया इत्युक्तं, अत्र च पूर्वकोट्या नववर्षोनत्वं किञ्चिन्न्यूननववर्षोनत्वं किञ्चित्समधिकाष्टवर्षोनत्वमिति त्रयं मिथो यथा न विरुध्यते तथा बहुश्रुतेभ्यो भावनीयम् ।

---

१ अत्र "आद्यः परमशुक्ललेश्यां केवलित्वभावनीमाश्रित्य, इतरौ तु केवलकारणभूतशुक्ललेश्यामाश्रित्य, नवरमन्त्ये विशेषेणाप्रमत्ततायाः आश्रयणम्" इति मुद्रितपुस्तके केनचित् टीप्पणी कृता । परं तत्र "शुक्ललेश्या उत्कृष्टतः किञ्चिन्न्यूननववर्षोनपूर्वकोटीप्रमाणाऽपि । इयं च पूर्वकोटेरूर्ध्वं संयमावाप्तेरभावात् पूर्वकोट्यायुषः किञ्चित्समधिकवर्षाष्टकादूर्ध्वमुत्पादितकेवलज्ञानस्य केवलिनोऽवसेया" इत्युपन्यस्तवता ग्रन्थकारेण यदेव गर्भतः किञ्चिन्न्यूननववर्षोनत्वं तदेव जन्मतः किञ्चित् समधिकाष्टवर्षोनत्वं "मासपुहुत्तब्भहिए नपुंसगे सव्वसंकमणे" "योऽष्टवार्षिक एव सप्तमासाभ्यधिकः संयमं प्रतिपन्नः तत्प्रतिपत्त्यनन्तरं चान्तर्मुहूर्तेन क्षपकश्रेणिमारभते" इत्यादि कर्मप्रकृत्यादिपाठानुसारेण सूचितं 'न चेतरौ केवलकारणभूतशुक्ललेश्यामाश्रित्ये'ति । अत्र "तथापि तादृग्वयसः पर्यायं वार्षिकं विना । नोदेति केवलज्ञान" मिति वचनप्रतिपादितनियमाभावः प्रदर्शितः । यत्तु शुक्ललेश्याकाले नववर्षोनः प्रतिपादितः तत्तु जन्मत आरभ्य वार्षिकपर्यायापेक्षयेत्य-वधार्यम्, यदुक्तं-श्रीभगवतीसूत्रे पञ्चविंशतितमे शतके षष्ठोद्देशे-"सिणाए णं भंते ! केवइयं कालं वड्ढमाणपरिणामे होज्जा ! गोयमा जहण्णेणं अंतोमुहुत्तं उक्को-सेण वि अंतोमुहुत्तं; केवइयं कालं अवट्ठियपरिणामे होज्जा ? गोयमा ! जह० अंतोमु० उक्कोसेणं देसूणा पुव्वकोडी ।"-तट्टीकायां तु-"उक्कोसेणं देसूणापुव्वकोडि-त्ति-पूर्वकोट्यायुषः पुरुषस्य जन्मतो जघन्येन नवसु वर्षेष्वतिगतेषु केवलज्ञानमुत्पद्यते ततोऽसौ तदूनां पूर्वकोटिमवस्थितपरिणामः शैलेशीं यावद्विहरति, शैलेश्यां च वर्द्धमानपरिणामः स्यादित्येवं देशोनामिति ।" अत्र अन्यकारैः स्पष्टतया प्रत्यपादि यदुत-नववर्षन्यूनपूर्वकोटिश्च किञ्चिन्न्यूननववर्षपूर्वकोटिः एतौ उभौ केवलि-पर्यायमाश्रित्यैव । पूर्वं टीप्पणीकारेण केवलिनमाश्रित्य एकमेव मतं प्रतिपादितं अधुना स एव टीप्पणीकारः 'जन्मत आरभ्य सपादषट्कवर्षादिः प्रव्रज्यार्हः' इति स्वकीयमतव्यवस्थापनाय केवलिनमाश्रित्य शुक्ललेश्या विषये मतत्रयं प्रतिपादयति, विचित्रं तस्यागमकौशलं विचित्रा च तस्याभिनिविष्टतेत्यलं विस्तरेण ।

वैकसमयाधिका नीलास्थितिर्लघुः । पल्यासंख्येयभागश्च, नीलोत्कृष्टस्थितिर्भवेत् ॥ ९ ॥ पल्यासंख्येयभागोऽयं, पूर्वोक्तासंख्यभागतः । बृहत्तरो भवेदेवं, ज्ञेयमग्रेऽपि धीधनैः ॥ १० ॥ या नीलायाः स्थितिर्ज्येष्ठा, समयाभ्यधिका च सा । कापोत्या लघुरस्याः स्यात् पल्यासंख्यलवो गुरुः ॥ ११ ॥ लेश्यानां तिसृणामासां, स्थितिर्याऽदर्शि सा भवेत् । भवनेशव्यन्तरेषु, नान्येषु तदसंभवात् ॥ १२ ॥ एवं वक्ष्यमाणतेजोलेश्याया अप्यसौ स्थितिः । भवनव्यन्तरज्योतिराद्यकल्पद्वयावधि ॥ १३ ॥ पद्मायाश्च स्थितिर्ब्रह्मावधीशानादन्तरम् । लान्तकात्परतः शुक्ललेश्याया भाव्यतामिति ॥ १४ ॥ अथ प्रकृतं दशवर्षसहस्राणि, तेजोलेश्यालघुस्थितिः । भवनेशव्यन्तराणां, प्रज्ञप्ता ज्ञानभानुभिः ॥ १५ ॥ उत्कृष्टा भवनेशानां, साधिकं सागरोपमम् । व्यन्तराणां समुत्कृष्टा, पल्योपममुदीरिता ॥ १६ ॥ स्यात्पल्यस्याष्टमो भागो, ज्योतिषां सा लघीयसा । उत्कृष्टा वर्षलक्षेणाधिकं पल्योपमं भवेत् ॥ १७ ॥ सा लघुर्वैमानिकानामेकं पल्योपमं मता । उत्कृष्टा द्वौ पयोराशी, पल्यासंख्यलवाधिकौ ॥ १८ ॥ समयाभ्यधिकैषैव, पद्मायाः स्याल्लघुः स्थितिः । उत्कृष्टा पुनरेतस्याः, स्थितिर्दश पयोधयः ॥ १९ ॥ इयमेव च शुक्लायाः, स्थितिर्लघ्वी क्षणाधिका । उत्कृष्टा पुनरेतस्यास्त्रयस्त्रिंशत्पयोधयः ॥ २० ॥ इत्थं नारकदेवानां, लेश्यास्थितिरुदीरिता । अथ तिर्यग्मनुष्याणां, लेश्यास्थितिरुदीर्यते ॥ २१ ॥ या या लेश्या येषु येषु तिर्यग्नृषु वक्ष्यते । आन्तर्मुहूर्त्तिकी सा सा, शुक्ललेश्यां विना नृषु ॥ २२ ॥ शुक्ललेश्यास्थितिर्नृणां, जघन्याऽऽन्तर्मुहूर्त्तिकी । उत्कृष्टा नववर्षोना, पूर्वकोटी प्रकीर्त्तिता ॥ २३ ॥ यद्यप्यष्टवर्षवयाः, कश्चिद्दीक्षामवाप्नुयात् । तथापि तादृग्वयसः, पर्यायं वार्षिकं विना ॥ २४ ॥ नोदेति केवलज्ञानमतो युक्तमुदीरिता । पूर्वकोटी नवाब्दोना, शुक्ललेश्यागुरुस्थितिः ॥ २५ ॥ युग्मम् । इत्युत्तराध्ययनसूत्रवृत्तिप्रज्ञापनावृत्त्यभिप्रायः । तथैव संग्रहण्यामप्युक्तं—'चरमा नराण पुण नववासूणा पुव्वकोडी वि' इति, संग्रहणीवृत्तौ प्रवचनसारोद्धारवृत्तौ च नराणां पुनश्चरमा—शुक्ललेश्या उत्कर्षतः

किञ्चिन्न्यूननववर्षोनपूर्वकोटिप्रमाणापि, इयं च पूर्वकोटेरूर्ध्वं संयमावाप्तेरभावात्पूर्वकोट्यायुषः किञ्चित्समधिकवर्षाष्टकादूर्ध्वमुत्पादितकेवलज्ञानस्य केवलिनोऽवसेया इत्युक्तं, अत्र च पूर्वकोट्या नववर्षोनत्वं किञ्चिन्न्यूननववर्षोनत्वं किञ्चित्समधिकाष्टवर्षोनत्वमिति त्रयं मिथो यथा न विरुध्यते तथा बहुश्रुतेभ्यो भावनीयम् ।

---

१ अत्र "भावः परमशुक्ललेश्यां केवलित्वभावनीमाश्रित्य, इतरौ तु केवलकारणभूतशुक्ललेश्यामाश्रित्य, नवरमन्त्ये विशेषेणाप्रमत्ततायाः आश्रयणम्" इति मुद्रितपुस्तके केनचित् टीप्पणी कृता । परं तत्र "शुक्ललेश्या उत्कृष्टतः किञ्चिन्न्यूननववर्षोनपूर्वकोटीप्रमाणाऽपि। इयं च पूर्वकोटेरूर्ध्वं संयमावाप्तेरभावात् पूर्वकोट्यायुषः किञ्चित्समधिकवर्षाष्टकादूर्ध्वमुत्पादितकेवलज्ञानस्य केवलिनोऽवसेया" इत्युपन्यस्तवता ग्रन्थकारेण यदेव गर्भतः किञ्चिन्न्यूननववर्षोनत्वं तदेव जन्मतः किञ्चित् समधिकाष्टवर्षोनत्वं "मासपुहुत्तब्भहिए नपुंसगे सव्वसंकमणे" "योऽष्टवार्षिक एव सप्तमासाभ्यधिकः संयमं प्रतिपन्नः तत्प्रतिपत्त्यनन्तरं चान्तर्मुहूर्तेन क्षपकश्रेणिमारभते" इत्यादि कर्मप्रकृत्यादिपाठानुसारेण सूचितं 'न चेतरौ केवलकारणभूतशुक्ललेश्यामाश्रित्ये'ति । अत्र "तथापि तादृग्वयसः पर्यायं वार्षिकं विना। नोदेति केवलज्ञान" मिति वचनप्रतिपादितनियमाभावः प्रदर्शितः। यत्तु शुक्ललेश्याकाले नववर्षोनः प्रतिपादितः तत्तु जन्मत आरभ्य वार्षिकपर्यायापेक्षयेत्यवधार्यम्, यदुक्तं-श्रीभगवतीसूत्रे पञ्चविंशतितमे शतके षष्ठोद्देशे-"सिणाए णं भंते! केवइयं कालं वड्ढमाणपरिणामे होज्जा ! गोयमा जहण्णेणं अंतोमुहुत्तं उक्कोसेण वि अंतोमुहुत्तं; केवइयं कालं अवट्ठियपरिणामे होज्जा ? गोयमा! जह० अंतोमु० उक्कोसेणं देसूणा पुव्वकोडी।"-तट्टीकायां तु-"उक्कोसेणं देसूणापुव्वकोडित्ति-पूर्वकोट्यायुषः पुरुषस्य जन्मतो जघन्येन नवसु वर्षेष्वतिगतेषु केवलज्ञानमुत्पद्यते ततोऽसौ तदूनां पूर्वकोटिमवस्थितपरिणामः शैलेशीं यावद्विहरति, शैलेश्यां च वर्द्धमानपरिणामः स्यादित्येवं देशोनामिति ।" अत्र ग्रन्थकारैः स्पष्टतया प्रत्यपादि यदुत-नववर्षन्यूनपूर्वकोटिश्च किञ्चिन्न्यूननववर्षपूर्वकोटिः एतौ उभौ केवलिपर्यायमाश्रित्यैव । पूर्वं टीप्पणीकारेण केवलिनमाश्रित्य एकमेव मतं प्रतिपादितं अधुना स एव टीप्पणीकारः 'जन्मत आरभ्य सपादपट्कवर्षादिः प्रव्रज्यार्हः' इति स्वकीयमतव्यवस्थापनाय केवलिनमाश्रित्य शुक्ललेश्या विषये मतत्रयं प्रतिपादयति, विचित्रं तस्यागमकौशलं विचिन्त्या च तस्याभिनिविष्टतेत्यलं विस्तरेण ।

"प्रत्येकं सर्वलेश्यानामनन्ता वर्गणाः स्मृताः । प्रत्येकं निखिला लेश्यास्तथाऽनन्तप्रदेशिकाः ॥ १ ॥ असंख्यातप्रदेशावगाढाः सर्वोऽप्युदाहृताः । स्थानान्यध्यवसायस्य, तासां संख्यातिगानि च ॥ २ ॥ क्षेत्रतस्तान्यसंख्येयलोकाभ्रांशसमानि वै । कालतोऽसंख्येयकालचक्रक्षणमितानि च ॥ ३ ॥—यदुक्तं—"असंखेज्जाण उस्सप्पिणीण ओसप्पिणीण जे समया । संखाईयालोगा, लेस्साणं हुंति ठाणाइं ॥ १ ॥" अभिप्रायो यादृशः स्यात्, सतीष्वेतासु देहिनाम् । समयासमयोक्ताभ्यां, दृष्टान्ताभ्यां प्रदर्श्यते ॥ ४ ॥

"द्वयोरपि दृष्टान्तयोः स्थापना—यथा पथः परिभ्रष्टाः, पुरुषाः षण् महाटवीम् । प्राप्ताः समन्तादैक्षन्त, भक्ष्यं दिक्षु बुभुक्षिताः ॥ १ ॥ जम्बूवृक्षं क्वचित्तत्र, ददृशुः फलभङ्गुरम् । आह्वयन्तमिवाध्वन्यान्, मरुच्चपलपल्लवैः ॥ २ ॥ एकस्तत्राह वृक्षोऽयं, मूलादुन्मूल्यते ततः । सुखासीनाः फलास्वादं, कुर्मः श्रमविवर्जिताः ॥ ३ ॥ अन्यः प्राह किमेतावान्, पात्यते प्रौढपादपः । शाखा महत्यश्छिद्यन्ते, सन्ति तासु फलानि यत् ॥ ४ ॥ तृतीयोऽथावदत् शाखा, भविष्यन्ति कदेदृशः । प्रशाखा एव पात्यन्ते, यत एताः फलैर्भृताः ॥ ५ ॥ उवाच वाचं तुर्योऽथ, तिष्ठन्त्वेता वराकिकाः । यथेच्छं गुच्छसंदोहं, छिंद्मो येषु फलोद्गमः ॥ ६ ॥ न नः प्रयोजनं गुच्छैः, फलैः किंतु प्रयोजनम् । तान्येव भुवि कीर्यन्ते, पञ्चमः प्रोचिवानिति ॥ ७ ॥ षष्ठेन शिष्टमतिना, समादिष्टमिदं ततः । पतितानि फलान्यद्मो, मा भूत्पातनपातकम् ॥ ८ ॥ भाव्याः षण्णामप्यमीषां, लेश्याः कृष्णादिकाः क्रमात् । दर्श्यतेऽन्योऽपि दृष्टान्तो, दृष्टः श्रीश्रुतसागरे ॥ ९ ॥ केचन ग्रामघाताय, चौराः क्रूरपराक्रमाः । क्रामन्तो मार्गमन्योऽन्यं, विचारमिति चक्रिरे ॥ १० ॥ एकस्तत्राह दुष्टात्मा यः कश्चिद् दृष्टिमेति नः । हन्तव्यः सोऽद्य सर्वोऽपि, द्विपदो वा चतुष्पदः ॥ ११ ॥ अन्यः प्राह चतुष्पद्भिरपराद्धं न किञ्चन । मनुष्या एव हन्तव्या, विरोधो यैः सहात्मनाम् ॥ १२ ॥ तृतीयः प्राह न स्त्रीणां, हत्या कार्याऽतिनिन्दिता । पुरुषा एव हन्तव्या, यतस्ते क्रूरचे-

तसः ॥ १३ ॥ निरायुधैर्वराकैस्तैर्हतैः किं नः प्रयोजनम् । घात्याः सशस्त्रा एवेति, तुर्यश्चातुर्यवान् जगौ ॥ १४ ॥ सशस्त्रैरपि नश्य-द्भिर्हतैः किं नः फलं भवेत् । सायुधो युध्यते यः स, वध्य इत्याह पञ्चमः ॥ १५ ॥ परद्रव्यापहरणमेकं पापमिदं महत् । प्राणापहरणं चान्यथैतत्कुर्मस्तर्हि का गतिः ॥ १६ ॥ धनमेव तदादेयं, मारणीयो न कश्चन । षष्ठः स्पष्टमभाषिष्ट, प्राग्वदत्रापि भावना ॥१७॥" इति ।

अथ लेश्याया लक्षणमुच्यते—हिंसादिपञ्चाश्रवप्रवृत्तस्त्रिभिर्गुप्तिभिरगुप्तः षट्सु कायेष्वविरतस्तीव्रारम्भपरिणतः सर्वस्यैवाहितैषी कार्पण्ययुक्तो गुणदोषापर्यालोचकः चौर्यादिकृत्साहसिकोऽत्यन्तमैहिकामुष्मिकापायशङ्काविकलपरिणामोऽत्यन्तं जन्तुपीडानिरपेक्षपरिणामश्च निर्दयः परप्रशंसारहितोऽजितेन्द्रियः कृष्णलेश्यावान् भवति । एतेन हिंसादिपञ्चाश्रवप्रवृत्तत्वादीनां भावकृष्णलेश्यायाः सद्भावोपदर्शनादमीषां लक्षणत्वमुक्तं; यो हि यत्सद्भावे एव भवति तदेव तस्य लक्षणं, यथौष्ण्यमग्नेरेवमुत्तरत्रापि लक्षणत्वभावना कार्या । परगुणासहनशीलः तीव्राभिनिवेशयुतोऽतपस्वी अविद्यावान् मायावी निर्लज्जो विषयासक्तः प्रद्वेषी, व्यलीकभाषणाच्छठो, जात्यादिमदासेवनात् प्रमत्तः, रसलोलुपः सुखान्वेष्यनिवृत्तारम्भः क्षुद्रो नरो नीललेश्यावान् भवति । वचसा वक्रः क्रियया वक्रसमाचारो मनसा निकृतिमान् ऋजुत्वाभाववान् स्वदोषप्रच्छादकत्वेन प्रतिकुञ्चकः सर्वत्र व्याजतः प्रवृत्तेरौपधिको मिथ्यादृष्टिरनार्यश्चोत्प्रासकः दुष्टवादी चौरो मत्सरी कापोतलेश्यावान् भवति । मनोवाक्कायाभिरनुत्सिक्तोऽचपलोऽशठोऽकुतूहलः स्वभ्यस्तगुर्वाद्युचितप्रतिपत्तिः दान्तः स्वाध्यायादिव्यापारवान् उपधानवान् अभिरुचितधर्मानुष्ठानोऽङ्गीकृतव्रतादिनिर्वाहकोऽवद्यभीरुर्मुक्तिगवेषकः परोपकारचेता अनाश्रव एवंगुणोपेतस्तेजोलेश्यावान् भवति । प्रतनुकषायः प्रशान्तचित्तो दान्तो मितभाष्युपशान्तो जितेन्द्रियः पद्मलेश्यावान् भवति ।

शुभध्यानपरायणः प्रशान्तचित्तो वशीकृताक्षो दान्त ईर्यासमित्यादिभिः समितो मनोगुप्त्यादिभिर्गुप्त उपशान्तरागः क्षीणरागो वा एतद्योगसमायुक्तः शुक्ललेश्यावान् भवतीति । तदुक्तमुत्तराध्ययनसूत्रे—"पंचासवप्पवत्तो तीहिं अगुत्तो छसू अविरओ य । तिव्वारंभपरिणओ खुद्दो साहस्सिओ वरो ॥ १ ॥ निद्धंधसपरिणामो निस्संसो अजिइंदिओ । एयजोगसमाउत्तो कण्हलेसं तु परिणमे ॥ २ ॥ इस्सा अमरिस अतवो अविज्ज माया अहीरिया । गेही पओसे य सढे रसलोलुए सायगवेसए य ॥ ३ ॥ आरंभा अविरओ खुद्दो साहस्सिओ नरो । एयजोगसमाउत्तो नीललेसं तु परिणमे ॥४॥ वंके वंकसमायारे नियडिल्ले अणुज्जुए । पलिउंचग ओवहिए मिच्छदिट्ठी अणायरिए॥५॥ उप्फालग दुट्ठवाई य तेणे अवि य मच्छरी। एयजोगसमाउत्तो काउलेसं तु परिणमे ॥६॥ नीआवित्ती अचवले अमाई अकुऊहले । विणीयविणए दंते जोगवं उवहाणवं ॥७॥ पियधम्मे दढधम्मे वज्जभीरू हिएसए । एयजोगसमाउत्तो तेउलेसं तु परिणमे ॥ ८ ॥ पयणुकोहमाणो य मायालोभे य पयणुए। पसंतचित्ते दंतप्पा जोगवं उवहाणवं ॥ ९ ॥ तहा य पयणुवाई य उवसंते जिइंदिए । एयजोगसमाउत्तो पम्हलेसं तु परिणमे ॥१०॥ अट्टरुद्दाणि वज्जित्ता धम्मसुक्काणि साहए । पसंतचित्तेंददप्पा समिए गुत्ते य गुत्तिसु ॥ ११ ॥ सरागे खीणरागे वा उवसंते जिइंदिए । एयजोगसमाउत्तो सुक्कलेसं तु परिणमे ॥ १२ ॥" इति ।

इह च लेश्यानां प्रत्येकमसंख्येयानि लोकाकाशप्रदेशप्रमाणान्यध्यवसायस्थानानि भवन्ति । नवरमशुभानां संक्लेशरूपाणि शुभानां च विशुद्धिरूपाणि । एतेषां च भावलेश्यागतानां स्थानानां यानि कारणभूतानि कृष्णादिद्रव्यवृन्दानि तान्यपि स्थानान्युच्यन्ते । तानि च प्रत्येकमसंख्येयानि, तथाविधैकपरिणामनिबन्धनानामनन्तानामपि द्रव्याणामेकाध्यवसायहेतुत्वेनैकत्वात् । तानि च प्रत्येकं द्विविधानि, तद्यथा—जघन्यान्युत्कृष्टानि च, जघन्यलेश्यास्थानपरिणामकार-

णानि जघन्यानि, उत्कृष्टलेश्यास्थानपरिणामकारणान्युत्कृष्टानि, यानि तु मध्यमानि तानि जघन्यप्रत्यासन्नानि जघन्येष्वन्तर्भूतानि उत्कृष्टप्रत्यासन्नानि तूत्कृष्टेषु, एकैकानि च स्वस्थाने परिणामगुणभेदतोऽसंख्येयानि । अत्र दृष्टान्तो—यथा स्फटिकमणेरलक्तकवशेन रक्तता भवति, सा च जघन्यरक्तगुणालक्तकवशेन जघन्या, एकगुणाधिकालक्तकवशेनैकगुणाधिकजघन्या, एवमेकैकगुणवृद्ध्या जघन्यायामेव रक्ततायामसंख्येयानि स्थानानि भवन्ति । तानि च व्यवहारतः स्तोकगुणत्वात् सर्वाण्यपि जघन्यान्येवोच्यन्ते । एवमात्मनोऽपि जघन्यैकगुणाधिकद्विगुणाधिकलेश्याद्रव्योपधानवशतो लेश्यापरिणामविशेषा असंख्येया भवन्ति । सर्वेऽपि च व्यवहारतोऽल्पगुणत्वात् जघन्यव्यपदेशं लभन्ते । तत्कारणभूतानि च द्रव्याणां जघन्यानि स्थानानि, एवमुत्कृष्टान्यपि स्थानान्यसंख्येयानि भावनीयानि । ततो मन्दाध्यवसायस्थानापेक्षया मिथ्यादृष्टौ शुक्ललेश्यादीनामपि सम्भवो न विरुध्यते ॥

अथ प्रसङ्गतो लेश्यास्थानानामल्पबहुत्वमुच्यते । तच्च त्रिविधं—जघन्यस्थानविषयमुत्कृष्टस्थानविषयमुभयस्थानविषयं च । पुनरप्येकैकं त्रिविधं भवति, तद्यथा—द्रव्यार्थतया प्रदेशार्थतया उभयार्थतया च । तत्र द्रव्यार्थतया सर्वस्तोकानि जघन्यानि कापोतलेश्यास्थानानि, ततो द्रव्यार्थतया जघन्यानि नीललेश्यास्थानान्यसंख्येयगुणानि, ततो द्रव्यार्थतया जघन्यानि कृष्णलेश्यास्थानान्यसंख्येयगुणानि, ततो द्रव्यार्थतया जघन्यानि तेजोलेश्यास्थानान्यसंख्येयगुणानि, ततो द्रव्यार्थतया जघन्यानि पद्मलेश्यास्थानान्यसंख्येयगुणानि, ततो द्रव्यार्थतया जघन्यानि शुक्ललेश्यास्थानान्यसंख्येयगुणानि भवन्ति ॥

प्रदेशार्थतया सर्वस्तोकानि जघन्यानि कापोतलेश्यास्थानानि, ततः प्रदेशार्थतया जघन्यानि नीललेश्यास्थानान्यसंख्ये-

यगुणानि, ततः प्रदेशार्थतया जघन्यानि कृष्णलेश्यास्थानान्यसंख्येयगुणानि, ततः प्रदेशार्थतया जघन्यानि तेजोलेश्यास्थानान्यसंख्येयगुणानि, ततः प्रदेशार्थतया जघन्यानि पद्मलेश्यास्थानान्यसंख्येयगुणानि, ततः प्रदेशार्थतया जघन्यानि शुक्लेश्यास्थानान्यसंख्येयगुणानि भवन्ति ॥ उभयार्थतायां सर्वस्तोकानि जघन्यानि कापोतलेश्यास्थानानि, ततोऽसंख्येयगुणानि द्रव्यार्थतया जघन्यानि नीललेश्यास्थानानि, ततो द्रव्यार्थतया जघन्यानि कृष्णलेश्यास्थानान्यसंख्येयगुणानि, ततो द्रव्यार्थतया जघन्यानि तेजोलेश्यास्थानान्यसंख्येयगुणानि, ततो द्रव्यार्थतया जघन्यानि पद्मलेश्यास्थानान्यसंख्येयगुणानि, ततो द्रव्यार्थतया जघन्यानि शुक्लेश्यास्थानान्यसंख्येयगुणानि । ततः प्रदेशार्थतया जघन्यानि कापोतलेश्यास्थानान्यनन्तगुणानि, ततः प्रदेशार्थतया जघन्यानि नीललेश्यास्थानान्यसंख्येयगुणानि, ततः प्रदेशार्थतया जघन्यानि कृष्णलेश्यास्थानान्यसंख्येयगुणानि, ततः प्रदेशार्थतया जघन्यानि तेजोलेश्यास्थानान्यसंख्येयगुणानि, ततः प्रदेशार्थतया जघन्यानि पद्मलेश्यास्थानान्यसंख्येयगुणानि, ततः प्रदेशार्थतया जघन्यानि शुक्लेश्यास्थानान्यसंख्येयगुणानि भवन्तीति ॥ तथोत्कृष्टतः सर्वस्तोकानि द्रव्यार्थतया कापोतलेश्यास्थानानि, ततो द्रव्यार्थतयोत्कृष्टानि नीललेश्यास्थानान्यसंख्येयगुणानि, ततो द्रव्यार्थतयोत्कृष्टानि कृष्णलेश्यास्थानान्यसंख्येयगुणानि, ततो द्रव्यार्थतयोत्कृष्टानि तेजोलेश्यास्थानान्यसंख्येयगुणानि ततो द्रव्यार्थतयोत्कृष्टान्यसंख्येयगुणानि पद्मलेश्यास्थानानि, ततो द्रव्यार्थतयोत्कृष्टान्यसंख्येयगुणानि शुक्लेश्यास्थानानि भवन्ति ॥ तथोत्कृष्टतः प्रदेशार्थतया सर्वस्तोकानि कापोतलेश्यास्थानानि, ततः प्रदेशार्थतयोत्कृष्टानि नीललेश्यास्थानान्यसंख्येयगुणानि, ततः प्रदेशार्थतयोत्कृष्टानि कृष्णलेश्यास्थानान्यसंख्येयगुणानि, ततः प्रदेशार्थतयोत्कृष्टानि तेजोलेश्यास्थानान्य-

संख्येयगुणानि, ततः प्रदेशार्थतयोत्कृष्टानि पद्मलेश्यास्थानान्यसंख्येयगुणानि, ततः प्रदेशार्थतयोत्कृष्टानि शुक्ललेश्यास्थानान्यसंख्येयगुणानि भवन्ति ॥ तथोभयार्थतयोत्कृष्टानि द्रव्यार्थतया कापोतलेश्यास्थानानि सर्वस्तोकानि, ततो द्रव्यार्थतयोत्कृष्टानि नीललेश्यास्थानान्यसंख्येयगुणानि, ततो द्रव्यार्थतयोत्कृष्टानि कृष्णलेश्यास्थानान्यसंख्येयगुणानि, ततो द्रव्यार्थतयोत्कृष्टानि तेजोलेश्यास्थानान्यसंख्येयगुणानि, ततो द्रव्यार्थतयोत्कृष्टानि पद्मलेश्यास्थानान्यसंख्येयगुणानि, ततो द्रव्यार्थतयोत्कृष्टानि शुक्ललेश्यास्थानान्यसंख्येयगुणानि, ततः प्रदेशार्थतयोत्कृष्टानि कापोतलेश्यास्थानान्यनन्तगुणानि, ततः प्रदेशार्थतयोत्कृष्टानि नीललेश्यास्थानान्यसंख्येयगुणानि, ततः प्रदेशार्थतयोत्कृष्टानि कृष्णलेश्यास्थानान्यसंख्येयगुणानि, ततः प्रदेशार्थतयोत्कृष्टानि तेजोलेश्यास्थानान्यसंख्येयगुणानि, ततः प्रदेशार्थतयोत्कृष्टानि पद्मलेश्यास्थानान्यसंख्येयगुणानि, ततः प्रदेशार्थतयोत्कृष्टानि शुक्ललेश्यास्थानान्यसंख्येयगुणानि भवन्तीति ॥ तथोभयोर्द्रव्यार्थचिन्तायां सर्वस्तोकानि जघन्यानि द्रव्यार्थतया कापोतलेश्यास्थानानि, ततो द्रव्यार्थतया जघन्यानि नीललेश्यास्थानान्यसंख्येयगुणानि, ततो द्रव्यार्थतया जघन्यानि कृष्णलेश्यास्थानान्यसंख्येयगुणानि, ततो द्रव्यार्थतया जघन्यानि तेजोलेश्यास्थानान्यसंख्येयगुणानि, ततो द्रव्यार्थतया जघन्यानि पद्मलेश्यास्थानान्यसंख्येयगुणानि, ततो द्रव्यार्थतया जघन्यानि शुक्ललेश्यास्थानान्यसंख्येयगुणानि, ततो द्रव्यार्थतयोत्कृष्टानि कापोतलेश्यास्थानान्यसंख्येयगुणानि, ततो द्रव्यार्थतयोत्कृष्टानि नीललेश्यास्थानान्यसंख्येयगुणानि, ततो द्रव्यार्थतयोत्कृष्टानि कृष्णलेश्यास्थानान्यसंख्येयगुणानि, ततो द्रव्यार्थतयोत्कृष्टानि तेजोलेश्यास्थानान्यसंख्येयगुणानि, ततो द्रव्यार्थतयोत्कृष्टानि पद्मलेश्यास्थानान्यसंख्येयगुणानि, ततो द्रव्यार्थतयोत्कृष्टानि शुक्ले-

श्यास्थानान्यसंख्येयगुणानि भवन्तीति ॥ तथोभयोः पर्यायार्थचिन्तायां प्रदेशार्थतया सर्वस्तोकानि जघन्यानि कापोतलेश्यास्थानानि, ततः प्रदेशार्थतया जघन्यानि नीललेश्यास्थानान्यसंख्येयगुणानि, ततः प्रदेशार्थतया जघन्यानि कृष्णलेश्यास्थानान्यसंख्येयगुणानि, ततः प्रदेशार्थतया जघन्यानि तेजोलेश्यास्थानान्यसंख्येयगुणानि, ततः प्रदेशार्थतया जघन्यानि पद्मलेश्यास्थानान्यसंख्येयगुणानि, ततः प्रदेशार्थतया जघन्यानि शुक्ललेश्यास्थानान्यसंख्येयगुणानि; ततः प्रदेशार्थतयोत्कृष्टानि कापोतलेश्यास्थानान्यनन्तगुणानि, ततः प्रदेशार्थतयोत्कृष्टानि नीललेश्यास्थानान्यसंख्येयगुणानि, ततः प्रदेशार्थतयोत्कृष्टानि कृष्णलेश्यास्थानान्यसंख्येयगुणानि, ततः प्रदेशार्थतयोत्कृष्टानि तेजोलेश्यास्थानान्यसंख्येयगुणानि, ततः प्रदेशार्थतयोत्कृष्टानि पद्मलेश्यास्थानान्यसंख्येयगुणानि, ततः प्रदेशार्थतयोत्कृष्टानि शुक्ललेश्यास्थानान्यसंख्येयगुणानि भवन्ति ॥ तथोभयोरुभयार्थचिन्तायां द्रव्यार्थतया सर्वस्तोकानि जघन्यानि कापोतलेश्यास्थानानि, ततो द्रव्यार्थतया जघन्यानि नीललेश्यास्थानान्यसंख्येयगुणानि, ततो द्रव्यार्थतया जघन्यानि कृष्णलेश्यास्थानान्यसंख्येयगुणानि, ततो द्रव्यार्थतया जघन्यानि तेजोलेश्यास्थानान्यसंख्येयगुणानि, ततो द्रव्यार्थतया जघन्यानि पद्मलेश्यास्थानान्यसंख्येयगुणानि, ततो द्रव्यार्थतया जघन्यानि शुक्ललेश्यास्थानान्यसंख्येयगुणानि; ततो द्रव्यार्थतयोत्कृष्टानि, कापोतलेश्यास्थानान्यसंख्येयगुणानि, ततो द्रव्यार्थतयोत्कृष्टानि नीललेश्यास्थानान्यसंख्येयगुणानि, ततो द्रव्यार्थतयोत्कृष्टानि कृष्णलेश्यास्थानान्यसंख्येयगुणानि, ततो द्रव्यार्थतयोत्कृष्टानि तेजोलेश्यास्थानान्यसंख्येयगुणानि, ततो द्रव्यार्थतयोत्कृष्टानि पद्मलेश्यास्थानान्यसंख्येयगुणानि, ततो द्रव्यार्थतयोत्कृष्टानि शुक्ललेश्यास्थानान्यसंख्येयगुणानि; ततः

प्रदेशार्थतया जघन्यानि कापोतलेश्यास्थानान्यनन्तगुणानि, ततः प्रदेशार्थतया जघन्यानि नीललेश्यास्थानान्यसंख्येय-
गुणानि, ततः प्रदेशार्थतया जघन्यानि कृष्णलेश्यास्थानान्यसंख्येयगुणानि, ततः प्रदेशार्थतया जघन्यानि तेजोलेश्या-
स्थानान्यसंख्येयगुणानि, ततः प्रदेशार्थतया जघन्यानि पद्मलेश्यास्थानान्यसंख्येयगुणानि, ततः प्रदेशार्थतया जघन्यानि
शुक्ललेश्यास्थानान्यसंख्येयगुणानि, ततः प्रदेशार्थतयोत्कृष्टानि कापोतलेश्यास्थानान्यसंख्येयगुणानि, ततः प्रदेशार्थत-
योत्कृष्टानि नीललेश्यास्थानान्यसंख्येयगुणानि, ततः प्रदेशार्थतयोत्कृष्टानि कृष्णलेश्यास्थानान्यसंख्येयगुणानि, ततः
प्रदेशार्थतयोत्कृष्टानि तेजोलेश्यास्थानान्यसंख्येयगुणानि, ततः प्रदेशार्थतयोत्कृष्टानि पद्मलेश्यास्थानान्यसंख्येयगुणानि,
ततः प्रदेशार्थतयोत्कृष्टानि शुक्ललेश्यास्थानान्यसंख्येयगुणानि भवन्तीति ॥ तदुक्तम्—"इह त्रीणि अल्पबहुत्वानि, तद्यथा—ज-
घन्यस्थानविषयं उत्कृष्टस्थानविषयं उभयस्थानविषयं, एकैकमपि त्रिविधं, तद्यथा—द्रव्यार्थतया प्रदेशार्थतया उभयार्थतया च । तत्र जघन्य-
स्थानविषये द्रव्यार्थतायां प्रदेशार्थतायां च प्रत्येकं कापोतनीलकृष्णतेजःपद्मशुक्ललेश्यास्थानानि क्रमेण यथोत्तरमसंख्येयगुणानि वक्त-
व्यानि, उभयार्थतायां प्रथमतो द्रव्यार्थतया कापोतनीलकृष्णतेजःपद्मशुक्ललेश्यास्थानानि क्रमेण यथोत्तरमसंख्येयगुणानि वक्तव्यानि, ततः
शुक्ललेश्यास्थानानन्तरं प्रदेशार्थतया कापोतलेश्यास्थानान्यनन्तगुणानि वक्तव्यानि तदनन्तरं नीलकृष्णतेजःपद्मशुक्ललेश्यास्थानानि क्रमेण
प्रदेशार्थतया यथोत्तरमसंख्येयगुणानि एवमुत्कृष्टान्यपि स्थानानि द्रव्यार्थतया प्रदेशार्थतया उभयार्थतया च चिन्तयितव्यानि । तथा च—'एवं
जहन्नगा तहेव उक्कोसगा वि नवरमुक्कोसत्ति अभिलावो' इति । जघन्योत्कृष्टस्थानानां समुदायविषये स्वल्पबहुत्वे प्रथमतो जघन्यानि द्रव्या-
र्थतया कापोतनीलकृष्णतेजःपद्मशुक्ललेश्यास्थानानि क्रमेण यथोत्तरमसंख्येयगुणानि वक्तव्यानि, तदनन्तरं जघन्यशुक्ललेश्यास्थानेभ्य उत्कृ-

व्यवहारनयेन पूर्वक्षणवर्त्तित्वेन कारणस्य युगपदुत्पन्नयोः ज्ञानसम्यक्त्वयोः न कार्यकारणभाव इति । अत्रेदमवधेयम्—नह्यपायमात्रे रुचित्वं वक्तुं शक्यं, घटाद्यपाये तदननुभवात्, किन्तु जीवाजीवादिसमूहालम्बनज्ञानविशेष एव, अत एव श्रद्धात्वं ज्ञानत्वव्याप्यो जातिविशेषः इति परेऽपि वदन्ति, तदवच्छिन्ने च दर्शनावरणक्षयोपशमानामेकशक्तिमत्त्वादिना हेतुत्वमिति ज्ञानावरणीयविशेष एव दर्शनावरणम्, पृथग्विभागादिप्रक्रिया तु गोवृषन्यायात् । यत्तु—"तत्त्वार्थश्रद्धानं सम्यग्दर्शनमपायसद्रव्यतया सम्यग्दर्शनमपायो मतिज्ञानतृतीयांश" इत्यादि, तत्कारणे कार्योपचारं कृत्वाऽऽयुर्घृतमित्यादिवदिति गुरवो व्याचक्षत इत्युत्तराध्ययनबृहद्वृत्तौ ।

'ननु सम्यक्त्वं सहेतुकं निर्हेतुकं वोत्पद्यते, सहेतुकं चेत् ? कोऽस्य हेतुः ? किं भगवदर्हद्बिम्बपूजनदर्शनादिकं प्रवचनार्थश्रवणमाहोस्विदन्यत्किञ्चित् ? न तावत् प्रथमः, तद्भावेऽप्यभव्यानां तदनुत्पत्तेः । 'ननूषरभूमौ पतितं बीजं भूमिदोषादङ्कुरं नोत्पादयति नैतावता बीजस्याङ्कुरं प्रति कारणता विहन्येत । नह्येकत्रानिमित्तीभवन्नप्यन्यत्र तन्निमित्तं न भवतीति बीजादौ तथादर्शनात् । एवमभव्या अपि सम्यक्त्वोत्पादं प्रत्यूषरभूमिकल्पाः ततस्तेषां सम्यक्त्वानुत्पादादपि जिनबिम्बपूजादर्शनादिकं न सम्यक्त्वस्याहेतुरन्यत्र तद्धेतुत्वस्य दर्शनादिति चेत् ?' न, भव्यानामपि केषाञ्चिद्दीर्घसंसारिणां जिनबिम्बपूजादर्शनादिभावेऽपि सम्यक्त्वस्यानुत्पादादिति । प्रवचनार्थश्रवणपक्षोऽपि न श्रेयान्, तद्भावेऽपि सम्यग्दर्शनस्यानुत्पादात् । तथाहि—भगवद्भिः सर्वेषां जीवानामनन्तशः ग्रैवयकोपपातो निरदेशि, न चासौ रजोहरणादिलिङ्गधारणमन्तरेणोपपद्यते, तदुक्तम्—"सो दव्वसंजमेणं पगरिसरूवेण जिणुवइट्ठेणं" । रजोहरणादिलिङ्गधारणे च यथायोगं प्रवचनार्थश्रवणम-

धिगमश्चोपजायते, उक्तं च—"लिंगे य जहाजोगं होइ इमो सुत्तपोरिसाइयं । जं तत्थ निच्चकम्मं पन्नत्तं वीयरायेहिं ॥ १ ॥" एवं प्रवचनार्थश्रवणमपि न सर्वेषां सम्यक्त्वोत्पादहेतुः, यतः सम्यक्त्वे सति नियमतः किञ्चिदूनार्द्धपुद्गलपरावर्त्तमात्र एव संसारः, न चासौ सर्वेषां जीवानामेतावन्मात्रः । तदुक्तम्—"तब्भावम्मि य नियमा परियट्टद्धूण सो उ संसारो । न य सो सव्वेसिं जओ ता तब्भावे वि तं नत्थि ॥ १ ॥" इति द्वितीयपक्षोऽपि न क्षेमङ्करः । नापि तृतीयः, अनन्तशः प्राप्तेऽपि तस्मिन् सम्यक्त्वोत्पादाभावात् । तदुक्तम्—"न य अत्थि कोइ अन्नो इत्थं हेऊ अपत्तपुव्वो जो । जमणादिसंसारे केण सयं न घडिओ जोगो ॥ १ ॥" इति । नापि निर्हेतुकं सम्यग्दर्शनमुत्पद्यते, यतो निर्हेतुकस्योत्पादे सर्वेषां सर्वदा सर्वत्र सम्यग्दर्शनस्योत्पत्तिः स्यात् । देशकालपुरुषाद्यपेक्षणे तु तेषामेव हेतुत्वप्रसक्तेरिति चेत्'; अत्रोच्यते—सम्यक्त्वस्योत्पत्तौ पारमार्थिकं कारणं तथाभव्यत्वमनादि पारिणामिकं जीवस्य स्वभावविशेषभूतं, भगवदर्हद्बिम्बपूजादर्शनादिकं तु सहकारिकारणं भवति, तथाहि—तस्य तस्य जन्तोरयमेवानादिपारिणामिकस्तथाभव्यत्वलक्षणः स्वभावविशेषो येन तत्र विवक्षिते क्षेत्रे तदा तदा काले तत्तत्प्रतिनियतं भगवदर्हद्बिम्बपूजनादिकं प्रतीत्य सम्यक्त्वलाभो भवति । कस्यचित्पुनस्तथाविधनिमित्तमन्तरेणापि । तत्रापि तथाभव्यत्वस्य तथास्वभावत्वेन विवक्षिते जिनपूजनदर्शनादिकं विवक्षितस्यैव पुंसः सम्यक्त्वस्य हेतुर्भवति, साध्यव्याधिकल्पत्वात्तस्य । तथाहि—यथा कश्चित्साध्यो व्याधिः स्वयमेवोपशान्तिमेति, कश्चित्पुनः यावन्न वैद्योपदेशेन प्रतिक्रियां वितन्येत तावन्नैवोपशाम्यति । कश्चित्तु प्रभूतेन कालेन निवर्त्तते । एवं तथाभव्यत्वमपि कस्यचित्स्वयमेव विपाकमायाति, तेन बाह्यं जिनबिम्बपूजनदर्शनादिकं विशिष्टनिमित्तमनपेक्ष्यापि सम्यक्त्वमुपजायते । कस्यचित् पुनः जिनबिम्बपूजनद-

र्शनादिकं विशिष्टतया लब्धिसमन्वितसाधुदर्शनं वा प्रवचनार्थश्रवणं वा बाह्यनिमित्तमपेक्ष्य तद्विपाकमायाति । कस्यचित्पुनः प्रभूतेन कालेन निर्हेतुकं तद्विपच्यते । अत एव श्रीमद्धरिभद्रसूरिपादैः धर्म्मसारप्रकरणे–"साध्यव्याधिसममेतदि"त्युक्तम् । तथा च सति जिनबिम्बपूजनगुरुदर्शनप्रवचनार्थश्रवणादिकस्य तथाभव्यत्वपरिपाकहेतुत्वेन सम्यक्त्वं प्रति हेतुता वाच्या, न स्वतन्त्रतयेति फलितार्थः । पूर्वमहर्षिभिः प्रणीताभिः गाथाभिः सम्यक्त्वस्य फलमुच्यते–"अन्तोमुहुत्तमित्तं पि फासिअं हुज्ज जेहिं सम्मत्तं । तेसिं अवड्ढपुग्गलपरिअट्टो चेव संसारो ॥ १ ॥ सम्मदिट्ठी जीवो गच्छइ नियमा विमाणवासीसु । जइ न विगयसम्मत्तो अहवा न बद्धाउओ पुव्विं ॥ २ ॥ जं सक्कइ तं कीरइ जं च न सक्कइ तयंमि सद्दहणा । सद्दहमाणो जीवो वच्चइ अयरामरट्ठाणं ॥ ३ ॥ लब्ध्वा मुहूर्त्तमपि ये परिवर्जयन्ति, सम्यक्त्वरत्नमनवद्यपदप्रदायि । यास्यन्ति तेऽपि न चिरं भववारिराशौ, तद्बिभ्रतां चिरतरं किमिहास्ति वाच्यम् ॥ १ ॥" इति ।

प्राग्व्यावर्णितस्वरूपं सम्यग्दर्शनं हेतुद्वैविध्यात् द्विविधं भवति । तद्यथा–निसर्गसम्यग्दर्शनमधिगमसम्यग्दर्शनं च । तदुक्तम् तत्त्वार्थसूत्रे–"तन्निसर्गादधिगमाद्वा" । तत्र निसृज्यते त्यज्यते कार्यनिवृत्तौ सत्यामिति निसर्गः–परिणामः, स्वभावो, गुरूपदेशनिरपेक्ष इति यावत्, उत्पन्ने सम्यग्दर्शनेऽनिवृत्तिकरणाख्यपरिणामस्य स्वत एवोपरतिलक्षणस्य त्यागस्यावर्जनीयत्वात्, तस्य च परिणामस्य न सर्वथात्यागः किन्तूत्फणविफणप्रसारिताकुण्डलितभुजङ्गवदुत्थितासीनशयितपुरुषवदङ्कुरितकिशलयितपत्रितपुष्पितफलिततरुवद्वाऽनिवृत्तिकरणेन परिणतस्यैवात्मनोऽनन्तरं सम्यग्दर्शनपरिणतेरभ्युपगमात्, अत्रावस्थाभेदेऽपि तद्वतोरभेदात् । निसर्गादुत्पन्नं सम्यक्त्वमपि निसर्गसम्यक्त्वमुच्यते । तदुक्तम्–योग-

सागरोपमकोटीनां, कोट्यब्धि-
शास्त्रवृत्तौ—"अनाद्यनन्तसंसारावर्त्तवर्त्तिषु देहिषु । ज्ञानदृष्ट्यावृतिवेदनीयान्तरायकर्म्मणाम् ॥ १ ॥
त्रिंशत्परा स्थितिः । विंशतिर्गोत्रनाम्नोश्च, मोहनीयस्य सप्ततिः ॥ २ ॥ ततो गिरिसरिद्ग्राव–घोलनान्यायतः स्वयम् । एकाब्धिकोटिकोटूना,
प्रत्येकं क्षीयते स्थितिः ॥ ३ ॥ शेषाब्धिकोटिकोट्यन्तः, स्थितौ सकलजन्मिनः । यथाप्रवृत्तकरणा–द्ग्रन्थिदेशं समियंति ॥ ४ ॥ राग-
द्वेषपरीणामो, दुर्भेदो ग्रन्थिरुच्यते । दुरुच्छेदो दृढतरः, काष्ठादेरिव सर्वदा ॥ ५ ॥ ग्रन्थिदेशं तु सम्प्राप्ता, रागादिप्रेरिताः पुनः । उत्कृ-
ष्टबन्धयोग्याः, स्युश्चतुर्गतिजुषोऽपि च ॥६॥ तेषां मध्ये ये भव्या, भाविभद्राः शरीरिणः । आविष्कृत्य परं वीर्यमपूर्वकरणे कृते ॥ ७ ॥ अति-
क्रामन्ति सहसा, तं ग्रन्थिं दुरतिक्रमम् । अतिक्रान्तमहाध्वानो, घट्टभूमिमिवाध्वगाः ॥ ८ ॥ युग्मम् ॥ अथानिवृत्तिकरणा–दन्तरकरणे
कृते । मिथ्यात्वं विरलं कुर्युर्वेदनीयं यदग्रतः ॥ ९ ॥ आन्तर्मुहूर्तिकं सम्यग्दर्शनं प्राप्नुवन्ति यत् । निसर्गहेतुकमिदं, सम्यक् श्रद्धानमु-
च्यते ॥ १० ॥" इति । अधिकं ज्ञानमधिगमो, गुरुमाभिमुख्येनावलम्ब्य यज्ज्ञानं सोऽभिगमः, आगमो, निमित्तं, श्रवणं,
शिक्षा, उपदेश इति पर्यायाः, तस्मादुत्पन्नं यत् सम्यक्त्वं तदधिगमसम्यग्दर्शनम् । तदुक्तं योगशास्त्रे—"गुरूपदेशमा-
लम्ब्य, सर्वेषामपि देहिनाम् । यत्तु सम्यक्श्रद्धानं तत् स्यादधिगमजं परम् ॥ १ ॥ यमप्रशमजीवातुर्बीजं ज्ञानचरित्रयोः । हेतुस्तपः-
श्रुतादीनां, सद्दर्शनमुदीरितम् ॥ २ ॥ श्लाघ्यं हि चरणज्ञान–विमुक्तमपि दर्शनम् । न पुनर्ज्ञानचारित्रे, मिथ्यात्वविषदूषिते ॥ ३ ॥ ज्ञान-
चारित्रहीनोऽपि, श्रूयते श्रेणिकः किल । सम्यग्दर्शनमाहात्म्यात्, तीर्थकृत्त्वं प्रपत्स्यते ॥३॥" स्वभावो गुरूपदेशनिरपेक्ष इति यावत् ।
प्रथमावश्यकचूर्णावपि—"आह–किं पुण सो सम्मदंसणादि उवदेसतो चेव लभति, उत अणुवदेसतो वेति ? भन्नइ–जहिह कोति
पहपब्भट्ठो परिब्भमंतो सयमेव पथं लभति, कोवि परोपदेसातो कोवि ण चेव लभति, एवं अणंतपणट्ठसप्पथो जीवो संसाराडविमनु-

पतन् कोऽपि अडविट्ठाणमतिक्कमिऊण तदावरणिज्जाणं कम्माणं खतोवसमोवसमखएण सयं चेव सम्मदंसणादिणिव्वाणपट्टणपथं लभति, कोदी परोपदेसातो, कोती पुण ण लभति चेव, जहा वा कोती जरो सयमेवापैति, कोती भेसज्जोवतोगाओ, कोती पुण नैवापैति, एवं मिच्छादिमहजरोपि कोती सयमेवापैति, कोयी अरहदादिवयणभेसज्जोवओगाओ, कोती पुण नैवापैति, तदावरणिज्जं कम्माणं खतोवसमे पुण कोद्दवदिट्ठंतो विभासियव्वो, उवसमे जलदिट्ठंतो, खए वत्थदिट्ठंत इति । लाभक्कमो पुण एवं—जे अभवितो सो तं गंठिं ण समत्थो भिंदितुं तेण गंठिसत्तो, गंठीए वा सत्तो गंठिसत्तो, तत्थ पुण अन्तरे इड्डिविसेसं दट्ठूण तित्थगराणं अणगाराणं ताहे पव्वयति, तम्मूलगं देवलोगं गच्छति, जो भविओ तस्स तंमि काले जति कोती संबोहेज्ज अहवा कोति सयं चेव संबुज्झति, तस्स एत्थ सुयसामाइयस्स लंभो भवति, ताहे संखेज्जाइं सागरोवमाइं गंतूणं सुयसामाइयलंभो, ताहे अन्नाणि वि संखेज्जाणि सागरोवमाणि गंतूणं चरित्ताचरितसामाइयलंभो, एवं संखेज्जेसु चरित्तं उवसमसेढी खवगसेढी" इति । अथवा द्रव्यभावभेदात् द्विविधं सम्यक्त्वं भवति । तत्र सामान्येन जिनोक्ततत्त्वेषु या रुचिस्तद्द्रव्यसम्यक्त्वम् । नयनिक्षेपप्रमाणादिभिरधिगमोपायो जीवाजीवादिसकलतत्त्वपरिशोधनरूपज्ञानात्मकं भावसम्यक्त्वम्, परीक्षाजन्यमतिज्ञानतृतीयांशस्वरूपस्यैव व्यवस्थापितत्वात् । तथा चोक्तं श्रीसिद्धसेनदिवाकरपादैः सम्मतौ—"एवं जिणपण्णत्ते सद्दहमाणस्स भावओ भावे । पुरिसस्साभिणिबोहे दंसणसद्दो हवइ जुत्तो ॥ १ ॥" यत्तु—"जिणवयणमेव तत्तं इत्थ रुई होई दव्वसम्मत्तं । जह भावणाणसद्धापरिसुद्धं भावसंमत्तं ॥ १ ॥" इति पञ्चवस्तुके हरिभद्रसूरिपादैरुक्तं तदपीदमेवाभिप्रायं सूचयति । जिनवचनमेव तत्त्वं नान्यदिति सामान्यरुचेर्द्रव्यसम्यक्त्वरूपतया नयनिक्षेपप्रमाणपरिष्कृतविस्ताररुचेश्च भावसम्यक्त्वतायास्तत्र परिस्फुटत्वात् । येषां त्वेकान्तेन सामान्यरुचिरोघतोऽप्यनेकान्तास्पर्शी च

तेषां जैनागमावलम्ब्यपि मिथ्यात्वस्यावर्जनीयत्वेन द्रव्यसम्यक्त्वं मन्तव्यम् । अत्र द्रव्यशब्दस्त्वप्रधानतावाचीति । तदुक्तं सम्मतौ—" छण्णिअजीवणिकाये सद्दहमाणो ण सद्दहे भावा । हंदि अपज्जवेसुं सद्दहणा होइ अविभत्ता ॥ १ ॥" इति । यस्य जिनेन्द्रनिरूपितेऽनेकान्ते सम्यगपरिच्छिद्यमानेऽपि भगवत्प्ररूपितत्वेन तत्र रुचिः गीतार्थप्रज्ञापनीयत्वादिगुणयोगात् विपरीतार्थाभिनिवेशश्च न भवति, तस्यानाभोगात् गुरुनियोगाद्वा वैपरीत्यश्रद्धानसंभवेऽप्यन्तस्तत्त्वस्य शुद्धत्वात् द्रव्यसम्यक्त्वमविरुद्धम् । तदुक्तं कम्मपकृतौ—"सम्मद्दिट्ठी णियमा उवइट्ठं पवयणं तु सद्दहइ । सद्दहइ असब्भावं अजाणमाणो गुरुनियोगा ॥ १ ॥" वृत्तिः—"सम्यग्दृष्टिः जीवो गुरुभिरुपदिष्टं प्रवचनं श्रद्दधाति । सोऽवश्यमजानन् स्वयं परिज्ञानविकलः सन् यद्वा गुरोस्तथाविधसम्यक् परिज्ञानविकलस्य मिथ्यादृष्टेर्वा जमालिप्रख्यस्य नियोगादाज्ञापारतन्त्र्यात्, नान्यथा । अत्र च साहजिकमज्ञानं ज्ञानावरणविपाकोदयसान्निध्यमात्रादुपजायमानं न सम्यक्त्वप्रतिबन्धकम् । गुरुनियोगजनितं तु मध्यस्थस्य विनेयस्य नानामतदर्शिनो मिथ्यात्वप्रदेशोदयमहिम्ना विप्रतिपत्त्युपनीतप्रवचनार्थसंशयरूपं सम्यक्त्वप्रतिबन्धाभिमुखमपि तमेव सच्चमित्याद्यालम्बनरूपोत्तेजकप्रभावान्न सम्यक्त्वं प्रतिबध्नुमलमित्यज्ञानाद्गुरुनियोगाद्वाऽसद्भूतार्थश्रद्धानेऽपि भावतो जिनाज्ञाप्रामाण्याभ्युपगन्तुर्न शुभात्मपरिणामरूपसम्यक्त्वोपघात इति भावनीयम् । एतेन यदुच्यते केनचित् परपक्षनिश्रितस्य सर्वथा सम्यक्त्वं न भवत्येवेति तदपास्तं द्रष्टव्यम्, अनभिनिविष्टस्य मिथ्यादृष्टिनिश्रयाऽपि तदुपनीतासद्भूतार्थश्रद्धानस्यास्वारसिकत्वेन स्वारसिकजिनवचनश्रद्धानाविरोधित्वात् । अभिनिविष्टस्य तु स्वपक्षपतितस्य परपक्षपतितस्य वा मिथ्यादृष्टित्वानपायादित्यलं प्रपञ्चेने"ति श्रीन्यायाचार्याः । यद्वा क्षायोपशमिकं द्रव्यसम्यक्त्वं पौद्गलिकत्वात् । औपशमिकक्षायिकौ भावसम्यक्त्वमपौद्गलिकत्वादिति । यद्वा निश्चयव्यवहाराभ्यां द्विविधं सम्यक्त्वम् । तत्र नि-

श्चयसम्यक्त्वं ज्ञानादिमयशुभात्मपरिणामः । ज्ञानश्रद्धानचरणैः सप्तषष्टिभेदपरिशीलनं च व्यवहारसम्यक्त्वम् । तदुक्तं—"निच्छयओ सम्मत्तं नाणाइमयप्पसुद्धपरिणामो । इअरं पुण तुह समए भणिअं सम्मत्तहेऊहिं ॥ १ ॥" इति । ननु ज्ञानादिमय इत्यस्यार्थो ज्ञानदर्शनचारित्रमयात्मपरिणामः, स च भावचारित्रमेव स्यात्, न नैश्चयिकं सम्यक्त्वमिति चेत्? सत्यम्, भावचारित्रस्यैव निश्चयसम्यक्त्वाभ्युपगमात्, तस्मादेव मिथ्याचारनिवृत्तिरूपकार्यस्य भावात्, निश्चयनयेन कार्यानुपहितस्य कारणस्यैवानभ्युपगमात् । ननु क्षायिकसम्यक्त्ववतां कृष्णश्रेणिकादीनां निश्चयसम्यक्त्वं न स्यादिति चेत्? न स्यादेव, यतः प्रथमाङ्गेऽप्रमत्तमुनीनामेव निश्चयसम्यक्त्वस्याभ्युपगमात् । तदुक्तमाचाराङ्गे—"जं सम्मं ति पासह तं मोणं ति पासह जं मोणं ति पासह तं सम्मं ति पासह" इति । ननु कारकनिश्चयसम्यक्त्वयोः भेदो न स्यात्? क्रियारूपस्यैव कारकत्वात्, क्रिया च चारित्ररूपैव, तदेव निश्चयसम्यक्त्वमिति चेत्? सत्यमुपाधेयसङ्करेऽप्युपाध्योरसाङ्कर्येणादोषात् । कारके क्रियोपहितत्वं नैश्चयिके ज्ञानादिमयत्वमुपाधिरिति । एवंविधं नैश्चयिकसम्यक्त्वमधिकृत्यैव प्रशमादीनां लक्षणमागमोक्तं सङ्गच्छते । अन्यथा श्रेणिककृष्णादीनामपि तदसंभवेन लक्षणव्याघातसंभवात् । तदुक्तमाराध्यपादैः श्रीमद्धरिभद्रसूरिभिः—"णिच्छयसम्मत्तं वाहिगिच्च सुत्तभणियनिउणरूवं तु । एवं विहो होइ इमो हंत वण्णुत्ति ॥ १ ॥" अत्र वाकारो विषयविशेषापेक्षया प्रकारान्तरोपदर्शनार्थः । यद्वा ज्ञानादिमय इत्यस्यायमर्थः—ज्ञाननये ज्ञानविशेष एव सम्यक्त्वं क्रियानये चारित्रविशेष एव सम्यक्त्वं दर्शननये स्वतन्त्रतया व्यवस्थितं सम्यक्त्वमिति । शुद्धात्मपरिणामग्राहिनिश्चयनये त्वात्मैव निरुपाधिशुद्धस्वरूपप्रकाशात् ज्ञानरूपः तथा श्रद्धानाद्दर्शनरूपः स्वभावाचरणाच्च चारित्ररूप इति शुद्धात्मबोधाचरणतृप्तिरेव निश्च-

यसम्यक्त्वम् । तदुक्तं कलिकालसर्वज्ञश्रीमद्धेमचन्द्रसूरिपादैः—“आत्मैव दर्शनज्ञानचारित्राण्यथवा यतेः । यत्तदात्मक एवैषः शरीरमधितिष्ठति ॥ १ ॥” इत्युक्तं द्विविधं सम्यक्त्वम् ।

अथ त्रिविधमुच्यते—कारकं रोचकं दीपकमिति । तत्र कारकं सूत्रोक्ताऽऽज्ञाशुद्धा क्रियैव, तस्या एव परगतसम्यक्त्वस्योत्पादकत्वेन सम्यक्त्वं तदवच्छिन्नं वा सम्यक्त्वं कारकसम्यक्त्वमेतच्च विशुद्धचारित्रिणामेव भवति । रोचयति सम्यगनुष्ठानप्रवृत्तिं न तु कारयतीति रोचकम्, अविरतसम्यग्दृशां कृष्णश्रेणिकादीनाम् । तथा स्वयं मिथ्यादृष्टिरपि परेभ्यो यथावस्थितान् जीवादिपदार्थान् दीपयति—व्यनक्तीति दीपकमङ्गारमर्दकादेरिव द्रष्टव्यमिति ॥ अथवा त्रिविधं सम्यक्त्वमुच्यते—औपशमिकं क्षायोपशमिकं क्षायिकमिति । तत्रौपशमिकं द्विविधं—श्रेणिगतमश्रेणिगतं च । तत्रादावश्रेणिगतमुच्यते—इह गम्भीरापारपारावारमध्यमध्यासीनो जन्तुर्मिथ्यात्वप्रत्ययाननन्तान् पुद्गलपरावर्त्तान् यावदनन्तं दुःखमनुभूय चरमे च पुद्गलपरावर्त्ते भवाभिनन्दिदोषाणां क्षये मार्गानुसारितां लभते । तदुक्तम्—“मग्गाणुसारिभावो, जायइ चरमंमि चेव परिअट्टे । गुणवुड्ढीए विगमे, भवाभिनंदिदोसाणं ॥ १ ॥” इति । धर्म्मस्य यौवनकालोऽपि चरमावर्त्ते एव, तथा चोक्तं योगविंशिकायाम्—“चरमे उ धम्मजुव्वणकालो तह चित्तभेउ”त्ति । भवाभिनन्दी चायम्—जातिजरामरणाद्युपद्रवव्रातविधुरितमपि भवमभिनन्दतीति भवाभिनन्दी । तीव्रपापाभीतत्वेन ज्ञानलोचनवर्जितत्वान्महाकान्तारपतितजात्यन्ध इव सन्मार्गं नावगच्छति । प्रायेणाहारादिसंज्ञासु लुब्धत्वेन दुःखितश्च भवति । कृपणो लोभी दीनः परकल्याणदुःखितो भयवान् मायावी मूर्खो लौकिकलोकोत्तरधर्म्मकार्येऽपि लोकपक्तिकृतादरः । तदुक्तं हरिभ-

द्रसूरिपादैः—"क्षुद्रो लोभरतिर्दीनो, मत्सरी भयवान् शठः । अज्ञो भवाभिनन्दी स्या–न्निष्फलारम्भसङ्गतः ॥ १ ॥ असारोऽप्येष संसारः, सारवानिव लक्ष्यते । दधिदुग्धाम्बुताम्बूल–पुष्पपण्याङ्गनादिभिः ॥ १ ॥" यशःकीर्त्तिस्पृहालुना लोकचित्तावर्जननिमित्तं या सत्क्रिया क्रियते सा लोकपक्तिः, तदुक्तं—"लोकाराधनहेतोर्या, मलिनेनान्तरात्मना । क्रियते सत्क्रिया सात्र, लोकपक्तिरुदाहृता ॥ १ ॥" इति । लोकपक्त्या क्रियमाणा धर्म्मक्रियापि भवाभिनन्दिनः पापाय भवति, अधरीकृतकल्पतरुचिन्तामणिकामधेनोः धर्म्मस्य मतिमतामत्यन्तानादेययशःकीर्त्त्यादिमात्रहेतुभावेन हीनतयावलोकनात् । मोक्षार्थं च क्रियमाणा लोकपक्तिरपि महते फलाय भवति, तदुक्तम्—"धर्म्मार्थं लोकपक्तिः स्यात्–कल्याणाङ्गं महामतेः । तदर्थं तु पुनर्धर्म्मः, पापायाल्पधियामलम् ॥ १ ॥ युक्तं जनप्रियत्वं शुद्धं सद्धर्म्मसिद्धिफलदमलम् । धर्म्मप्रशंसनादेः वीजाधानादिभावेन" इति । यशःकीर्त्त्यादिमात्रस्पृहालोः धर्म्मक्रियापेक्षयाऽनाभोगवतो धर्म्मक्रिया किञ्चित् सुन्दरा, धर्म्मस्य हीनतयानवलोकनात् । या च कपिलादिभिरुक्ता भोगाद्यर्थं यमनियमाराधनरूपा पूर्वसेवापि न चरमावर्त्तगता, भवाभिष्वङ्गभावात् । पूर्वसेवायाश्चायं क्रमः—गुरुदेवादिपूजनम्, सदाचारः, तपो, मुक्त्यद्वेषश्चेति । तत्र गुरुशब्देन माता पिता कलाचार्यः ज्ञातयः श्रुतवृद्धो वयोवृद्धो धर्म्मोपदेशको धर्म्मप्रवर्त्तकश्चेत्यादयो ग्राह्याः । एतेषां त्रिसन्ध्यं नमनक्रियारूपं पूजनं कर्त्तव्यम्, तदभावे च चेतसि समारोप्यापि कर्त्तव्यम् । तथाऽभ्युत्थानासनप्रदानस्थितपर्युपासनादिव्यापाररूपो विनयः कार्यः । गुरुवर्गान्तेऽप्रगल्भतयाऽवस्थानम् । मूत्रपुरीषोत्सर्गस्थाने तेषामभिधानमपि न ग्राह्यम् । विरोधिपक्षमध्यगतोऽपि तेषामवर्णवादाश्रवणम् । यथाशक्ति प्रधानवस्त्रादिप्रदानम् । देवातिथिदीनानाथसेवाप्रभृतीनां परलोकक्रियाणां करणं, गुरुवर्गासंम-

तानां व्यवहाराणां वर्जनं, तदिष्टव्यवहारेषु धर्माद्यबाधया प्रवर्त्तनं गुरुपूजनं भाव्यम् । यदि तदनिष्टेभ्यो निवृत्तौ तदिष्टेषु च प्रवृत्तौ धर्मादयः पुरुषार्था बाध्यन्ते तदा न तन्निवृत्तिपरेण भाव्यम्, किन्तु पुरुषार्थाराधनपरेण भाव्यम्, अतिदुर्लभत्वात् पुरुषार्थाराधनकालस्य । तेषामासनशयनभोजनपात्रादीनामपरिभोगः, गुर्वादिवित्तस्य चैत्यादौ नियोजनमन्यथा स्वयं तद्द्रव्यग्रहणे तन्मरणानुमोदनं स्यात् । तदुक्तं योगबिन्दुवृत्तौ—"तत्स्वयं ग्रहणे गुरुवर्गमरणाद्यनुमतिप्रसङ्गः स्यात्" इति । तद्बिम्बं न्यासीकृत्य धूपपुष्पादिभिः पूजनं, तत्कारितदेवतादेः पूजनमित्यन्ये, ऊर्ध्वदेहक्रिया च परा कर्त्तव्येति । तदुक्तं योगबिन्दौ—"पूर्वसेवा तु तन्त्रज्ञैर्गुरुदेवादिपूजनम् । सदाचारस्तपो मुक्त्यद्वेषश्चेह प्रकीर्तिता ॥ १ ॥ माता पिता कलाचार्य एतेषां ज्ञातयस्तथा । वृद्धा धर्मोपदेष्टारो, गुरुवर्गः सतां मतः ॥ २ ॥ पूजनं चास्य विज्ञेयं, त्रिसन्ध्यं नमनक्रिया । तस्यानवसरेऽप्युच्चैश्चेतस्यारोपितस्य तु ॥ ३ ॥ अभ्युत्थानादियोगश्च, तदन्ते निभृतासनम् । नामग्रहश्च नास्थाने, नावर्णश्रवणं क्वचित् ॥ ४ ॥ साराणां च यथाशक्ति, वस्त्रादीनां निवेदनम् । परलोकक्रियाणां च, कारणं तेन सर्वदा ॥ ५ ॥ त्यागश्च तदनिष्टानां, तदिष्टेषु प्रवर्त्तनम् । औचित्येन त्विदं ज्ञेयं, प्राहुर्धर्माद्यपीडया ॥ ६ ॥ तदासनाद्यभोगश्च, तीर्थे तद्वित्तयोजनम् । तद्बिम्बन्याससंस्कार ऊर्ध्वदेहक्रिया परा ॥ ७ ॥" तथा पुष्पवसनबलिभिः शोभनैः स्तोत्रैश्च शौचश्रद्धासमन्वितं देवपूजनं कर्त्तव्यम् । देवपूजनमपि सुगतकपिलार्हदाद्यविवक्षया चारिसंजीवनीचारन्यायेन मन्तव्यम् । तदुक्तं—"पुष्पैश्च बलिना चैव, वस्त्रैः स्तोत्रैश्च शोभनैः । देवानां पूजनं ज्ञेयं, शौचश्रद्धासमन्वितम् ॥ १ ॥ अविशेषेण सर्वेषामधिमुक्तिवशेन वा । गृहिणां माननीया यत्, सर्वे देवा महात्मनाम् ॥ २ ॥ सर्वान् देवान् नमस्यन्ति, नैकं देवं समाश्रिताः । जितेन्द्रिया जितक्रोधा दुर्गाण्यतितरन्ति ते ॥ ३ ॥ चारिसंजीवनीचारन्याय एष

सतां मतः । नान्यथात्रेष्टसिद्धिः स्या-द्विशेषेणादिकर्म्मणाम् ॥ ४ ॥" तच्चेदम्-"भावार्थस्तु कथागम्यः, स चायमभिधीयते । अस्ति स्वस्तिमतीनाम, नगरी नागराकुला ॥ १ ॥ तस्यामासीत् सुता काचित्, ब्राह्मणस्य तथा सखी । तस्यामेव परं पात्रं सदा प्रेम्णो गतावधेः ॥ २ ॥ तयोर्विवाहवशतो, भिन्नस्थाननिवासिनोः । जज्ञेऽन्यदा द्विजसुता, जाता चिन्तापरायणा ॥ ३ ॥ कथमास्ते सखी त्वेवं, ततः प्राघूर्णिकागता । दृष्टा विषादजलधौ, निमग्ना सा तया ततः ॥ ४ ॥ पप्रच्छ किं त्वमत्यन्त-विच्छायवदना सखि ! । तयोचे पापसद्माहं, पत्युर्दुर्भगतां गता ॥ ५ ॥ मा विषीद विषादोऽयं, निर्विशेषो विपात् सखि । करोम्यनड्वाहमहं, पतिं ते मूलिका-बलात् ॥ ६ ॥ तस्यै सा मूलिकां दत्त्वा, सन्निवेशं निजं ययौ । अप्रीतमानसा तस्य, प्रायच्छत्तामसौ ततः ॥ ७ ॥ अभूद्गौरुद्धुर-स्कन्धो, झगित्येव च सा हृदि । विद्राणैष कथं सर्व-कार्याणामक्षमोऽभवत् ॥ ८ ॥ गोयूथान्तर्गतो नित्यं बहिश्चारयितुं सकः । तयारब्धो वटस्याधः सोऽन्यदा विश्रमं गतः ॥ ९ ॥ तच्छाखायां नभश्चारिमिथुनस्य कथञ्चन । विश्रान्तस्य मिथो जल्पप्रक्रमे रमणोऽब्रवीत् ॥ १० ॥ नात्रैष गौः स्वभावेन किन्तु वैगुण्यतोऽजनि । पत्नी प्रतिबभाषे सा पुनर्नासौ कथं भवेत् ॥ ११ ॥ मूलान्तरोपयोगेन कास्ते सास्य तरोरधः । श्रुत्वैतत् सा पशोः पत्नी पश्चात्तापितमानसा ॥ १२ ॥ अभेदज्ञस्ततश्चारिं, सर्वां चारयितुं तकाम् । प्रवृत्तो मूलिकाभोगात् सद्योऽसौ पुरुषोऽभवत् ॥ १३ ॥ अजानानो यथा भेदो मूलिकायास्तथा पशुः । चारितः सर्वतश्चारिं पुनर्नृत्वोपलब्धये ॥ १४ ॥ तथा धर्मगुरुः शिष्यं पशुप्रायं विशेषतः । प्रवृत्तावक्षमं ज्ञात्वा देवपूजादिके विधौ ॥ १५ ॥ सामान्यदेवपूजादौ प्रवृत्तिं कारयन्नपि । विशिष्ट-साध्यसिद्ध्यर्थं न स्याद्दोषी मनागपि ॥ १६ ॥" इति । प्रथममेवारब्धधर्म्माचाराणां चारिसंजीवनीचारन्यायेन धर्म्मोपदेशः कर्त्तव्यो, न सम्यग्दृशां, सम्यग्दृष्टयस्तु देवादितत्त्वं जानानाः विशेषप्रवृत्तियोग्या एव, आदिधार्मिकास्तु तदयोग्यत्वेन

ये वर्त्तन्ते ते । ये
पात्रं च स्वसिद्धान्ताविरोधेन सदैव हिंसानृतादिपापस्थानकविरतिमन्तो व्रतसूचकतथाविधनेपथ्यवन्तः ये वर्त्तन्ते ते । ये
च स्वयमपाचकाः परैरपाचयितारः पच्यमानानननुमन्तारश्च ते विशेषतः पात्रम् । दीनान्धकृपापात्रव्याधिग्रस्तनिर्धननि-
र्वाहहेतुव्यापारान्तरासमर्थो दीनादिवर्गो वाच्यः । धर्मस्यादिपदं दरिद्रताविनाशकं जनप्रियकरं यशःकीर्तिवर्द्धकं दानं
मतम् ॥ लोकापवादभीरुः, दीनानाथोद्धरणकृतप्रयत्नः, कृतज्ञता, सुदाक्षिण्यं, सर्वत्र निन्दापरित्यागः, साधुजनेषु प्रशंसा,
आपदि दीनताऽभावः, सम्पदि नम्रता, प्रस्तावे मितहितभाषणशीलताऽविसंवादनं प्रतिपन्नक्रिया कुलधर्म्मानुपालनम-
सद्व्ययपरित्यागः देवपूजादौ च सद्व्ययः मद्यपानादिप्रमादस्य वर्जनं विशिष्टफलदायिनि कार्ये निर्बन्धो बहुजनरूढाविरो-
धिलोकव्यवहारानुपालनं स्वपक्षे परपक्षे च समुचिताचारपालनं कण्ठगतैरपि प्राणैः कुत्सितकार्ये प्रवृत्तिं न करोतीति
सदाचारः ॥ पापतापनं तपोऽपि कर्त्तव्यम् । तच्च चान्द्रायणं कृच्छ्रं मृत्युघ्नं पापसूदनम् । शुक्लपक्षे एकैकं कवलं वर्धयेत्
कृष्णे च हापयेत्, इदमुक्तं भवति-शुक्लपक्षे प्रतिपत्तिथेरारभ्य यावत् पौर्णमास्यां पञ्चदश कवलाः कृष्णपक्षे पुनश्चतुर्दश्यादौ
कृत्वा एकैकं कवलं हापयेत् यावत् प्रतिपत्तिथौ एकं कवलं भुञ्जीत तच्चान्द्रायणम् । चान्द्रायणमाद्यं कृच्छ्रं च तपो लौकि-
कशास्त्रोक्तमादिधार्म्मिकयोग्यतया चोपन्यस्तम् । कृच्छ्रं तपस्त्रिविधम्-सन्तापकृच्छ्रं पादकृच्छ्रं सम्पूर्णकृच्छ्रमिति ।
सन्तापकृच्छ्रं यथा-"त्र्यहमुष्णं पिबेदम्बु, त्र्यहमुष्णं घृतं पिबेत् । त्र्यहमुष्णं पिबेन्मूत्रं, त्र्यहमुष्णं पिबेत् पयः ॥ १ ॥" पादकृच्छ्रं

यथा—"एकभक्तेन भुक्तेन, तथैवायाचितेन च । उपवासेन चैकेन पादकृच्छ्रं विधीयते ॥ २ ॥" सम्पूर्णकृच्छ्रं त्वेतदेव चतुर्गुणमिति । कषायनिरोधब्रह्मचर्यदेवपूजनादिविधिना यत्र मासक्षपणं लोकाशंसादिपरिहारेण पञ्चपरमेष्ठिनमस्कारादिस्मरणं मृत्युघ्नं तपः, तत्तत्पापादिसंबन्धविशेषात् विचित्रमन्त्रजपं पापसूदनं तपः । तदुक्तं—"मृत्युञ्जयसञ्ज्ञं मन्त्रस्मरणसमन्वितं । मासोपवासं मृत्युघ्नं तपस्तपोधनाः प्राहुः ॥ १ ॥ तत्तत्पापाद्यपेक्षया प्रत्यापत्तिविशेषितं । चित्रमन्त्रजपप्रायं पापसूदनमुच्यते ॥ २ ॥" भोगक्लेशवर्जिता निखिलकर्म्मक्षयात् मुक्तिर्जायते, अस्यां च भवाभिनन्दिनां प्राणिनामज्ञाननिबन्धनो द्वेषः । न च निर्वाणे द्वेषोऽसंभाव्य इति वक्तव्यम्, तत्रापि मूढानां द्वेषस्य सम्भवात् । तदुक्तं—"जइ तत्थ नत्थि सीमन्तिणीओ मणहरपियंगुवन्नाओ । ता रे सिद्धन्ते य बन्धनं खु मोक्खो न सो मोक्खो ॥ १ ॥ वरं वृन्दावने रम्ये क्रोष्टृत्वमभिवाञ्छितम् । नत्वविषये मोक्षः कदाचिदपि गौतम ॥ १ ॥" 'गौतम' इति गाथालवेन निजशिष्यविशेषस्यामन्त्रणमिति । "महामोहाभिभूतानामेवं द्वेषोऽत्र जायते । अकल्याणवतां पुंसां, तथा संसारवर्धनः ॥ १ ॥" इति । न विद्यते मुक्तौ द्वेषो येषां ते मुक्त्यद्वेषिणस्त एव धर्म्मधनलब्धारो ज्ञातव्यास्ते एव च मनाक् स्वगतसंसारयोग्यतापरिहाणेः सकाशात् चरमपुद्गलपरावर्त्तव्यवधानादिना तीर्थकरादिपदप्राप्तिद्वारेण शिवशर्मभाजो भविष्यन्ति । येषां च मुक्त्यादौ न द्वेषस्ते एव गुर्वादिपूजनं चारु कुर्वन्ति, नान्ये । पूर्वसेवारूपं प्रागुक्तं गुरुदेवादिपूजनादिकं चरमावर्तभिन्नावर्तेष्वन्यादृशं चरमावर्त्ते त्वन्यादृशं, स्वाभाविककर्म्मबन्धयोग्यतालक्षणमलतुच्छभावात् । एवं कर्तृभेदेन भिद्यमानमनुष्ठानमपि विषगरलादिभेदेन पञ्चप्रकारं भवति । चरमावर्त्ते च तद्धेतुरूपं चतुर्थं प्रायेणानुष्ठानं स्यात् । अनुष्ठानानि चाध्यात्मसारातो लिख्यन्ते—"परिशुद्धमनुष्ठानं जायते समतान्वयात् ।

कतकक्षोदसंक्रांतेः कलुषं सलिलं यथा ॥ १ ॥ विषं गरोऽननुष्टानं तद्धेतुरमृतं परम् । गुरुसेवाद्यनुष्टानमिति पञ्चविधं जगुः ॥ २ ॥
आहारोपधिपूजर्द्धिप्रभृत्याशंसया कृतम् । शीघ्रं सच्चित्तहन्तृत्वाद्विषानुष्ठानमुच्यते ॥ ३ ॥ स्थावरं जंगमं चापि तत्क्षणं भक्षितं विषम् ।
यथा हन्ति तथेदं सच्चित्तमैहिकभोगतः ॥ ४ ॥ दिव्यभोगाभिलाषेण कालान्तरपरिक्षयात् । स्वादृष्टफलसंपूर्त्तेर्गरानुष्ठानमुच्यते ॥ ५ ॥
यथा कुद्रव्यसंयोगजनितं गरसंज्ञितम् । विषं कालान्तरे हन्ति तथेदमपि तत्त्वतः ॥ ६ ॥ निषेधायानयोरेव विचित्रानर्थदायिनोः । सर्वत्रैवा-
निदानत्वं जिनेन्द्रैः प्रतिपादितम् ॥ ७ ॥ प्रणिधानाद्यभावेन कर्म्मानध्यवसायिनः । संमूर्छिमप्रवृत्त्याभमननुष्ठानमुच्यते ॥ ८ ॥ ओघसं-
ज्ञात्र सामान्यज्ञानरूपा निवन्धनम् । लोकसंज्ञा च निर्दोषसूत्रमार्गानपेक्षिणी ॥ ९ ॥ न लोकं नापि सूत्रं नो गुरुवाचमपेक्षते । अनध्यव-
सितं किञ्चित्कुरुते चौघसंज्ञया ॥ १० ॥ शुद्धस्यान्वेषणे तीर्थोच्छेदः स्यादिति वादिनाम् । लोकाचारादरश्रद्धा लोकसंज्ञेति गीयते ॥ ११ ॥
शिक्षितादिपदोपेतमप्यावश्यकमुच्यते । द्रव्यतो भावनिर्मुक्तमशुद्धस्य तु का कथा ॥ १२ ॥ तीर्थोच्छेदभिया हन्ताविशुद्धस्यैव चादरे ।
सूत्रक्रियाविलोपः स्याद्गतानुगतिकत्वतः ॥ १३ ॥ धर्म्मोद्यतेन कर्त्तव्यं कृतं वहुभिरेव चेत् । तदा मिथ्यादृशां धर्मो न त्याज्यः स्यात्कदा-
चन ॥ १४ ॥ तस्माद्गतानुगत्या यत् क्रियते सूत्रवर्जितम् । ओघतो लोकतो वा तदननुष्ठानमेव हि ॥ १५ ॥ अकामनिर्जराङ्गत्वं काय-
क्लेशादिहोदितम् । सकामनिर्जरा तु स्यात् सोपयोगप्रवृत्तितः ॥ १६ ॥ सदनुष्ठानरागेण तद्धेतुर्मार्गगामिनाम् । एतच्च चरमावर्त्तेऽनाभो-
गादेर्विना भवेत् ॥ १७ ॥ धर्मयौवनकालोऽयं भववालदशा परा । अत्र स्यात्सत्क्रियारागोऽन्यत्र चासत्क्रियादरः ॥ १८ ॥ भोगरागाद्
यथा यूनो वालक्रीडाऽखिला ह्रिये । धर्म्मे यूनस्तथा धर्म्मरागेणासत्क्रिया ह्रिये ॥ १९ ॥ चतुर्थं चरमावर्त्ते तस्माद्धर्म्मानुरागतः ॥ अ-
नुष्ठानं विनिर्दिष्टं वीजादिक्रमसंगतम् ॥ २० ॥ वीजं चेह जनान् दृष्ट्वा शुद्धानुष्ठानकारिणः । वहुमानप्रशंसाभ्यां चिकीर्षा शुद्धगोचरा

॥ २१ ॥ तस्या एवानुबन्धश्चाकलङ्कः कीर्त्यतेऽङ्कुरः । तद्धेत्वन्वेषणा चित्रा स्कंधकल्पा च वर्णिता ॥ २२ ॥ प्रवृत्तिस्तेषु चित्रा च पत्रादिसदृशी मता । पुष्पं च गुरुयोगादिहेतुसंपत्तिलक्षणम् ॥ २३ ॥ भावधर्मस्य संपत्तिर्या च सद्देशनादिना । फलं तदत्र विज्ञेयं नियमान्मोक्षसाधकम् ॥ २४ ॥ सहजो भावधर्मो हि शुद्धश्चन्दनगन्धवत् । एतद्गर्भमनुष्ठानममृतं संप्रचक्षते ॥ २५ ॥ जैनीमाज्ञां पुरस्कृत्य प्रवृत्तं चित्तशुद्धितः । संवेगगर्भमत्यन्तममृतं तद्विदो विदुः ॥ २६ ॥ शास्त्रार्थालोचनं सम्यक् प्रणिधानं च कर्म्मणि । कालाद्यङ्गाविपर्यासोऽमृतानुष्ठानलक्षणम् ॥ २७ ॥ द्वयं हि सदनुष्ठानं त्रयमत्रासदेव च । तत्रापि चरमं श्रेष्ठं मोहोग्रविषनाशनात् ॥ २८ ॥ आदरः करणे प्रीतिरविघ्नः संपदागमः । जिज्ञासा तज्ज्ञसेवा च सदनुष्ठानलक्षणम् ॥ २९ ॥ भेदैर्भिन्नं भवेदिच्छाप्रवृत्तिस्थिरसिद्धिभिः । चतुर्विधमिदं मोक्षयोजनाद्योगसंज्ञितम् ॥ ३० ॥ इच्छा तद्वत्कथाप्रीतिर्युक्ता विपरिणामिनी । प्रवृत्तिः पालनं सम्यक् सर्वत्रोपशमान्वितम् ॥ ३१ ॥ सत्क्षयोपशमोत्कर्षादतिचारादिचिन्तया । रहितं तु स्थिरं सिद्धिः परेषामर्थसाधकम् ॥ ३२ ॥ भेदा इमे विचित्राः स्युः क्षयोपशमभेदतः । श्रद्धाप्रीत्यादियोगेन भव्यानां मार्गगामिनाम् ॥ ३३ ॥ अनुकम्पा च निर्वेदः संवेगः प्रशमस्तथा । एतेषामनुभावाः स्युरिच्छादीनां यथाक्रमम् ॥ ३४ ॥ कायोत्सर्गादिसूत्राणां श्रद्धामेधादिभावतः । इच्छादियोगे साफल्यं देशसर्वव्रतस्पृशाम् ॥ ३५ ॥ गुडखण्डादिमाधुर्यभेदवत् पुरुषान्तरे । भेदेऽपीच्छादिभावानां दोषो नार्थान्वयादिह ॥ ३६ ॥ येषां नेच्छादिलेशोपि तेषां त्वेतत्समर्पणे । स्फुटो महामृषावाद इत्याचार्याः प्रचक्षते ॥ ३७ ॥ उन्मार्गोत्थापनं वाढमसमंजसकारणे । भावनीयमिदं तत्त्वं जानानैर्योगविंशिकाम् ॥ ३८ ॥ त्रिधा तत्सदनुष्ठानमादेयं शुद्धचेतसा । ज्ञात्वा समयसद्भावं लोकसंज्ञां विहाय च ॥ ३९ ॥ इति । व्यावृत्तात्यन्तवितथाभिनिवेशभावेन तत्प्रकारकालपालपतरबन्धसद्भावेऽपि भावविशुद्धेः सर्वमप्यनुष्ठानं देहिनां शुभमेव भवति। तथा चरमावर्त्तभिन्नावर्त्तेषु यथा

निकटवर्त्तिनी,
ज्ञानावरणादिकं बाधते न तथा चरमावर्त्ते, अभिनिवेशाभावात् । अत एव चरमावर्त्तिनो मुक्तिरपि निकटवर्त्तिनी,
"आसन्ना चेयमस्योच्चैश्चरमावर्त्तिनो यतः । भूयांसोऽमी
तत एव तत्त्वपरिणतिप्रधाना अपुनर्बन्धकादयो मताः । तदुक्तम्— "आसन्ना चेयमस्योच्चैश्चरमावर्त्तिनो यतः । भूयांसोऽमी
व्यतिक्रान्तास्तदेकोऽत्र न किञ्चन ॥ १ ॥ अत एव च योगज्ञैरपुनर्बन्धकादयः । भावसारा विनिर्दिष्टास्तथापेक्षादिवर्जिताः ॥ २ ॥"
इति । भवाभिनन्दिदोषाणामक्षुद्रतानिर्लोभतादिप्रतिपक्षगुणैः युतः प्रायो वर्द्धमानगुणोऽपुनर्बन्धको मतः । मनाग्
मुक्त्यनुकूलशुभभावसम्बन्धेनापुनर्बन्धकस्यैव निरुपचरिता पूर्वसेवा, शेषस्य सकृद्बन्धकादेस्तूपचारिकीति । मार्गपतित-
मार्गाभिमुखौ त्वपुनर्बन्धकान्तर्भूतौ । तदुक्तं योगबिन्दुवृत्तौ— "अपुनर्बन्धकावस्थाविशेषत्वात्तयोरपुनर्बन्धकग्रहणेनैव गतार्थ-
त्वात्" इति । तथा व्यवहारतोऽपुनर्बन्धकादय औषधकालः निश्चयतस्तु ग्रन्थिभेदकाल औषधकालः, तदुक्तमुपदेशपदे—
"घणमिच्छत्तो कालो एत्थ अकालो उ होइ णायव्वो । कालो अ अपुणबन्धगपभिइ धीरेहि णिद्दिट्ठो ॥ १ ॥ णिच्छयओ पुण एसो विन्नेओ
गंठिभेअकालो उ । एयंमि विहि सति पालणा उ आरोग्गमेयाओ ॥ २ ॥" इति । तथाऽपुनर्बन्धकस्य प्रवचनोक्ता द्रव्याज्ञा न
विरुध्यते, यतो गलितासद्ग्रहदोषाणां वेद्यसंवेद्यपदाधस्तनावेद्यपदवर्त्तिनामपि मध्यस्थावदातमतीनां विप्रतिपत्तिविषय-
प्रकारांशेऽनाग्रहवतां मुख्यसर्वज्ञाभ्युपगन्तृत्वेन भावजैनत्वमुक्तम् । तथा च न्यायाचार्याः— "गलिआसग्गहदोसा अविज्जसं-
विज्ञपयगया ते वि । सव्वण्णुमिच्छभावा जइणत्तं जंति भावेणं ॥ १ ॥" वेद्यसंवेद्यलक्षणमिदम्— "वेद्यं संवेद्यते यस्मिन्नपायादिनि-
बन्धनम् । पदं तद्वेद्यसंवेद्यमन्यदेतद्विपर्ययात् ॥१॥" इति । सम्यग्दर्शनादिरूपायाः भावाज्ञायाः कारणत्वेन द्रव्याज्ञा बोध्या ।
कारणत्वं चापुनर्बन्धकाचारस्य पारम्पर्येण सम्यग्दर्शनस्य साधकत्वात् । नन्वपुनर्बन्धकस्य द्रव्याज्ञा सिद्धेऽपि भिन्नमार्ग-

स्थानां मध्यस्थानामपि मिथ्यादृशां कथमेषा संभवति ? जैनमार्गक्रिययैवाप्युत्पन्नदशायामपुनर्बन्धकत्वसिद्धेः, बीजाधानस्यैव तल्लिङ्गत्वात्, तस्य च सर्वज्ञवचनानुसारिजिनमुनिप्रभृतिपदार्थकुशलचित्तादिलक्ष्यत्वात् । धर्म्मबीजानि चैवं शास्त्रान्तर्गतश्लोकैरुपदेशपदवृत्त्यायुक्तानि दृश्यन्ते-"जिनेषु कुशलं चित्तं तन्नमस्कार एव च । प्रणामादि च संशुद्धं योगबीजमनुत्तरम् ॥ १ ॥ उपदेशधियाऽत्यन्तं संज्ञाविष्कम्भणान्वितम् । फलाभिसन्धिरहितं संशुद्धं ह्येतदीदृशम् ॥ २ ॥ आचार्यादिष्वपि ह्येतद्विशुद्धं भावयोगिषु । वैयावृत्त्यं च विधिवच्छुद्धाशयविशेषतः ॥ ३ ॥ भवोद्वेगश्च सहजो द्रव्याभिग्रहपरायणम् । तथा सिद्धान्तमाश्रित्य विधिवत् लेखनानि च ॥ ४ ॥ लेखनं पूजनं दानं श्रवणं वाचनोद्ग्रहः । प्रकाशनाथ स्वाध्यायचिन्तना भावनेति च ॥ ५ ॥ दुःखितेषु दयाऽत्यन्तमद्वेषो गुणवत्सु च । औचित्यासेवनं चैव सर्वत्रैवाविशेषतः ॥ ६ ॥" इति । ललितविस्तरायामप्युक्तम्-"एतत्सिद्ध्यर्थं तु यतितव्यमादिकर्म्मणि, परिहर्त्तव्योऽकल्याणमित्रयोगः, सेवितव्यानि कल्याणमित्राणि, न लङ्घनीयोचितस्थितिः, अपेक्षितव्यो लोकमार्गः, माननीया गुरुसन्ततिः, भवितव्यमेतत्तन्त्रेण, प्रवर्त्तितव्यं दानादौ, कर्त्तव्योदारपूजा भगवताम्, निरूपणीयः साधुविशेषः, श्रोतव्यं विधिना धर्म्मशास्त्रम्, भावनीयं महायत्नेन, प्रवर्त्तितव्यं विधानतः, अवलम्बनीयं धैर्यं, पर्यालोचनीयाऽऽयतिः, अवलोकनीयो मृत्युः, भवितव्यं परलोकप्रधानेन, सेवितव्यो गुरुजनः, कर्त्तव्यं योगपटदर्शनम्, स्थापनीयं तद्रूपादि चेतसि, निरूपयितव्या धारणा, परिहर्त्तव्यो विक्षेपमार्गः, यतितव्यं योगसिद्धौ, कारयितव्या भगवत्प्रतिमा, लेखनीयं भुवनेश्वरवचनम्, कर्त्तव्यो मङ्गलजापः, प्रतिपत्तव्यं चतुःशरणम्, गर्हितव्यानि दुष्कृतानि, अनुमोदनीयं कुशलम्, पूजनीया मन्त्रदेवता, श्रोतव्यानि सच्चेष्टितानि, भावनीयमौदार्यम्, वर्त्तितव्यमुत्तमज्ञातेन" । अयं हि नियमादपुनर्बन्धकः, एवम्भूतस्य येह प्रवृत्तिः सा सर्वापि साध्वी मार्गानुसारीति चेत् ?

अत्रोच्यते—अपुनर्बन्धकानां चित्रमनेकप्रकारमनुष्ठानमुपदिष्टमतो भिन्नाचारस्थितानामपि तेषां द्रव्याज्ञाया नानुपपत्तिरिति । तदुक्तम्—"दव्वाणा खलु तेसिं भावाणाकारणत्तओ नेया । जं अपुणबन्धगाणं चित्तमणुट्ठाणमुवइट्ठं ॥ १ ॥" इति । मार्गानुसारिभाव आज्ञायाः लक्षणम् । तदुक्तम्—"मग्गाणुसारिभावो आणाण लक्खणं मुणेयव्वं । किरिया तस्स ण णियया पडिबन्धे या वि उवगारे ॥ १ ॥" इति । अनादिप्रवाहपतितयथाप्रवृत्तिकरणचरमविभागभाक् सन्निहितग्रन्थिभेदोऽपुनर्बन्धकोऽत्यन्तजीर्णमिथ्यात्वज्वरः कश्चिद्दुःखितदयागुणवदद्वेषसमुचिताचारप्रवृत्तिप्रधानः किञ्चिन्न्यूनापार्द्धपुद्गलपरावर्त्तावशेषसंसारः शुक्लपाक्षिकः ग्रन्थिभेदं विधाय सम्यक्त्वं प्राप्नोति । यः कृष्णपाक्षिकोऽभव्यो वा स ग्रन्थिदेशं प्राप्यापि छिन्नपक्षपिपीलिकावत् पुनः परावर्त्तते । तदुक्तमावश्यकचूर्णौ—"जे तं कम्मं उवसामेति ते जीवा दुविहा—भविया अभविया य, जे भविता ते तं गंट्ठीं केवि समतिगच्छंन्ति, केवि ततो चेव पडिणियत्तंति, जे अभविया ते नियमा ततो चेव पडिणियत्तंति, जहा को दिट्ठंतो ? पिपीलियाओ बिला ओद्धाइयाओ समाणीओ एगं खाणुयं विलग्गेंति, तत्थ जासिं पक्खा अत्थि ता उड्डेंति, जासिं नत्थि ता ततो चेव पडिणियत्तंति, एवं तेसिं भवियाणं सा लद्धी, अभवियाणं नत्थि" इति । भव्योऽपि मोहनीयस्योत्कृष्टस्थितौ वर्त्तमानः चतुर्णां श्रुतसामायिकादीनामेकतममपि सामायिकं न प्राप्नोति । ननु मोहनीयायुर्वर्जकर्म्मणामुत्कृष्टस्थितौ वर्तमानः किं श्रुतसामायिकादिकं प्राप्नोति येनोच्यते मोहनीयस्योत्कृष्टस्थितौ वर्त्तमानः श्रुतसामायिकादिकं न प्राप्नोतीति चेत् ? अत्रोच्यते—मोहनीयोत्कृष्टस्थितौ वर्त्तमानो नियमेनायुर्वर्जशेषकर्म्मणामुत्कृष्टस्थितावेव वर्त्तते इति ज्ञापनार्थं तथोक्तम् । तथा चोक्तमावश्यकचूर्णौ—"किह पुण अट्ठण्हं पयडीणं उक्कोसठिति भवति ? एत्थ ताव सव्वासिं पयडीणं उक्कोसठिती भाणियव्वा । जया मोहणिज्जस्स कम्मस्स उक्कोसिया ठिती भवति तदा आयुवज्जाणं सत्तण्हं

कम्मपयडीणं उक्कोसिया ठिती भवति, आउगस्स उक्कोसा वा अजहन्नुकोसा वा ठिती भवति, जदा आउयमोहवज्जाणं उक्कोसिया ठिती भवति, तदा आउयमोहणिज्जाणं उक्कोसा वा अजहन्नुकोसा वा, जदा आऊक्कोसा सेसाणं उक्कोसा वा अजहन्नुकोसा वा, एवं उक्कोसट्ठितीए अट्ठण्हं कम्मपयडीणं वट्टमाणो जीवो चउण्हं सामाइयाणं एगतरमवि न लभति । कहं पुण ताइं चउरो ? तं जह–समत्तसामाइयं, सुअसामाइयं, चरित्तसामाइयं, चरित्ताचरित्तसामाइयं, अपिशब्दात् मत्यादि च न लभतीति" । ततः सप्तानां कर्म्मणामुत्कृष्टा स्थितिः यदा पल्योपमासंख्येयभागन्यूनकोटाकोटीशेषा भवति तदा ग्रन्थिः प्रादुर्भवति । सा च कर्कशघनरूढगूढग्रन्थिवत् सुदुर्भेद्यघनरागद्वेषपरिणामा भवति । तदुक्तं चूर्णौ–"आयुवज्जाणं सत्तण्हं कम्मपयडीणं उक्कोसठितीओ जदा खवियाओ भवति, अवसेसा एक्केक्का कोडाकोडी भवति तीसे य कोडाकोडीए पलिओवमस्स असंखेज्जइभागं पविट्ठो भवति, एत्थ किल गंट्ठी पाउब्भवइ, गंट्ठी नाम जहा इह रज्जुए दारुविसेसस्स वा घणो अतिगूढो दुम्माओ दुब्भेदो य गंट्ठी भवति, एवमेव आत्मनः कम्मविसेसपच्चतो अतिरागदोसपरिणामो गंट्ठीत्ति ववदिस्सति" । अन्यत्रापि–"गंट्ठित्ति सुदुब्भेदो कक्खडघणरूढगुढगंठि व्व । जीवस्स कम्मजणितो घणरागदोसपरिणामो ॥१॥" अपूर्वकरणेन ग्रन्थिभेदे तु नियमेन निर्वाणैकनिबन्धनं सम्यक्त्वमुपजायते । तदुक्तं–"तथा च भिन्ने दुर्भेदे कर्म्मग्रन्थौ महाबले । तीक्ष्णेन भाववज्रेण तीव्रसंक्लेशकारिणि ॥ १ ॥ आनन्दो जायतेऽत्यन्तं तात्त्विकोऽस्य महात्मनः । सद्व्याध्यपगमे यद्वद्व्याधितस्य सदौषधे ॥ २ ॥" तदुक्तमावश्यकचूर्णावपि–"तंमि भिन्ने सम्मत्तादिलाभो भवति, तब्भेदो य मणोविघातपरिस्समादिभिः अतीव दुल्लभो" इति । ननु येन विधिना श्रुतादिसामायिकं विनापि एकोनसप्तत्यादिसागरोपमकोटाकोटिप्रमाणा स्थितिः क्षपितास्तेनैव विधिना शेषापि क्षपयतु किमपूर्वकरणादिनेति चेत्? उच्यते–स किल महासंग्रामशीर्षगत इव यद्वा महासमुद्रोत्तीर्णवत् विशे-

चित्तव्याघातादिविघ्नबाहुल्यं चासौ मन्यते, ततः न क्षपयति । यद्वा महाविद्यासाध-
सेण परिश्राम्यति, रागद्वेषोदयेन चित्तव्याघातादिविघ्नबाहुल्यं चासौ मन्यते, ततः न क्षपयति । यद्वा महाविद्यासाध-
कस्य प्राक्तना क्रिया तथाविधाल्पसामग्र्यपेक्षत्वात् सुकरा भवति, सिद्धिवेलायां तु जापादिक्रियाऽत्यन्तदुष्करा विभी-
षिकोत्थानादिविघ्नबाहुल्या च भवति, अन्तश्चित्तसुप्रणिधानादि वहिर्जापादि च सकलसामग्रीसन्निधानापेक्षत्वात् ।
तथात्र सुदीर्घकर्म्मस्थितिक्षपणे या क्रिया साऽत्यन्तसुकरा भवति, यथाप्रवृत्तिकरणादिमात्रसामग्र्यपेक्षणात्, या तु मोक्ष-
सिद्धिवेलायां सातिदुष्करा भवति, सकलदर्शनलाभादिसामग्रीसन्निधानापेक्षणात् । तथा च साऽतिदुर्लभा न येन केन-
चिदवाप्तुं शक्यते, अवाप्तापि प्रायः सविघ्ना ततोऽवश्यं दर्शनादिकं तत्सामग्रीभूतं यथावस्थितमपेक्षत इति । तदुक्त-
मावश्यकचूर्णौ–"आह–जा सा सेसा ठ्ठिती कम्माणं सा जति विणा सामायितेण खविता, एवं सेसा वि किन्न खवेति तेण विहिणा ?
भन्नति–सो किर तत्थ विसेसेण परिश्राम्यति, महासंगामसीसगतो विव जहा महासमुद्दतारी व परिश्रांतारोहणवत्, चित्तविघातादिवि-
घ्नबाहुल्यश्चासौ भवति, महाविद्यासाधकवत्, एत्थ अतीव परिस्समं मन्नति, रागद्दोसोदएणं तमिदाणिं कह खवेति ?" इति । ननु
मिथ्यादृष्टेः निर्गुणत्वेन वहुतरवन्धादल्पतरक्षयाच्च कथं ग्रन्थिदेशप्राप्तिः ? तत्प्राप्तिस्तु वहुतरनिर्जरानिवन्धना, वहुतर-
निर्जरा च सम्यक्त्वनिवन्धना, काकमांसादेरप्यनिवृत्तो मिथ्यादृष्टिः वहुकर्माणि वध्नाति, अल्पतरं च निर्जरयति, गुण-
निबन्धना च विशिष्टा निर्जरेति कृत्वा । प्रमत्तोऽपि सम्यग्दृष्टिः वहुनिर्जरयति, स्तोकं च वध्नाति, सगुणत्वात् । अप्रम-
त्तस्तु न किञ्चित् वध्नाति, विशिष्टतरगुणोपेतत्वेन वन्धकारणाभावादिति चेत् ? अत्रोच्यते–प्रायोवृत्तिमाश्रित्य मिथ्या-
दृष्टेः वहुतरो वन्धोऽल्पतरा निर्जरेत्युच्यते, अन्यथा मिथ्यादृष्टीनामपि केषाञ्चिद्वन्धनिर्जरयोः वैचित्र्यत्वेनाल्पतरो वन्धो

बहुतरा च निर्जरा। यथा महति पल्येऽल्पतरं धान्यं प्रक्षिपेत् बहुतरं चापनयेत् कालान्तरेण च सर्वं धान्यमुपक्षीयते, तद्वदनाभोगतो गिरिनदीप्रस्तरन्यायेन यथाप्रवृत्तिकरणेन जीवोऽपि अल्पतरकर्म्मोपचयेन बहुतरकर्म्मापचयेन ग्रन्थिदेशं प्राप्नोति। तदुक्तमावश्यकचूर्णौ—"आह—उत्तं सव्वस्सेव संसारिणो सजोगतया प्रतिसमयं कम्मस्स उवचओ अवचयो य, असंजयस्स पुण बहुतरस्स चओ अप्पतरस्स अवचओ, जओऽभिहितं—"पल्ले महति महल्ले कुंभं पक्खिवति सोहए णालिं। संजए अविरए बहु बंधइ णिज्जरे थोवं॥ १॥ पल्ले महति महल्ले कुंभं सोहयति पक्खिवति णालिं। जे संजते पमत्ते बहु निज्जरे बंधए थोवं॥ २॥ पल्ले महति महल्ले कुंभं सोहति पक्खिवे ण किंचि। जे संजते अप्पमत्ते बहुणिज्जरे बंधए ण किंचि॥ ३॥"—एवं च कहमसंजतो मिच्छादिट्ठी एत्तियाए अवणेता भविस्सति? जतो एयस्स गंठिदेसप्राप्तिरिति; भन्नइ—पाओवत्ती एसा—जमसंजयस्स बहुतरस्सोवचयो अप्पतरस्स वाऽवचयो, बंधणिज्जरणाओ पुण मिच्छद्दिट्ठीणं पि विचित्ताओ—कस्सति कहंचिदिति, तम्हा जहा जो अतिमहति धन्नपल्ले अप्पतरं पक्खिवेज्जा बहुतरं च अवणेज्ज तस्स एवं कालंतरेण उवक्खीयते धान्यं एवमणाभोगतो जीवो बहुं बहुतरं च खवयंतो गंठिदेसं पावति अहापवत्तिकरणेणेति। आह—कहं पुण अणाभोगतो तेण अहापवत्तकरणेण कम्मरासी खवितो? तत्थ दिट्ठंतो—गिरिणइपत्थरेहिं, जहा तेसिं णो एवं उप्पज्जति सन्ना तिवा जहा अम्हे वट्टा वा तंसा वा होमो, तेसिं वा अन्नेसिं पत्थराणं णो एवं उप्पज्जति जहा एते पत्थरा वट्टा तंसा वा होन्तु, एवं ते घोलणविसोहीए तं कम्मरासिं खवेंति, जहा वा वट्टाणो पासाणो" इति। लोकप्रकाशेऽपि—"आद्येन करणेनाङ्गीकरोति कर्म्मलाघवम्। धान्यपल्यगिरिसरिद्दृषदादिनिदर्शनैः॥ १॥ यथा धान्यं भूरि भूरि कश्चिद् गृह्णाति पल्यतः। क्षिपत्यल्पमल्पं च कालेन कियताऽप्यथ॥ २॥ धान्यपल्यः सोऽल्पधान्यशेष एवावतिष्ठते। एवं बहूनि कर्म्माणि जरन्नसुमानपि॥ ३॥ यथाऽल्पा-

स्यानि तानि कालेन कियतापि हि। स्यादल्पकर्म्मानाभोगात्मकाथकरणेन सः ॥ ४ ॥ विशेषकम् । यथाप्रवृत्तकरणं नन्वनाभोगरूपकम् ।
भवत्यनाभोगतश्च कथं कर्म्मक्षयोऽङ्गिनाम् ॥ ५ ॥ अत्रोच्यते—यथा मिथो घर्षणेन ग्रावाणोऽद्रिनदीगताः । स्युश्चित्राकृतयो ज्ञानशून्या अपि
स्वभावतः ॥ ६ ॥ तथा यथा प्रवृत्तिमान् स्युरप्यनाभोगलक्षणात् । लघुस्थितिककर्म्माणो जन्तवोऽत्रान्तरेऽथ च ॥ ७ ॥ युग्मम्" ॥
एवं चानङ्गीकारे सर्वेषां मिथ्यादृष्टीनां बन्धाभावप्रसक्तिः, बद्धव्यकर्म्मपुद्गलानामभावात् । तथाहि—निर्जरामपेक्ष्यानन्त-
गुणतया वृद्ध्या नूतनकर्म्मपुद्गलोपादाने कालान्तरेण सर्वेऽपि पुद्गला जीवैः सह सम्बध्यन्ते, प्रभूततरस्य ग्रहणादल्पत-
रस्य च मोक्षणात्, यथा सार्धद्विसहस्रं पुरुषशतेन प्रतिदिनं पञ्चकग्रहणे एकरूपकमोक्षणे दिवसषट्कमध्य एव सर्वमुपयुज्यते,
इतिबन्धाभावः । ननु पुद्गलानामसंख्येयकालस्थितिकत्वेन कर्म्मपुद्गलानामसंख्येयकालादूर्ध्वमवश्यमेव परिशाटो जायते,
परिशाटिताश्च कर्माणवः सर्वेभ्योऽपि जीवेभ्योऽनन्तगुणा एव, ततः प्रभूतानां कर्म्मपुद्गलानां ग्रहणे स्वल्पतराणां
च मोक्षणेऽपि लोककालादूर्ध्वं चावश्यं मोक्षणात् तेषां च मुक्तानां सर्वजीवेभ्योऽनन्तगुणत्वात् न बन्धाभावलक्षणो
दोषः, न हि शीर्षप्रहेलिकान्तस्य राशेः प्रतिदिनं रूपकपञ्चकग्रहणेऽल्पतरमोक्षणे च सति वर्षशतेनापि पुरुषशतेन
निःशेषतोऽभावो भवति, प्रभूतत्वादेवमिहापीति चेत् ? सत्यम्, परं ग्रहणमपि प्रतिसमयमत्यन्तप्रभूतानां पुद्ग-
लानां किं न स्यादपि तु स्यादेवेति न बन्धाभावप्रसक्तिः व्याहन्यते । शीर्षप्रहेलिकान्तराशेरपि प्रतिदिवसं रूपकशतसह-
स्रलक्षणमहाराशिग्रहणेऽल्पतरमोक्षणे च वर्षशतादारत एव पुरुषशतेन निश्शेषीकरणोपपत्तेः । नन्वागमादानाद्यनन्त-
संसाराच्च न तथाऽनन्तानां पुद्गलानां ग्रहणं यथा बद्धव्यकर्म्मपुद्गलाभावतो बन्धाभावो भवेत्, तथा चागमः—"जाव णं

एस जीवे एयइ वेयइ चलइ फंदइ घट्टइ खुब्भइ उदीरइ तं तं भावं परिणमइ ताव णं एस जीवे सत्तविहं बन्धए वा अट्ठविहं बन्धए वा छव्विहं बन्धए वा एगविहं बन्धए वा" इत्यादि । संसारस्तु प्रतिसमयं बद्धसत्त्वसंसृतिरूपः प्रतीत एवेति चेत् ? ननु तर्हि— "सम्मत्तंमि उ लद्धे पलियपुहुत्तेण सावओ होज्जा । चरणोवसमखयाणं सागरसंखंतरा होन्ति ॥ १ ॥ एवं अपरिवडिए सम्मत्ते देवमणुयजम्मेसु । अन्नयरसेढिवज्जं एगभवेणेव सव्वाइं ॥ २ ॥" इत्यागमादेव प्रकृष्टगुणानुभावतः कर्म्मपुद्गलानां मोक्षणात् मिथ्यादृष्टीनामपि केषाञ्चित् बहुतरनिर्जराल्पतरबन्धसद्भावेन ग्रन्थिदेशप्राप्तिर्न दुर्लभेति । ननु ग्रन्थिदेशप्राप्तिः स्वभावेन यदुत गुणसेवनया ? स्वभावेन चेत् ? ग्रन्थिदेशभेदोऽपि तत्त्वेनैव भविष्यति, तथा चापूर्वकरणक्रियायाः निष्फलत्वं प्राप्तम् । गुणसेवनया चेत् ? मिथ्यादृष्टेः को गुणो येन तत्सेवातो ग्रन्थिदेशप्राप्तिः स्यात् । अथ तथाविधक्षान्त्यादिगुणान् प्रति निमित्तमादधानो यो बन्धस्तस्मात् केचिदव्यक्तक्षमादयो गुणाः स्युरिति चेत् ? ननु तथाविधबन्धोऽपि केन हेतुना भवति, न च हेतुं विना सोऽपि भवति, सदाभावाभावप्रसङ्गात् । तथा चोक्तम्—"अह उ गुणसेवणाए मिच्छादिट्ठिस्स के गुणा पुव्विं । तव्विहबन्धातो चेव सो वि तहा केण कज्जेण ॥ १ ॥" अथ परिणामविशेषात् तथाविधो बन्ध इति चेत् ? ननु तस्यापि को हेतुः ? स्वभावश्चेत् ? स प्रागेवापूर्वकरणादिक्रियायाः निष्फलत्वापादनेन निराकृतः । न चेश्वरकर्तृत्वाद्यापत्त्या स्वभावस्य भावरूपत्वं न स्वीक्रियते किन्त्वभावरूपत्वमिति वक्तव्यम्, सर्वेषां ग्रन्थिदेशप्राप्तिप्रसङ्गादिति चेत् ? न, स्वभावस्य भावाभावस्वरूपोभयपक्षस्वीकारेऽपि न दोषः; यतोऽभावस्याप्येकान्तेनाभावरूपत्वं पदार्थान्तरत्वं वा न स्वीक्रियते किन्तु कतिपयजीवव्यक्तिनिष्ठः प्रतिनियत एव वस्तुधर्म्मः, तेन विश्वस्यादरिद्रतेश्वरकर्तृत्वादयोऽपि दोषाः न

भवन्ति । न चैवंविधः स्वभावः परिकल्प्यमानः प्रमाणबाधित इति वाच्यम्, प्रतिनियतव्यक्तीनामेव सम्यक्त्वदेशविरत्याद्युपलम्भात् । न च सम्यक्त्वादि जीवत्वमात्रनिबन्धनं स्यात्, सर्वत्र सर्वदा सर्वेषामविशेषेणोपलम्भाभावात् । न चेत्थमुपजायमानं सम्यक्त्वं निर्हेतुकं भवति, तथा सति देशकालादिनियमाभावप्रसङ्गात् । न च वक्तव्यं देशकालादिहेतुकमेव तदिति, तदविशेषेऽपि कस्यचिदेव प्रतिनियतस्य तद्भावदर्शनात् । अत्रानुमानम्–कश्चित्प्रतिनियतः केषाञ्चिदेव परम्परया सम्यक्त्वादिलाभहेतुः स्वभावविशेषो विद्यते, प्रतिनियतसम्यक्त्वादिलाभान्यथानुपपत्तेरिति । तस्मात् विचित्रं दर्शनमोहनीयं वेदयतः कस्यचिज्जन्तोः स्ववीर्योल्लासविशेषात् सम्यक्त्वादिनिबन्धनविवक्षितपरिणामविशेषसम्प्राप्तिहेतुः स्वभावविशेषो भवति, तदुक्तं–"वेययतो पतिसमयं चित्तं कम्मं सवीरिउल्लसिा । सो होइ जीवधम्मो जो तस्संपत्तिहेउ त्ति ॥ १ ॥" जीवधर्म्मरूपस्वभावविशेषे सति तथाविधपरिणामविशेषरहितजीवापेक्षया क्षान्त्यादयोऽप्यव्यक्ता गुणा मिथ्यादृष्टेः भवन्ति, ततश्च तद्गुणसेवनयाऽपि ग्रन्थिदेशप्राप्तिर्न विरुध्यते, तेनापूर्वकरणक्रियायाः निष्फलत्वमपि न स्यात्, तथारूपस्वभावविशेषसामर्थ्यतः स्वयमेव तस्य तथा तथाऽपूर्वकरणादिक्रियासु प्रवृत्त्युपपत्तेः । वस्तुतस्तु ग्रन्थिदेशप्राप्तिः निर्गुणा, अभव्यानामनेकशः तत्प्राप्तिश्रवणात् । अतस्तत् प्राप्तिः न नियमेन सम्यग्दर्शनहेतुरूपा, किन्त्वपूर्वकरणादिकैव क्रिया, सम्यक्त्वं चावश्यमेव निर्वाणहेतुकं प्रवचने वर्णितम् । एतेन–"सम्यक्त्वलाभे सति कथं नु जीवानां संसारोऽनन्तभवभावितः शीघ्रं नश्यति ? चिरकालवासिततया सात्मीयभूतस्य तस्य प्रतिपक्षभावनामात्रेणोन्मूलयितुमशक्यत्वात् । नह्यनेकज्वालाशतसहस्रसंकुलः प्रबलदावाग्निर्जलकणमात्रेणोपशाम्यतीति यदुच्यते" तदपि परास्तम् । यस्मात् भव्यानामप्यनेकशो ग्रन्थिदेशप्रा-

मिरुक्ता, सा च न प्रतिपक्षभावनामन्तरेण भवति, ततः प्रतिपक्षभावनावतोऽपि सामान्येन दीर्घकालो विद्यते, तस्याश्च फलं सम्यक्त्वप्राप्तिः। यथा दीर्घकालभाविन्या अपि चरणक्रियायाः फलं केवलज्ञानं तल्लाभे च प्रकर्षगुणरूपत्वेन तत्रैव भवे मुक्तिः तद्वत् सम्यक्त्वेऽपि प्राप्ते शीघ्रमुपजायमानो मोक्षो न दुष्यति, तस्य प्रकर्षगुणरूपत्वादिति । प्रकर्षगुणत्वं च सम्यक्त्वस्य नासिद्धम्, यतो जिनोपदिष्टप्रकर्षद्रव्यसंयमेन सर्वेषां जीवानामनेकशो ग्रैवेयकेषूपपातोऽभिहितः । तदुक्तं–"सव्वजीवाणं चिय जं सुत्ते गेवेज्जगेसु उववाओ। भणिओ न य सो एवं दव्वलिंगं पमोत्तुणं ॥१॥" इति । न च तद्भावेऽपि सम्यक्त्वप्राप्तिरासीत्, ततो दुर्लभतया केवलज्ञानमिव प्रकर्षगुणरूपं सम्यक्त्वमपि । ननु जिनोपदिष्टप्रकर्षसंयमप्राप्तावपि सम्यक्त्वस्य प्राप्तिर्न जाता इति कथं निर्णीयत इति चेत् ? शृणुत–सर्वेषां सम्यग्दृष्टीनामुत्कृष्टतोऽपि किञ्चिन्न्यूनार्द्धपुद्गलपरावर्त्तमात्र एव शेषः संसारो भवति, सोऽपि तीर्थकरादिकृताशातनाबहुलानां गोशालादीनां न सर्वेषाम्, न च सर्वेषां जीवानां तथा दृश्यत इति जिनोपदिष्टप्रकर्षद्रव्यसंयमसद्भावेऽपि नास्ति सम्यक्त्वम् । ततः सिद्धमेतत्–सम्यक्त्वस्य प्रकर्षगुणरूपत्वात् तत्प्राप्तौ केवलज्ञानप्राप्ताविव शीघ्रमुपजायमानो मोक्षो न विरुध्यते, उभयत्रापि तन्निमित्तभूतायाः प्रतिपक्षभावनायाः सामान्येन चिरकालत्वात् । केवलज्ञानदृष्टान्तोऽपि स्वल्पकालमात्रापेक्षया द्रष्टव्यः न पुनः तद्भवमोक्षापेक्षयेति । यद्वा निर्गुण एव जीवः शेषामपि कर्मस्थितिं क्षपयति, कर्मविवरसामर्थ्याच्च सोऽवश्यमेव सम्यक्त्वश्रुतादिलाभं लभत इति ॥

अथ कर्मप्रकृत्यनुसारेणाश्रेणिगतमौपशमिकसम्यक्त्वमुच्यते–तत्रापि करणकालात् पूर्वमन्तर्मुहूर्त्तं यावदवदायमानपरिणामः संज्ञिपञ्चेन्द्रियः सर्वाभिः पर्याप्तिभिः पर्याप्तः उपशमोपदेशश्रवणकरणत्रयहेतुप्रकृष्टयोगलब्धित्रिकयुक्तः प्रतिसमयम-

नन्तगुणवृद्धविशुद्ध्या विशुद्ध्यमानोऽभव्यग्रन्थिसत्त्वविशुद्धितोऽनन्तगुणविशुद्धः साकारोपयोगे वर्तमानोऽन्यतरस्मिन् योगे च वर्त्तमानोऽन्यतमस्यां शुभलेश्यायां वर्त्तमानो जघन्यपरिणामेन तेजोलेश्यायां मध्यमपरिणामेन पद्मलेश्यायामुत्कृष्टपरिणामेन शुक्ललेश्यायामिति। तथाऽऽयुर्वर्जानां सप्तानां कर्म्मणामन्तःसागरोपमकोटाकोटीप्रमाणां स्थितिं कृत्वा शुभप्रकृतीनामनुभागं द्विस्थानं सन्तं चतुःस्थानमशुभप्रकृतीनां चतुःस्थानं सन्तं द्विस्थानकं च कुर्वन्; तथा ध्रुवप्रकृतीः सप्तचत्वारिंशत्स्वस्वभवप्रायोग्याः परावर्त्तमानाः आयुर्वर्जाः शुभा एव बध्नन्, अतिविशुद्धपरिणामो हि आयुर्बन्धं नारभत इति तद्वर्जनम्, तत्रापि तिर्यङ् मनुजो वा प्रथमं सम्यक्त्वमुत्पादयन् शुभपरावर्त्तमाना देवप्रायोग्या एकविंशतिसंख्या बध्नाति, देवो नैरयिको वा प्रथमं सम्यक्त्वमुत्पादयन् मनुजप्रायोग्याः शुभपरावर्त्तमानाः द्वाविंशतिसंख्याः बध्नाति, केवलं यदि सप्तमपृथ्वीनारकः प्रथमं सम्यक्त्वमुत्पादयति तदा मनुजद्विकोच्चैर्गोत्रस्थाने तिर्यग्द्विकनीचगोत्राणि वाच्यानि; तथा बध्यमानानामप्यन्तःकोटाकोटीसागरोपमप्रमाणां स्थितिं बध्नन्; तथा स्थितिबन्धे परिपूर्णे सत्यन्यं स्थितिबन्धं प्राक्तनस्थितिबन्धापेक्षया पल्योपमसंख्येयभागन्यूनं कुर्वन् तस्मिन्नपि पूर्णे सत्यन्यं स्थितिबन्धं पल्योपमसंख्येयभागन्यूनं कुर्वन् एवमन्यमन्यं स्थितिबन्धं पूर्वापूर्वापेक्षया पल्योपमसंख्येयभागन्यूनं कुर्वन्; तथाऽशुभानां प्रकृतीनां द्विस्थानकमनुभागं बध्नन्, तमपि प्रतिसमयमनन्तगुणहीनं, शुभानां प्रकृतीनामनुभागं चतुस्स्थानं बध्नन्, तमपि प्रतिसमयमनन्तगुणवृद्धं बध्नन्; तथा योगानुरूपं जघन्यमध्यमोत्कृष्टभेदभिन्नं प्रदेशाग्रं बध्नन्नित्येवमन्तर्मुहूर्त्तं यावत् व्यापारं कुर्वन् आस्ते। ततो यथाप्रवृत्तिकरणं करोति। तेन च ग्रन्थिदेशं प्राप्नोति। स च प्रागुक्तरागद्वेषपरिणामरूपो दृढकाष्ठादिग्रन्थिवत्

गाढचिक्कणो दुर्भेदो ग्रन्थिः चतुर्दशविधो भवति । तदुक्तं लोकप्रकाशे—"रागद्वेषपरिणामरूपोऽस्ति ग्रन्थिरुत्कटः । दुर्भेदो दृढकाष्ठादिग्रन्थिवद्गाढचिक्कणः ॥ १ ॥ मिथ्यात्वं नोकषायाश्च कषायाश्चेति कीर्त्तिताः । जिनैश्चतुर्दशविधोऽभ्यन्तरग्रन्थिरागमे ॥ २ ॥ प्रागुक्तरूपस्थितिककर्म्माणः केऽपि देहिनः । यथाप्रवृत्तिकरणाद् ग्रन्थेरभ्यर्णमियेति ॥ ३ ॥" इति । ग्रन्थिं यावत् भव्या अभव्याश्च प्राप्नुवन्ति, अभव्यास्तीर्थकरर्द्धिविशेषं दृष्ट्वा श्रुतसामायिकमपि लभन्ते, तदुक्तं विशेषावश्यकवृत्तौ—"अर्हदादिविभूतिं अतिशयवतीं दृष्ट्वा धर्म्मादेवंविधः सत्कारो देवत्वराज्यादयो वा प्राप्यन्ते इत्येवमुत्पन्नबुद्धेरभव्यस्यापि ग्रन्थिस्थानं प्राप्तस्य तद्विभूतिनिमित्तमिति शेषो देवत्वनरेन्द्रत्वसौभाग्यबलादिलक्षणेनान्येन वा प्रयोजनेन सर्वथा निर्वाणश्रद्धानरहितस्याभव्यस्यापि कष्टानुष्ठानं किञ्चिदङ्गीकुर्वतोऽज्ञानरूपस्य श्रुतसामायिकमात्रस्य लाभो भवेत्, तस्याप्येकादशाङ्गपाठानुज्ञानात्" इति । भव्यास्तु केचन ग्रन्थिं प्राप्य पुनः परावर्त्तन्ते, केचन तत्रैव स्थिता भवन्ति । केचन ग्रन्थिं भित्त्वा सम्यक्त्वं प्राप्नुवन्ति । अत्र पथिकदृष्टान्तो लोकप्रकाशात् भाव्यते; तथाहि—"भव्या अपि वसन्तोऽत्रागत्य रागादिर्वर्जिताः । केचित्कर्म्माणि बध्नन्ति प्राग्वद्दीर्घस्थितीनि ते ॥ १ ॥ केचित्तत्रैव तिष्ठन्ति तत्परीणामशालिनः । न स्थितीः कर्मणामेते वर्धयन्त्यल्पयन्ति च ॥ २ ॥ चतुर्गतिभवा भव्याः संज्ञिपर्याप्तपञ्चखाः । अपार्द्धपुद्गलपरावर्त्तान्तर्भाविमुक्तयः ॥ ३ ॥ तीव्रधारपर्शुकल्पापूर्वकाख्यकरणेन हि । आविष्कृत्य परं वीर्यं ग्रन्थिं भिन्दन्ति केचन ॥ ४ ॥ युग्मम् ॥ यथा जनास्त्रयः केऽपि महापुरं यियासवः । प्राप्ताः क्वचन कान्तारे स्थानं चौर्यभयङ्करम् ॥ ५ ॥ तत्र द्रुतं द्रुतं यान्तो ददृशुस्तस्करद्वयम् । तद्दृष्ट्वा त्वरितं पश्चादेको भीतः पलायितः ॥ ६ ॥ गृहीतश्चापरस्ताभ्यामन्यस्त्ववगणय्य तौ । भयस्थानमतिक्रम्य पुरं प्राप पराक्रमी ॥ ७ ॥ दृष्टान्तोपनयश्चात्र जना जीवा भवोऽटवी । पन्थाः कर्म्म स्थितिर्ग्रन्थिदेशस्त्विह भयास्पदम् ॥ ८ ॥

रागद्वेषौ तस्करौ द्वौ तद्भीतो वलितस्तु सः । ग्रन्थिं प्राप्यापि दुर्भावाद्यो ज्येष्ठस्थितिबन्धकः ॥ ९ ॥ चौररुद्धस्तु स ज्ञेयस्ताद्दग्रागादिबाधितः । ग्रन्थिं भिनत्ति यो नैव न चापि वलते ततः ॥ १० ॥ स त्वभीष्टं पुरं प्राप्तो योऽपूर्वकरणाद्द्रुतम् । रागद्वेषावपाकृत्य सम्यग्दर्शनमाप्तवान् ॥ ११ ॥" इति । आवश्यकचूर्णावप्युक्तम्—"तेहिं पुण जीवेहिं कहं कम्मोवसमो कतो । भन्नति—संसारत्थाणं जीवाणं तिविहं करणं भवति, तं जहा—अहापवत्तकरणं अपुव्वकरणं अणियट्टिकरणं । तिविहे च करणे इमो दिट्ठन्तो—जहा तिन्नि पुरिसा विगालसमयंसि गामातो गामं पत्थिता, तत्थ य अन्नेहिं भणियं—जहा एत्थ भयं, पच्छा ते भणंति—समत्था अम्हे तेणाणं पलाइतुं ति, एवं ते वच्चंति । ताए चेव अहापवत्तीए गतीए, जहा सुरो अत्थमलभति तहा तहा अपुव्वं गतिं उप्पाडेंति, जाहे पुण तं देसं पत्ता जत्थ तं भयं ताहे उभयतो पासं पंथस्स दुवे पुरिसा असिहत्थगता जमगसमगं पाउब्भूया । तत्थ एगो पुरिसो आयतमाणे पासिता भीओ पडिनियत्तो, एगो जंघाबलसमत्थो मा णं घेप्पिस्सामित्ति तहेव तेसिं पलातो ण य तेहिं तिन्नो ओलग्गितुं, एगो तत्थेव ठिओ वद्धो । एवमिहाडवी संसारो, पुरिसत्तयोवमा तिविहा संसारिणो पंथो कम्मट्ठिती, वहुत्ता, भयत्थाणं गंठिदेसो, तक्करा रागदोसा, पतीवगामी गंठिदेसमासादेऊण पुणो अणिट्ठपरिणामो कम्मट्ठितिसंवर्धकः, तक्करवरुद्धो पबलरागदोसोदयो गंठियसत्तो, इट्ठदेसाणुप्पयातो सम्मदंसणपुरप्रापी । एत्थ य पुरिसत्तयसभावगमणोवमितमाद्यं गंठिदेसपावगं अहापवत्तिकरणं सिग्घतरगामिभावेणोवमितमपुव्वकरणं इट्ठपुरपावगगतिउवममणियट्टिकरणं ति । एत्थ य जाव गंठिट्ठाणं ताव अहापवत्तं गंठिट्ठाणमतिक्कामतो अपुव्वकरणं सम्मदंसणलाभाभिमुहस्स अणियट्टिकरणं ति" इति ।

अथ करणानां विशुद्धिरभिधीयते—तत्र यथाप्रवृत्तकरणे प्रविशन् प्रतिसमयमनन्तगुणवृद्ध्या विशुद्ध्या प्रविशति, पूर्वोक्तं च शुभप्रकृतिबन्धादिकं तथैव तत्र कुरुते । प्रतिसमयं कालत्रयवर्तिनानाजीवापेक्षयाऽसंख्येयलोकाका-

शप्रमाणान्यध्यवसायस्थानानि भवन्ति । नन्वत्र कालत्रयापेक्षया जीवानामनन्तत्वेनानन्तान्यध्यवसायस्थानानि स्युः कथमसंख्येयानीति चेत् ? एकैकस्मिन्नध्यवसायस्थानेऽनन्तानां जीवानां सद्भावान्न दोषः । प्रथमसमयापेक्षया द्वितीयसमयेऽध्यवसायस्थानानि विशेषाधिकानि, ततोऽपि तृतीयसमये विशेषाधिकानि, एवं तावद्वाच्यः यावद्यथाप्रवृत्तिकरणचरमसमयः । अत एतानि स्थाप्यमानानि विषमचतुरस्रं क्षेत्रमास्तृणन्ति । स्थापना चेयम्— विशुद्ध्यपेक्षया षट्स्थानपतितानि भवन्ति । प्रथमसमये जघन्या विशुद्धिः सर्वस्तोका, ततो द्वितीयसमये जघन्या विशोधिरनन्तगुणा, ततोऽपि तृतीयसमयेऽनन्तगुणा, एवं तावद्वाच्यं यावद्यथाप्रवृत्तकरणाद्धायाः संख्येयो भागो गतो भवति । ततः प्रथमसमये उत्कृष्टा विशोधिरनन्तगुणा, ततो यतः स्थानाज्जघन्यां विशोधिमुक्त्वा निवृत्तस्तस्योपरितनी जघन्या विशोधिरनन्तगुणा, ततोऽपि द्वितीयसमये उत्कृष्टा विशोधिरनन्तगुणा, तत उपरि जघन्या विशोधिरनन्तगुणा, एवमुपर्यधश्चैकैकं विशोधिस्थानमनन्तगुणतया तावन्नेयं यावद्यथाप्रवृत्तकरणस्य चरमसमये जघन्यं विशोधिस्थानं, तत उत्कृष्टानि यानि विशोधिस्थानान्यनुक्तानि तिष्ठन्ति तानि निरन्तरमनन्तगुणनया वृद्ध्या तावन्नेतव्यानि यावच्चरमसमये उत्कृष्टं विशोधिस्थानम् । इह द्वौ पुरुषौ युगपत्करणप्रतिपन्नौ बुद्धावारोप्येते, एकः सर्वजघन्यया श्रेण्या प्रतिपन्नोऽन्यस्तु सर्वोत्कृष्टया विशोधिश्रेण्या । तत्र प्रथमस्य पुरुषस्य प्रथमसमये सर्वजघन्या विशोधिः सर्वस्तोका, ततो द्वितीयसमये जघन्या विशोधिरनन्तगुणा, ततस्तृतीयसमये जघन्या विशोधिरनन्तगुणा, एवं तावद्वाच्यं यावद्यथाप्रवृत्तिकरणस्य संख्येयो भागो गतो भवति । ततः प्रथमसमये द्वितीयस्योत्कृष्टं विशोधिस्थानमनन्तगुणं, ततः यतो जघन्यात्

विशोधिस्थानात् पश्चाद्दलितं तत उपरितनी जघन्या विशोधिरनन्तगुणा, ततो द्वितीयसमये उत्कृष्टा विशोधिरनन्तगुणा, तत उपरि जघन्या विशोधिरनन्तगुणा, ततस्तृतीयसमये उत्कृष्टा विशोधिरनन्तगुणा, एवमुपर्यधश्चैकैकं विशोधिस्थानं द्वयोर्जीवयोरनन्तगुणतया तावद्वाच्यं यावच्चरमसमये जघन्या विशोधिः, ततो द्वितीयस्य यान्यनुक्तान्युत्कृष्टविशोधिस्थानानि तानि क्रमशोऽनन्तगुणानि। तदेवं समाप्तं यथाप्रवृत्तकरणम्, अस्य च पूर्वप्रवृत्तमपि द्वितीयं नाम, शेषकरणाभ्यां पूर्वप्रवृत्तत्वादिति। अत्र च स्थितिघातो रसघातो गुणश्रेणिर्गुणसंक्रमो वा न प्रवर्त्तते, तद्योग्याध्यवसायाभावादिति।

अपूर्वाण्यभिनवानि करणानि स्थितिघातरसघातगुणश्रेण्यपूर्वस्थितिबन्धानि यस्मिन् तदपूर्वकरणम्। एतदुच्यते—अत्राप्यध्यवसायस्थानानि यथाप्रवृत्तकरणवद्वाच्यानि। विशोधिस्तु जघन्या प्रथमसमये सर्वस्तोका, ततोऽपि प्रथमसमय एवोत्कृष्टा विशोधिरनन्तगुणा, ततोऽपि द्वितीयसमये जघन्या विशोधिरनन्तगुणा, ततोऽपि द्वितीयसमय एवोत्कृष्टा विशोधिरनन्तगुणा, एवं तावद्वाच्यं यावदपूर्वकरणचरमसमयः। प्रतिसमयं षट्स्थानपतितानि च भवन्ति। अत्र स्थापना—



अत्र स्थितिघातो रसघातो गुणश्रेणिरपूर्वस्थितिबन्धश्चेति चत्वारः पदार्थाः युगपत् प्रवर्तन्ते। मिथ्यात्वस्याबध्यमानत्वेन गुणसंक्रमो न भवति। तत्र स्थितिघातो नाम स्थितिसत्कर्मणोऽग्रिमभागादुत्कर्षतः प्रभूतसागरोपमशतप्रमाणं जघन्यतः पल्योपमसंख्येयभागमात्रं स्थितिखण्डमुत्किरति खण्डयतीत्यर्थः। उत्कीर्य च या स्थितीरधो न खण्डयिष्यति तासु तद्दलिकं प्रक्षिपति। अन्तर्मुहूर्त्तेन च कालेन तत्स्थितिखण्डमुत्कीर्यते। ततः पुनरप्यन्तर्मुहूर्त्तेन कालेनाधस्तात् पल्योपमसंख्येयभागमात्रं स्थितिखण्डमुत्किरति, पूर्वोक्तप्रकारेणैव प्रक्षिपति। एवमपूर्वकरणाद्धायां

प्रभूतानि स्थितिखण्डसहस्राणि व्यतिक्रामन्ति। तथा च सति अपूर्वकरणस्य प्रथमसमये यत् स्थितिकर्म्मासीत्तस्यैव चरमसमये संख्येयगुणहीनं जातम्॥ रसघातो नामाशुभानां प्रकृतीनां यदनुभागं सत्कर्म तस्यानन्ततमं भागं मुक्त्वा शेषान् अनुभागभागान् अन्तर्मुहूर्त्तेन कालेनाशेषान् विनाशयति । ततः पुनरपि तस्य प्राग्मुक्तस्यानुभागस्यानन्ततमभागं मुक्त्वा शेषानन्तर्मुहूर्त्तेन कालेनानुभागभागान् विनाशयति । ततः पुनरपि प्राग्मुक्तस्यानन्ततमभागस्यानन्ततमभागं मुक्त्वा शेषाननुभागभागानन्तर्मुहूर्त्तेन विनाशयति। एवमेकस्मिन् स्थितिखण्डेऽनेकान्यनुभागस्थितिखण्डसहस्राणि व्यतिक्रामन्ति। तेषां च स्थितिखण्डानां सहस्रैरपूर्वकरणं परिसमाप्यते ॥ गुणश्रेणिर्नाम यत्स्थितिकण्डकं घातयति तन्मध्याद्दलिकं गृहीत्वोदयसमयादारभ्यान्तर्मुहूर्त्तचरमसमयं यावत् प्रतिसमयमसंख्येयगुणनया श्रेण्या निक्षिपति । तद्यथा—प्रथमसमये स्तोकं द्वितीयसमयेऽसंख्येयगुणं ततोऽपि तृतीयसमयेऽसंख्येयगुणमेवं तावन्नेयं यावदन्तर्मुहूर्त्तचरमसमयः । एतच्चान्तर्मुहूर्त्तमपूर्वकरणानिवृत्तिकरणकालाभ्यां मनागतिरिक्तं वेदितव्यम् । एषः प्रथमसमयगृहीतदलिकस्य निक्षेपविधिः । एवं द्वितीयादिसमयगृहीतानामपि दलिकानां निक्षेपो वक्तव्यः । अन्यच्च गुणश्रेणिरचनाय प्रथमसमयगृहीतदलिकापेक्षया द्वितीयसमयेऽसंख्येयगुणं ततोऽपि तृतीयसमयेऽसंख्येयगुणमेवं तावन्नेयं यावद्गुणश्रेणिकरणचरमसमयः । अपूर्वकरणसमयेष्वनिवृत्तिकरणसमयेषु चानुभवतः क्रमशः क्षीयमाणेषु गुणश्रेणिदलिकनिक्षेपः शेषे शेषे भवति, उपरि च न वर्धते ॥ अभिनवस्थितिबन्धो नामापूर्वकरणस्य प्रथमसमयेऽन्य एवापूर्वः स्तोकः स्थितिबन्ध आरभ्यते । स्थितिबन्धस्थितिघातौ युगपदारभेते युगपदेव च निष्ठां यातः, कालेन संख्यया च स्थितिघाताभिनवस्थितिबन्धौ तुल्यौ ॥ एवमेते चत्वारः पदार्था

अपूर्वकरणप्रथमसमयादारभ्य प्रवर्त्तन्ते । अनिवृत्तिकरणं नाम यत्र प्रविष्टानां सर्वेषामपि तुल्यकालानामेकाध्यवसायस्थानम् । तथाहि–अनिवृत्तिकरणस्य प्रथमसमये ये वर्तन्ते, ये च वृत्ताः, ये च वर्तिष्यन्ते तेषां सर्वेषामप्येकमेवाध्यवसायस्थानम् । द्वितीयसमयेऽपि ये वर्तन्ते ये च वृत्ता ये च वर्तिष्यन्ते तेषामपि सर्वेषामेकरूपमध्यवसायस्थानम् । नवरं प्रथमसमयभाविविशोधिस्थानापेक्षयाऽनन्तगुणमेवं तावद्वक्तव्यं यावदनिवृत्तिकरणचरमसमयः । अत एवास्मिन् करणे प्रविष्टानां तुल्यकालानामसुमतां सम्बन्धिनामध्यवसायस्थानानां परस्परं निवृत्तिर्व्यावृत्तिः तिर्यक् षट्स्थानपतितलक्षणा न विद्यत इत्यनिवृत्तिकरणम् । अस्मिंश्चानिवृत्तिकरणे यावन्तः समयास्तावन्त्यध्यवसायस्थानानि पूर्वस्मात् पूर्वस्मादनन्तगुणवृद्धानि । तानि च मुक्तावलिसंस्थानेन स्थापयितव्यानि । अत्रापि च प्रथमसमयादेवारभ्य पूर्वोक्ताश्चत्वारः पदार्था युगपत्प्रवर्तन्ते । ऊर्ध्वमुखी त्वध्यवसायस्थानानामनन्तगुणवृद्धिः सर्वेषु समयेषु विद्यते । अनिवृत्तिकरणाद्धायाः संख्येयेषु भागेषु गतेषु सत्स्वेकस्मिंश्च संख्येयतमे भागे शेषे तिष्ठति मिथ्यात्वस्यान्तरकरणं करोति । अन्तरकरणं नामोदयक्षणादुपरि मिथ्यात्वस्थितिमन्तर्मुहूर्त्तमानामतिक्रम्योपरितनीं च विष्कम्भयित्वा मध्येऽन्तर्मुहूर्त्तमानं तत्प्रदेशवेद्यदलिकाभावकरणं, तन्निष्पादनकालोऽप्यन्तरकरणकाल एव, यथा तन्तुसंयोजनादिकालः पटकरणकालः । सोऽप्यन्तर्मुहूर्त्तप्रमाणः, प्रथमस्थितेः किञ्चिन्न्यूनोऽभिनवस्थितिबन्धाद्धया तु समानः, तथाहि–प्रथमस्थित्यन्तरकरणे द्वे अप्यन्तर्मुहूर्त्तप्रमाणे युगपदारभते, अन्तरकरणप्रथमसमय एव चान्यं स्थितिबन्धं मिथ्यात्वस्यारभ्य स्थितिबन्धान्तरकरणे युगपदेव परिसमापयति । अन्तरकरणे च क्रियमाणे गुणश्रेणिसम्बन्धिनः संख्येया भागाः प्रथमद्वितीयस्थित्याश्रिताः तिष्ठन्ति, एकं तु गुणश्रेणेः संख्येयतमं भागमन्त-

रकरणदलिकेन सहोत्किरति। तदुत्किरणविधिश्चायम्—अन्तरकरणस्थितेर्मध्याद्दलिकं कर्मपरमाण्वात्मकं गृहीत्वा अधः प्रथमस्थितौ उपरि द्वितीयस्थितौ च प्रक्षिपति, एवं प्रतिसमयं तावत्प्रक्षिपति यावदन्तरकरणसत्कं सकलमपि तद्दलिकमन्तर्मुहूर्त्तेन क्षीयते। अन्तरकरणादधस्तनी स्थितिः प्रथमा स्थितिरुपरितनी स्थितिस्तु द्वितीया उच्यते। तत्र प्रथमस्थितौ वर्तमान उदीरणाप्रयोगेण प्रथमस्थितिसत्कं दलिकं समाकृष्योदयसमये यत् प्रक्षिपति सा उदीरणा, यत्तु द्वितीयस्थितेः सकाशादुदीरणाप्रयोगेण समाकृष्योदयसमये प्रक्षिपति साप्युदीरणैव, परं विशेषप्रतिपत्तये तस्या आगाल इति नामान्तरं पूर्वमहर्षिभिः व्यवह्रीयते। उदयोदीरणाभ्यां प्रथमस्थितिमनुभवंस्तावद्गच्छति यावदावलिकाद्विकं शेषं तिष्ठति। प्रथमस्थितेरावलिकाद्विकशेषे त्वागालो व्यवच्छिद्यते केवलोदीरणैव प्रवर्त्तते। प्रथमस्थितावावलिकाशेषीभूतायां तूदीरणापि व्यवच्छिद्यते। ततः केवलेनैवोदयेन तामावलिकामनुभवति। तस्यामपि चापगतायामुदयोऽपि मिथ्यात्वस्य न भवति, दलिकाभावात्। तस्मिन्नेव समये उपशान्ताद्धायां प्रविशति, तस्यां चोपशमाद्धायां प्रविष्टस्य सतः प्रथमसमय एव मोक्षबीजभूतमौपशमिकं सम्यक्त्वमवाप्नोति। तदुक्तम्—"अन्तरकरणप्रथमसमय एवौपशमिकं सम्यक्त्वमवाप्नोति, मिथ्यात्वदलिकवेदनाभावात्" इति। प्रथमस्थितिचरमसमये द्वितीयस्थितिगतं दलिकमनुभागभेदेन त्रिधा करोति, शुद्धमर्द्धशुद्धमविशुद्धमिति। तत्र शुद्धं सम्यक्त्वं देशघाति देशघातिरसोपेतत्वात्, अर्धशुद्धं मिश्रमोहनीयम्, अशुद्धं च मिथ्यात्वम्, एतदुभयं सर्वघाति सर्वघातिरसोपेतत्वादिति। एतदर्थप्रतिपादिकाश्चेमे कर्मप्रकृतिस्था गाथाः—"सव्वुवसमणा मोहस्सेव उ तस्सुवसमक्कियाजोग्गो। पंचिंदियओ सन्नी पज्जत्तो लद्धितिगजुत्तो ॥ १ ॥ पुव्विं पि विसुज्झंतो गंठियसत्ताणइक्कमियसोहिं। अन्नयरे सागारे जोगे य विसुद्धलेसासु ॥ २ ॥ ठिइ-

सत्तकम्ममंतोकोडाकोडिं करित्तु सत्तण्हं । दुट्ठाणं चउट्ठाणे असुभसुभाणं च अणुभागं ॥ ३ ॥ वन्धन्तो धुवपयडी भवपाउग्गा सुभा अणाऊ उ । जोगवसा य पएसं उक्कस्सं मज्झिम जहन्नं ॥ ४ ॥ ठिइवन्धद्धापूरे णववंधं पल्लसंखभागूणं । असुभसुभाणणुभागं अणंतगुणहाणिवुड्ढीहिं ॥ ५ ॥ करणं अहापवत्तं अपूव्वकरणमणियट्टिकरणं च । अंतोमुहुत्तियाइं उवसंतद्धं च लहइ कमा ॥ ६ ॥ अणुसमयं वड्ढंतो अज्झवसाणाणऽणंतगुणणाए । परिणामट्ठाणाणं दोसु वि लोगा असंखिज्जा ॥ ७ ॥ मंदविसोही पढमस्स संखभागाहि पढमसमयम्मि । उक्कस्सं उप्पिमहो एक्केक्कं दोण्ह जीयाणं ॥ ८ ॥ आचरमाओ सेसुकोसं पुव्वप्पवत्तमिति णामं । वीयस्स वीयसमए जहण्णमवि णंतरुक्कस्सा ॥ ९ ॥ णिच्चयणमपि तओ से ठिइरसघायट्ठिइवंधगद्धा य । गुणसेढी वि य समगं पढमे समए पवत्तं ति ॥१०॥ उदहिपुहुत्तुक्कस्सं इयरं पल्लस्स संखतमभागो । ठिइकंडगमणुभागाणणंतभागा मुहुत्तंतो ॥ ११ ॥ अणुभागकंडगाणं बहुहिं सहस्सेहिं पूरए इक्कं । ठिइकंडसहस्सेहिं तेसिं वीयं समाणेइ ॥ १२ ॥ गुणसेढी णिक्खेवो समए समए असंखगुणणाए । अद्धादुगातिरित्तो सेसे सेसे य णिक्खेवो ॥ १३ ॥ अणियट्टिम्मि वि एवं तुल्ले काले समा तओ नामं। संखेज्जइमे सेसे भिन्नमुहुत्तं अहो मुचा ॥१४॥ किंचूणमुहुत्तसमं ठिइंबंधद्धाइ अंतरं किच्चा। आवलिदुगेक्कसेसे आगालउदीरणा समिया ॥ १५ ॥ मिच्छत्तुदए खीणे लभेइ सम्मत्तमोवसमियं सो । लंभेण जस्स लब्भइ आयाहियमलद्धपुव्वं जं ॥१६॥ तं कालं बीयठिइं तिहाणुभागेणं देसघाइत्थ। सम्मतं सम्मिस्सं मिच्छत्तं सव्वघाइओ ॥१७॥"

इति–'तं कालं'ति मिथ्यात्वोदयचरमसमये द्वितीयस्थितेः सकाशात् पुञ्जत्रयं करोतीति, तदुक्तं कर्म्मप्रकृतिचूर्णौ–"चरमसमयमिच्छदिट्ठी से काले उवसमसम्मदिट्ठी होहिइ ताहे वियइट्ठिइं तिहाणुभागं करेइ, तंजहा–सम्मत्तं सम्मामिच्छत्तं मिच्छत्तं चे"ति । अन्तरकरणप्रथमसमय एवौपशमिकसम्यक्त्ववान् भवति, तेन चौषधविशेषकल्पेन शोधितस्य मदनको-

द्रवकल्पस्य मिथ्यात्वस्य पुञ्जत्रयं करोति, तद्यथा–सम्यक्त्वं मिश्रं मिथ्यात्वमिति । अत एवौपशमिकसम्यक्त्वात् च्युतः क्षायोपशमिकसम्यक्त्वं सम्यग्मिथ्यात्वं मिथ्यात्वं वा गच्छति, सर्वोऽपि च मिथ्यादृष्टिरवश्यमेव करणत्रयपूर्वकमौपशमिकसम्यक्त्वं लभते पुञ्जत्रयं च करोत्येवेति कार्म्मग्रन्थिकाभिप्रायः। तदुक्तं विशेषावश्यकबृहद्वृत्तौ–"कार्म्मग्रन्थिकास्त्विदमेव मन्यन्ते, यदुत–सर्वोऽपि मिथ्यादृष्टिः प्रथमसम्यक्त्वलाभकाले यथाप्रवृत्त्यादिकरणत्रयपूर्वकमन्तरकरणं करोति, तत्र चौपशमिकं सम्यक्त्वं लभते, पुञ्जत्रयं चासौ विदधात्येव । अत एवौपशमिकसम्यक्त्वाच्च्युतोऽसौ क्षायोपशमिकसम्यग्दृष्टिः मिश्रः मिथ्यादृष्टिर्वा भवति" इति । अन्यत्रापि "कम्मगंथेसु ध्रुवं पढमोवसमी करेइ पुंजतिअं । तप्पडिओ पुण गच्छइ सम्मे मीसंमि मिच्छे वा" इति । सैद्धान्तिकास्त्वेवं मन्यन्ते–"यदुतानादिमिथ्यादृष्टिः कोऽपि तथाविधसामग्रीसद्भावेऽपूर्वकरणेन पुञ्जत्रयं कृत्वौपशमिकसम्यक्त्वमलब्ध्वैव सम्यक्त्वपुद्गलान् वेदयन् क्षायोपशमिकसम्यक्त्वं लभते, कश्चित्तु यथाप्रवृत्त्यादिकरणत्रयक्रमेणान्तरकरणे औपशमिकं सम्यक्त्वं लभते, पुञ्जत्रयं चासौ न करोत्येव, अत एवौपशमिकसम्यक्त्वाच्च्युतो मिथ्यात्वमेव गच्छति, तदुक्तं कल्पभाष्ये–"आलंबणमलहंती जह सट्ठाणं न मुंचए इलिआ । एवं अकयतिपुंजी मिच्छं चिअ उवसमी एइ ॥ १ ॥"–यथा गात्रे समुत्क्षिप्ते सतीलिकाऽपरमग्रेतनस्थानलक्षणमालम्बनमलभमाना प्राक्तनस्थानलक्षणं स्वस्थानं न मुञ्चति, पुनरपि सङ्कुच्य प्राक्तनस्थान एव तिष्ठतीत्यर्थः, एवमुपशमसम्यग्दृष्टिरौपशमिकसम्यक्त्वाच्च्युतोऽकृतत्रिपुञ्जत्वात् मिश्रशुद्धपुञ्जलक्षणस्थानान्तरमलभमानः पुनस्तदेव मिथ्यात्वं गच्छतीत्यार्यार्थः । धर्म्मसङ्ग्रहणिवृत्तौ चैवं दृश्यते–"इह हि कश्चिज्जन्तुस्तथाविधतीव्रपरिणामोपेतत्वेनापूर्वकरणमुपारूढः सन् मिथ्यात्वं त्रिपुञ्जीकरोति । 'अप्पुव्वेण तिपुंजं मिच्छत्तं कुणइ कोद्दवोवमया' इति वचनात् । ततः सोऽनिवृत्तिकरणसामर्थ्यात् स-

म्यक्त्वमुपयन् क्षायोपशमिकमेव सम्यक्त्वमुपयाति, मिश्रीभावपरिणतस्य दलिकस्य विपाकतो वेद्यमानत्वात् । यस्तु तथाविधमन्दपरिणामोपेतत्वादपूर्वकरणमुपारूढोऽपि सन् मिथ्यात्वस्य त्रिपुञ्जीकरणासमर्थः सोऽनिवर्त्तिकरणसामर्थ्यादुदीर्णस्य मिथ्यात्वस्यानवयवशः क्षयात् अनुदीर्णस्य सर्वथा विष्कम्भितोदयत्वात् ऊपरदेशकल्पमिथ्यात्वविवरमासाद्य औपशमिकमेव सम्यक्त्वमधिगच्छतीत्यागमोपनिपत्" इति । औपशमिकसम्यक्त्वलाभप्रथमसमयादारभ्य मिथ्यात्वदलिकं मिश्रे सम्यक्त्वे च संक्रमयति । तद्विधिश्चायम्-प्रथमे समये सम्यक्त्वे स्तोकं संक्रमयति, ततो मिश्रे तस्मिन्नेव समयेऽसंख्येयगुणं, ततोऽपि द्वितीयसमये सम्यक्त्वेऽसंख्येयगुणं, ततोऽपि मिश्रे द्वितीयसमयेऽसंख्येयगुणं, ततस्तृतीयसमये सम्यक्त्वे, तेभ्योऽपि तृतीयसमय एव मिश्रेऽसंख्येयगुणमेवमन्तर्मुहूर्त्तं यावत् संक्रमयति । एष च संक्रमोऽन्तरकरणस्थितेरौपशमिकसम्यक्त्वलक्षणप्रशस्तगुणान्वितेन क्रियत इति गुणसंक्रमः । तदुक्तम्-"गुणसंकमेण एसो संकमो होइ सम्ममीसेसु । अंतरकरणम्मि ठिओ कुणइ जओ सप्पसत्थगुणो ॥ १ ॥" गुणसंक्रमसम्बन्धिनश्च भिन्नमुहूर्त्तात् परतो विध्यातसंक्रमः । मिथ्यात्वस्य यावद्गुणसंक्रमस्तावदायुर्वर्जसप्तानां कर्म्मणां स्थितिघातरसघातगुणश्रेणयः प्रवर्त्तन्ते । गुणसंक्रमे च निवर्तमाने स्थितिघातादयः त्रयोऽपि निवर्त्तन्ते । मिथ्यात्वप्रथमस्थितौ यावदावलिका शेषा न भवति तावत् मिथ्यात्वस्य स्थितिघातरसघातौ भवतः । आवलिकाशेषायां तु तौ निवर्त्तेते । आवलिकाद्विकशेषे च गुणश्रेणिरपि निवर्तते । तदुक्तं-"ठिइरसघाओ गुणसेढी वि य तावं ति आउवज्जाणं । पढमट्ठिइए एगदुगावलिसेसम्मि मिच्छत्ते ॥ १ ॥" औपशमिकसम्यक्त्वस्य किञ्चित्समधिकावलिकाशेषे वर्त्तमानो द्वितीयस्थितिगतानां त्रयाणामपि पुञ्जानां दलिकमध्यवसायविशेषेणान्तरकरणपर्यन्तावलिकायां प्रक्षिपति, तत्र प्रथमसमये प्रभूतं

द्वितीयसमये स्तोकं ततोऽपि तृतीयसमये स्तोकतरमेवं तावद्वाच्यं यावदावलिकाचरमसमयः। दलिकानि च गोपुच्छ-
संस्थानानि भवन्ति। स्थापना चेयम्— अन्तरकरणस्यावलिकाशेषे तु विधिनावतारितस्य दलिकस्याध्यवसायानुरू-
पेणोदयो भवति, यदि तदानीं शुभ- परिणामस्तदा सम्यक्त्वपुञ्जस्य मध्यमपरिणामश्चेत् मिश्रस्याशुभश्चेत्
मिथ्यात्वस्योदयो भवति। तदुक्तं कर्मप्रकृतौ—"उवसंतद्धा अन्ते विहिणा ओकड्डियस्स दलियस्स। अज्झवसाणणुरूवस्सुदओ तिसु
एक्कतरयस्स ॥ १ ॥" इति। अयं चौपशमिकसम्यक्त्वस्य प्रथमलाभो मोहनीयस्य सर्वोपशमनात् भवति, नान्यथा। तथा प्रथ-
मस्थित्यपेक्षया बृहत्तरान्तर्मुहूर्त्तकालप्रमाणश्च। सम्यक्त्वेन च समं कश्चिद्देशविरतिं सर्वविरतिं वा प्राप्नोति। तथा चोक्तं
शतकचूर्णौ—"उवसमसम्मदिट्ठी अंतरकरणे ठिओ कोइ देसविरइं पि लभेइ कोइ पमत्तापमत्तभावं पि सासाणो पुण ण किं पि लभेइ"
त्ति। यदा सम्यक्त्वाच्युतः पुनः सम्यक्त्वं लभते, तदापूर्वकरणेनैव पुञ्जत्रयं कृत्वाऽनिवृत्तिकरणेन सम्यक्त्वपुञ्ज एव
गमनं स्यात्। प्राग्लब्धस्याप्यपूर्वकरणस्य स्तोकशः लब्धत्वेनापूर्वकरणतेति वृद्धाः।

अथ देशविरतिसर्वविरत्योः कः प्राप्तिक्रमः? उच्यते—प्रथमं तवत् विरताविरत इमे अष्टौ भङ्गाः—यो व्रतानि न जाना-
ति न चाभ्युपगच्छति न च पालनाय यतते सोऽज्ञानानभ्युपगमायतनादिभिरविरतः सर्वलोकः। यो न जानाति न चा-
भ्युपच्छति, परं पालयति सोऽज्ञानतपस्वी। यो न जानाति, अभ्युपगच्छति, न च पालनाय यतते, यथा पार्श्वस्थः। यो
न जानाति, अभ्युपगच्छति पालयति च, अगीतार्थः। यो जानाति, नाभ्युपगच्छति न च पालनाय यतते, यथा श्रेणि-
कादिकः। यो जानाति, न स्वीकुरुते, पालयति च, यथानुत्तरदेवः। यो जानाति स्वीकुरुते, न च पालयति, यथा

संविग्नपाक्षिकः। यो जानाति स्वीकुरुते पालयति, यथा व्रती। इति अष्टौ भङ्गाः। तत्राद्येषु सप्तसु भङ्गेषु नियमादविरतो यतो घुणाक्षरन्यायेन पालितान्यपि व्रतानि न फलवन्ति भवन्ति किन्तु सम्यग्ज्ञानसम्यग्ग्रहणपुरस्सरं पालितानि सफलीभवन्ति। आद्येषु चतुर्षु सम्यग्ज्ञानाद्यभावः। त्रिषु सम्यग्ज्ञानसद्भावेऽपि सम्यगभ्युपगमपालनाद्यभावः। चरमे तु भङ्गे वर्तमानः पापस्य देशाद् विरतो देशविरतोऽपि भवति। स चैकव्रतग्राही द्विव्रतग्राहीत्येवं तावद्वाच्यः यावत् सम्पूर्णद्वादशव्रतधारी प्रत्याख्यातसर्वसावद्यकर्मा केवलमनुमतिमात्रप्रतिसेवकः। अनुमतिरपि त्रिधा, प्रतिसेवनानुमतिः प्रतिश्रवणानुमतिः संवासानुमतिश्च। यः स्वयं परैर्वा कृतं पापं श्लाघते, सावद्यारम्भनिष्पन्नं वाहारादिकं भुङ्क्ते तस्य प्रतिसेवनानुमतिः। यदा पुत्रादिभिः कृतं पापं शृणोति श्रुत्वा चानुमन्यते न च प्रतिषेधति तदा प्रतिश्रवणानुमतिः। यदा सावद्यारम्भादिषु प्रवृत्तेषु पुत्रादिषु ममत्वमात्रयुक्तः नान्यत्किञ्चित् प्रतिसेवते प्रतिशृणोति श्लाघते वा तदा संवासानुमतिः। यः संवासानुमतिमात्रमेव सेवते स चरमो देशविरतः। ततोऽपि यो विरतः स यतिरुच्यते। द्वयोः प्रतिपत्तौ यथाप्रवृत्तापूर्वकरणाख्ये द्वे करणे भवतः, अनिवृत्तिकरणं तु न भवति। करणकालात्पूर्वमप्यन्तर्मुहूर्त्तं यावत् प्रतिसमयमनन्तगुणवृद्ध्या विशुद्ध्या प्रवर्धमानोऽशुभप्रकृत्यनुभागद्विस्थानकभावकरणादिक्रमेण यथाप्रवृत्तिकरणं प्रागिव करोति तथैव चापूर्वकरणं करोति। नवरं गुणश्रेणिर्न वाच्या, अपूर्वकरणसमाप्त्यनन्तरसमय एवाविरतश्चेत् देशविरतिं सर्वविरतिं वा प्राप्नोति। देशविरतश्चेत् सर्वविरतिं प्राप्नोतीति नास्ति तृतीयकरणस्यावकाशः। देशविरतिं सर्वविरतिं वा प्रतिपन्नः सन् उदलिकाया उपरि गुणश्रेणिमारचयति। तां चान्तर्मुहूर्त्तप्रमाणां दलिकापेक्षया प्रतिसमयमसंख्येयगुणवृद्धां विदधाति।

ननु कस्मादन्तर्मुहूर्त्तमेव गुणश्रेणिं विरचयति, न परतोऽपीति चेत्? उच्यते–सर्वविरतिं देशविरतिं वा प्रतिपन्नः सन् सर्वविरतो देशविरतो वाऽन्तर्मुहूर्त्तं यावद्वर्द्धमानपरिणाम एव भवति, ततस्तावन्मात्रामेव गुणश्रेणिं विरचयति, परतस्त्वनियमः। वर्द्धमानपरिणामश्चेत् वर्द्धमानां कदाचिदसंख्येयभागाधिकां कदाचित्संख्येयभागाधिकां कदाचित् संख्येयगुणां कदाचिदसंख्येयगुणां प्रतिसमयं गुणश्रेणिं करोति हीयमानपरिणामश्चेदित्थमेव चतुर्धा हीयमानाम्, अवस्थितपरिणामश्चेत्तावन्मात्रामिति। तदुक्तम्–"परिणामपच्चएणं चउविहं होइ हाइ वड्ढए वावि। परिणामवड्ढियाए गुणसेढिं तत्तियं रयइ॥१॥" इति। एषा चैवं दलिकापेक्षया द्रष्टव्या। कालतस्तु सर्वदापि तावन्मात्रैव, अधश्च क्रमशोऽनुभवतः क्षीयमाणेषु समयेषूपर्युपरि वर्धत इति। यावत्कालं देशविरतिं सर्वविरतिं वा प्रतिपालयति तावत्कालं गुणश्रेणिं रचयति। नवरं हानियुता वृद्धियुता अवस्थिता वा भवतीत्यनियमः। स्वभावस्थे हीयमानपरिणामे वा देशविरते सर्वविरते वा स्थितिघातरसघातौ न भवतः। अनाभोगतो देशविरतिपरिणामात् सर्वविरतिपरिणामात् पतितोऽविरतिं गतो देशविरतिं वा गतो भूयोऽपि देशविरतिं सर्वविरतिं वा प्रतिपद्यमानोऽकृतकरणः सन् प्रतिपद्यते। यस्त्वाभोगतो देशविरतेः सर्वविरतेर्वा पतितः आभोगेन च मिथ्यात्वं वा गतः सन् भूयोऽपि जघन्यतोऽन्तर्मुहूर्त्तेन कालेनोत्कृष्टतः प्रभूतेन कालेन देशविरतिं सर्वविरतिं वा सम्यक्त्वं वा प्रतिपत्तुमिच्छुः प्राक्तनरीत्या करणपुरस्सरमेव प्रतिपद्यते। तदुक्तं–"परिणामपच्चयाओ णाभोगगयागया अकरणा उ। गुणसेढीसिं णिच्चं परिणामा हाणिवुड्ढिजुआ॥ १॥" इत्युक्तः प्रसङ्गतो देशविरतिसर्वविरतिलाभः॥

अथ श्रेणिगतमौपशमिकसम्यक्त्वमुच्यते–तत्र तावत् यः श्रेणिं प्रतिपद्यते सोऽवश्यं पूर्वमनन्तानुबन्धिनो विसंयोजयतीति

प्रथमं तावत् विसंयोजना उच्यते । अनन्तानुबन्धिनां विसंयोजकस्तु चतुर्गतिको जीवस्तत्रापि देवो नैरयिको वाऽविरतसम्यग्दृष्टिः, तिर्यक्पञ्चेन्द्रियः सर्वाभिः पर्याप्तिभिः पर्याप्तः अविरतसम्यग्दृष्टिः देशविरतो वा, मनुष्यस्त्वविरतसम्यग्दृष्टिः देशविरतिः सर्वविरतिर्वा भवति । अनन्तानुबन्धिनां क्षपणाय प्रवृत्तो यथाप्रवृत्त्यादीनि त्रीणि करणानि प्रागिव करोति, करणवक्तव्यता च प्रागुक्तैव, नवरमन्तरकरणं न करोति, तदभावे प्रथमस्थितिमपि न करोति, तदभावाच्चोपशमोऽपि न भवति । अपूर्वकरणप्रथमसमयादारभ्य च गुणसंक्रमोऽत्र प्रवर्तते । अपूर्वकरणप्रथमसमयेऽनन्तानुबन्धिनां दलिकं शेषकषायरूपपरप्रकृतौ स्तोकं संक्रमयति, ततो द्वितीयसमयेऽसंख्येयगुणम्, ततोऽपि तृतीयसमयेऽसंख्येयगुणं संक्रमयति, एवं तावद्वाच्यं यावदपूर्वकरणचरमसमयः । अपूर्वकरणे उद्वलनासंक्रमानुविद्धगुणसंक्रमेणानन्तानुबन्धिनः शेषप्रकृतिरूपतया व्यवस्थापनेन विनाशयति । उद्वलनासंक्रमे तु प्रथमतः पल्योपमासंख्येयभागमात्रं स्थितिखण्डमन्तर्मुहूर्त्तेन कालेनोत्कीर्यते, उत्कीरणं नाम घनदलान्वितस्याल्पदलोत्तारणं तदेव चोद्वलनं व्यपदिश्यते । ततो द्वितीयं स्थितिखण्डं प्रथमस्थितिखण्डाद्विशेषहीनतरं पल्योपमासंख्येयभागमात्रमन्तर्मुहूर्त्तेन कालेन विनाशयति । ततोऽपि तृतीयं विशेषहीनतरपल्योपमासंख्येयभागमात्रमन्तर्मुहूर्त्तेन कालेन विनाशयति । एवं प्रत्येकमन्तर्मुहूर्त्तेन कालेनोत्कीर्यमाणानि पल्योपमासंख्येयभागमात्राणि स्थितिखण्डानि पूर्वपूर्वस्थित्यपेक्षया विशेषहीनानि विशेषहीनानि च विनाशयतीत्येवंरूप उद्वलनासंक्रमः प्रदेशसंक्रमाधिकारे संक्रमकरणे उक्तः । अनिवृत्तिकरणे च वर्त्तमानः सन् गुणसंक्रमानुविद्धेनोद्वलनासंक्रमेण निरवशेषान् विनाशयति, किन्त्वधस्तनावलिकामात्रं मुञ्चति, तदपि च स्तिबुकसंक्रमेण वेद्यमानासु प्रकृतिषु संक्रमयति । ततोऽनिवृ-

त्तिकरणपर्यवसाने शेषकर्मणामपि स्थितिघातरसघातगुणश्रेणयो न भवन्ति किन्तु स्वभावस्थ एव भवति । तदेवमुक्ताऽनन्तानुबन्धिनो विसंयोजना ।

ये त्वाचार्या अनन्तानुबन्धिनामुपशमनां मन्यन्ते तन्मतेनोपशमनाविधिरुच्यते—तत्रानन्तानुबन्धिनामुपशामकोऽविरतसम्यग्दृष्टिदेशविरतप्रमत्ताप्रमत्तसंयतानामन्यतमो भवति । अनन्तानुबन्ध्युपशमनां चिकीर्षुः प्रागुक्तक्रमेण यथाप्रवृत्तकरणमपूर्वकरणं च करोति । नवरमिहापूर्वकरणे गुणश्रेण्यामन्तर्मुहूर्त्तप्रमाणानां स्थितीनामुपरि याः स्थितयस्तन्मध्याद्दलिकं गृहीत्वोदयावलिकायाः उपरितनीषु स्थितिषु प्रतिसमयमसंख्येयगुणनया वृद्ध्या निक्षेपो द्रष्टव्यः, शेषं प्राग्वदिति । अनिवृत्तिकरणे प्रविष्टोऽनिवृत्तिकरणाद्धायाः संख्येयेषु भागेषु गतेषु सत्स्वेकस्मिन् भागेऽवतिष्ठमानेऽनन्तानुबन्धिनामधस्तादावलिकामात्रं मुक्त्वाऽन्तर्मुहूर्त्तप्रमाणमन्तरकरणमभिनवस्थितिबन्धाद्धासमं करोति । अन्तरकरणसत्कं च दलिकमुत्कीर्य बध्यमानासु परप्रकृतिषु प्रक्षिपति । प्रथमस्थितिगतं चावलिकामात्रं दलिकं स्तिबुकसंक्रमेण वेद्यमानासु परप्रकृतिषु संक्रमयति । अन्तरकरणे च कृते सति द्वितीयसमयेऽनन्तानुबन्धिनामुपरितनस्थितिदलिकमुपशमयितुमारभते, तद्यथा—प्रथमे समये स्तोकमुपशमयति, द्वितीयसमये ततोऽप्यसंख्येयगुणं, ततोऽपि तृतीयसमयेऽसंख्येयगुणमुपशमयति, एवं तावद्वाच्यं यावदन्तर्मुहूर्त्तम् । एतावता कालेन साकल्येनानन्तानुबन्धिन उपशमिता भवन्ति । उपशमिता नाम यथा रेणुनिकरः जलबिन्दुनिवहैरभिषिच्याभिषिच्य द्रुघणादिभिः निष्कुट्टितो निष्पन्दो भवति तथा कर्मरेणुनिकरोऽपि विशो-

धिमलप्रवाहेण परिषिच्य परिषिच्यानिवृत्तिकरणरूपद्रुघणनिष्कुट्टितः संक्रमणोदयोदीरणानिधत्तिनिकाचनाकरणानामयोग्यो भवति । तदेवमभिहितानन्तानुबन्धिनामुपशमनेति ॥

ततो दर्शनमोहनीयमुपशमयति । तत्र यदि वेदकसम्यग्दृष्टिः सन्नुपशमश्रेणिं प्रतिपद्यते ततो नियमात् श्रामण्ये स्थितः पूर्वं दर्शनत्रिकमुपशमयति । करणत्रयवक्तव्यता प्राग्वद्वाच्या, नवरमनुदितयोर्मिथ्यात्वमिश्रयोः प्रथमां स्थितिमावलिकामात्रां करोति । सम्यक्त्वस्य चान्तर्मुहूर्त्तप्रमाणां त्रयाणामपि कर्मणामन्तरकरणसत्कमुत्कीर्यमाणं दलिकं सम्यक्त्वप्रथमस्थितौ प्रक्षिपति । अयमेवात्र विशेषः—अन्तरकरणप्रवेशसमयादारभ्यान्तर्मुहूर्त्तेऽतिक्रान्ते गुणसंक्रमावसाने विध्यातसंक्रमेण मिथ्यात्वमिश्रयोः दलिकं सम्यक्त्वे प्रक्षिपति । तदुक्तम्—"पढममुवसमं व सेसं अंतमुहुत्ता उ तस्स विज्झाओ" इति । अन्तरकरण-प्रथमसमये चौपशमिकसम्क्त्वं प्राप्नोतीत्युक्तमेव ॥

अथ क्षायोपशमिकमुच्यते—मिथ्यात्वमोहनीयस्योदीर्णस्य क्षयः अनुदीर्णस्य तूपशमः, ताभ्यां निवृत्तं क्षायोपशमिकं, तदुक्तं महाभाष्ये—"मिच्छत्तं जमुइण्णं तं खीणं अणुइयं च उवसंतं । मीसीभावपरिणयं वेइज्जंतं खओवसमं ॥ १ ॥" वृत्तिः—"यदुदीर्णमुदयमागतं मिथ्यात्वं तद्विपाकोदयेन वेदितत्वात् क्षीणं निर्जीर्णं, यच्च शेषं सत्तायामनुदयागतं वर्तते तदुपशान्तम् । उपशान्तं नाम विष्कम्भितोदयभावमपनीतमिथ्यात्वस्वभावं च शेषमिथ्यात्वं, मिथ्यात्वमिश्रपुञ्जावाश्रित्य विष्कम्भितोदयं शुद्धपुञ्जमाश्रित्य पुनरपनीतमिथ्यात्वस्वभावमित्यर्थः । आह—यद्येवं अशुद्धमिश्रपुञ्जद्वयरूपस्य विष्कम्भितोदयस्यैवोपशान्तस्यानुदीर्णता युज्यते, न तु शुद्धपुञ्जलक्षणस्यापनीतमिथ्यात्वस्वभावस्य, तस्य विपाकेन साक्षादनुभूयमानत्वादिति, भवद्भिस्तु 'अणुइयं च उवसंतं' इति वचनाद् द्विस्व-

भावमप्युपशान्तमनुदीर्णमुक्तम्, इति तदेतत् कथम्? अत्रोच्यते—सत्यमेतत्, किन्त्वपनीतमिथ्यात्वस्वभावत्वात् स्वरूपेणाऽनुदयात् तस्याऽप्यनुदीर्णतोपचारः क्रियते। अथवा अनुदीर्णत्वमविशुद्धमिश्रपुञ्जद्वयरूपस्य मिथ्यात्वस्यैव युज्यते, न तु सम्यक्त्वस्य, तस्यापनीतमिथ्यात्वस्वभावत्वलक्षणमुपशान्तत्वमेव युज्यत इत्यर्थः। कथमिति चेत्? उच्यते—मिथ्यात्वं यदुदीर्णमुदयमागतं तत् क्षीणं शेषं त्वविशुद्धमिश्रपुञ्जद्वयलक्षणं मिथ्यात्वमनुदीर्णं 'अणुइयं च' इति चशब्दस्य व्यवहितप्रयोगात्, शुद्धपुञ्जलक्षणं तदुपशान्तं चेति—अपनीतमिथ्यात्वस्वभावमित्यर्थः इत्येवं सर्वं सुस्थं भवति। तदेवमुदीर्णस्य मिथ्यात्वस्य क्षयः, अनुदीर्णस्य च य उपशमः, एतत्स्वभावद्वयस्य योऽसौ मिश्रीभाव एकत्र मिथ्यात्वलक्षणे धर्मिणि भवनरूपस्तमापन्नं मिश्रीभावपरिणतं वेद्यमानमनुभूयमानं त्रुटितरसं शुद्धपुञ्जलक्षणं मिथ्यात्वमपि क्षयोपशमाभ्यां निर्वृत्तत्वात् क्षायोपशमिकं सम्यक्त्वमुच्यते। शोधिता हि मिथ्यात्वपुद्गला अतिस्वच्छवस्त्रमिव दृष्टेर्यथावस्थिततत्त्वरुच्यध्यवसायरूपस्य सम्यक्त्वावारका न भवन्ति। अतस्तेऽप्युपचारतः सम्यक्त्वमुच्यत इति। अत्राह—ननूदीर्णस्य मिथ्यात्वस्य क्षये, अनुदीर्णस्य चोपशमे क्षायोपशमिकसम्यक्त्वमिहोक्तम्, प्रागुक्तमौपशमिकमपि एवंविधमेव, तत् कोऽनयोर्विशेषः?, तदेतदसमीक्षिताभिधानम्, यतो 'मीसीभावपरिणयं वेइज्जंतं खओवसमं' इति वचनादत्र क्षायोपशमिकसम्यक्त्वे शुद्धपुञ्जपुद्गलवेदनमुक्तम्, औपशमिके तु तत् सर्वथैव नास्ति, इति महान् विशेषः। किञ्च औपशमिकसम्यक्त्वे मिथ्यात्वं प्रदेशोदयेनापि न वेद्यते, अत्र तु प्रदेशोदयेन तदपि वेद्यते इत्यलं प्रसङ्गेनेति ॥ १ ॥" अत्र सम्यक्त्वमोहनीयस्य कतिपयदेशघातिरसस्पर्द्धकक्षयोपशमात् कतिपयरसस्पर्द्धकानां चोदयात् क्षयोपशमानुविद्ध औदयिको भावः प्रवर्त्तत इत्युक्तं क्षायोपशमिकं सम्यक्त्वमिति ॥

अथ क्षायिकं सम्यक्त्वमुच्यते—तत्रानन्तानुबन्धिकषायचतुष्कक्षयानन्तरं मिथ्यात्वमिश्रसम्यक्त्वपुञ्जलक्षणे त्रिविधेऽपि

दर्शनमोहनीये सर्वथा क्षीणे सति क्षायिकं सम्यक्त्वं भवति। तत्र संयोजनानां प्रागुक्ता विसंयोजना अत्रापि वाच्या। अथ दर्शनत्रिकस्य क्षपणोच्यते—इह दर्शनमोहक्षपणायाः प्रारम्भको मनुष्यः वर्षाष्टकस्योपरि वर्त्तमानो वज्रर्षभनाराचसंहननो जिनकालसंभवी। जिनकालश्च प्रथमतीर्थकरविहरणकालादारभ्य जम्बूस्वामिकेवलोत्पत्तिपर्यवसानो ज्ञातव्यः। इह दर्शनमोहनीयक्षपणायोद्यतो यथाप्रवृत्तादीनि त्रीणि करणानि प्रागिव करोति। नवरमपूर्वकरणप्रथमसमयादारभ्य चरमसमयपर्यन्तमनुदितयोः मिथ्यात्वमिश्रयोः दलिकं गुणसंक्रमेण सम्यक्त्वे प्रक्षिपति। तत्रोद्वलनासंक्रममपि तयोरेवारभते—प्रथमं स्थितिखण्डं बृहत्तरमुद्वलयति ततो द्वितीयं विशेषहीनं ततोऽपि तृतीयं विशेषहीनमेवं तावद्वाच्यं यावदपूर्वकरणचरमसमयः। अपूर्वकरणप्रथमसमये च यत्स्थितिकर्मासीत् तत्तस्यैव चरमसमये संख्येयगुणहीनं जातम्। अपूर्वस्थितिबन्धोऽपि अपूर्वकरणप्रथमसमये यावान् स्थितिबन्ध आसीत् तदपेक्षयाऽपूर्वकरणचरमसमये संख्येयगुणहीनो भवति। ततोऽनिवृत्तिकरणे प्रविशति। तत्र च प्रविष्टः सन् प्रथमसमयादारभ्यापूर्वां गुणश्रेणिमपूर्वस्थितिघातमपूर्वरसघातमपूर्वमभिनवस्थितिबन्धं कर्त्तुमारभते, अनिवृत्तिकरणप्रथमसमय एव च दर्शनत्रिकस्य देशोपशमनानिधत्तिनिकाचना व्यवच्छिद्यन्ते। किञ्च दर्शनत्रिकस्य स्थितिसत्कर्मानिवृत्तिकरणप्रथमसमयादारभ्य स्थितिघातादिभिः घात्यमानं स्थितिखण्डसहस्रेषु गतेष्वसंज्ञिपञ्चेन्द्रियस्थितिसत्कर्मसमानं भवति। ततः पुनरपि स्थितिखण्डसहस्रपृथक्त्वे गते सति चतुरिन्द्रियस्थितिसत्कर्मसमानं भवति। ततोऽपि तावन्मात्रेषु स्थितिखण्डेषु गतेषु त्रीन्द्रियस्थितिसत्कर्मसमानं भवति। ततोऽपि स्थितिखण्डसहस्रपृथक्त्वेषु गतेषु द्वीन्द्रियस्थितिसत्कर्मसमानं भवति। ततोऽपि तावन्मात्रेषु स्थितिखण्डेषु गतेषु एकेन्द्रिय-

स्थितिसत्कर्मसमानं भवति। ततोऽपि तावन्मात्रेषु स्थितिखण्डेषु गतेषु सत्सु कर्मप्रकृतिचूर्णिकृन्मतेन पल्योपममात्रप्रमाणं भवति। तदुक्तं कर्मप्रकृतिचूर्णौ—"पढमसमये अनियट्टिं पविट्ठस्स अपुव्वं ठितिखंडगं अपूव्वं अणुभागखंडगं अपुव्वो ठितिबन्धो अपूव्वा गुणसेढी अणियट्टिस्स पढमसमते दंसणमोहणीयं अपसत्थुपसामणणिहत्तणिकायणेहिं अणुपसंतं सेसाणि कम्माणि उवसंताणि अणुवसंताणि य, अणियट्टिपढमसमते दंसणमोहणियस्स ठितिसंतकम्मं खंडिज्जमाणं खंडिज्जमाणं असन्निपंचेन्दियसंतकम्मट्ठितिसमगं होति। ततो ठितिखंडगपुहुत्ते गते चउरिंदियसंतकम्मट्ठितिसमगं होति। ततो तत्तिएहिं चेव ट्ठितिखंडगेहिं गतेहिं तेइंदियसंतकम्मट्ठितिसमगं, ततो तत्तिएहिं चेव ठितिखंडगेहिं, बिइंदियसत्तसमगं, एवं एगिंदियसत्तसमगं ठितिसंतकम्मं होइ, ततो ठितिखंडगपुहुत्तेणं जायं पलिओवमठितियं दंसणमोहणिज्जठितिसंतकम्मं" इति। पञ्चसंग्रहकृन्मते तु पल्योपमसंख्येयभागमात्रम्। तदुक्तं तत्रैव—"ठिइखंडगसहस्साइं एक्केके अंतरम्मि गच्छंति। पलिओवमसंखंसे दंसणसंते तओ जाए ॥ १ ॥" इति। दर्शनत्रिकस्य पल्योपममात्रस्थितौ जातायां सत्यां तत एकं संख्येयभागं स्थितिखण्डं मुक्त्वा शेषं सर्वमपि त्रयाणामपि दर्शनमोहनीयानां विनाशयति। एवं सहस्राणि स्थितिघाता व्रजन्ति। तदनन्तरं मिथ्यात्वस्यैकमसंख्येयभागं मुक्त्वा शेषानसंख्येयभागान् सम्यक्त्वमिश्रयोरेकं संख्येयभागं मुक्त्वा शेषान् संख्येयभागान् विनाशयति। ततः सहस्रेषु स्थितिखण्डेषु गतेषु सत्सु मिथ्यात्वमुदयावलिकाविहीनं सर्वमपि क्षीणमावलिकामात्रं तिष्ठति। सम्यक्त्वमिश्रयोस्तु पल्योपमासंख्येयभागमात्रं शेषं तिष्ठति। मिथ्यात्वस्योदयावलिकासत्कं दलिकं तु स्तिबुकसंक्रमेण सम्यक्त्वमोहनीये प्रक्षिपति। अमूनि स्थितिखण्डानि खण्ड्यमानानि मिथ्यात्वसत्कानि सम्यक्त्वमिश्रयोः प्रक्षिपति, मिश्रसत्कानि सम्यक्त्वे प्रक्षिपति, सम्यक्त्वस-

त्कानि त्वधस्तात्स्वस्थान इति । ततः सम्यक्त्वमिश्रयोरेकमसंख्येयभागं मुक्त्वा शेषानसंख्येयभागान् विनाशयति । ततो यदेकमसंख्येयभागं तस्याप्यसंख्येयान् भागान् कृत्वा एकं च भागं मुक्त्वा शेषान् विनाशयति । एवं कतिपयेषु स्थितिखण्डेषु गतेषु सत्सु मिश्रमोहनीयमावलिकामात्रमेव तिष्ठति, तदा च सम्यक्त्वसत्कर्माष्टवर्षप्रमाणं भवति । तदानीं च सकलविघ्नविलयात् निश्चयनयमतेन दर्शनमोहनीयक्षपक उच्यते । तत ऊर्ध्वं सम्यक्त्वस्यान्तर्मुहूर्त्तप्रमाणं स्थितिखण्डं घातयति, तद्दलिकं चोदयसमयादारभ्य प्रक्षिपति । तच्चैवम्–उदयसमये स्तोकं ततो द्वितीयसमयेऽसंख्येयगुणं ततोऽपि तृतीयसमयेऽसंख्येयगुणमेवं तावद्वाच्यं यावद्गुणश्रेणिशिरस्तत ऊर्ध्वं विशेषहीनं विशेषहीनं तावद्वाच्यं यावच्चरमा स्थितिः । ततो द्वितीयं स्थितिखण्डं प्रथमस्थितिखण्डादसंख्येयगुणमन्तर्मुहूर्त्तेन कालेन खण्डयति, दलिकप्रक्षेपविधिस्तु पूर्वोक्तप्रकारेणोदयसमयादारभ्य विज्ञेयः । एवं पूर्वस्मात्पूर्वस्मादसंख्येयगुणान्यन्तर्मुहूर्त्तप्रमाणान्यनेकानि स्थितिखण्डानि द्विचरमस्थितिखण्डं यावत् खण्डयति, पूर्वोक्तप्रकारेण दलिकनिक्षेपं च करोति । चरमं च स्थितिखण्डं द्विचरमात् स्थितिखण्डात् संख्येयगुणं, तस्मिंश्च खण्ड्यमाने तेनैव सह गुणश्रेण्या अपि संख्येयभागं खण्डयति अन्याश्च तदुपरितनीः संख्येयगुणाः स्थितीः, चरमखण्डस्य तावन्मानत्वादेव। उत्कीर्य च तद्दलिकमुदयसमयादारभ्यासंख्येयगुणनया श्रेण्या निक्षिपति। तद्यथा–उदयसमये स्तोकं ततोऽपि द्वितीयसमयेऽसंख्येयगुणं ततोऽपि तृतीयसमयेऽसंख्येयगुणं, एवं तावद्वाच्यं यावद्गुणश्रेणीशिरः । अत ऊर्ध्वं तूत्कीर्यमाणमेव दलिकं प्राप्यते, न तत्प्रक्षेपाधारभूतमिति न तत् क्वापि प्रक्षिपति । चरमे च स्थितिखण्डे उत्कीर्णे सत्यसौ क्षपकः कृतकरण इत्युच्यते । तदुक्तं कर्मप्रकृतिचूर्णौ–"सम्मत्तदुचरिमखंडगातो चरिमखंडगं संखेज्जगुणं

चरिमखंडगं आगातिज्जमाणं गुणसेढीए संखेज्जतिभागो, अत्थ य उवरि संखेज्जगुणाओ ठितीतो आगातिज्जंति । सम्मत्तस्स चरिमे ठितिखंडगे पढमसमये आगातिए वट्टिज्जमाणीसु ठितीसु जं पदेसगं उदये दिज्जंति तं थोवं, से काले असंखेज्जगुणं असंखेज्जगुणं जाव ठितीखंडगस्स पढमसमयं पत्तोति । सा चेव ठिती गुणसेढीसीसगं जातं। ठावणाए समए समए उक्किरिज्जमाणं दलियं चरिमसमते उक्कड्डमाणो उदए पयेसग्गं थोवं देति, से काले असंखेज्जगुणं जाव गुणसेढीसीसगं । चरिमठितिखंडगे निट्ठिए कयकरणिज्जोत्ति भण्णति । कयकरणाद्धा य पच्छिमे होति" इति । अत्र 'पश्चिमे' नाम चरिमे खण्डे इति विज्ञेयम् । कृतकरणाद्धायां वर्तमानः कश्चित्कालमपि कृत्वा चतसृणां गतीनामन्यतमस्यामुत्पद्यते, पूर्वं शुक्लेश्यायामासीत् सम्प्रति त्वन्यतमस्यां गत्वा वेदितसम्यक्त्वशेषः क्षायिकसम्यग्दृष्टिर्भवति । तदेवं प्रस्थापको मनुष्यो निष्ठापकश्चतसृष्वपि गतिषु प्राप्यते । तदुक्तं—"पट्ठवगो उ मणुस्सो निट्ठवगो होइ चउसु वि गईसु" इति । यदि पुनः तदानीं कालं न करोति तदा वेदितसम्यक्त्वशेषः क्षायिकसम्यग्दृष्टिः भवति । यदि बद्धायुस्तदा तिष्ठति । अबद्धायुश्चेत् ? क्षपकश्रेणिं परिसमाप्य केवलज्ञानं प्राप्नोति । पूर्वबद्धायुः क्षायिकसम्यग्दृष्टिस्तु तृतीये चतुर्थे वा भवे सिद्ध्यति । तदुक्तं—"तइयचउत्थे तम्मि य भवंमि सिज्झंति दंसणे खीणे । जं देवणिरयसंखाउचरमदेहेसु ते हुंति ॥ १ ॥" इति । यदि स्वर्गे नरके वा गच्छति तदा स्वर्गभवान्तरितो नरकभवान्तरितो वा तृतीयभवे, यदि तिर्यक्षु मनुजेषु वा गच्छति तदा युगलिकस्वर्गभवान्तरितश्चतुर्थभवे शिवमुपयाति । इदं प्रायोवृत्त्योक्तमन्यथा कृष्णदुष्प्रसहादीनां पञ्चभवस्यापि श्रवणात्, तदुक्तं—"नरयाउ नरभवम्मि देवो होऊण पंचमे कप्पे । तत्तो चूओ समाणो बारसमो अममतित्थयरो ॥ १ ॥" इति । उक्तं त्रिविधं सम्यक्त्वम् ॥

प्रागुक्तं त्रिविधमपि सास्वादनेन युतं चतुर्विधं भवति । तत्रेषत्तत्त्वार्थश्रद्धानरसास्वादनेन सह वर्त्तत इति सास्वादनम्,

यद्वाऽऽसमन्तात् मुक्तिमार्गाच्छातयति भ्रंशयति आशातनम्–अनन्तानुबन्धिकषायोदयवेदनम्, सहाशातनेन वर्त्तत इति साशातनम्। यद्वाऽऽयमौपशमिकसम्यक्त्वलाभलक्षणमायं सादयत्यपनयतीत्यायसादनम्–अनन्तानुबन्धिकषायवेदनम्, पृषोदरादित्वाद्यलोपेन आसादनम्, सति ह्यस्मिन् परमानन्दरूपानन्तसुखफलदो निश्रेयसतरुबीजभूत औपशमिकसम्यक्त्वलाभो जघन्यतः समयमात्रेणोत्कृष्टतः षडावलिकाभिरपगच्छति, ततः सहासादनेन वर्त्तत इति सासादनः, मिथ्यात्वोदयाभावादनन्तानुबन्धिकषायोदयकलुषिततत्त्वश्रद्धानरसास्वादनसमन्वितमिति। वेदकेन सह पञ्चविधं सम्यक्त्वं भवति। वेदयत्यनुभवति सम्यक्त्वपुद्गलानिति वेदकोऽनुभविता ततोऽभिन्नत्वात् सम्यक्त्वमपि वेदकमुच्यते। यद्वाऽऽह्रियत इत्याहारकं तद्वद्वेद्यत इति वेदकम्, समिति सम्यक् अवैपरित्ये अञ्चति जीवादिवस्तुबोधं प्रति प्रवर्त्तत इति सम्यक् तस्य भावः सम्यक्त्वम्। वेदकं च तत्सम्यक्त्वं च वेदकसम्यक्त्वम्। तत्पुनः क्षपकश्रेणिं प्रतिपन्नस्यानन्तानुबन्धिचतुष्कमिथ्यात्वमिश्रमोहनीयेषु क्षपितेषु सत्सु सम्यक्त्वे क्षीयमाणे क्षायिकसम्यक्त्वप्राप्त्युपान्त्यसमये सम्यक्त्वस्य चरमग्रासवेदनरूपमिति। तदुक्तं महाभाष्ये–"वेययसम्मत्तं पुण सव्वोदयचरमपोग्गलावत्थं"। अन्यत्रापि–"वेअगमिह पुद्धोइअचरमिल्लयपुग्गलग्गासं" इति। ननु क्षायोपशमिकाद्वेदकस्य कः प्रतिविशेषः, सम्यक्त्वमोहनीयपुद्गलपुञ्जानुभवस्य समानत्वादिति चेत्? सत्यम्, किन्त्वेतदशेषोदितपुद्गलानुभूतिमत् वेदकम्, उदितानुदितसम्यक्त्वपुद्गलवत् क्षायोपशमिकमिति विशेषः। परमार्थतस्तु क्षायोपशमिकमेवेदम्। चरमग्रासशेषाणां पुद्गलानां क्षयात् चरमग्रासवर्त्तिनां तु पुद्गलानां मिथ्यात्वस्वभावापगमनलक्षणस्योपशमनस्य सद्भावात्। कियन्मात्रभेदेन च भेद एवेत्यङ्गीक्रियमाणे त्वौदयिकसम्यक्त्वस्यापि प्राप्तेरतिप्रसङ्गः स्यादित्युक्तं पञ्चविधं सम्यक्त्वम्।

दशविधं सम्यक्त्वं कायमार्गणायां सरागदर्शनार्यभेदप्रस्तावे उक्तमपि सम्यक्त्वमार्गणायां स्थानाशून्यार्थं पुनरुच्यते–निसर्गरुचिः १, उपदेशरुचिः २, आज्ञारुचिः ३, सूत्ररुचिः ४, वीजरुचिः ५, अभिगमरुचिः ६, विस्ताररुचिः ७, क्रियारुचिः ८, संक्षेपरुचिः ९, धर्मरुचिः १०, इति। तत्र गुर्वाद्युपदेशनिरपेक्षेण केवलेन क्षयोपशमेन जीवाजीवादिपदार्थनवकविषयिणी रुचिः सा निसर्गरुचिः॥ परोपदेशप्रयुक्ता जीवाजीवादिपदार्थनवकविषयिणी या रुचिः सोपदेशरुचिः। परः–तीर्थंकरः केवली तदनुसारी छद्मस्थो वा, तस्योपदेशः परोपदेशः, तत् प्रयुक्तोपदेशरुचिस्तज्जन्यबोधरुचिर्वेति निष्कर्षः। तदुक्तं सूत्रकृताङ्गे–"लोगं अयाणित्तिह केवलेणं कहंति जे धम्ममयाणमाणा। णस्संति अप्पाण परं च णट्ठा संसारघोरंमि अणोरपारे॥ १॥ लोगं वियाणित्तिह केवलेणं पुन्नेण नाणेण समाहिजुत्ता। धम्मं सम्मत्तं च कहंति जे उ तारंति अप्पाणं परं च तिण्णा॥ २॥" इति। उपदेशे तज्जन्यबोधे च रुचिरिह संशयव्यावर्त्तकतावच्छेदको धर्म्मविशेषः॥ सर्वविदाज्ञयैव धर्म्मानुष्ठानगता या रुचिः साऽऽज्ञारुचिः। माषतुषादीनां धर्म्मानुष्ठानविषय आचार्यादीनामाज्ञया सम्यक्त्वजनिका या रुचिः सापि सर्वविन्मूलैव। अत एव धर्म्मसंग्रहवृत्तौ–"रागद्वेषरहितस्य पुंस आज्ञयैव धर्म्मानुष्ठानगता रुचिराज्ञारुचिः, राहित्यं च देशतः सर्वतश्च, तत्र देशतो दोषरहितानामाचार्यादीनामाज्ञया धर्म्मानुष्ठाने रुचिर्माषतुषादीनां सम्यक्त्वसम्पादिका तत्तदनुष्ठाने, तदुक्तं एकादशमे पञ्चाशके–"गुरुपारतंतनाणं सद्दहणं एयसंगयं चेव। एत्तो उ चरित्तीणं मासतुसाईण णिद्दिट्ठं॥ १॥" इति। सर्वदोषरहिताज्ञामूलत्वं च तत्राप्यप्रामाण्यशङ्कानिवर्त्तकत्वेन सर्वत्र रुचिप्रयोजकमिति विशेषः" इत्युक्तम्॥ सूत्राध्ययनाभ्यासजनितविशिष्टज्ञानेन जीवाजीवादिपदार्थनवकविषयिणी या रुचिः सा सूत्ररुचिर्गोविन्दाचार्यस्येव, यथा पुनः पुनः स्मरणात् दृढ-

तरः संस्कारः तथा पुनः पुनरध्ययनात् दृढतरं ज्ञानं निश्शङ्कं भवतीति ॥ एकेन पदेनानेकपदतदर्थप्रतिसन्धानद्वारोदके तैलबिन्दुवत् प्रसरणशीला रुचिर्बीजरुचिः ॥ अर्थतः सकलसूत्रविषयिणी रुचिरभिगमरुचिः । आह च–"सा होइ अभिगमरुई सुअनाणं जस्स अत्थओ दिट्ठं । इक्कारस अंगाइं पइन्नगं दिट्ठिवाओ अ ॥ १ ॥" इति। ननु सूत्ररुचेरस्याः को भेदः ? न च वक्तव्यं सूत्ररुचिः सूत्रमात्रविषया, इयं चार्थावच्छिन्नसूत्रविषयेति, केवलसूत्रस्य मूकत्वेन तद्रुचेरप्रमाणत्वादज्ञानानुबन्धित्वाच्च, तदुक्तमुपदेशमालायां–"अपरिच्छिअसुअणियसस्स केवलमभिन्नसुत्तचारिस्स । सव्वुज्जमेण वि कयं अन्नाणतवे बहुं पडइ ॥ १ ॥"– अत्र 'अभिन्नं'ति अविवृतमिति । अत्रोच्यते–सूत्ररुचावर्थस्यार्थरुचौ सूत्रस्य प्रवेशेऽपि सूत्रार्थाध्ययनजनितज्ञानविशेषकृतरुचिभेदाद्भेदः । अत एवोपदेशपदे श्रीहरिभद्रसूरिभिः सूत्राध्ययनादर्थाध्ययने विशेषप्रयत्नोऽभिहितः । तदुक्तं–"सुत्ता अत्थे जत्तो अहिगयरो णवरि होइ कायव्वो । इत्तो उभयविसुद्धित्ति मूअगं केवलं सुत्तं ॥१॥" इति । यद्वा सूत्रनिर्युक्त्यादिग्रन्थविषयरुचिभेदाद्भेदः। अत एव स्थानाङ्गवृत्तौ निर्युक्त्यादिविषयत्वेन सूत्ररुचेरभिगमरुचिर्भिन्नेति प्रतिपादितम् ॥ सर्वप्रमाणसर्वनयजन्यसर्वद्रव्यसर्वभावविषयिणी या रुचिः सा विस्ताररुचिः ॥ दर्शनज्ञानचारित्रतपोविनयाद्यनुष्ठानविषयिणी रुचिः क्रियारुचिः ॥ आज्ञास्मरणनियता आज्ञारुचिः तदसङ्गा क्रियारुचिरिति द्वयोर्भेदः । अत एव श्रीहरिभद्रसूरिपादैः सर्वसात्म्येन परिणतचारित्रक्रियाः महर्षयश्चारित्रकाया भणिताः । तदुक्तं–"इत्तो उ चरित्तकाओ" इति ॥ अनभिगृहीतकुदृष्टेः प्रवचनाविशारदस्य निर्वाणपदमात्रविषयिणी रुचिः संक्षेपरुचिः, यथा चिलातिपुत्रस्योपशमादिपदत्रयविषयिणी ॥ धर्म्मपदवाच्यविषयिणी रुचिः धर्मरुचिः, धर्मपदश्रवणमात्राद्रुचिरुत्पद्यते । न च देशधर्मसमयधर्मपदवाच्यविषयिण्यपि रुचिः तथास्यादिति-

वाच्यम्, निरुपपदधर्मपदवाच्यत्वस्यैव ग्रहणात्। नन्वेवं तर्हि चारित्रधर्मादिपदवाच्यविषयिण्यामव्याप्तिः, चारित्रशब्दस्योपपदत्वेन निरुपपदधर्मपदवाच्यत्वस्याभावादिति चेत्? न, निरुपपदत्वस्य वास्तवधर्मातिप्रसञ्जकोपपदरहितस्यैवात्र विवक्षणादिति॥ शिष्यमतिव्युत्पादनार्थं चेत्थमुपाधिभेदेन सम्यक्त्वभेदोपवर्णनम्। तेन क्वचित्केषाञ्चिदन्तर्भावेऽपि न क्षतिरित्युत्तराध्ययनवृत्तौ, यथा च नान्तर्भावस्तथोक्तमस्माभिः, तथापि नैतदन्यतमत्वं सम्यक्त्वलक्षणं, रुचीनां तत्तद्विषयभेदेन परिगणयितुमशक्यत्वात्, रुचेः प्रतीतिरूपत्वेन वीतरागसम्यक्त्वेऽव्याप्तेश्च। "दसविहे सरागसम्मत्तदंसणे पन्नते" इति स्थानाङ्गसूत्रस्य स्वारस्येन सरागसम्यक्त्वस्यैव लक्ष्यत्वेन च रागस्याननुगतत्वेन लक्ष्यभेदाल्लक्षणभेदोऽवश्यमनुसरणीय इति। वस्तुतो लक्षणमिह लिङ्गं व्यञ्जकमिति यावत्। व्यञ्जकस्य च वह्निव्यञ्जकधूमालोकवदननुगमेऽपि न दोषः। अत एव च 'णाणं दंसणं चेव' इत्यादिना ज्ञानदर्शनचारित्रतपःप्रभृतीनामननुगतानामेव जीवस्वरूपव्यञ्जकत्वरूपजीवलक्षणत्वमुक्तं, लिङ्गं विनापि लैङ्गिकसद्भावेऽविरोधश्च। यदाहुरध्यात्ममतपरीक्षायामुपाध्यायश्रीयशोविजयगणयः—"जं च जिअलक्खणं तं उवइट्ठं तत्थ लक्खणं लिंगं। तेण विणा सो जुज्जइ धूमेण विणा हुआसु व॥ १॥" इति। एवं रुच्यभावेऽपि वीतरागसम्यक्त्वसद्भावान्न क्षतिः। व्यङ्ग्यं त्वेकमनाविलज्ञानादिगुणैकरसस्वभावशुद्धात्मपरिणामरूपं परमार्थतोऽनाख्येयमनुभवगम्यमेव सम्यक्त्वमिति धर्मसंग्रहवृत्तौ। तच्च सम्यक्त्वं शुभात्मपरिणामरूपमस्मदादीनां परस्थमप्रत्यक्षमपि प्रशमादिभिः पञ्चभिः लिङ्गैः लक्ष्यते। ननु प्रत्यक्षेण लिङ्गेनाप्रत्यक्षस्य लिङ्गिनोऽनुमितिरुपजायते, धूमेन पर्वतनितम्बव्यवहितस्य वह्नेरिव, अत्र तु लिङ्गलिङ्गिनोरुभयोरप्यात्मपरिणामत्वेनाप्रत्यक्षत्वात् कथं शमादिभिः लिङ्गैः सम्यक्त्वस्य लिङ्गिनोऽनुमितिर्जायत इति चेत्?

सत्यम्, इह कदाग्रहपरिहारविधिना उपशमाद्यभिव्यञ्जिका वीतरागवन्दनार्चनाद्याः कायिक्यो वाचिक्यश्च चेष्टा उपचारा-द्धृत्यादिशब्दैरभिधीयन्ते, यथा लौकिकदेवपूजननमस्काराद्याः कायवाग्व्यापारा मिथ्यात्वाभिव्यञ्जका मिथ्यात्वस्याती-न्द्रियत्वेऽप्युपचारेण मिथ्यात्वशब्देनाभिधीयन्ते तथा चोपशमादीनां बाह्यशुभचेष्टावत्त्वेन प्रत्यक्षतया लिङ्गत्वं नानुपप-न्नम्। तदुक्तं—"तं उवसमसंवेगाइएहिं लक्खिज्ज उववाएहिं। आयपरिणामरूवं बज्झेहिं पसत्थजोगेहिं ॥ १ ॥" इति। यद्वा मा भूवन्नसदादिप्रत्यक्षाण्यमूनि तथापि कुग्रहपरित्यागप्रज्ञापनीयत्वविधिबहुमानाविधित्यागादिभिः प्रत्यक्षाभिः प्रशस्त-वाक्चेष्टाभिरनुमितैरेभिः सम्यक्त्वमनुमीयते, तादृग् नदीपूरदर्शनानुमितेन वर्षेणाङ्कुरप्ररोहवदिति। नन्वेकेनैव निरुपा-धिकेन लिङ्गेन साध्यसिद्धिश्चेत् किं लिङ्गपञ्चकाभिधानेन, नो चेत् सहस्रेणापि सा न स्यात्; प्रतीतिदार्ढ्यार्थं चेत्? न, एकेनैवानौपाधिकेन साध्याविनाभाविना लिङ्गेन तत्सिद्धेः, एवं च बहुलिङ्गाभिधानेऽधिकं निग्रहस्थानं प्रसज्येत इति चेत्, न, अस्य प्रसङ्गस्य जल्पावस्थायामेवावतारात्, शास्त्रस्य शिष्यव्युत्पादनार्थत्वेन नायं दोषः, कस्यचित् केनचित् लिङ्गेन तद्भावात्, यथैकस्मिन्नेव साध्येऽनेकानुमानप्रयोगोपलम्भस्तथा। वस्तुतस्तु समुदितानां लिङ्गत्वमिति। आस्तिक्य-स्य सर्वगत्वेन बहुविषयत्वात् पश्चादभिधानम्। एषामास्तिक्यादिक्रमेणोत्पादेऽपि प्राधान्यन्यायमाश्रित्योपशमादिक्रमे-णोपन्यासः, तदुक्तं पञ्चाशकवृत्तावभयदेवसूरिपादैः—"आस्तिक्यादिगुणयुतः—आस्तिक्यानुकम्पानिर्वेदसंवेगप्रशमगुणान्वितः। ग्रन्थान्तरे यथाप्राधान्यन्यायमाश्रित्य प्रशमादयोऽभिधीयन्ते। इह त्वास्तिक्यप्रभवत्वात् क्रमेणान्येषामेवमुपन्यासः। आस्तिक्यमेव चोर-रीकृत्य दशाश्रुतस्कन्धादौ दर्शनप्रतिमोच्यते" इति। तत्रोपशमोऽनन्तानुबन्धिकषायाणामनुदयः, तदुक्तं—"पढमिल्लुयाण उदये

नियमा संजोयणाकसायाणं । सम्मदंसणलाभं भवसिद्धिया वि न लहंति ॥ १ ॥" तथा श्रावकप्रज्ञप्त्यामपि—"तत्तत्थसद्दहाणं सम्मत्तं तम्मि पसममादिया । पढमकसाओवसमादविक्खया हुंति नायव्वा ॥१॥ पगईए कम्माणं नाऊणं वा विवागमसुहं ति । अवरद्धे वि न कुप्पइ उवसमो सव्वकालं पि ॥२॥" इति । ननु 'श्रीमन्महावीरजिनदेशनासमधिगतजीवाजीवादितत्त्वः सुरेन्द्रैरपि प्रवचनं प्रत्यक्षुभितसत्त्वो निकटीकृतनिर्वाणवधूसङ्गसुखः क्षायिकसम्यग्दृष्टिरपि श्रेणिकभूपतिः कदाचिच्छिशिरमासनिशीथिन्यां प्रावारबहिर्भूतकोमलभुजलताशीतस्पर्शसंवेदनविनिद्राणामह्नि तरङ्गिणीतटनिर्ध्यातध्यानव्यग्रोग्रतपःकृशितगात्रचारित्रपात्रमहामुनिस्मृतिपथेऽध्यारोहन्तीं कथं स भवितेति वाणीं वदन्तीं सतीमतल्लिकां चेल्लणादेवीमधिकृत्य समुन्मिलदुपपतिरिरंसाशङ्काकलङ्कोल्लेखसमुच्छलद्बहलकोपज्वलनज्वालापरितापात् दशनकोटिक्षतरदच्छदः रक्तनयनो भ्रूभङ्गतरङ्गितवदनः स्वेदोदबिन्दुसन्दोहार्द्रितवपुः प्राणेभ्योऽपि प्रतिक्षणं प्रेक्ष्यमाणाया अतिवल्लभाया अप्यस्या यदेदृशी गतिः तदाऽन्यासां का वार्तेति विचिन्त्य सकलान्तःपुरं प्रज्वालयेत्यभयकुमारमाज्ञापयामास । ततः पुनः किञ्चित् प्रत्यागतचेतनः सन्देहमपनोदाय भगवदन्तिकं गत्वा प्रणम्य च भगवन् ! किमेकपत्नी चेल्लणा न वा ? इति प्रश्ने कृते भगवता चैकपत्नीत्युक्तं श्रुत्वा संजातानुत्तरानुतापः तूर्णं स्वमन्दिरं प्रत्यागन्तुमारेभे । आगच्छँश्चाभयोऽपि कुतोऽप्यसद्विकल्पात् विपर्यस्तमतिस्तातो मामेवमाज्ञापयतीति विभाव्यान्तःपुरपार्श्ववर्त्तिजीर्णगजकुटीरान् प्रज्वाल्यान्तरा पितुः संमीलितस्ततः पित्राऽवाचि—किमनुष्ठितम् ? अभयोऽब्रवीत् यदादिष्टं तातेन । ततः क्षपितदर्शनसप्तकोऽप्यन्तःपुरदाहश्रवणोद्भूतप्रज्वलितप्रबलकोपज्वलनः निखिलसाम्राज्यधुरावहनधौरेयमप्रतिमौत्पत्तिक्यादिबुद्धिचतुष्कनिष्कषितगीष्पतिमनीषावैभवं प्रतिपदं प्रभा-

वनाप्रसाधितवीतरागशासनं निखिलनिजतनयावतंसमप्यभयकुमारं प्रत्युवाच–यद्येवं ततः त्वमपि तत्र कथं न प्रविशः ? ततोऽभयः प्रत्युवाच–"अहं समये प्रव्रजिष्यामि किं ममाग्निप्रवेशेनात्महत्यया" इति । तथा–प्रथमतीर्थपतिप्रथमश्रावको भरतपतिरपि रणभुवि निजभ्रातृबाहुबलिनो वधाय चक्रमुच्चिक्षेप । ततो बाहुबली कवलीकृतानन्तानुबन्धिकषायोऽपि सचक्रमेनं चूरयामीति चिन्तयामास' इत्यादौ लिङ्गाभावेन लिङ्गिनोऽप्यभावः प्रसज्यत इति चेत् ? न, लिङ्गाभावेऽपि तप्तायोगोलके इव लिङ्गिसद्भावस्यात्राप्येवं दर्शनादिति । ननु कथं मिथ्यादृष्टिगुणस्थानवर्त्तिनामनन्तानुबन्धिनां तुर्यगुणस्थानादिवर्त्तिभिरप्रत्याख्यानादिकषायैः भेदेऽपि साम्यमिति चेत् ? सत्यम्, कश्चिन्मिथ्यादृष्टिश्चतुःस्थानकरसपरिणतैस्तीव्रोदयैरनन्तानुबन्धिभिरप्रत्याख्यानादीन् बद्धवान्, स च कदाचित् सम्यक्त्वादिगुणस्थानमवाप्तवान्, तस्य च कथञ्चित् कारणानुरूपचतुःस्थानरसपरिणताप्रत्याख्यानाद्युदयेऽनन्तानुबन्धिभिः सह दुर्भाषणादिसाम्यं संभाव्यत इत्यदोषः । तदुक्तं न्यायाचार्यैः–"भवन्ति हि संज्वलना अपि केचन कषायास्तीव्रतयाऽनन्तानुबन्धिसदृशविपाकवन्त" इति। वस्तुतस्तु निश्चयसम्यक्त्वस्यैव प्रशमादीनि लिङ्गानि सन्ति । तदुक्तं धर्मसंग्रहे–"एवंविधं नैश्चयिकं सम्यक्त्वमधिकृत्यैव प्रशमादीनां लक्षणत्वं सिद्धान्तोक्तं संगच्छते, अन्यथा श्रेणिककृष्णादीनामपि तदसंभवेन लक्षणव्याघातसंभवात्" इति । एवं च सति विसंयोजितानन्तानुबन्धिनः प्राप्तमिथ्यात्वस्यापि मिथ्यादृष्टौ प्रथमावलिकायामनन्तानुबन्धिन उदयाभावेन सम्यक्त्वप्रसङ्ग स्यात्, तथा सास्वादनसम्यग्दृष्टेरपि अनन्तानुबन्धिनामुदयसद्भावेन मिथ्यात्वप्रसङ्ग स्यात्, तथा च,–"आत्माधिकरणाः खलु एते कषायाः, स चास्मदादीनामतीन्द्रियस्तदतीन्द्रियत्वे तेषामप्यतीन्द्रियत्वं परमाण्वतीन्द्रियत्वे तद्गतरूपादिवत् । ततो यदि आत्मनि केवला एवानन्तानुबन्धिनः प्रादुष्ष्युस्ततः केनचित्

लिङ्गेन तज्ज्ञानम्, ततः कयाचित् सुसामग्र्या तद्व्यावृत्त्या तदुपशमस्यापि कथञ्चिदवगमाल्लिङ्गत्वं सिद्ध्येत्, न त्वेवं, यावतान्येषामपि द्वादशानां कषायाणां तत्र विद्यमानत्वात् तेभ्यः पार्थक्यमनन्तानुबन्धिनां ज्ञातुमिष्टं, तच्च ज्ञातुं न शक्यते, साजात्यात्" इत्यादिदूषणजालं न संभवति। 'अस्तीह सहकारफले रूपविशेषः समास्वाद्यमानरसविशेषादिति' सहचारस्यापि लिङ्गत्वस्वीकारेण तुर्यगुणस्थाने मिथ्यात्वमोहनीयक्षयोपशमेन सहावश्यमेवानन्तानुबन्धिकषायचतुष्कस्य क्षयोपशमात् तल्लिङ्गत्वे न कापि बाधा। ननु तर्हि मिथ्यात्वक्षयोपशमेन सहानन्तानुबन्धिनामिव ज्ञानावरणस्यापि क्षयोपशमस्य विद्यमानत्वेन तस्यापि लिङ्गत्वं स्यात्? मिथ्यात्वक्षयोपशमेन सह ज्ञानावरणक्षयोपशमस्य विद्यमानत्वं नासिद्धं, पञ्चाशकवृत्तावुक्तत्वात्। तथा च तद्ग्रन्थः—"सम्यक्त्वहेतोर्मिथ्यात्वक्षयोपशमस्यावसरे ज्ञानावरणानन्तानुबन्धिकषायलक्षणचारित्रमोहनीयादिकर्मणामपि क्षयोपशमोऽवश्यमेव भवति" इति चेत्? न, मिथ्यादृष्टेरारभ्य क्षीणमोहपर्यन्तगुणस्थानेषु सर्वत्र ज्ञानावरणक्षयोपशमस्य तारतम्येन सत्त्वात्। विशिष्टक्षयोपशमस्तु तत्त्वार्थाभिप्रायेण प्रागुक्त एवेति। एवं च कषायाणां चारित्रावारकत्वेऽपि सम्यक्त्वावारकत्वं नासिद्धमिति। अन्ये तु क्रोधकण्डूविषयतृष्णोऽपशमः शमः इत्याहुः। पञ्चलिङ्गीकारास्तु मिथ्यात्वाभिनिवेशोपशमः शमः, तदुक्तं—"मिच्छाभिनिवेसस्स उ नायवो उवसमो इहं लिंगं। चारित्तमोहणीयं जेण कसाया समाइट्ठा ॥१॥" बृहद्वृत्तिः—"मिथ्या—विपरीतोऽभिनिवेशो मानसो निश्चयः, सर्वज्ञवचनविपरीतार्थपक्षपात इत्यर्थः, तस्य, तुरवधारणे, तेन तस्यैव 'उपशमः'—सर्वथापगमः, मिथ्यात्वक्षयोपशमजन्यं हि सम्यक्त्वं, तथा च तदुदयानन्तरमेव मिथ्यात्वकार्यो मिथ्याभिनिवेशः तद्विरोधित्वात् दिवाकरोदयानन्तरं तम इव उपशाम्यत्येव। 'ज्ञातव्यो'—विज्ञेयः, 'इहेति'—अत्र लिङ्गविचारप्रक्रमे, अनुस्वारश्चात्र प्राकृतत्वात्,—'लिङ्गं' सम्यक्त्वस्य अनुमापकं, तत्कार्यत्वात्, यदनन्तरं नियमेन

यदुत्पद्यते तत्तस्य कार्यमिति न्यायात्, तथा च वह्निरिव धूमेन तेन सम्यक्त्वमनुमीयते, इतः स एव लिङ्गं न त्वनन्तानुबन्धिनामुपशमः। कुत एतदिति चेत् ? तत्राह—मोहयति चारित्रं प्रति विचित्रतामापादयतीति मोहनीयम्, 'कृत्यलुटोऽन्यत्रापि' इति कर्त्तर्यनीयः। मुह्यति वाम्रियतेऽनेनेति वा मोहनीयम्, चारित्रस्य—देशसर्वविरतिरूपस्य मोहनीयं चारित्रमोहनीयम्। कृष्यन्ते प्राणिनोऽस्मिन्निति कषः संसारस्तस्यायस्तल्लाभहेतुत्वात्, कषमयन्ते प्राणिन एभिरिति वा कषाया अनन्तानुबन्ध्यादयः षोडश, नोकषाया अपि नव कषायसहचरत्वात् कषायाः, एवं पञ्चविंशतिश्चारित्रमोहनीयम्, चारित्रावारकमोहनीयकर्म्मतया 'येन'—यस्मात् हेतोः 'समादिष्टाः'—निरूपिता भगवद्भिरिति गम्यते। अयमर्थः—द्विविधं हि मोहनीयं दर्शनमोहनीयं, चारित्रमोहनीयं च। तत्र दर्शनमोहनीयं त्रिधा—सम्यक्त्वमिश्रमिथ्यात्वभेदात्, चारित्रमोहनीयमपि द्विधा—कषायनोकषायभेदात्, तदुक्तं—"मोहेइ मोहणीयं तं पि समासेण होइ दुविहं तु। दंसणमोहं पढमं चरित्तमोहं भवे बीयं॥ दंसणमोहं तिविहं सम्मं मीसं च तहेव मिच्छत्तमिति। जं पि य चरित्तमोहं तं पि य दुविहं समासओ होइ। सोलस जाण कसाया नव भेया नोकसायाणं॥" तथा च चारित्रमोहनीयतया चारित्रमावृण्वते कषायाः, न सम्यक्त्वम्। नहि अन्यकार्यमन्यः करोति, तथा सति मृत्पिण्डोऽपि पटं कुर्यात्, करणे वा सर्वस्य सर्वकरणप्रसङ्गात्। एवं च चारित्रमोहनीयस्यैव सम्यक्त्वावारकत्वे दर्शनमोहनीयस्यापार्थक्यं प्रसज्येत, तत्कार्यस्य चारित्रमोहनीयेनैव करणात्। तथा च मोहनीयस्य द्वैविध्यं भज्येत। एवं च यो यद्विरोधी तदभावस्तत्सत्त्वं गमयेत्, यथा तमोऽभावः प्रकाशत्वम्, विरोधिनश्चारित्रस्य कषायाः, तस्मात्तदुपशमश्चारित्रं गमयति, न सम्यक्त्वं, चारित्रविरोधित्वेनैव तेषां प्रतिपादनात्। तथा च आगमः—"सव्वे वि हु अइयारा संजलणाणं उ उदयओ होंति। मूलच्छिज्जं पुण होइ बारसण्हं कसायाणं॥" द्वादशानामनन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानावरणानां क्रोधादीनां कषायाणामुदयात् 'मूलच्छेद्यम्' इति-

मूलेन अष्टमप्रायश्चित्तेन छिद्यते यदतिचारजातं तन्मूलच्छेद्यं भवति । एवं चैषामुदयश्चारित्रस्यैवावारको भवति । तथा च कथमनन्तानुबन्ध्युपशमः सम्यक्त्वं गमयेत्, चारित्रमोहनीयोपशमत्वेन तस्य सम्यक्त्वेन सह स्वाभाविकसम्बन्धाभावात् । असम्बद्धस्यापि च गमकत्वे सर्वं सर्वस्य गमकं स्यात्, तस्मात् चारित्रमोहनीयत्वादनन्तानुबन्धिनां न तदुपशमः सम्यक्त्वलिङ्गम् । नन्वेवमागमविरोधः, तथाहि—"पढमिल्लुयाण उदए नियमा संजोयणाकसायाणं । सम्मद्दंसणलंभं भवसिद्धिया वि न लहंति ॥ १ ॥" अत्र हि संयोजनाकषायाणामनन्तानुबन्धिनामुदयस्य सम्यक्त्वलाभनिषेधकत्वेनाभिधानादवसीयते तदुपशमः सम्यक्त्वलाभकारणम् । तथा च स एव लिङ्गम् । तथा श्रावकप्रज्ञप्त्यामपि "तत्तत्थसद्दहाणं सम्मत्तं तम्मि पसममाईया । पढमकसाओवसमादविक्खया हुंति नायव्वा ॥ १ ॥" अत्रापि प्रथमकषायोपशमाद्यपेक्षया प्रशमादीनां लिङ्गत्वमुदितम् । तथा च कथं मिथ्यात्वाभिनिवेशोपशमो लिङ्गम् इति चेत्, तन्न, मिथ्यात्वक्षयोपशमलक्षणस्वकारणभावाभावाभ्यां सम्यक्त्वस्योत्पादानुत्पादयोः संभवेऽपि यत् 'पढमिल्लुयाण उदए' इत्यादिगाथायां प्रथमकषायोदये तल्लाभाभावोपवर्णनं तत्तल्लाभसमये प्रथमकषायाणां नियमेन क्षयोपशमो भवति, तथा चाहत्य तल्लाभनिषेधकस्य मिथ्यात्वस्य सहचारित्वात् सम्यक्त्वलाभपूर्वभावित्वाच्च तेषामप्युदयस्तल्लाभं निहन्तीति तेषां बलीयस्त्वज्ञापनार्थम् । तथा च वस्तुतो मिथ्यात्वोदयालभ्यत्वेऽपि सम्यक्त्वस्य 'पढमिल्लुयाणमुदए' इत्यादिना प्रथमकषायोदयात् तद्भवसिद्धिकानामपि तल्लाभाभावाभिधानं न विरुध्यते, न चैतावता तदुपशमस्य सम्यक्त्वलिङ्गत्वमुपपद्यते । तथाहि—असौ वह्नेर्धूम इव कार्यरूपं वा तस्य लिङ्गं स्यात्, तादृग्जलदपटलमिव भाविनो वर्षस्य कारणरूपं वा, उभयरूपं वाऽजहद्बलाकावृत्तित्वमिव जलाशयस्य, अनुभयरूपं वा ? न प्रथमः, सम्यक्त्वात् प्रागुत्पादेन तस्य तत्कार्यत्वानुपपत्तेः, मिथ्यात्वक्षयोपशमावसरे एव प्रथमकषायोपशमस्याप्युत्पादात्, तस्य च सम्यक्त्वप्राक्कालभावित्वात्, न च कारणात् कार्यं प्रागिति स-

भवति येनैतदेवं स्यात् । न द्वितीयः, मिथ्यात्वक्षयोपशमस्यैव सम्यक्त्वलाभकारणत्वेन तस्य तत्सहचारिमात्रत्वेन तत्कारणत्वानुपपत्तेः । किमत्र नियामकमिति चेत् ? न, यथागमं पूर्वसूरिभिस्तथाऽभिधानात् । यदाहुः पञ्चाशकवृत्तौ श्रीमदभयदेवसूरयः—"सम्यक्त्वहेतोर्मिथ्यात्वक्षयोपशमस्यावसरे ज्ञानावरणानन्तानुबन्धिकषायलक्षणचारित्रमोहनीयादिकर्म्मणामपि क्षयोपशमोऽवश्यमेव भवति" इति । न च तथापि तदुपशमस्यापि सम्यक्त्वजनकत्वमस्त्विति वाच्यम्, मिथ्यात्वक्षयोपशमादेरेव तज्जनकत्वेन प्रतिपादनात् । तथा चागमः—"से य सम्मत्ते पसत्थसम्मत्तमोहणीयकम्माणुवेयणोवसमखयसमुत्थे पसमसंवेगाइलिंगे सुहे आयपरिणामे पन्नत्ते" इत्यागमेन सम्यक्त्वमोहनीयशुद्धमिथ्यात्वदलिकसंवेदनोपशमक्षयसमुत्थत्वेनैव तस्याभिधानात् । एतदवष्टम्भेनैव च कषायोपशमस्य लिङ्गत्वेन सूत्रकृतापि उपपत्तिभिरग्रे निराकरिष्यमाणत्वात् । न तृतीयः, कार्यकारणत्वे हि तस्य क्रमेण वा स्यातां यौगपद्येन वा ? नाद्यः पूर्वदोषात्, नोत्तरोऽसम्भवात्, न खलु तदेव तस्यैव युगपत् कार्यं कारणं च भवितुमर्हति । न चतुर्थः, प्रतिबन्धासिद्धेः, तथाहि—अनन्तानुबन्धिनां चारित्रमोहनीयत्वेन तदुपशमस्य चारित्रेणैवाहत्य सम्बन्धे सम्यक्त्वं विना चारित्रं न संभवतीति तद्द्वारैव सम्यक्त्वेन सम्बन्धात् साक्षाच्चारित्रमेवासौ गमयेत्, न सम्यक्त्वम्, तथा च तेन सह स्वाभाविकसम्बन्धाभावात् कथमयमञ्जसा तल्लिङ्गं भवेत् । सम्यक्त्वमोहनीयत्वाभ्युपगमे वा तेषां दर्शनमोहनीयत्वस्य चातुर्विध्यप्रसङ्गेन 'दंसणमोहतिविहं' इत्यादिसूत्रोक्तसंख्यानियमस्तस्य भज्येत । श्रावकप्रज्ञप्त्यामपि—'पढमकसाओवसमादविक्खया' इत्यत्र प्रथमकषायाणामपि मिथ्यात्वसहचरत्वेनातितीव्रतया च सम्यक्त्वप्रतिरोधत्वविवक्षया तदुत्कटत्वप्रकटनार्थमेव तदुपशमः प्रशमतया व्याख्यातो, न तु मिथ्यात्वाभिनिवेशोपशमस्य सम्यक्त्वलिङ्गतानिरासार्थम्, आगमोपपत्तिभ्यां तस्य तल्लिङ्गत्वोपपादनात् । अत एव केवलज्ञानावरणक्षयलभ्यत्वेऽपि केवलज्ञानस्य कषायबलीयस्त्वप्रतिपत्त्यर्थम् "केवलियनाणलंभो नन्नत्थ खए कसायाणं"

इत्याद्यागमेन कषायक्षयलभ्यत्वं तस्य प्रत्यपादि । "एवं च पयईए कम्माणं वियाणिउं वा विवागमसुहं ति । अवरद्धे वि न कुप्पइ उवसमो सव्वकालं पि ॥" इति श्रावकप्रज्ञप्तावपि कोपोपशमः प्रागभिहिततात्पर्य्यपरतया नेतव्यः । एषैव च कषायबलिष्ठताऽऽवश्यकेऽप्युपशमश्रेणिशिखरमध्यासीनस्यापि यथाख्यातचरित्रतया जिनसगोत्रस्यापि प्रतिपातं दर्शयता श्रीभद्रबाहुस्वामिनाऽभिव्यञ्जिता, यदाह—"उवसामं पुवणीया गुणमहया जिणचरित्तसरिसं पि । पडिवाइंति कसाया किं पुण सेसे सरागत्थे ॥" एवं च सति यदा परकार्येषु अपि केवलज्ञानोत्पत्तिप्रतिरोधादिषु अमीषामव्याहता शक्तिः तदा तस्याः स्वकार्ये किं वर्णनीयम् ? तस्मात् कषायाणां चारित्रावारकत्वात् न तदुपशमः सम्यक्त्वलिङ्गमिति स्थितमितिगाथार्थः ॥ १ ॥" इदानीं कषायोपशमस्य लिङ्गत्वाभ्युपगमेऽनिष्टप्रसङ्गद्वयमाह—"चउवीससंतिकम्मी मिच्छाभावं न पाउणा इहरा । अणउदये वा सम्मं सासादणरूवं कहं हुज्जा ॥ २ ॥" वृत्तिः—"चतुर्विंशतिः अष्टाविंशतेर्मोहनीयप्रकृतीनां मध्यादनन्तानुबन्धिनां विसंयोजनेन चतुर्विंशतिसंख्यानि सत्कर्म्माणि 'सदिति' कर्म्मपुद्गलानां बन्धसंक्रमाभ्यां लब्धात्मलाभानां निर्जरणसंक्रमनिष्पादितस्वरूपप्रच्यवाभावे सद्भावः सत्ता तदवस्थितानि कर्म्माणि प्रकृतयश्चतुर्विंशतिसत्कर्म्माणि तेषां समाहारश्चतुर्विंशतिसत्कर्म्म तद्विद्यते यस्य स चतुर्विंशतिसत्कर्मी । अयमर्थः—इह केनचित् सम्यग्दृष्टिना सताऽनन्तानुबन्धिनो विसंयोजिताः, ततस्तथारूपप्रवर्द्धमानप्रशस्ताध्यवसायाभावात् तावतैव स विश्रान्तो न मिथ्यात्वादिक्षयं प्रत्युद्युक्तवान्, ततः स कालान्तरे तथाविधसामग्र्यभावात् मिथ्यात्वमगमत्, ततो मिथ्यात्वप्रत्ययात् भूयोऽप्यनन्तानुबन्धिनो बद्धुमारब्धः, ततो यावान् अद्यापि संक्रमावलिकानुषक्तबन्धावलिकां नातिक्रमति तावत्तेषामुदयाभावात् चतुर्विंशतिसत्कर्म्मा भवति, ततश्च स 'मिथ्याभावं'—मिथ्यात्वं 'न प्राप्नुयात्'—न लभेत, 'इतरथेति'—अन्यथा, कषायोपशमस्य लिङ्गत्वाङ्गीकार इत्यर्थः । इदमुक्तं भवति—एवं किलात्र कषायोपशमलिङ्गवादिनो अनुमानमवतरति—विवादाध्यासितः

पुरुषः सम्यक्त्वसम्पन्नोऽनन्तानुबन्ध्युपशमवत्त्वात्, य एवं स एवं यथा श्रेणिकादिरिति । तत्र, चतुर्विंशतिसत्कर्म्मणा मिथ्यात्वं गतेनानन्तानुबन्धिनां बन्धसमये तदनुदयवता व्यभिचारात्, तस्य तदुपशमवतोऽपि मिथ्यात्ववत्त्वात् । व्यभिचारे चावश्यमुपाधिसंभवादप्रयोजकत्वं हेतोः, तथाहि—मिथ्यात्वक्षयोपशमादिमत्त्वमत्रोपाधिः, न श्रेणिकादिरनन्तानुबन्ध्युपशमवत्त्वात् सम्यग्दृष्टिः किन्तु मिथ्यात्वक्षयादिमत्त्वात्, विवादाध्यासितश्चानन्तानुबन्ध्युपशमवान् अपि भविष्यति मिथ्यात्वक्षयाद्यभावात् सम्यग्दृष्टिरपि न भविष्यति, को दोषः ? तथादि कषायोपशमो लिङ्गं तदा चतुर्विंशतिसत्कर्म्मणो मिथ्यात्वं न भवेत्, तदुपशमस्य सम्यक्त्वलिङ्गस्य सत्त्वात्, न चेदमिष्टं ततो न तदुपशमो लिङ्गम् । प्रसङ्गान्तरमाह—'अण' इति । आर्षत्वात् पदैकदेशेऽपि पदसङ्केतकरणादनन्तानुबन्धिनः, एवमन्यत्रापि द्रष्टव्यम्, अनन्तं भवमनुबध्नन्तीत्येवंशीला अनन्तानुबन्धिनः, तेषामुदयो यथा स्वस्थितिवद्धानां कर्म्मपुद्गलानामपवर्त्तनादिकरणविशेषात् स्वभावतो वोदयसमयप्राप्तानां विपाकवेदनम्, अत्र 'वाशब्दः' पूर्वानिष्टपक्षात् पक्षान्तरद्योतकः, 'सम्मं ति'—सम्यक्त्वं, 'सासादनरूपं'—सासादनलक्षणम्, अयम्—औपशमिकलाभलक्षणं, सादयति—हापयति, आसादनम्—अनन्तानुबन्धिकषायवेदनम्, नैरुक्तो यलोपः । अयमाशयः—कस्यचिदनादिमिथ्यादृष्टेः कथञ्चिदन्तर्मुहूर्त्तसमयस्थितिकमौपशमिकसम्यक्त्वं प्राप्तवतो जघन्यतः समयशेषायामुत्कृष्टतः षडावलिकाशेषायां तत्स्थितौ कुतोऽपि कदध्यवसायादनन्तानुबन्ध्युदयतोऽद्यापि मिथ्यात्वमनासादयत औपशमिकसम्यक्त्वलाभोऽपसरति, ततः सह तेन वर्तते सासादनम् । यदि वा सहास्वादनेन स्तोकसमयं सम्यक्त्वसुधारसलेशरसज्ञेन वर्तते सास्वादनम्, यथाऽभ्यवहृतपरमान्नः पवनक्षोभादिदोषात् तद्वमन् तद्रसमास्वादयति तथाऽसावपि मिथ्यात्वाभिमुख्येन सम्यक्त्वमुद्वमन् सद्रसं रसयतीति । न चैतन्न सम्यक्त्वसंज्ञामश्नुते, अनन्तानुबन्ध्युदयवत्त्वेनात्यन्तनिकटमिथ्यात्वोदयवत्त्वादिति वाच्यम्, सिद्धान्ते तस्यापि तत्तयाभिधानात्, तथा चावाचि

एकविध्यादिसंख्याभेदसम्यक्त्वव्याख्यानावसरे श्रीमदभयदेवसूरिभिः—"खाइयाई सासाणसहियं चउविहं तु विन्नेयं । तं सम्मत्तब्भंसे मिच्छत्तअपत्तिरूवं तु ॥" तथा चानन्तानुबन्धिनामुदये 'तत्कथं'—केन प्रकारेण 'भवेत्'—जायेत, न कथञ्चिदित्यर्थः । न हि यदभावो यस्य लिङ्गं स तद्भावेऽपि भवति, तदा हि वर्षाभावो भूतस्य वाय्वभ्रसंयोगस्य लिङ्गमिति वर्षभावेऽपि भवेत्, न चैवम् । एवं कषायोपशमश्चेत् सम्यक्त्वलिङ्गं तदा कषायोदये तन्न भवेत्, भवति च कषायोदयेऽपि सास्वादनसम्यक्त्वं ततो न तदुपशमस्तस्य लिङ्गमिति गाथार्थः ॥२॥" अस्मिन्नेवाभ्युपगमे दूषणान्तरमाह—"ववहारहेउलिङ्गं बारस तुरिए गुणम्मि उ कसाया । आइल्लाण विसेसो न दुट्ठभासाइगम्मो उ ॥३॥ पक्खचउम्मासवच्छरजावज्जीवाणुगामिरूवो उ । न खलु विसेसो अविरयतिरियगई पसंगाओ ॥ ४ ॥ जावज्जीवमणंता मिच्छदिट्ठी कहं लभे सम्मत्तं । देसजईणो न कहं वा मणुयाउबंधजोग्गा उ ॥५॥" ग्रन्थगौरवभयात् सुगमत्वाच्चासां गाथानां वृत्तिः नात्र लिख्यते । ननु मा भूत् अनन्तानुबन्धिनामुपशमो लिङ्गम्, अनन्तानुबन्धिकार्यासद्ग्रहोपशमो लिङ्गं भविष्यतीत्याशङ्कानिराकरणचिकीर्षया पञ्चलिङ्गिकार आह—"अतत्तरुईरूवं मिच्छत्तरस उ न तं अणंताणं । असग्गहो तओ खलु मिच्छाभिनिवेसओ होइ ॥६॥ तस्सुवसमो उ लिंगं सम्मत्तं गमइ जंतुणो नियमा । त्थीबन्धगा तओ एव महाबलो पीढमहपीढा ॥७॥ इत्तो जमालिगुट्ठामाहिलगाई वि निह्णगा सव्वे । मिच्छाभिनिवेसाणो मिच्छदिट्ठी पसंतावि ॥ ८ ॥" इति । तत्त्वं पुनस्तद्विदो जानन्तीत्युक्तमुपशमाख्यं सम्यक्त्वस्य लिङ्गमिति ॥

संवेगो मोक्षाभिलाषः, सम्यग्दृशाहमिन्द्रपर्यन्तसुखस्य दुःखानुषङ्गात् दुःखतयैव पर्यालोचनात् । तदुक्तं—"नरयविबुहेसरसुक्खं चिय भावओ अ मण्णंतो । संवेगओ ण मुक्खं मोत्तुं किंचि वि पत्थेइ ॥ १ ॥" चारित्रमोहनीयोदयात् विषयान् भुञ्जा-

नोऽपि विषयगतदोषश्रवणदर्शनाभ्यां मनसा विरक्तकामो विषयाणां स्वरूपं सम्यग्दृष्टिरेवं चिन्तयति–मनोदर्शनस्पर्शनादीन्द्रियानन्दजनकत्वेन आमुखमधुरा अपि रागद्वेषमूलत्वेन भविष्यज्जन्मपरम्पराप्रवाहप्राप्तिहेतुत्वात् विवेकसाकल्येन विदितविषयदोषाणां महाशयानामपि सेव्यमाना विषया अत्रापि कायिकमानसिकपरीतापोत्पादका भवन्ति, किं पुनः परत्र नारकादिहेतुत्वेनेति । नन्वामुखमधुरा अत्र भवे तेषां कथं दुःखोत्पादकत्वमिति चेत् ? सत्यम्, परं सुखिन एवं चिन्तयन्ति–धिगस्मान् यदेवं श्रुत्यनुभवाभ्यां विषयहेवाकविपाकविन्दन्तोऽपि भूयो भूयः तेष्वेव व्यासजामः, सर्वथा विषममापतितमेतदिति सततं दोदूयमानान्तःकरणत्वात्ते दुःखिन एवेति । अपि चायं जीवो निरन्तरस्रवत्प्रश्रवणादित्वेन पूतिगन्धिविकृतत्वेन बीभत्सं नयनवैमुख्याधायकं दुर्गतिद्वारायमाणत्वेन विदुषां निन्दनीयं योषितो यत् वपुस्तत्र कृमिवत् क्रीडां करोति, यथा कृमिः पूयक्लिन्ने प्राण्यङ्गे क्षतादौ रज्यते, एवमेषोऽपि वराकः तादृश्येव योषिदङ्गे रतिं बध्नाति । देहायासक्षयव्याध्यादिनिमित्तत्वेन वस्तुतः सम्भोगसुखं कष्टमपि विषयतृष्णातरलितान्तःकरणत्वेनायमेव परमानन्दः इति सौख्यतया मन्वानः प्रणयकलहकुपितकामिनीचरणतलाघातमपि स्मरज्वरजर्जरितः शिशिरकोमलकदलीकाण्डस्पर्शमिव मन्यमानः प्रीणाति । विषयकृते च नरकादिविषयमनेकदुःखनिबन्धनं महारम्भं परिग्रहं च स्वीकुरुते । तथा चागमः–

"महारम्भयाए महापरिग्गहयाए कुणिमहारेणं पंचेन्दियवहेणं जीवा निरयाउयं कम्मं बंधंति" इति । ततो नरकमुपयाति । अतो विवेकिभिरापातमधुरा अपि विषमा विषया किम्पाकफलमिव दूरत एव परिहर्त्तव्याः नरकादिदुःखजनकत्वात् । तदुक्तं–

"आपातमात्रमधुरा विपाककटवो विषोपमा विषयाः । अविवेकिजनाचरिता विवेकिजनवर्जिताः पापाः ॥ १ ॥" इति । उपादेयाश्चेत्

विषयाः तर्ह्यनुत्तरदेवेभ्योऽप्यनन्तगुणरूपवन्तोऽनन्यसाधारणप्राज्यसाम्राज्यसमृद्धिमन्तोऽगण्यपुण्यप्राग्भारा निखिलाभिलषितविषयग्रामाः आज्ञेश्वरवर्या महापुरुषाः तीर्थपतिचक्रवर्त्त्यादयः कथं तान् त्यक्तवन्तः । अतस्तत्राणुमात्रमपि न सुखमिति । तत्त्वचिन्तया मोक्षसुखं विहाय नान्यत्किञ्चित्सुखमस्ति सकलस्यापि वैषयिकसुखस्य क्षणक्षयित्वायाससाध्यत्वपरिणामविरसत्वादिदूषणदूषितत्वेन वस्तुगत्या दुःखत्वादिति । निखिलविश्ववर्त्तिनरामरत्रिकालजविषयसुखात् भववर्त्तिनां प्रशमप्राप्तानां मुनीनामनन्तगुणं सुखं भवति, ततोऽप्यनन्तगुणं निर्वाणसुखं च स्वतन्त्रमुत्कण्ठाविप्रमुक्तं दुःखभेदशून्यं प्रतिपक्षाबाधितं सकलकल्याणपरमकोटिरूपं नैसर्गिकं शाश्वतं निखिलकर्मक्षयलभ्ये जन्मजरामृत्युरोगशोकभयादिभवविकारविरहिते एकान्तिकात्यन्तिकामन्दानन्दसुन्दरे परमपदस्थात्मस्वभावरूपे मोक्षे भवति । तत्साधने चारित्रे ये उद्यमं कर्त्तुमुद्यतास्ते धन्याः । कदा च गीतार्थगुरुपार्श्वे चारित्रं गृहीत्वा विहरिष्यामि । इन्द्रियादिषु परमार्थवैरिषु दारादिषु चात्यन्तासक्तं मां धीगस्तु । विदितभगवद्धर्म्मतत्त्वोऽप्येवमहमसमञ्जसकारीति भावनासमेतो विरक्तकामो भोगान् भुञ्जमानोऽपि सर्वतः देशतो वा निवृत्तकामेषु बहुमानपरो, भवति यथा—"वन्द्यास्ते पूजनीयास्ते तैस्त्रैलोक्यं पवित्रितम् । यैरेष भुवनक्लेशी काममल्लो निपातितः ॥ १ ॥ संसर्गेऽप्युपसर्गाणां दृढव्रतपरायणाः । धन्यास्ते कामदेवाद्याः श्लाघ्यास्तीर्थकृतामपि ॥ २ ॥" अत एव विप्रकृष्टदेशायातपथिश्रान्तदुर्गतक्षुधितद्विजस्य घृतपूर्णभोजनाभिलाषातिरेकवच्चरणानुरागादेवाविरतोऽपि देवायुर्बध्नाति । चारित्रपक्षपातश्च मोक्षैकतानमानसस्य संविग्नस्य संवेगाख्यं लिङ्गं व्यनक्ति । न चायं प्राणात्ययेऽपि भगवत्प्रवचनस्योड्डाहे प्रवर्त्तते । ज्ञानादिगुणवत्सु पात्रेषु बहुमानपरः । दारादिषु मन्दस्नेहः । संसारिकाभ्युदये न हर्षं विधत्ते, तस्य क्षणिकत्वेन निर्णीतत्वात्,

अत एव सम्यग्दृष्टेः तल्लाभनाशाभ्यां न हर्षविषादसंभवः । सप्तक्षेत्रेषु व्ययितं धनं सफलं मन्यते, कुटुम्बाद्यर्थं व्ययितं संसारवर्द्धकमित्युक्तं संवेगाख्यं सम्यक्त्वस्य लिङ्गमिति ॥

निर्वेदो भववैराग्यम् । दुःखदौर्गत्यगहने अनादिभवपारावारे कर्मवशवर्तिना जन्तुनाऽनन्तकृत्वः नरकतिर्यक्त्वादिदुःखानि प्राप्तानि, भवजीवकर्मणामनादित्वात्, तदुक्तम्– 'रङ्गभूमिर्या सा काचिच्छुद्धा जगति विद्यते । विचित्रैः कर्मनेपथ्यैर्यत्र सत्त्वैर्न नादितम् ॥ १ ॥" तद्दुःखद्वेषलक्षणं तत्कृतभवसुखेच्छाविच्छेदलक्षणं वा ममत्वराहित्यम् । तदुक्तम्–"नारयतिरियनरामरभवेसु निव्वेओ वसइ दुक्खं । अकयपरलोगमग्गो ममत्तविसवेगरहिओ अ ॥ १ ॥" इति । सम्यग्दृष्टिस्त्वेवं चिन्तयति–प्रवर्त्तन्तां नाम पापकर्मसु जिनवचनश्रुत्याऽविद्धकर्णा हलधरगोपालादयः पशुदेश्याः, अहं तु नित्यं सिद्धान्ताकर्णनेनावगतसंसाररहस्योऽपि यदेवं निःशङ्कतया तेषु विषयादिषु व्याप्रिये तत् क्व मे भवात् मोक्षः इत्याशयवान् भाविनीं दुःखश्रेणिमात्मनः कलयन् कथञ्चित् कायिकादिसुखसंभवेऽपि यदसौ मानसं कष्टं संवेदयते तन्न कोऽप्यन्योऽनुभवेत् । किञ्चान्येषां प्रायः स्वदुःखेन दुःखितत्त्वं, सम्यग्दृष्टेस्तु गतिचतुष्टयवर्त्तिनामङ्गिनां दुःखदर्शनात् तत्त्यागचिन्तया महादौःस्थ्यमिति । तथा चागमः–"भयवं ! के संसारे दुक्खिया ? गोयमा ! सम्मद्दिट्ठी अविरय" इति । संसारोदरवर्त्तिसकलपदार्थानामनित्यतावलोकनेनाविर्भूतक्षणिकत्ववासनावान् कतिपयसागरोपमस्थाय्यपि देवेन्द्रचक्रवर्त्त्यादिसुखं शिशुनिर्मितधूलिगृहोपमं सत्वरगत्वरमसौ मन्यते । अनन्तदुःखभाजने संसारे आत्मानं सर्वत्राशरणं मन्यमानः सततपरितप्तहृदयोऽतिकष्टं वसति । गृहारम्भकृषिविषयभोगादौ पापकर्मणि उद्यमं कुर्वन् आवरणकर्मोदयनिगडनिगडितत्वात् सर्वविरति-

सम्यग्दृष्टिः ताः कथञ्चिदपि न व्याचक्षीत । तथा सम्यक्त्ववान्साधुः ज्योतिश्शास्त्रार्थशास्त्रभिषक्शास्त्रादीनामुपदेशनिषेधं स्मृत्वा तादृक्संसारव्यवहारप्रवर्तकानां व्यावहारिकविज्ञानशालादीनामुपदेशमपि न कुर्यात्, तदुपदेशे हि साक्षात् परम्परया च श्रोतृप्रयोजकतया श्रोतृकृतानेकजीवव्याघातोऽपि विरतिमता व्याख्यात्रैव कृतः स्यात् । तथा दानमपि पात्रे वितीर्णं सफलं भवति, नापात्रे, ततः पात्रपरीक्षणमवश्यं कर्तव्यम् । सुपात्रं चापेक्ष्य शुद्धान्नपानदानस्य भगवत्यां फलजनकत्वमुक्तम्, तथा च तत्सूत्रम्–"समणोवासगस्स णं भंते ! तहारूवं समणं वा माहणं वा फासुएणं एसणिज्जेणं असणपाणखाइमसाइमेणं पडिलाभेमाणस्स किं कज्जइ ? गोयमा ! एगंतसो निज्जरा कज्जइ, नत्थि य से पावे कम्मे कज्जइ" ॥ कुपात्रे तु शुद्धाशुद्धान्नपानदानस्य पापजनकत्वं पञ्चमाङ्गे उक्तम् । तत्सूत्रम्– "समणोवासगस्स णं भंते ! तहारूवं असंजयअविरयअपडिहयअपच्चखायपावकम्मं फासुएणं वा अफासुएण वा एसणिज्जेणं व अणेसणिज्जेण वा पडिलाभेमाणस्स किं कज्जइ ? गोयमा ! एगंतसो पावे कम्मे कज्जइ नत्थि से कावि निज्जरा" इति । गृहमागतानां भिक्षूणामुचितदानं तु भगवता न निषिद्धम्, आगमे सर्वत्रौचित्यप्रवृत्तेः गुणकरत्वेन प्रतिपादनात् । तदुक्तं–"उचियं खलु कायव्वं सव्वत्थ सया नरेण बुद्धिमया । इयफलसिद्धी नियमा एस चिय होइ जिणिंदाणा ॥ १ ॥" इति । कुपात्रार्थं निरर्थकं पृथ्व्यादिजीवान् हत्वाऽऽहारादिदानं तु प्रेक्षावतां सर्वथानुचितम् । तदुक्तं–"काऊण य पाणिवहं जो दाणं देइ धम्मसद्धाए । दहिऊण चंदणं सो करेइ अंगारवाणिज्जं ॥ १ ॥ कडमद्दं काऊणं दमदयरहियाणं देइ जो दाणं । सो मूसे मारेउं पोसेइ नवरि मज्जारे ॥ २ ॥" इति । तदर्थं तु जीवहत्याकरणं दूरे आस्तां तद्धत्याकरणानुमतिरपि नोक्तेति । यदि जीवविराधनयाऽप्यसंयतदानं पुण्यहेतुरभविष्यत्तदा सत्रागाराद्यपि जिनमतेऽद्रक्ष्यत, उभयत्राऽपि जीवघातासंयत-

पोष्ययोरविशेषात्, न चैवमस्ति, तस्मान्न युक्तमिति । अत एव परतीर्थिकैः दानशालेष्टापूर्त्यादिकं पुण्यहेतुत्वेनोपदिष्टमपि जिनैः निषिद्धम् । तत्स्वरूपं चैवमुक्तम्—"एकाग्निकर्महवनं त्रेतायां यच्च हूयते । अन्तर्वेद्यां च यद्दानमिष्टं तदभिधीयते ॥ १ ॥ वापीकूपतडागानि देवतायतनानि च । अन्नप्रदानमारामाः पूर्त्तं तदभिधीयते ॥ २ ॥" इति । अनुमानप्रयोगश्च विवादाध्यासितं दानं सम्यग्दृशा न विधेयम्, जीववधेनासंयतपोषकत्वात्, सत्रागारादिवदिति । तस्मात् शुद्धपात्रदानमेव मुक्तये विधेयमिति । प्रागुक्तयुक्त्या जिनालयादिनिर्मापणे पृथ्व्यादिजीवेष्वनुकम्पा न व्याहन्यते । तदुक्तम्—"अर्हद्वेश्मविधापनादिविधिना सम्यग्दृशा कृपया, लब्ध्वा बोधिमबाधितां बत यया भव्या विरत्यादृताः । गत्वा निर्वृतिमाभवं विदधते रक्षां पृथिव्यादिषु, सेया दर्शनलक्षणं क्षणकरी सैवानुकम्पा बुधैः ॥ १ ॥" इत्युक्तं निर्वेदाख्यं सम्यक्त्वस्य लिङ्गम् ॥

आस्तिक्यं तु संक्षेपतः प्रागुक्तं विस्तरतस्तु नात्रोच्यते ग्रन्थविस्तरभयादिति । शेषाश्च सम्यक्त्वस्य द्वाषष्टिर्भेदाः मिश्रमिथ्यात्वयोः स्वरूपं चास्मत्कृतात् संक्रमकरणप्रथमविभागतोऽवसेयम्, तत्र विस्तरेणोक्तत्वात्, ग्रन्थविस्तरभयाच्च नात्र लिख्यत इत्युक्ता सप्तधा सम्यक्त्वमार्गणा ॥

"सन्नि"त्ति संज्ञानं संज्ञा—भूतभवद्भाविभावस्वभावपर्यालोचना । सा विद्यते येषां ते संज्ञिनो विशिष्टस्मरणादिरूपमनोविज्ञानभाज इत्यर्थः । यद्वा संज्ञायते सम्यक् परिच्छिद्यते पूर्वोपलब्धो वर्तमानो भावी च पदार्थो यया सा संज्ञा—विशिष्टा मनोवृत्तिः, सा विद्यते येषां ते संज्ञिनः मनोपर्याप्तिशालिनः पञ्चाक्षाः । नन्वेकेन्द्रियादिषु संमूर्च्छिमपञ्चाक्षान्तेष्वप्याहाराद्याः संज्ञा विद्यन्ते ततस्तेऽपि संज्ञिनः स्युरिति चेत् ? अत्रोच्यते, तीव्रमोहोदयजनिताभिरशोभनाभिरव्यक्ताभिश्च संज्ञाभिः न

महोत्सवमप्राप्नुवन् ताम्यति । मूर्च्छाहेतुत्वेन धान्यादीनि गाढबन्धनत्वेन सम्प्रचारितान्यपि मोहात् विहातुमशक्तः समन्ताद्दहनप्रदीपितं कारागारमिव गृहावासमधिगच्छन् क्वचिदपि स्वास्थ्यं विन्दति । प्रागुक्तभावनावान् तत्प्रायोग्यबाह्यक्रियावत्त्वेन सम्यग्दृष्टिः समाख्यातः । तथा च तत्प्रयोगः—अधिकृतः पुरुषः सम्यक्त्ववान् निर्वेदवत्त्वात् सनत्कुमारचक्रवर्त्तिवदित्युक्तं निर्वेदाख्यं सम्यक्त्वस्य लक्षणमिति ॥

अनुकम्पा दया, सा च द्रव्यभावभेदाद्द्विधा भवति । तत्र द्रव्यतः क्षुधादिना पीड्यमानानां दीनादीनां दानादिना तत्प्रहाणबुद्धिः । तदुक्तं—"भीतेष्वार्त्तेषु दीनेषु याचमानेषु जीवितम् । प्रतीकारपरा बुद्धिः कारुण्यमभिधीयते ॥ १ ॥" भावतो मिथ्यात्वोदयनिबन्धनेन भवदुःखेन दुःखितानां मिथ्यादृशां बोधिप्रापणेन तद्वियोजनेच्छा । सम्यग्दृष्टिः सामर्थ्ये सति विशेषतः संसारसागरे दुःखार्त्तं प्राणिनिवहं दृष्ट्वा द्विविधामप्यनुकम्पां करोति, तस्यास्तल्लिङ्गत्वात् । तदुक्तं—"दट्ठूण पाणिनिवहं भीमे भवसायरंमि दुक्खत्तं । अविसेसओ अणुकंपं दुहा वि सामत्थओ कुणइ ॥ १ ॥" सामर्थ्याभावे तु द्रव्यानुकम्पायाः अप्राधान्यत्वेनाकरणेऽपि न क्षतिः, भावानुकम्पायाः सम्यक्त्वस्य प्राधान्येन लिङ्गत्वस्योक्तत्वात् । ततो मुख्यतो भावानुकम्पापरायणः भवभयभीतानां सर्वदा सर्वेषां संसारसंसरतां सत्त्वानां तद्दुःखविमोचनोपायं सम्यग्दृष्टिः चिन्तयति । तदुपायश्च भवविबाधावियोगकारणं तीर्थपतिप्रणीतमार्गं विना नान्यः, अन्येषां दर्शनानां रत्नत्रयशून्यत्वेन संसारनिस्तारणसामर्थ्यशून्यत्वात् । तथा न्यायोपार्जितवित्तेन महारम्यं जिनालयं जिनप्रतिमां तदर्चां च निर्मापयति, यद्दर्शनादनेके गुणानुरागिनो भव्यसत्त्वाः बोधिबीजं प्राप्स्यन्ति । ननु जिनालयनिर्मापणादावनेकत्रसस्थावरजीवोपम-

क्त्वेन कथं अनुकम्पा तिष्ठतीति चेत् ? न, तत्राप्यनुकम्पायाः अव्याहतत्वात् । कथमिति चेत् ? श्रूयतां, सम्यग्दृष्टिर्जिनालयं कुर्वन् एवं चिन्तयति–जिनदर्शनादिमा प्राप्तसम्यक्त्वाः विरत्यावारककर्मक्षयोपशमेन प्रतिपन्नचारित्राः पृथिव्यादीन् षड्जीवनिकायान् रक्षन्ति, तद्रूपत्वाच्चारित्रस्य । ततः सम्यग्दृष्टिभिः जिनमन्दिरादिदर्शनासादितरत्नत्रयमहिम्ना लब्धनिर्वाणपदैस्तैः यावत् संसारं सर्वपृथ्व्यादिभ्योऽभयदानस्य प्रदत्तत्वात्कथं तत्त्वतः तेषु तद्विषयाऽनुकम्पा नास्तीत्युच्येत । यथा सुवैद्येन रोगिणे विरेचनलङ्घनक्वाथपानादिका क्रिया क्रियमाणाऽऽपाततो दुःखदा अपि व्याध्यपनयनेनातीव सुखदा भवति एवं सम्यग्दृष्टिना अपि जिनालयादिनिर्मापणक्रिया विधीयमाना प्रारम्भे पृथ्व्यादिजीवबाधाविधायिन्यप्यायतौ स्वस्यान्येषां च भव्यानां विरतिग्रहणनिर्वाणगमनाभ्यां सर्वदा तेषां रक्षणात् सुखदैवेति । एवं पुस्तकलेखनादिकमपि भावनीयमित्युक्तं सम्यग्दृष्टेः विधेयम् । तथा वापीकूपतडागारहट्टप्रपादिनिर्मापणविषयमुपदेशं चाणाक्यनीतिपञ्चतन्त्रराजनीत्यर्थोपायप्रदर्शकानां ग्रन्थानां व्याख्यानमपि च न करोति, तेषामसंख्येयजीवव्याघातहेतुत्वात् स्तोकाप्यनुकम्पा न भवति । नन्वरण्येऽटन्तः पिपासाभिभूताः नरतिर्यञ्चः तज्जलास्वादनादिनानुकम्पिता भवेयुरिति चेत् ? सत्यम्, परं सम्यग्दृष्टिः कतिपयजीवानुकम्पामात्रकृते यत्र खननादारभ्य यावद्वाप्यादिसद्भावस्तावन्निरन्तरमुत्पद्यमानानां परस्परतो मनुष्यतिर्यग्भ्यश्च भक्ष्यमाणानामपरिमितप्राणिनां संहारं पश्यन् कथं वाप्याद्युपदेशं दद्यात्, नहि बहुव्ययेनाल्पलपफलकं कर्मोन्मत्तं विहायान्यः कश्चिदारभते । चाणाक्यादिनीतीनां ह्यनेकविधच्छलपरस्परमित्रद्रोहवञ्चनकूटयुद्धप्रयोगादिव्युत्पादकत्वेन प्रभूतभूतसंघातघातनहेतुत्वेन तद्व्याख्यानस्य व्याख्यातुर्निष्करुणाभिद्योतकत्वादतोऽनुकम्पावान्

सम्यग्दृष्टिः ताः कथञ्चिदपि न व्याचक्षीत । तथा सम्यक्त्ववान्साधुः ज्योतिश्शास्त्रार्थशास्त्रभिषक्शास्त्रादीनामुपदेशनिषेधं स्मृत्वा तादृक्संसारव्यवहारप्रवर्तकानां व्यावहारिकविज्ञानशालादीनामुपदेशमपि न कुर्यात्, तदुपदेशे हि साक्षात् परम्परया च श्रोतृप्रयोजकतया श्रोतृकृतानेकजीवव्याघातोऽपि विरतिमता व्याख्यात्रैव कृतः स्यात् । तथा दानमपि पात्रे वितीर्णं सफलं भवति, नापात्रे, ततः पात्रपरीक्षणमवश्यं कर्तव्यम् । सुपात्रं चापेक्ष्य शुद्धान्नपानदानस्य भगवत्यां फलजनकत्वमुक्तम्, तथा च तत्सूत्रम्–"समणोवासगस्स णं भंते ! तहारूवं समणं वा माहणं वा फासुएणं एसणिज्जेणं असणपाणखाइमसाइमेणं पडिलाभेमाणस्स किं कज्जइ ? गोयमा ! एगंतसो निज्जरा कज्जइ, नत्थि य से पावे कम्मे कज्जइ" ॥ कुपात्रे तु शुद्धाशुद्धान्नपानदानस्य पापजनकत्वं पञ्चमाङ्गे उक्तम् । तत्सूत्रम्– "समणोवासगस्स णं भंते ! तहारूवं असंजयअविरयअपडिहयअप्पच्चखायपावकम्मं फासुएणं वा अफासुएण वा एसणिज्जेणं व अणेसणिज्जेण वा पडिलाभेमाणस्स किं कज्जइ ? गोयमा ! एगंतसो पावे कम्मे कज्जइ नत्थि से कावि निज्जरा" इति । गृहमागतानां भिक्षूणामुचितदानं तु भगवता न निषिद्धम्, आगमे सर्वत्रौचित्यप्रवृत्तेः गुणकरत्वेन प्रतिपादनात् । तदुक्तं–"उचियं खलु कायव्वं सव्वत्थ सया नरेण बुद्धिमया । इयफलसिद्धी नियमा एस चिय होइ जिणिंदाणा ॥ १ ॥" इति । कुपात्रार्थं निरर्थकं पृथ्व्यादिजीवान् हत्वाऽऽहारादिदानं तु प्रेक्षावतां सर्वथानुचितम् । तदुक्तं–"काऊण य पाणिवहं जो दाणं देइ धम्मसद्धाए । दहिऊण चंदणं सो करेइ अंगारवाणिज्जं ॥ १ ॥ कडमद्दं काऊणं दमदयरहियाणं देइ जो दाणं । सो मूसे मारेउं पोसेइ नवरि मज्जारे ॥ २ ॥" इति । तदर्थं तु जीवहत्याकरणं दूरे आस्तां तद्धत्याकरणानुमतिरपि नोक्तेति । यदि जीवविराधनयाऽप्यसंयतदानं पुण्यहेतुरभविष्यत्तदा सत्रागाराद्यपि जिनमतेऽद्रक्ष्यत, उभयत्राऽपि जीवघातासंयत-

पोषणयोरविशेषात्, न चैवमस्ति, तस्मान्न युक्तमिति । अत एव परतीर्थिकैः दानशालेष्टापूर्त्यादिकं पुण्यहेतुत्वेनोपदिष्टमपि जिनैः निषिद्धम् । तत्स्वरूपं चैवमुक्तम्—"एकाग्निकर्महवनं त्रेतायां यच्च हूयते । अन्तर्वेद्यां च यद्दानमिष्टं तदभिधीयते ॥ १ ॥ वापीकूपतडागानि देवतायतनानि च । अन्नप्रदानमारामाः पूर्त्तं तदभिधीयते ॥ २ ॥" इति । अनुमानप्रयोगश्च विवादाध्यासितं दानं सम्यग्दृशा न विधेयम्, जीववधेनासंयतपोषकत्वात्, सत्रागारादिवदिति । तस्मात् शुद्धपात्रदानमेव मुक्तये विधेयमिति । प्रागुक्तयुक्त्या जिनालयादिनिर्मापणे पृथ्व्यादिजीवेष्वनुकम्पा न व्याहन्यते । तदुक्तम्—"अर्हद्वेश्मविधापनादिविधिना सम्यग्दृशा कुर्वता, लब्ध्वा बोधिमबाधितां बत यया भव्या विरत्यादृताः । गत्वा निर्वृतिमाभवं विदधते रक्षां पृथिव्यादिषु, ज्ञेया दर्शनलक्षणं क्षणकरी सैवानुकम्पा बुधैः ॥ १ ॥" इत्युक्तं निर्वेदाख्यं सम्यक्त्वस्य लिङ्गम् ॥

आस्तिक्यं तु संक्षेपतः प्रागुक्तं विस्तरतस्तु नात्रोच्यते ग्रन्थविस्तरभयादिति । शेषाश्च सम्यक्त्वस्य द्वाषष्टिर्भेदाः मिश्रमिथ्यात्वयोः स्वरूपं चास्मत्कृतात् संक्रमकरणप्रथमविभागतोऽवसेयम्, तत्र विस्तरेणोक्तत्वात्, ग्रन्थविस्तरभयाच्च नात्र लिख्यत इत्युक्ता सप्तधा सम्यक्त्वमार्गणा ॥

"सन्नि"त्ति संज्ञानं संज्ञा—भूतभवद्भाविभावस्वभावपर्यालोचना । सा विद्यते येषां ते संज्ञिनो विशिष्टस्मरणादिरूपमनोविज्ञानभाज इत्यर्थः । यद्वा संज्ञायते सम्यक् परिच्छिद्यते पूर्वोपलब्धो वर्तमानो भावी च पदार्थो यया सा संज्ञा—विशिष्टा मनोवृत्तिः, सा विद्यते येषां ते संज्ञिनः मनोपर्याप्तिशालिनः पञ्चाक्षाः । नन्वेकेन्द्रियादिषु संमूर्च्छिमपञ्चाक्षान्तेष्वप्याहाराद्याः संज्ञा विद्यन्ते ततस्तेऽपि संज्ञिनः स्युरिति चेत् ? अत्रोच्यते, तीव्रमोहोदयजनिताभिरशोभनाभिरव्यक्ताभिश्च संज्ञाभिः न

संज्ञिनो मताः, यतो मोहाच्छादितचैतन्याः, अमी निद्राव्याप्तप्राणिकण्डूयनवदाहारादिकं यद्यपि कुर्वन्ति तथापि नहि कार्षापणमात्रेण धनवान् मूर्तिमात्रेण वा रूपवानिति व्यपदिश्यते, प्रभूतद्रविणश्च धनवान् प्रशस्तरूपः स्वरूपवानुच्यते यथा एवमत्रापि न संज्ञामात्रेण संज्ञित्वव्यपदेशः किन्तु कर्मक्षयोपशमजनितया व्यक्तचैतन्यलक्षणया महत्या शोभनया च संज्ञया संज्ञिन उच्यन्ते। यद्वा दीर्घकालिकी संज्ञा विद्यते येषां ते संज्ञिनस्तद्विपरीतास्त्वसंज्ञिनः। 'दीर्घकालिकी संज्ञैव सम्प्रधारणसंज्ञोच्यते तथा च संज्ञिनः' इति तत्त्वार्थकृतः। तथा च भाष्यं—"सम्प्रधारणसंज्ञायां संज्ञिनो जीवाः समनस्का भवन्ति। सर्वे नारकदेवा गर्भव्युत्क्रान्तयश्च मनुष्यास्तिर्यग्योनिजाश्च केचित्। ईहापोहयुक्ता गुणदोषविचारणात्मिका सम्प्रधारणसंज्ञा। तां प्रति संज्ञिनो विवक्षिताः। अन्यथा ह्याहारभयमैथुनपरिग्रहसंज्ञाभिः सर्व एव जीवाः संज्ञिन इति"। सम्प्रधारणमालोचनं येन सुदीर्घमपि कालमनुसरति भूतमागामिनं चानुचिन्तयति कथं नु कर्त्तव्यं किं वा तत्रानुष्ठेयमत एव दीर्घकालिकीत्युक्तमागमे। सा संज्ञा द्विविधा—ज्ञानरूपा अनुभवरूपा च। मतिश्रुतावधिमनःपर्यवकेवलज्ञानभेदात् पञ्चधा ज्ञानरूपा, असातवेदनीयादिकर्मोदयसमुद्भवाऽनुभवात्मिका सा चतुर्विधाऽऽहारादिपरिणामभेदादिति। तथा चोक्तं स्थानाङ्गे—"चत्तारि सण्णाओ पण्णत्ताओ, तंजहा—अहारसण्णा भयसण्णा मेहुणसण्णा परिग्गहसण्णा" इति। भगवतीसप्तमशताष्टमोद्देशके तु—"कति णं भंते! सन्नाओ पन्नताओ? गोयमा! दस सन्नाओ पन्नत्ताओ, तंजहा—आहारसन्ना १ भयसन्ना २ मेहुणसन्ना ३ परिग्गहसन्ना ४ कोहसन्ना ५ माणसन्ना ६ मायासन्ना ७ लोभसन्ना ८ लोगसन्ना ९ ओहसन्ना १०"—वृत्तिः—"तत्र संज्ञानं संज्ञा—सञ्ज्ञा आभोग इत्यर्थः, मनोविज्ञानमित्यन्ये, संज्ञायते वाऽनयेति सञ्ज्ञा, वेदनीयमोहनीयोदयाश्रया ज्ञानदर्शनावरणक्षयोपशमाश्रया च विचित्राहारादिप्राप्तये क्रियैवे-

त्यर्थः । सा चोपाधिभेदाद्भिद्यमाना दशप्रकारा भवति, तद्यथा—'आहारसंज्ञे'त्यादि । तत्र क्षुद्वेदनीयोदयात् कावलिकाद्याहारार्थं पुद्गलोपादानक्रियैव संज्ञायतेऽनया तदाहारसंज्ञा, तथा भयमोहनीयोदयाद्भयोद्भ्रान्तदृष्टिवचनविकाररोमाञ्चोद्भेदादिक्रियैव सञ्ज्ञायतेऽनयेति भयसञ्ज्ञा, तथा पुंवेदाद्युदयान्मैथुनाय स्त्र्याद्यङ्गालोकनप्रसन्नवदनसंस्तम्भितोरुवेपथुप्रभृतिलक्षणा क्रियैव सञ्ज्ञायतेऽनयेति मैथुनसञ्ज्ञा, तथा लोभोदयात्प्रधानभवकारणाभिष्वङ्गपूर्विका सचित्तेतरद्रव्योपादानक्रियैव सञ्ज्ञायतेऽनयेति परिग्रहसञ्ज्ञा, तथा क्रोधोदयादावेशगर्भा प्ररूक्षनयनदन्तच्छदस्फुरणादिचेष्टैव सञ्ज्ञायतेऽनयेति क्रोधसञ्ज्ञा, तथा मानोदयादहङ्कारात्मिकोत्सेकक्रियैव सञ्ज्ञायतेऽनयेति मानसञ्ज्ञा, तथा मायोदयेनाशुभसङ्क्लेशादनृतसंभाषणादिक्रियैव सञ्ज्ञायतेऽनयेति मायासञ्ज्ञा, तथा लोभोदयाल्लोभसमन्विता सचित्तेतरद्रव्यप्रार्थनैव सञ्ज्ञायतेऽनयेति लोभसञ्ज्ञा, तथा मतिज्ञानावरणक्षयोपशमाच्छब्दाद्यर्थगोचरा सामान्यावबोधक्रियैव सञ्ज्ञायते वस्त्वनयेति ओघसंज्ञा, एवं शब्दाद्यर्थगोचरा विशेषावबोधक्रियैव सञ्ज्ञायतेऽनयेति लोकसञ्ज्ञा, ततश्चौघसञ्ज्ञा दर्शनोपयोगो लोकसञ्ज्ञा तु ज्ञानोपयोग इति । व्यत्ययं त्वन्ये । अन्ये पुनरित्थमभिदधति—सामान्यप्रवृत्तिरोघसञ्ज्ञा, लोकदृष्टिस्तु लोकसञ्ज्ञा"। **आचाराङ्गनिर्युक्तौ च** षोडश सञ्ज्ञा उक्ताः, तद्ग्रन्थः—"आहारभयपरिग्गहमेहुणसुखदुक्खमोहवितिगिच्छा। कोहमाणमायालोहे सोगे लोगे य धम्मोहे ॥१॥" वृत्तिः—आहाराभिलाष आहारसञ्ज्ञा, सा च तैजसशरीरनामकर्मोदयादसातोदयाच्च भवति, भयसञ्ज्ञा त्रासरूपा, परिग्रहसञ्ज्ञा मूर्च्छारूपा, मैथुनसञ्ज्ञा स्त्र्यादिवेदोदयरूपा, एताश्च मोहनीयोदयात्, सुखदुःखसञ्ज्ञे सातासातानुभवरूपे वेदनीयोदयजे, मोहसञ्ज्ञा मिथ्यादर्शनरूपा मोहोदयात्, विचिकित्सा सञ्ज्ञा चित्तविप्लुतिरूपा मोहोदयात् ज्ञानावरणोदयाच्च, क्रोधसञ्ज्ञा अप्रीतिरूपा, मानसञ्ज्ञा गर्वरूपा, मायासञ्ज्ञा वक्रतारूपा, लोभसञ्ज्ञा गृद्धिरूपा, शोकसञ्ज्ञा विप्रलापवैमनस्यरूपा, एता मोहोदयजाः, लोकसञ्ज्ञा स्वच्छन्दघटि-

पुनः शेषाणां, मनःपर्याप्तेरभावेनाभोगासंभवात् । लोमाहारस्तु सर्वेषामाभोगनिर्वर्त्तितोऽनाभोगनिर्वर्त्तितश्च भवति । नवरमेकेन्द्रियाणामतिस्तोकापटुमनोद्रव्यलब्धीनामाभोगमान्द्याद्वस्तुतोऽनाभोगनिर्वर्त्तित एव, तथा चोक्तमागमे—"एगिंदिआणं नो आभोगनिव्वत्तिए अणाभोगनिव्वत्तिते" । नैरयिकाणामुपजायमानो लोमाहारोऽमनोज्ञतया परिणमति, तथाविधाशुभकर्मोदयत्वात् । सुराणां सुमनोज्ञतया परिणमति, भवस्वभावतया तथाविधशुभकर्मोदयवशात् । यच्चात्र देवानां लोमाहारात् पृथक्त्वेन मनोभक्षित्वमुक्तं तज्जिनभद्रगणिक्षमाश्रमणपादाभिप्रायेण, तथा च तत्पाठः—"लोमाहारा एगिंदिया य नेरइअसुरगणा चेव । सेसाणं आहारो लोमे पक्खेवओ चेव ॥ १ ॥ ओयाहारा मणभक्खिणो य सव्वे वि सुरगणा होन्ति । सेसा हवंति जीवा लोमाहारा मुणेयव्वा ॥ २ ॥" इति । यद्यपि लघुसंग्रहण्यां—"आभोगाणाभोगा सव्वेसिं होइ लोमआहारो । निरयाणं अमणुन्नो परिणमइ सुराण समणुन्नो ॥ १ ॥" अस्या वृत्तिः—"नारकाणां स लोमाहारोऽमनोज्ञः—प्रतिकूलकर्मोदयवशादमनोज्ञतया परिणमति । सुराणां तु मनोज्ञः शुभकर्मोदयवशतो मनोज्ञतया परिणमति ततश्चैषां तृप्तिपूर्वः परमसन्तोषो जायते, अतश्चैत एव समये मनोभक्षिणोऽभिधीयन्ते, न नारकः"—अत्र 'मनोभक्षित्वं वा देवानां' पृथक् नोक्तं तथापि—"दसवाससहस्साइं जहन्नमाउ धरन्ति जे देवा । तेसिं चउत्थाहारो सत्तहिं थोवेहिं ऊसासो ॥१३५॥ × × × × अयरसंखया देवे । पक्खेहिं ऊसासो वाससहस्सेहिं आहारो ॥१३८॥ दसवाससहस्सुवरिं समयाई जाव सागरं ऊणं । दिवसमुहुत्तपुहुत्ता आहारूसाससेसाणं ॥१३९॥" इत्यत्र लोमाहारात् पृथक्त्वेनोक्त एव, न चायं लोमाहारविषयकोऽभिलाषः प्रोक्तः, लोमाहारस्य पर्याप्तावस्थायां सर्वकालभावित्वात् । अस्य च कादाचित्कत्वादिति । एकेन्द्रियविकलेन्द्रियनारकाणामाहारे गृहीते सति भूयो भूय आहाराभिलाषो जायते, उत्कृष्टतस्त्वन्तर्मुहूर्तादूर्ध्वमवश्यं जायते ।

त्रिपल्योपमायुषां पञ्चेन्द्रियतिरश्चामुत्कृष्टतो अहोरात्रद्विकादूर्ध्वमाहाराभिलाषो जायते, त्रिपल्योपमायुषां मनुजानामहोरात्रत्रिकादूर्ध्वमाहाराभिलाष उपजायते । इदं च परिमाणं तपोविधिमन्तरेण रोगाद्यभावे वा स्वभावसंसिद्धं द्रष्टव्यम् । तपःसमाचरणवाञ्छया तु मासद्विमासादिकमपि भवति । देवनारकाणामचित्ताहारः शेषाणां त्रिविधाहार इति । अनाहारकाः विग्रहगतिप्राप्ताः केवलिसमुद्घातगताः अयोगिगुणस्थानवर्त्तिनः सिद्धाश्चेति । तत्र भवान्तरप्रस्थितस्य जन्तोः द्विधा गतिः भवति, तद्यथा–ऋज्वी वक्रा च, तत्र यदा जीवस्य मरणस्थानादग्रेतनमेवोत्पत्तिस्थानमुपर्यधस्तिर्यग्वा समश्रेण्यां प्राञ्जलमेव भवति तदायमेकेनैव समयेन तदवाप्नोति, ऋजुगतिश्चेयमुच्यते । अस्यां च नियमेनाहारको भवति, परित्याज्योपादेयशरीरमोक्षग्रहणसंस्पर्शभावेनाहारणीयपुद्गलानां व्यवच्छेदाभावादिति । यत्र मरणस्थानादुत्पत्तिस्थानं किञ्चिद्वक्रं भवति यथेशानकोणोपरिभागादाग्नेयकोणाधस्तनभागः तदा प्रथमसमये ईशानकोणोपरिभागादाग्नेयकोणोपरिभागं गत्वा तदधस्तनभागलक्षणस्योत्पत्तिस्थानस्य समश्रेणीं प्रतिपद्यते, जीवपुद्गलानामनुश्रेणिगमनात् प्रथमसमय एवोत्पत्तिस्थानाप्राप्तेः, ततो द्वितीयसमये वक्रश्रेण्यन्तरारम्भरूपं विग्रहं विधाय तत्रोत्पत्तिस्थाने प्राणी समुत्पद्यत इति । इयं च विग्रहगतिरुच्यते, एकेन वक्रश्रेण्यन्तरारम्भरूपेण विग्रहेणोपलक्षिता गतिः विग्रहगतिरितिकृत्वा । अस्यां चैकविग्रहायां द्विसमयायां विग्रहगतौ आद्यसमये पूर्वशरीरस्य मुक्तत्वादग्रेतनस्य त्वद्याप्यप्राप्तत्वादनाहारक इति प्रज्ञप्त्याद्यागमानुसारिभिरभ्युपगम्यते । तदुक्तं भगवत्यां–"तेणं कालेणं तेणं समएणं जाव एवं वदासी–जीवे णं भंते ! कं समयमणाहारए भवइ ? गोयमा ! पढमे समए सिय आहारए सिय अणाहारए, बितिए समए सिय आहारए सिय अणाहारए, ततिए समए सिय आहारए सिय अणाहारए, चउत्थे समए नियमा आहा-

तविकल्परूपा लोकाचरिता, यथा—न सन्त्यनपत्यस्य लोकाः, श्वानो यक्षाः, विप्रा देवाः, काकाः पितामहाः, बर्हिणां पक्षवातेन गर्भ इत्येवमादिका ज्ञानावरणक्षयोपशमान्मोहोदयाच्च भवति, धर्म्मसञ्ज्ञा क्षमाद्यासेवनरूपा, मोहनीयक्षयोपशमाज्जायते, एताश्चाविशेषोपादानात् पञ्चेन्द्रियाणां सम्यग्मिथ्यादृशां द्रष्टव्याः, ओघसञ्ज्ञा तु अव्यक्तोपयोगरूपा वल्लिवितानारोहणादिलिङ्गा ज्ञानावरणीयाल्पक्षयोपशमसमुत्था द्रष्टव्या" इति । एताश्च दशसञ्ज्ञाः सर्वैकेन्द्रियाणां वृक्षादिदृष्टान्तेन साक्षात् दर्शिताः, तद्यथा—"रुक्खाण जलाहारो संकोअणिआ भएण संकुयइ । निअतंतुएहिं वेढइ वल्ली रुक्खे परिग्गहेण ॥ १ ॥ इत्थिपरिरंभणेणं कुरुबकातरुणो फलंति मेहुण्णे । तह कोकनदस्स कंदे हुंकारे मुअइ कोहेणं ॥ २ ॥ माणे झुरइ रुअंती छायइ वल्ली फलाइं मायाए । लोभे बिल्लपलासा खिवंति मूले निहाणुवरिं ॥ ३ ॥ रयणीए संकोओ कमलाणं होइ लोगसन्नाए । ओहे चइत्तु मग्गं चडंति रुक्खेसु वल्लीओ ॥ ४ ॥" अन्यैरपि वृक्षाणां मैथुनसञ्ज्ञाभिधीयते, तथोक्तं शृङ्गारतिलके—"सुभग ! कुरुबकस्त्वं नो किमालिङ्गनेच्छुः किमु मुखमदिरेच्छुः केसरो नो हृदिस्थः । त्वयि नियतमशोके युज्यते पादघातः प्रियमिति परिहासात् पेशलं काचिदूचे ॥१॥" तथा पारदोऽपि स्फारशृङ्गारया स्त्रियाऽवलोकितः कूपादुल्लसतीति लोके श्रूयते । यद्वा सञ्ज्ञा त्रिविधा—दीर्घकालिकी हेतुवादाख्या दृष्टिवादाभिधा च । यस्यामतीतार्थं सुदीर्घमपि स्मरति आगामिनं किं कर्तव्यमिति विचिन्तयेत् सा दीर्घकालिकी । अनया तु संज्ञित्वव्यवहार इति प्रागुक्तमेव । इष्टानिष्टच्छायातपादिवस्तुषु विचिन्त्य स्वसौख्यार्थं प्रवृत्तिनिवृत्तिरूपा हेतुवादाख्या । एतया चैकेन्द्रियाः असंज्ञिनः, शेषाः संज्ञिनः । सम्यग्दृष्टीनां दृष्टिवादोपदेशिकी । एतामपेक्ष्य मिथ्यादृष्टयोऽसंज्ञिनः, सम्यग्दृष्टयः सञ्ज्ञिनः, इत्युक्ता द्विविधा सञ्ज्ञिमार्गणा ॥

"आहार"त्ति औदारिकादिपुद्गलानामाहरणमाहारः । स च त्रिविधः ओजआहारः लोमाहारः कवलाहारश्चेति । तत्रौ-

जः उत्पत्तिदेशे स्वशरीरयोग्यः पुद्गलसङ्घातस्तमाहारयति, यद्वा ओजस्तैजसशरीरं, तेन सहचारिणा कार्मणेन च पूर्वशरीरपरित्यागे विग्रहेणाविग्रहेण वोत्पत्तिदेशं प्राप्तो जन्तुर्यत् प्रथममौदारिकादिशरीरयोग्यान् पुद्गलानाहारयति, द्वितीयादिसमयादारभ्य यावत् शरीरनिष्पत्तिस्तावदौदारिकादिमिश्रेण चाहारयति। तदुक्तं—"जोएण कम्मएणं आहारेइ अणंतरं जीवो। तेण परं मिसेणं जाव सरीरस्स निप्फत्ती ॥ १ ॥" एष सर्वोऽप्योजआहारः। स्पर्शनेन्द्रियेण स्पर्शने सति य आहारः शरीरोपष्टम्भकपुद्गलसंग्रहः स लोमाहारः, लोमभिर्लोमरन्ध्रैराहारो लोमाहार इतिव्युत्पत्तेः। प्रक्षेपाहारः पुनः मुखे कवलप्रक्षेपरूपः। तदुक्तमाराध्यपादैः श्रीमद्भिः जिनभद्रगणिक्षमाश्रमणैः—शरीरेणोयाहारो तया य फासे य लोमआहारो। पक्खेवाहारो पुण कावलिओ होइ नायव्वो ॥ १ ॥" इति। अन्ये तु तत्र—यो जिह्वेन्द्रियेण स्थूलः शरीरे प्रक्षिप्यते स प्रक्षेपाहारः, यस्तु घ्राणदर्शनश्रवणैरुपलभ्यते धातुभावेन परिणमति स ओजआहारः, यः पुनः स्पर्शनेन्द्रियेणैवोपलभ्यते धातुभावेन च प्रयाति स लोमाहार इति। सर्वेषामपर्याप्तावस्थायामोजआहारः। पर्याप्तानां चानुसमयं लोमाहारः। अपर्याप्तास्तु शरीरपर्याप्त्या ज्ञातव्याः, न त्वाहारपर्याप्त्या, तयाऽनाहारकत्वात्, केषाञ्चिन्मतेन पुनः सर्वाभिः स्वयोग्याभिः पर्याप्तिभिरपर्याप्ताः। पर्याप्ताश्च शरीरपर्याप्त्या, केषाञ्चिन्मतेन तु स्वयोग्याभिः सर्वाभिः पर्याप्तिभिरपि पर्याप्ताः बोध्याः। एकेन्द्रियदेवनारकवर्जाः शेषाः सर्वेऽपि प्रक्षेपाहाराः भवन्ति। तेऽपि च भजनीयाः—कदाचिद् भवन्ति कदाचिन्नेति। देवास्तु पर्याप्तावस्थायां मनोभक्षिणः, मनश्चिन्तयोपस्थितान् सकलेन्द्रियाह्लादकमनोज्ञपुद्गलान् भक्षयन्तीव भक्षयन्ति वैक्रियशरीरेणात्मसात् कुर्वन्तीत्येवं शीला मनोभक्षिणो लोमाहाराश्च भवन्ति। अपर्याप्तावस्थायां देवानामप्याहारोऽनाभोगनिर्वर्तितो भवति किं

पुनः शेषाणां, मनःपर्याप्तेरभावेनाभोगासंभवात् । लोमाहारस्तु सर्वेषामाभोगनिर्वर्त्तितोऽनाभोगनिर्वर्त्तितश्च भवति । नवरमेकेन्द्रियाणामतिस्तोकापटुमनोद्रव्यलब्धीनामाभोगमान्द्याद्वस्तुतोऽनाभोगनिर्वर्त्तित एव, तथा चोक्तमागमे—"एगिंदिआणं नो आभोगनिव्वत्तिए अणाभोगनिव्वत्तिते"। नैरयिकाणामुपजायमानो लोमाहारोऽमनोज्ञतया परिणमति, तथाविधाशुभकर्मोदयत्वात् । सुराणां सुमनोज्ञतया परिणमति, भवस्वभावतया तथाविधशुभकर्मोदयवशात् । यच्चात्र देवानां लोमाहारात् पृथक्त्वेन मनोभक्षित्वमुक्तं तज्जिनभद्रगणिक्षमाश्रमणपादाभिप्रायेण, तथा च तत्पाठः—"लोमाहारा एगिंदिया य नेरइअसुरगणा चेव । सेसाणं आहारो लोमे पक्खेवओ चेव ॥ १ ॥ ओयाहारा मणभक्खिणो य सव्वे वि सुरगणा होन्ति । सेसा हवंति जीवा लोमाहारा मुणेयव्वा ॥ २ ॥" इति । यद्यपि लघुसंग्रहण्यां—"आभोगाणाभोगा सव्वेसिं होइ लोमआहारो । निरयाणं अमणुन्नो परिणमइ सुराण समणुन्नो ॥ १ ॥" अस्या वृत्तिः—"नारकाणां स लोमाहारोऽमनोज्ञः—प्रतिकूलकर्मोदयवशादमनोज्ञतया परिणमति । सुराणां तु मनोज्ञः शुभकर्मोदयवशतो मनोज्ञतया परिणमति ततश्चैषां तृप्तिपूर्वः परमसन्तोषो जायते, अतश्चैत एव समये मनोभक्षिणोऽभिधीयन्ते, न नारकः"—अत्र 'मनोभक्षित्वं वा देवानां' पृथक् नोक्तं तथापि—"दसवाससहस्साई जहन्नमाउ धरन्ति जे देवा । तेसिं चउत्थाहारो सत्तहिं थोवेहिं ऊसासो ॥१३५॥ × × × × अयरसंखया देवे । पक्खेहिं ऊसासो वाससहस्सेहिं आहारो ॥१३८॥ दसवाससहस्सुवरिं समयाई जाव सागरं ऊणं । दिवसमुहुत्तपुहुत्ता आहारूसाससेसाणं ॥१३९॥" इत्यत्र लोमाहारात् पृथक्त्वेनोक्त एव, न चायं लोमाहारविषयकोऽभिलाषः प्रोक्तः, लोमाहारस्य पर्याप्तावस्थायां सर्वकालभावित्वात् । अस्य च कादाचित्कत्वादिति । एकेन्द्रियविकलेन्द्रियनारकाणामाहारे गृहीते सति भूयो भूय आहाराभिलाषो जायते, उत्कृष्टतस्त्वन्तर्मुहूर्तादूर्ध्वमवश्यं जायते ।

त्रिपल्योपमायुषां पञ्चेन्द्रियतिरश्चामुत्कृष्टतो अहोरात्रद्विकादूर्ध्वमाहाराभिलाषो जायते, त्रिपल्योपमायुषां मनुजानामहोरात्रत्रिकादुर्ध्वमाहाराभिलाष उपजायते । इदं च परिमाणं तपोविधिमन्तरेण रोगाद्यभावे वा स्वभावसंसिद्धं द्रष्टव्यम् । तपःसमाचरणवाञ्छया तु मासद्विमासादिकमपि भवति । देवनारकाणामचित्ताहारः शेषाणां त्रिविधाहार इति । अनाहारकाः विग्रहगतिप्राप्ताः केवलिसमुद्घातगताः अयोगिगुणस्थानवर्त्तिनः सिद्धाश्चेति । तत्र भवान्तरप्रस्थितस्य जन्तोः द्विधा गतिः भवति, तद्यथा–ऋज्वी वक्रा च, तत्र यदा जीवस्य मरणस्थानादग्रेतनमेवोत्पत्तिस्थानमुपर्यधस्तिर्यग्वा समश्रेण्यां प्राञ्जलमेव भवति तदाप्येकेनैव समयेन तदवाप्नोति, ऋजुगतिश्चेयमुच्यते । अस्यां च नियमेनाहारको भवति, परित्याज्योपादेयशरीरमोक्षग्रहणसंस्पर्शभावेनाहारणीयपुद्गलानां व्यवच्छेदाभावादिति । यत्र मरणस्थानादुत्पत्तिस्थानं किञ्चिद्वक्रं भवति यथेशानकोणोपरिभागादाग्नेयकोणाधस्तनभागः तदा प्रथमसमये ईशानकोणोपरिभागादाग्नेयकोणोपरिभागं गत्वा तदधस्तनभागलक्षणस्योत्पत्तिस्थानस्य समश्रेणीं प्रतिपद्यते, जीवपुद्गलानामनुश्रेणिगमनात् प्रथमसमय एवोत्पत्तिस्थानाप्राप्तेः, ततो द्वितीयसमये वक्रश्रेण्यन्तरारम्भरूपं विग्रहं विधाय तत्रोत्पत्तिस्थाने प्राणी समुत्पद्यत इति । इयं च विग्रहगतिरुच्यते, एकेन वक्रश्रेण्यन्तरारम्भरूपेण विग्रहेणोपलक्षिता गतिः विग्रहगतिरितिकृत्वा । अस्यां चैकविग्रहायां द्विसमयायां विग्रहगतौ आद्यसमये पूर्वशरीरस्य मुक्तत्वादग्रेतनस्य त्वद्याप्यप्राप्तत्वादनाहारक इति प्रज्ञस्याद्यागमानुसारिभिरभ्युपगम्यते । तदुक्तं भगवत्यां–"तेणं कालेणं तेणं समएणं जाव एवं वयासी–जीवे णं भंते ! कं समयमणाहारए भवइ ? गोयमा ! पढमे समए सिय आहारए सिय अणाहारए, बितिए समए सिय आहारए सिय अणाहारए, ततिए समए सिय आहारए सिय अणाहारए, चउत्थे समए नियमा आहा-

रए, एवं दंडओ। जीवा य एगिंदिया य चउत्थे समए, सेसा ततिए समए" वृत्तिः—"कं समयं अणाहारए'त्ति—परभवं गच्छन् कस्मिन् समयेऽनाहारको भवति ? इति प्रश्नः, उत्तरं तु यदा जीव ऋजुगत्योत्पादस्थानं गच्छति तदा परभवायुषः प्रथम एव समये आहारको भवति यदा तु विग्रहगत्या गच्छति तदा प्रथमसमये वक्रेऽनाहारको भवति, उत्पत्तिस्थानानवाप्तौ तदाहारणीयपुद्गलानामभावाद्, अत आह—'पढमे समए सिय आहारए सिय अणाहारए'त्ति। तथा यदैकेन वक्रेण द्वाभ्यां समयाभ्यामुत्पद्यते तदा प्रथमेऽनाहारको द्वितीये त्वाहारकः। यदा तु वक्रद्वयेन त्रिभिः समयैरुत्पद्यते तदा प्रथमे द्वितीये चानाहारक इत्यत आह—'बीयसमए सिय आहारए सिय अणाहारए'त्ति, तथा यदा वक्रद्वयेन त्रिभिः समयैस्तदाऽऽद्ययोरनाहारकस्तृतीये त्वाहारकः। यदा तु वक्रत्रयेण चतुर्भिः समयैरुत्पद्यते तदाद्ये समयत्रयेऽनाहारकश्चतुर्थे तु नियमादाहारक इति कृत्वा 'तइए समए सिय' इत्याद्युक्तम्, वक्रत्रयं चेत्थं भवति—नाड्या बहिः विदिग्व्यवस्थितस्य सतो यस्याधोलोकादूर्ध्वलोके उत्पादो नाड्या बहिरेव दिशि भवति सोऽवश्यमेकेन समयेन विश्रेणितः समश्रेणीं प्रतिपद्यते द्वितीयेन नाडीं प्रविशति तृतीयेनोर्ध्वलोकं गच्छति चतुर्थेन लोकनाडीतो निर्गत्योत्पत्तिस्थाने उत्पद्यते, इह चाद्ये समयत्रये वक्रत्रयमवगन्तव्यम्, समश्रेण्यैव गमनात्। अन्ये त्वाहुः—वक्रचतुष्टयमपि संभवति, यदा हि विदिशो विदिश्येवोत्पद्यते तत्र समयत्रयं प्राग्वत्, चतुर्थे समये तु नाडीतो निर्गत्य समश्रेणिं प्रतिपद्यते, पञ्चमे तूत्पत्तिस्थानं प्राप्नोति, तत्र चाद्ये समयचतुष्टये वक्रचतुष्टयं स्यात्, तत्र चानाहारक इति। इदं च सूत्रे न दर्शितं प्रायेणेत्थमनुत्पत्तेरिति। 'एवं दंडओ'त्ति—अमुनाभिलापेन चतुर्विंशतिदण्डको वाच्यः। तत्र च जीवपदे एकेन्द्रियपदेषु च पूर्वोक्तभावनयैव चतुर्थे समये नियमादाहारक इति वाच्यम्, शेषेषु तृतीयसमये नियमादाहारक इति। तत्र यो नारकादित्रसस्त्रसेष्वेवोत्पद्यते तस्य नाड्या बहिस्तादागमनं गमनं नास्तीति तृतीयसमये नियमादाहारकत्वम्। तथाहि—यो मत्स्यादिर्भरतस्य पूर्वभागादैरवतपश्चिमभागस्याधो नरकेषूत्पद्यते स एकेन समयेन

मरतस्य पूर्वभागात् पश्चिमभागं याति, द्वितीयेन तु तत ऐरवतपश्चिमं भागं, ततस्तृतीयेन नरकमिति। अत्र चाद्यद्वयोरनाहारकस्तृतीये त्वाहारकः। एतदेव दर्शयति—'जीवा एगिंदिया य चउत्थे समये सेसा तइयसमए'त्ति। अत्र च 'परभवपढमे साटो' इति वचनात् मुच्यमानं हि पूर्वशरीरमन्तिमाद्यसमये मुक्तमसारीभूतमित्यनाहारकोऽयम्, अत्र क्रियाकालनिष्ठाकालयोरभेदवादिनिश्चयनयमतस्यैतेराश्रयणादिति। तस्याद्यसमयस्य पूर्वभवचरमसमयः, न तु परभवप्रथमसमयानुसारिणस्त्वाद्यसमयेऽप्यनाहारकोऽसौ न भवति, पूर्वशरीरं ह्यत्र मुच्यमानं न मुक्तम्, अत एवायं पूर्वभवचरमसमयः, न तु परभवप्रथमसमयः, पूर्वशरीरस्यात्रापि सद्भावात्, तत्सद्भावे च कथमसावनाहारक इति वक्तुं शक्यमत एव द्वित्रिसमयविग्रहगतावनाहारकत्वमुक्तं नैकसमयविग्रहगतौ, तथा च तद्ग्रन्थः—"द्विविग्रहायामेकं मध्यमं त्रिविग्रहायां द्वौ समयावनाहारकौ मध्यमौ भवति (भवतः), अत्र क्रियाकालनिष्ठाकालयोः भेदवादिव्यवहारनयाश्रयणात्"। इदं च मतद्वयमप्यागमाविरोधी, उभयनयात्मकत्वाज्जिनमतस्य। द्वितीयसमये तूत्पत्तिस्थानप्राप्तेराहारक एवेत्यत्राविवादः। यदा पुनर्मरणस्थानादुत्पत्तिस्थानं वक्रतरं भवति, यथा तस्यादेवैशानकोणकोपरिभागान्नैर्ऋतकोणाधस्तनप्रदेशः, तदा प्रथमसमये वायव्यकोणोपरिभागं गच्छति ततो द्वितीयसमयेन विग्रहेण नैर्ऋतकोणोपरिभागादागच्छति, तृतीयसमये विग्रहेणैव तदधस्तनभागस्वरूपमुत्पत्तिस्थानमवाप्नोति, तदेवं विग्रहद्वयोपेता त्रिसमया विग्रहगतिरियं भाविता। एते च त्रयः समयाः उक्तानुसारेणान्यथापि स्वधिया परिभावनीया उपलक्षणमात्रत्वादस्य। प्रागुक्तयुक्तिवशादाद्यसमयद्वयेऽनाहारक इति निश्चयनयवादिनो मन्यन्ते, व्यवहारनयवादिनस्तु पूर्वोक्तयुक्तेरेव मध्यमे विग्रहसमयेऽनाहारकः प्रथमचरमसमये त्वाहारक इति मन्यन्ते। स्थावराणामेव विग्रहत्रयोपेता चतुःसमया विग्रहगतिर्या भवति सा प्रतिपाद्यते—त्रसनाड्या बहिर्दिग्व्यवस्थितस्य सतो यस्य निगोदादेरधोलोकादूर्ध्वलोके उ-

त्पादो नाड्या बहिरेव दिशि भवति सोऽवश्यमेकेन समयेन विदिशो दिशमागच्छति, द्वितीयेन समयेन नाड्यां प्रविशति, तृतीयेनोर्द्ध्वलोकं व्रजति, चतुर्थेन त्रसनाडीतो निर्गत्योत्पत्तिस्थाने समुत्पद्यते, तदेवं त्रिविग्रहा चतुःसमया विग्रहगतिरियम्। अत्रापि निश्चयनयमतेनाद्येषु त्रिषु समयेष्वनाहारकश्चतुर्थसमये त्वाहारकः, व्यवहारनयमतेनाद्यान्तिमसमयोराहारको मध्यमे वक्रसमयद्वये त्वनाहारकः। केषाञ्चिन्मतेन तु चतुःसमयविग्रहा पञ्चसमयोपेता विग्रहगतिर्भवति। भावना तु प्रागुपन्यस्तविवाहप्रज्ञप्तिवृत्तितोऽवसेया। अत्रापि निश्चयनयमतेनाद्येषु चतुर्षु समयेष्वनाहारकश्चरमसमयेत्वाहारकः। व्यवहारनयमतेन त्वाद्यान्तिमयोराहारको मध्यमेषु त्रिषु समयेष्वनाहारकः। उक्तञ्च तत्त्वार्थसूत्रे–"एकं द्वौ वानाहारकः (२–३१)" अत्र वाशब्दात् त्रीन् वा समयाननाहारको भवतीति केचन व्याचक्षते। अत्रापि केचन जिनसमुद्घातावस्थायां तृतीयचतुर्थपञ्चमसमयेष्वनाहारक इति कल्पयन्ति, तदत्यन्तासम्बद्धं, वक्रगतिप्रसङ्गे जिनसमुद्घातस्याप्रस्तुतत्वात्, भाष्ये अन्यथाऽयोगिकेवलिनां सिद्धानां ग्रहणं कथं वाशब्देन न स्यात्। इयं च पञ्चसामयिकी गतिः कादाचित्कत्वादागमे नोक्ता। प्रायेणैकेन्द्रियाणामपीत्थमनुत्पत्तेः। भाष्यकाराभिप्रायेण तु वाशब्दस्यैकस्य द्वयोश्च विकल्पार्थतयोन्नयनमधिकस्य स्पष्टं तत्र निषेधादित्युक्ता सप्रतिपक्षाऽऽहारकमार्गणा॥

इयं गाथावृत्तिः श्रुतसागरमवलोक्य तत एव मया लिखिता तथाप्याभोगादनाभोगाद्वा प्रमादादिकारणैर्वा यन्मार्गोत्तीर्णं लिखितं किञ्चित् स्यात् तत्सत्कं श्रीसङ्घं करौ योजयित्वा मिथ्यादुष्कृतं याचे।

## अथ प्रशस्तिः ।

ज्ञत्या जीवति योऽनिशं विमलया यं वादिपञ्चानना वादेऽत्यन्तपटुं मनन्ति विबुधा यस्मै सना मे नमः ।
कीर्तिर्यस्य तु विस्तृता क्षितितले क्षेमङ्कराः सन्तु व **आचार्या विजयादिमा** मुनिवरा **आनन्ददेवाः** सदा ॥ १ ॥

सचन्द्रातपचुम्बितावनितलं चन्द्रं चकोरो यथा, तत्पट्टाम्बुजराजहंससदृशं संस्तुत्यचूडामणिम् ।
स्वान्तं नो **विजयाग्रिमं कमलकं सूरीश्वरं** माति मे, त्वां दृष्ट्वाद्भुतमूर्तिकं वरविभो हर्षोद्धरेणाऽनिशम् ॥ २ ॥

तत्पट्टपूर्वनगघस्रमणिर्विजीयात्, श्रीवीरयुग्विजयवाचकसेव्यशिष्यः ।
बोधप्रभाधितकुवादिनिविष्टदर्पः पूज्यप्रवेक**विजयाद्यकदानसूरिः** ॥ ३ ॥

सुराज्ये सूरेः श्रीविजयविशुदानाह्वसुगुरो–र्बुधानां सर्वादीनवविरहिते श्रीगुणगुरोः ।
सुगुम्फोऽयं सोमग्रहनिधिविधौ संवति वरे, **उपाध्यायश्रीप्रेमविजयकृतः** प्रीतिजनकः ॥ ४ ॥

सिद्धान्ताद्यवगाहि यस्य विपुलं ज्ञानं ध्रुवं धुन्वते, श्रुत्वा कोविदमस्तकानि विदुषो गुम्फस्य संशोधकः ।
श्रेयोवादपटुः सदा गुणखनिः श्रेयस्करः सोऽस्तु वो मच्छिष्यो **विजयान्तजम्बुमुनिपः पन्न्यासवर्यः** सदा ॥ ५ ॥

क्षन्तव्यः सज्जनैः कश्चिच्छद्मस्थत्वादिदोषतः । स्यात् स्खलनावतारो यो विधायाऽस्मिन्ननुग्रहम् ॥ ६ ॥

